## अथर्वण वेदः

# पैप्पलादसंहिता



संशोधकः संपादकश्च

**कुञ्ज विहारी उपाध्यायः**



Contact Address :


**KUNJA BIHARI UPADHYAYA**

Goudabada Sahi, Puri

Pin - 752001, Odisha

Mob. : 099371 58122


Rs. 800/- / 50$

# अथर्वणीय नीलरुद्र

ॐ अपश्यं त्वावरोहन्तं दिवित: पृथिवीमव ।
अपश्यमस्यन्तं रुद्रं नीलग्रीवं शिखण्डिनम् ।।१।।
दिव उग्रो ऽवारुक्षत् प्रत्यष्ठाद् भूम्यामधि ।
जनास: पश्यतेमं नीलग्रीवं विलोहितम् ।।२।।
एष ऐत्यवीरहा रुद्रो जलाषभेषजी ।
वि ते ऽक्षेममनीनशद्वातीकारोऽप्येतु ते ।।३।।
नमस्ते भव भामाय नमस्ते भव मन्यवे ।
नमस्ते अस्तु बाहुभ्यामुतो त इषवे नम: ।।४।।
यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे ।
शिवां गिरित्र तां कृणु मा हिंसीत् पुरुषान् मम ।।५।।
शिवेन वचसा त्वा गिरिशाच्छा वदामसि ।
यथा न: सर्वमिज्जगदयक्ष्मं सुमनो असत् ।।६।।
या त इषु: शिवतमा शिवं बभूव ते धनु: ।
शिवा शरव्या या तव तया नो मृड़ जीवसे ।।७।।
या ते रुद्र शिवा तनूरघोरापापकाशिनी ।
तया नस्तन्वा शंतमया गिरिशन्ताभि चाकश ।।८।।
असौ बस्ताम्रो अरुण उत बभ्रुर्विलोहित: ।
ये चेमे अभितो रुद्रा दिक्षु श्रिता:सहस्रशो ऽवैषां हेड़ ईमहे ।।९।
अदृशन् त्वावरोहन्तं नीलग्रीवं विलोहितम् ।
उत त्वा गोपा अदृशन्नुत त्वोदहार्य: ।
उतो त्वा विश्वा भूतानि तस्मै दृष्टाय ते नम: ।।१०।।

नमोऽस्तु नीलशिखण्डाय सहस्राक्षाय वाजिने ।
अथो ये अस्य सत्वानस्तेभ्योऽहमकरं नमः ।।११।।
नमांसि त आयुधायानातताय धृष्णवे ।
उभाभ्यामकरं नमो बाहुभ्यां तव धन्वने ।।१२।।
प्र मुञ्च धन्वनस्पर्युभयोरार्त्न्योर्ज्याम् ।
याश्च ते हस्त इषवः परा ता भगवो वप ।।१३।।
अवतत्य धनुस्त्वं सहस्राक्ष शतेषुधे ।
निशीर्य शल्यानां मुखा शिवो नः शम्भुरा भव ।।१४।।
विज्यं धनुः शिखण्डिनो विशल्यो वणवाङ उत ।
अनेशन्नस्येषवः शिवो अस्य निषङ्गतिः ।।१५।।
परि ते धन्वनो हेतिरस्मान् वृणक्तु विश्वतः ।
अथो य इषुधिस्तवारे अस्मन्नि धेहि तम् ।।१६।।
या ते हेतिर्मिढुष्टम हस्ते बभूव ते धनुः ।
तया त्वं विश्वतो अस्मनयक्ष्मया परि भुज ।।१७।।
नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु ।
ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ।।१८।।
ये चामी रोचने दिवो ये च सूर्यस्य रश्मिषु ।
येषामप्सु सदस्कृतं तेभ्यः सर्पेभ्यो नमः ।।१९।।
या इषवो यातुधानानां ये वा वनस्पतीनाम् ।
ये वावटेषु शेरते तेभ्यः सर्पेभ्यो नमः ।।२०।।
याः स्वजानां नीलग्रीवो याः स्वजानां हरिरुत ।
कल्माषपुच्छमोषाधे जाम्भयास्यरुन्धति ।।२१।।

बभ्रुश्च बभ्रुकर्णश्च नीलागलसाला शिवः पश्य ।।२२।।
शर्वेण नीलशिखण्डेन भवेन मरुतां पित्रा ।
विरूपाक्षेण बभ्रूणा वाचं वदिष्यतो हतम् ।।२३।।
शर्व नीलशिखण्ड वीर कर्मणिकर्मणि ।
इमामस्य प्राशं जहि येनेदं विभजामहे ।।२४।।
नमो भवाय नमः शर्वाय नमः कुमारसत्रवे ।
नमो नीलशिखण्डाय नमः सभाप्रपादिने ।।२५।।
यस्य हरी अश्वतरौ गर्द्धभावभितःसरौ ।
तस्मै नीलशिखण्डाय नमः सभाप्रपादिने ।
नमः सभाप्रपादिन इति ।।२६।।

इति नीलरुद्रोपनिषत् समाप्ता

## अथ चरणव्यूहं व्याख्यास्यामः

तत्र चत्वारो वेदा भवन्ति।।ऋग्वेदो यजुर्वेदःसामवेदो ब्रह्मवेदः।। ऋग्वेदस्य शास्त्रवेद उपवेदः। यजुर्वेदस्य धनुर्वेद उपवेदः। सामवेदस्य गान्धर्ववेद उपवेदः । अथर्ववेदस्यायुर्वेद उपवेदः। दिव्यसाम्पदप्रायश्चित्तीयाभिचारिकाः।।

ऋग्वेदस्यात्रेयगोत्रः । गायत्री छन्दः। अग्निर्देवता । यजुर्वेदस्य काश्यपगोत्रः। त्रैष्टुभं छन्दः । वायुर्देवता।। सामवेदस्य भारद्वाजगोत्रः । जगती छन्दः । विष्णुर्देवता । अथर्ववेदस्य वैखायनगोत्रः । आनुष्टुभं छन्दः । ब्रह्मा देवता ।।

ऋग्वेदः पीतवर्णेन पद्मपत्राक्षः सुव्यक्तग्रीवः कुञ्चितकेशश्मश्रुः सुप्रतिष्ठित जानुजङ्घाप्रमाणेन । सो ऽपि

विष्ठित: पञ्च ।। ऋग्वेदस्य सप्त शाखा भवन्ति । तद् यथा ।
आश्वलायना-शाङ्खायना-साध्यायना-शाकला-बाकला-
औदुम्बरा-माण्डूक्याश्चेति ।।

तासाम् अध्ययनं

ऋचां दश सहस्राणि ऋचां पञ्च शतानि च ।
ऋचामशीति: पादश्चेत्येतत् पारणमुच्यते ।।

तत्र यजुर्वेदस्य चतुर्विंशति: शाखा भवन्ति । तत् यथा ।
कण्वा-मध्यन्दिना-जाबाला-शापेया-श्वेता-श्वेततरा-
ताम्रायणीया-पौर्णरसा-आवटिका-परमावटिका-औक्षा-बोधा-
शाण्डिका-आह्वरका-चरका-मैत्रा-मित्रायणीया-हारितकर्णा-
शालाबलीया-मर्चकठा-प्राच्यकठा-कपिष्ठलकठा-उपवना-
तित्तिरियाश्चेति ।।

तासाम् अध्ययनं

ऋचां द्वे सहस्रे शतं न्यूने मन्त्रे वाजसनेयके ।
श्लोकेन परमं ख्यातं ब्राह्मणं चतुर्गुणम् ।।

अष्टादश सहस्राणि भवन्ति । तान्येव त्रिगुणम् अधीत्य
क्रमपारो भवति । सप्त स्थावराश्चेति ।।

शाखास्तिस्रो भवन्ति । पारांसर्वापार: समशि पारक्रमजटां
क्रमपारश्चेति ।।

षड् अङ्गान्यधीत्य षडङ्गविद् भवन्ति ।
शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषम्
इतिहासपुराणं षड् अङ्गानि । बृहत्सर्वानुक्रमणीश्चेति ।।

अथ यजुर्वेदः प्रांशुः प्रलम्बजठरः स्थूलगलकपालेन । रक्तो वर्णेन । प्रादेशाः षड् दीर्घत्वेन यजुर्वेदस्य एतद् रूपं भवति ।।

सामवेदस्य शाखासहस्रम् आसीत् ।

अनध्याये ऽधीयमानाः सर्वे ते शक्रेण विनिहताः प्रलीनाः ।।

तत्र के चिद् अवशिष्टाः प्रचरन्ति ।

तद् यथा ।

राणायनीया-सत्यमुग्रा-कालया-महाकालया-कैथिमा-लाङ्गलिकाश्चेति ।।

कैथिमानाम् अपि षड् भेदा भवन्ति ।

तद् यथा ।

राणायनीया-वातरायणीया-वैनवृथाः-प्राचीना-तेजसा-शौनकीयाश्चेति ।।

तासाम् अध्ययनं

अष्टौ सामसहस्राणि सामानि च चतुर्दश ।
सोह्यानि सरहस्याणि एतत् सामगणं स्मृतम् ।।

अथ सामवेदः सुवासाः सुगन्धी तेजस्वी मृदुवक्ता ब्रह्मण्यः प्रलम्बबाहुः सुस्निग्धचर्मा कृष्णो वर्णेन कातरो वयनेन ।।

षडरत्निमात्रप्रमाणवयनः स्मृतः । अन्ये ऋषयो ब्रह्मा सामानि तिष्ठन्ति संनिधौ । स भगवान् सामवेदो महेश्वरभक्तः ।।

तत्र ब्रह्मवेदस्य नव शाखा भवन्ति । तद् यथा ।

पिप्पलाद-प्रदान्ता-शौनका-स्तोदा-जाजला-जलदा-ब्रह्मवर्ति-देवदर्शि-चरणवेदाश्चेति ।।

तेषाम् अध्ययनं

ऋचां द्वादश सहस्राण्यशीतित्रिशतानि च ।
पर्यायकं द्वे सहस्रे अन्यांश्चैवार्चिकान् बहून् ।।
तद्ग्राम्यारण्यकानि द्वादश षट् सहस्राणि भवन्ति ।।

तत्र गोपथब्राह्मणं शतप्रपाठकमासीत् । तस्यावशिष्टे द्वे ब्राह्मणे पूर्वोत्तरे चेति ।। तत्र षड् अङ्गानि भवन्ति । शिक्षा कल्पो व्याकरणं निरुक्तम् इति ।।

तत्र पञ्च कल्पा भवन्ति ।।

नक्षत्रकल्पो वैतानकल्पः तृतीयः संहिताविधिः ।
चतुर्थो ऽङ्गिरसां कल्पः शान्तिकल्पश्च पञ्चमः ।।

तत्र लक्षणग्रन्था भवन्ति । चतुराध्यायिका । प्रातिशाख्यं । पञ्च पटलिका । बृहत्सर्वानुक्रमणीश्चेति ।।

तत्र द्वासप्तति: परिशिष्टानि भवन्ति कौशिकोक्तानि । कृत्तिकारोहिणी । राष्ट्रसंसर्गः । राज्यप्रथमाभिषेकः । पुरोहित-कर्माणि । पुष्याभिषेकः । पिष्टरात्र्याः कल्पः । आरात्रिकं । घृतावेक्षणं । तिलधेनुः । भूमिदानं । तुलापुरुषं । आदित्यमण्डलः । हिरण्यगर्भः । हस्तिरथः । अश्वरथः । गोसहस्रदानं । हस्तिदीक्षा । वृषोत्सर्गः । इन्द्रोत्सवः । ब्रह्मयागः । विनायकाभिषेकः । अरणीलक्षणं । संभारलक्षणं । यज्ञपात्रलक्षणं । वेदिलक्षणं । कुण्डलक्षणं । समिधलक्षणं । स्रुवलक्षणं । हस्तलक्षणं । ज्वालालक्षणं । लक्षहोमः । कात्यायनविधिः ।

कोटिहोमः । गणमाला । घृतकम्बलं । अनुलोमकल्पः ।

आसुरीकल्पः। उच्छुष्माकल्पः। समुच्चयप्रायश्चित्तानि। ब्रह्मकूर्चविधिः। तडागविधिः। पाशुपतव्रतविधिः। स्नानविधिः। सन्ध्योपासनविधिः। तर्पणविधिः। श्राद्धविधिः। अग्निहोत्रविधिः। उत्तमपटलं। वर्णपटलं। निघण्टुः। चरणव्यूहः। चन्द्रप्रातिपदिकं। ग्रहयुद्धं। ग्रहसंग्रहः। राहुचारः। केतुचारः। ऋतुकेतुलक्षणं। कूर्मविभागः। मण्डलानि। दिग्दाहलक्षणं। उल्कालक्षणं। विद्युल्लक्षणं। निर्घातलक्षणं। परिवेषलक्षणं। नक्षत्रग्रहोत्पात-लक्षणं। इन्द्रचापलक्षणं। सद्योवृष्टिलक्षणं। भूमिकम्पलक्षणं। गोशान्तिः। अद्भुतलक्षणं। स्वप्नाध्यायः। अथर्वहृदयं। भारकी-गार्ग्य-बार्हस्पत्योशनाद्भुतानि। महाद्भुतानि।।

तत्राष्टादशोपनिषदो भवन्ति मुण्डक। प्रश्न। गर्भोपनिषत्। प्राणाग्निहोत्र। महोपनिषत्। ब्रह्मोपनिषत्। ब्रह्मविद्योपनिषत्। क्षुरिक। चूलिक। अनुचूलिक। अथर्वशिर। अथर्वशिख। अमृतबिन्दु। अमृतनाद। योगशिखा। नारयणो। श्रुतिप्रत्यगानन्दो। नृसिंह। महो। ब्रह्मवेदो। अथर्वणो। परमात्मा। तत्रत्वशान्तिश्चेति।। तत्र ब्रह्मवेदेऽष्टादश व्रतानि चरिष्यन्।।

सावित्रीव्रतं। वेदव्रतं। नीलव्रतं। नीलोत्पलव्रतं। मृगारुव्रतं। रोहितव्रतं। विषासहिव्रतं। यमव्रतं। शान्तिव्रतं। कल्पव्रतं। ऋषिव्रतं। शिरोव्रतं। मैलव्रतं। शिखाव्रतं। अनुजव्रतं। दधिव्रतं। अङ्गिरोव्रतं। पाशुपतव्रतं चरेत्।।

कृच्छ्रं। अतिकृच्छ्रं। तप्तकृच्छ्रं। सांतपनं। माण्डूकीयं। तुलापुरुषं। महासांतपनं चेति।।

यो वै ब्रह्मवेदेषूपनीतः सर्ववेदेषूपनीतः ।
यो वै ब्रह्मवेदेष्वनुपनीतः सर्ववेदेष्वनुपनीतः ।।

अन्यवेदे द्विजोत्तमः। ब्रह्मवेदमधीतुकामः । स पुनरुपनेयो । देवाश्च ऋषयश्च ।। को अस्माकं ज्येष्ठः। क उपनेताः। क आचार्यः।।

ब्रह्मा उवाच ।।

अथर्वा वै ज्येष्ठः । अथर्वा उपनेता । अथर्वा आचार्यः । अथर्वणा ब्रह्मत्वं चेति ।।

तद् अप्येतद् ऋचोक्तं

ब्रह्मज्येष्ठा संभृता वीर्याणि ब्रह्माग्रे ज्येष्ठं दिवम् आ ततान ।
भूतानां ब्रह्म प्रथमोत जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः ।।

अथर्ववेदे चतुर्णां वेदानां साङ्गोपाङ्गानां सवाकोवाक्यानां इतिहासपुराणानाम् ।।

अथ ब्रह्मवेदः। कपिलो वर्णः । तीक्ष्णः। चण्डः। कामरूपी । विश्वात्मा । जितेन्द्रियः । स भगवान् ब्रह्मवेद इति ।।

चतुर्मुखो द्विपक्षो अतिधर्मा अतिवन्तप्राज्ञः। क्षुद्रत्वायुक्रूरः वैखायनगोत्रः। ब्रह्मा देवता ।।

य एकैकस्मिन् वेदानां नामगोत्रप्रमाणं च कीर्तयेत् । स सर्वपाप-विशुद्धो भवति । मृतश्च ब्रह्मलोकं स गच्छति ब्रह्मलोकं स गच्छतीति।।

।। इति चरणव्यूहोपनिषत् सामाप्ता ।।

# संशोधनम्

| पृष्ठे | काण्ड-सूक्तम् | पङ्क्तौ | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- | --- |
| ३२ | १-७३ | ८ | यज हेड | यज हेडो |
| ३६ | १-८३ | ६ | इवेन्द्रीयमव | इवेन्द्रियमव |
| ९९ | ३-५ | २ | निर्हस्तांश्च | निहस्तांश्च |
| १०० | ३-६ | २ | निर्हस्तांश्च | निहस्तांश्च |
| १२७ | ४-७ | ८ | पाण्यरङ्गुलिभ्यो | पाण्योरङ्गुलिभ्यो |
| १३५ | ४-१६ | ८ | सर्वानजीजसः | सर्वाङ्अजीजसः |
| १३७ | ४-१९ | ५ | पुष्पकमक्षन् | पुष्पमक्षन् |
| १४६ | ४-३२ | ७ | अभिभूत्यजाः | अभिभूत्योजाः |
| १५३ | ५-२ | २ | धर्मं | घर्मं |
| १५४ | ५-२ | ४ | नीचादुच्चा स्वधा | नीचादुच्चात्स्वधा |
| १५५ | ५-४ | ७ | यानिष्टाकूतिः | यानीष्टाकूतिः |
| १५६ | ५-५ | १ | सााग्निं | साग्निं |
| १६५ | ५-१६ | ३ | धर्मं | घर्मं |
| १६६ | ५-१७ | १२ | ग्रह्या | ग्राह्या |
| १६९ | ५-२१ | ८ | कामयन्तश्रे | कामयन्ते |
| १७१ | ५-२३ | ७ | फल हि | फलो हि |
| १७२ | ५-२४ | १५ | यातुधानानुप | यातुधानानप |
| १७४ | ५-२८ | १ | गोपा | गोप |
| १७५ | ५-२९ | ५ | रजनि यच्च | राजनि यच्च |
| १७६ | ५-३० | १८ | स्फातिमुत्तमा | स्फातिमत्तमा |
| १७८ | ५-३२ | १६ | केश इवाव्रधः | कोश इवाव्रधः |
| १८१ | ५-३५ | २५ | समुद्रय | समुद्राय |
| १८२ | ५-३६ | १५ | वोभयादत् | वो जिगाय |

## संशोधनम्

| पृष्ठे | काण्ड-सूक्तम् | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| १८३ | ५-३८ | १ | रोदसि | रोदसी |
| ,, | ,, | २ | स्वदृशे | स्वर्दृशे |
| १८५ | ५-४० | ६ | धरयामि | धारयामि |
| २१४ | ७-७ | १० | विश्वत | विश्वत: |
| २१९ | ७-१२ | ९ | सुभगांकरणीदसि | सुभगंकरणीदसि |
| २२३ | ७-१६ | १४ | सप्तर्षिभिरुदिच्या | सप्तर्षिभिरुदीच्या |
| २२४ | ७-१६ | १ | धृवाया | ध्रुवाया |
| ,, | ७-१७ | १ | आग्निं | अग्निं |
| २२८ | ८-१ | १ | पृाश्निं | पृश्निं |
| २२९ | ८-२ | ९ | रथां इव | रथाङ् इव |
| २३० | ८-३ | १७ | वैद ह वेद | वैदो ह वेद |
| २३१ | ,, | २ | बाधोस्वग्रो | बाधस्वोग्रो |
| २३५ | ८-९ | १० | अध्वर्युब्रह्मणो | अध्वर्युर्ब्रह्मणो |
| २३८ | ८-११ | १६ | बर्ह्रीमिहत्प्राण | बर्ह्रीमिहोत्प्राण |
| ,, | ८-१२ | २ | अश्विन सुरे | अश्विना सुरे |
| २३९ | ८-१२ | २४ | मष्टिको | मुष्टिष्को |
| २४२ | ८-१५ | ३ | शौनका: | शूनका: |
| ,, | ,, | ९ | ना ऽश्नीयान्न | नाश्नीयान्न |
| ,, | ,, | १७ | उत्तिष्ठता | उत्तिष्ठद् |
| २४३ | ,, | ३ | ब्राह्मणस्यान्नसिच्छ | ब्राह्मणस्यान्नसीच्छ |
| २४५ | ८-१८ | ६ | पयस्वतीदृशे | पयस्वतीर्दृशे |
| २५० | ९-२ | ६ | बर्हिषां | बर्हिषा |
| २५३ | ९-५ | २० | गाव | गावो |

# संशोधनम्

| पृष्ठे | काण्ड-सूक्तम् | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| २५५ | ९-७ | १ | वन्तु | वान्तु |
| २५६ | ,, | ८ | वायांसि | वासांसि |
| २७५ | ९-२६ | १ | यजुब्रह्मणा | यजुर्ब्रह्मणा |
| २७६ | ९-२७ | १ | तंस्तनभि: | तंस्तनीभि: |
| २७७ | ,, | १२ | ग्रवाधिषवणे | ग्रावाधिषवणे |
| २८३ | १०-४ | ९ | मनासिं | मनांसि |
| २८४ | १०-५ | २३ | तेज मयि | तेजो मयि |
| २८५ | १०-६ | १५ | मधुमतिं | मधुमतीं |
| २९० | १०-१२ | २४ | तप्ते धर्मे | तप्ते घर्मे |
| २९१ | ,, | ६ | मपतप्यन्ते | मोपतप्यन्ते |
| २९४ | १०-१६ | ९ | समुद्र | समुद्रो |
| ३०० | ११-६ | २२ | समग्वत | समग्मत |
| ३१२ | १२-३ | ५ | वि ते ग्रान्थिं | वि ते ग्रन्थिं |
| ३१४ | १२-७ | ७ | तरुर्नीली | तुरुर्नीली |
| ३२२ | १२-१६ | ३ | राज्ञा: | यज्ञा: |
| ,, | ,, | ८ | नप भवित्रं | नो भवित्रं |
| ३२४ | १२-१९ | २ | भवति | भवाति |
| ३२८ | १३-१ | ५ | कृण्मे | कृण्वे |
| ३३१ | १३-५ | १३ | धिर | धीर |
| ३३१ | १३-५ | २० | वधैर्दु: | वध्रैर्दु: |
| ३३२ | १३-६ | ५ | दवानामसि | देवानामसि |
| ३३३ | १३-८ | १ | देवकशा: | देवकोशा: |
| ३३५ | १४-१ | २ | अभ्यसिञ्चन्त | अभ्यसिञ्चन्तु |

# संशोधनम्

| पृष्ठे | काण्ड-सूक्तम् | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ३३८ | १४-५ | १५ | विश्व लोको | विश्वो लोको |
| ,, | ,, | २१ | विराज | विराजो |
| ३४१ | १४-८ | १० | आ त्वागन् | आ चागन् |
| ३४२ | १४-९ | ७ | स्तीक्ष्णशृङ्ग: | स्तीक्ष्णशृङ्गा: |
| ३४४ | १५-२ | १३ | यज्ञयिम् | यज्ञियम् |
| ३४५ | १५-३ | ८ | इत | इत: |
| ३४७ | १५-६ | १६ | नामभिशस्तिपा | नामभिशस्तिपा |
| ३५२ | १५-१० | ९ | पितरो वयधा: | पितरो वयोधा: |
| ,, | ,, | १२ | पूषा न | पूषा न: |
| ३५२ | १५-११ | २२ | जघनां | जघनाङ् |
| ३५५ | १५-१४ | १ | यज्ञ ब्रूमो | यज्ञं ब्रूमो |
| ३५६ | १५-१५ | २१ | शं तो आपो | शं त आपो |
| ३५७ | १५-१६ | १२ | पुरुष | पुरुषं |
| ,, | ,, | १५ | पातयानिति | पारयानिति |



ॐ श्री लक्ष्मीनृसिंहाभ्यां नमः

नत्वा नरहरिं देवं सर्वविघ्नप्रणाशनम् ।
पिप्पलादप्रसादाच्च पठाम्याथर्वणीं श्रुतिम् ।।

# अथर्वण वेद:
# पैप्पलादसंहिता

संशोधक: संपादकश्च

कुञ्ज विहारी उपाध्याय:

निजीय प्रकाशनम्

२०१०

Editing and DTP c. 2010
Kunjabihari Upadhyaya
At :- Goudabada Sahi,
Po/Dist :- Puri - 752001,
Odisha, India.


At - Goudabada Sahi, Po/Dist- Puri,
Pin-752001, Odisha, India.
E-mail- kunja.paippalada@gmail.com
Tele:
Land: 91 06752-231535
Mobile: 91-9937158122

Cover: Image of lord Nr.simha and inscriptions of ancient text

Published by Kunjabihari Upadhyaya, Puri.
On behalf of 'Nijiiya Prakashanam'

Printed at :Reeta publications,
Rasulgarh Industrial estate,
Bhubaneswar, Odisha, India.

@ Rs 800.00 / $ 30.

**ISBN No: - 978 - 81 - 909502 - 7 - 5**

# अथर्वणवेदपैप्पलादसंहिता मुद्रणस्य प्रस्तावः

वेदा ऐश्वरीयज्ञानसमूहानां भाण्डागारा विराजन्ते । मानवसभ्यतायाः प्रारम्भकालादेव तेषाम् ऐश्वरीयज्ञानानां द्रष्टार ऋषयः जीवनोपयोगिसकल-ज्ञानानि ऋक्-साम-च्छन्दो-यजुर्भिः वेदैः प्रकाशयामासुः। छन्दोवेदः अथवा अथर्ववेद आत्मज्ञानस्य कृते प्रसिद्धः। एतस्मादेव कारणात् तस्य विभिन्नानि नामानि प्रसिद्धानि सन्ति । तानि यथा - ब्रह्मवेदः, अमृतवेदः, आत्मवेदश्चेति।

पुरा आर्यावर्त्ते अयमेव वेदः नवसंख्यकशाखाविशिष्टः सन् मानवस्य अन्तर्निहितज्ञानराशीनां प्रकाशनं कृत्वा तथा तत्प्रयोगमाध्यमेन सांसारिक-जीवने ईश्वरप्राप्तिनिमित्तं सहजोपायं प्रदर्शयन् आसीत् । किन्तु सांप्रतम अस्य वेदस्य पैप्पलादः - शौनकश्चेतिशाखाद्वयं यथाक्रमेण पूर्वभारतस्य ओड़िशा राज्यस्य तथा पश्चिमभारतस्य गुजुराट्-महाराष्ट्रप्रदेशयोः(प्राचीन-राष्ट्रकूटस्य) अंशविशेषमण्डनं करोति।

अनयोः शाखयोः मध्ये शौनकशाखासंप्रदायः वेदस्यास्य संहिता-ब्राह्मण-सूत्र-भाष्य-कल्पादीनां सर्वेषां मौलिकग्रन्थानां सुरक्षायां सफलः( ?) दृश्यते। किन्तु पैप्पलादशाखासंप्रदायः सन्ध्या-पूजा-वैश्वदेव-श्राद्ध-विवाहोपनयनादिसंस्कार-यागयज्ञादिकर्मकाण्डेषु आकृष्टः सन् ब्राह्मण-सूत्र-कल्पादिमौलिकग्रन्थानां सुरक्षां प्रति अवहेलां प्रादर्शयत्। फलतः कालस्य करालगर्भे पैप्पलादशाखाया मौलिकग्रन्था विलुप्ता जाताः। विंशशताब्द्याः पञ्चमदशकं यावद् अस्य विशालभूखण्डस्य शताधिकग्रामेषु निवसन्तः पैप्पलादशाखासंप्रदायब्राह्मणाः केवलकर्मकाण्डजीविनो भूत्वा संहितादि-मौलिकग्रन्थानाम् अध्ययनं प्रति विमुखा आसन् । एतस्मादेव कारणात भारते तथा समग्रविश्वस्तरे सुप्रसिद्धानाम् अथर्ववेदीयगवेषकाणां दृष्ट्या उत्कलस्य इयमेव सक्रियवैदिकपरम्परा सर्वदा अपरिचिता अविद्यत।

विगतविंशशताब्द्याः पञ्चमदशकस्य मध्यभागे पूर्ववङ्गप्रान्तस्य प्रसिद्धेन पण्डितवरेण श्रीमता दुर्गामोहन भट्टाचार्येण उत्कलावस्थितपैप्पलादशाखाया मौलिकसंहितां तालपत्रपोथिमाध्यमेन आविष्कृत्य विश्वस्तरीयगवेषकाणां दृष्ट्याकर्षणं कृतम्। दुःखस्यायं विषयो यत् तस्याः काण्डचतुष्टयमात्रस्य सम्पादनानन्तरं तेषां विद्वद्वराणाम् अकालमृत्युः समागतः। फलतः तस्याः सम्पादनाकार्यं तत्रैव सीमितम् अतिष्ठत्। परवर्त्तिसमये तेषां सुपुत्रेण श्रीमता दीपकभट्टाचार्येण अवशिष्टकाण्डसमूहानां सम्पादनादायित्वं हस्ते नीत्वा सम्पूर्णपञ्चदशकाण्डविशिष्टं ग्रन्थकलेवरं प्रकाशितम् । एतदपि सांप्रतिकस्थितौ अनुपलब्धं विद्यते। एतस्यां परिस्थितौ १९७३ ख्रीष्टीयवर्षस्य शेषार्द्धे काञ्चिकामकोटीपीठाधीश्वरेण जगद्गुरु-श्री-जयेन्द्र-सरस्वतीस्वामिमहाभागेन पदयात्रायां समग्रोत्कलपरिक्रमावसरे तत्र स्थितान् बहुसंख्यकान् पैप्पलादशाखाध्यायिब्राह्मणान् दृष्ट्वा तथा तेषाम् अवस्थितिविषये विचारञ्च विधाय पैप्पलादशाखायाः कृते एका पाठशाला पुर्यां समारब्धा । सा च सम्प्रत्यपि निरवच्छिन्नभावेन प्रचलति । जगद्गुरुकरुणया ध्वंसपथे पथिकभावेन अग्रेसरीभूता पैप्पलादशाखापरम्परा अधुना ततः निःसृत्य स्वस्य स्थितिं सुदृढाम् अकोरत् । समग्रोत्कलदेशस्य ग्रामेषु निवसन्तः अथर्ववेदिब्राह्मणाः निजस्य वेदविषये पूर्णतया सचेतनाः सन्ति । आगामिदिवसेष्वपि जगद्गुरुकरुणया तथा शुभाशीर्वादेन पैप्पलादशाखायाः परम्परा अव्याहता स्थास्यतीति मे दृढविश्वासः । अधुनाऽपि महर्षिसान्दीपनि-राष्ट्रियवेदविद्याप्रतिष्ठानप्रचोदिताथर्वणवेदपैप्पलादशाखापाठशालासु प्रायः शताधिका वेदपाठिनः पाण्डुलिपिमाध्यमेन अथर्ववेदस्य पैप्पलादसंहिताध्ययनं कुर्वन्तः सन्ति ।

एवं भूतायां विषमपरिस्थितौ विगते २००६ तमे वर्षे ईश्वरस्यचलदवतारसदृशानां अवधूतदत्तपीठाधिपतिजगद्गुरुपरमपूज्यश्रीश्री गणपतिसच्चिदानन्दस्वामिजीमहोदयानां दर्शनस्य सुयोगः समागतः। तत्त्वदर्शिनः तथा करुणासागरपोमाः स्वामिजीमहोदया एतस्या महनीयपरम्पराया अप्रकाशितग्रन्थविषयं ज्ञात्वैव यथाशीघ्रम् एतन्निमित्तम् एकां

योजनां प्रस्तुतवन्तः । स्वामिजीपादानां परिकल्पित योजनायाः सफल-रूपायनाय आश्रमस्य अन्यतमदेवोपमपुरुषाः कर्मसुदक्षविशिष्टविद्वांसः श्रीमन्तः वंशीकृष्ण घनपाठी महोदयाः स्वकीय सहयोगहस्तं सम्वर्द्धितवन्तः। फलतः २००७ इषवीयसंवत्सरे श्री अवधूतदत्तपीठे आयोजिताखिलभारत-वेदसम्मेलनशुभावसरे प्रथम पञ्चदशकाण्डविशिष्टा अथर्वणवेदीया पैप्पलादशाखासंहिता प्रकाशिता ।

पक्षान्तरे विगतेषु कियत्सु वर्षेषु विश्वस्य षण्णां विश्वविद्यालयानाम् अष्टौ विद्वांसः अस्याः पैप्पलादसंहितायाः विशुद्धसंस्करणं कर्त्तुं प्रयतमाना आसन् । ते यथा - हार्भाड्विश्वविद्यालयस्य प्रोफेसर् माइकेल् ह्विजील्, डा.कार्लस् लोपेज्, जुरिच्विश्वविद्यालयस्य डा. थोमास् जेण्डार्, डा. यासुके इकारी, लेइडेन् विश्वविद्यालयस्य प्रोफेसर् वोड़ेविज्, डा.लुवास्कि, डा. अर्लो ग्रीफिथ्स् इति एते प्रमुखाः सन्ति। सौभाग्यवशतः विगते १९८३ इषवीयसम्वत्सरे डा. माइकेल् ह्विजील् महोदयेन सह सहयोगिकार्यकर्त्तृभावेन सुयोगं लब्ध्वा अस्यां योजनायाम् अंशग्रहणं कृतवानहम्। पुनश्च विगतेषु वर्षेषु१९९८ इषवीयसंवत्सरतः प्रारभ्य २००२ वर्षं यावत् डा. ग्रीफिथ्स् महोदयेन सह अहमपि पाण्डुलिपिसंग्रहाभियानावसरे ओड़िशाप्रदेशस्य दक्षिणसीमान्तवर्त्तिगञ्जाममण्डलत आरभ्य उत्तरसीमान्तवर्त्तिकेन्दुझर मयुरभञ्जमण्डलं यावत् तथा दक्षिण-पश्चिमसीमान्ते वर्त्तमानेषु नरसिंहपुर-बाङ्कि-बड़म्वा-ग्रामेषु एवञ्च वालेश्वर-भद्रख-केन्द्रापड़ाप्रभृतिषु उपकूलवर्त्तिषु प्रायः षष्ट्यधिकेषु ग्रामेषु परिभ्रमणं कृत्वा तत्रत्यैः पैप्पलादशाखाकर्म-काण्डविद्भिः सह आलोचनासुयोगं लब्धवान् । बहुमासव्यापिपरिभ्रमणबलेन पैप्पलादसंहितायाः तालपत्रलेखैः सह बहुलपरिमाणेन कर्मकाण्डपाण्डुलिपयः, आङ्गिरसकल्पः, कर्मपञ्जिका, कर्मसमुच्चयसदृशा गुरुत्वपूर्णाः तालपत्रलेखा आविष्कृताः । साम्प्रतं यावत् संगृहीतासु शताधिकवर्षप्राचीनतालपत्र-लिखितपाण्डुलिपिषु स्वरसंकेतस्य परिचयः अस्माकं दृग्गोचरो नैव जातः। एतद् व्यतिरिच्य विगते १८७० तमे वर्षे काश्मीरतः संगृहीतेषु पैप्पलाद-संहितायाः शारदालिपिविशिष्टभूर्जपत्रलेखेषु अपि स्वरनिर्देशस्य कश्चित्

संकेतो न परिलक्षित:। प्रथमत इदमेव संहितापुस्तकं लेरोयकार्वारेट्महोदयेन एवं परवर्त्तिसमये प्रोफेसर् डा. रघुवीरमहोदयेन सम्पादितं तथा "आर्षसाहित्य प्रचारसंस्था, दिल्ली इति आनुकूल्येन १९९०तमे वर्षे प्रकाशितम् अभवत्। एतच्च एतावदशुद्धियुक्तं तथा खण्डनत्रुटियुक्तम् आसीत्, यदाधारेण वेदाभ्यास: असम्भव: संजात: । किन्तु अस्य संहिताग्रन्थस्य प्रथमकाण्डे त्रयोदश सूक्तानि,द्वितीयकाण्डे त्रीणि सूक्तानि ,एकादशकाण्डे एकं सूक्तं, त्रयोदशकाण्डे त्रीणि सूक्तानि,चतुर्दशकाण्डे एकं सूक्तम्, अष्टादशकाण्डे नव सूक्तानि, ऊनविंशतितमेकाण्डे अष्टौ सूक्तानि, एवं विंशतितमेकाण्डे नव सूक्तानि च आंशिकतया संपूर्णतया वा स्वरविशिष्टानि सन्ति । तत्र निर्दिष्ट: स्वर: अथर्ववेदस्य शौनकशाखात: तथा ऋग्वेदस्वरसंकेतात् संपूर्णतया भिन्न:।

पैप्पलादशाखाया: सूचीपत्रभावेन सुपरिचितायां चरणव्यूहोपनिषदि अस्या: शाखाया: केचन ग्रन्था: निर्दिष्टा: सन्ति । ते **"तत्र लक्षणग्रन्था भवन्ति। चतुराध्यायिका । प्रातिशाख्यं । पञ्च पटलिका । बृहत्-सर्वानुक्रमणीचेति** । एतस्यार्थो यथा -पुरा पैप्पलादशाखाध्यायिब्राह्मणा उपर्युक्तान् एतान् ग्रन्थान् अनुसृत्य वेदं पाठयन्ति स्म पठन्ति स्म च। अत: काश्मीरादागतेषु संहिताग्रन्थेषु समुपलब्धानां स्वरचिह्नानां प्रामाणिकतानिमित्तं तल्लेखनकारस्य विषय: सविशदम् आलोचनीय:। एतस्मिन् प्रसङ्गे संहिताग्रन्थे उल्लिखितस्य लेखकस्य परिचय:,तथा तस्य लेखनकाल: अवश्यमेव ज्ञातव्य:। अस्यां संहितायाम् निम्नोक्तप्रकारेण खण्डनत्रुटियुक्त: लेखकस्य परिचय: विद्यते । तद्यथा - **अह्लामठ्येयमयापं प्रशस्तभवेन मेरभवपुत्रेणोत्सभव पौत्रेण अथर्वणवेदं लिखितं.........संवत् ९५ मार्ग....ति...त्रयोदशां शुक्रवासरे....**। एतस्या: पाठोद्धारनिमित्तं केचन ऐतिहासिका: (क्लाउज् वोगेल्, मिचिओ-यानो, माइकेल ह्विजील्, लेरोयकार्वारेट्) प्रयत्नं कृत्वा निम्नप्रकारेण सज्जीकरणं स्वीकृतवन्त:। **अह्लामठ इयं मया पंडितेन प्रशस्तभवेन मीरभव पुत्रेणोत्सभवपौत्रेण अथर्वणवेदं लिखितम् // *लौकिक* संवत् ९५ मार्ग*शीर्षे वहुला*(कृष्ण)ति*थौ* त्रयोदशां(श्यां) शुक्रवासरे....**।

एकदा वितस्तासरित्तीरे अहला इति नाम्ना मठः राज्ञः लक्ष्देवस्य पत्न्या अहला इति नामानुसारं ख्रीष्टीय १२७३ वर्षतः १२८६ मध्ये संस्थापितः । एतस्यैव मठस्य ख्रीष्टीय १८३३/३४ वर्षे ध्वंसः कृतः खलु महाराज-श्रीरणजित्सिंहस्य शिखसैन्यबलैः। एतस्य समयस्य पर्यालोचनया प्रतीयते यत् पञ्चनवतिलौकिकसंवत्सरे मार्गशीर्षकृष्ण-त्रयोदशीतिथौ शुक्रवासरे ख्रीष्टीय १४१९ वर्षतः दिसम्बरमासस्य पञ्चदशदिवसे मेरभवपुत्रेण तथा उत्सभवपौत्रेण प्रशास्तभवेन इयम् अथर्ववेदसंहिता अस्मिन् मठे पुनर्लिखिता।

अस्याः संहितायाः पुनर्लेखनस्यावश्यकतासम्बन्धे विशेषज्ञानाय जोनराजविरचिते राजतरङ्गिणीग्रन्थे विद्यमानः श्लोकः अनुध्यातव्यः। तद्यथा-

नाशितं सूहभट्टेन यद्यत् काश्मीरमण्डले ।<br>
योजितं शिर्यभट्टेन राजप्रार्थनयाथ तत् ।।

सूहभट्टः कः? स किं नाशितवान्? इत्यादीनां प्रश्नानाम् उत्तराणि तत्कालीनकाश्मीरेतिहासे लिपिबद्धानि।

इतिहासानुसारं ख्रीष्टीय १४१९ वर्षतः पूर्वं सुदीर्घाणि त्रिंशद्वर्षाणि यावत् काश्मीरदेशस्य इतिहासः अत्यन्तं दुर्विसह आसीत् । ख्रीष्टीय १३८९वर्षतः १४१३वर्षपर्यन्तं तुर्कदेशस्य राज्ञः सिकन्दरस्य शासनसमये सूहभट्ट नाम्ना कश्चित् काश्मीरदेशीय युवकः इस्लाम् धर्मेण दीक्षितः सन् सेनाध्यक्षपदव्यां नियुक्तः अभवत् । परवर्त्तिसमये स एव स्वकीयस्य नाम्नः परिवर्त्तनं कृत्वा मल्लिक - सैफ् - अद् दीन् इति नाम्ना स्वात्मानं उपस्थापितवान् । स च अत्यन्तं निष्ठुरः सन् हिन्दुधर्मस्य विरोधनिमित्तं बहु पदक्षेपान् आश्रितवान् । ब्राह्मणानां ये खलु उपादेयपूर्णा धर्मग्रन्थाः यथा - वेद - वेदाङ्ग - ज्योतिषादय आसन् ,तान् सर्वान् ग्रन्थान् सैन्यबलेन अग्निसात् चकार । पुनश्च तदानीन्तनकाले विद्यमानानां पारम्परिकशिक्षा-यतनानाम् अपि ध्वंसतां विधाय संस्कारकर्मणां निषेधविषये उद्घोषणं चकार । पुनरपि ब्राह्मणगृहे अन्तःपुरवर्त्तिनीनां स्त्रीणां, युवतीनां कृते एवं

भूतम् अश्लीलव्यवहारं कृतवान् यस्य यन्त्रणया गृहपतय: आत्माहुतिं कर्तुं प्रेरिता: अभवन् । एवं च ब्राह्मणानाम् अर्थोपार्जनविषये बहुप्रकारं प्रतिरोधं कारयित्वा समग्रकाश्मीरप्रदेशस्य श्रिहीनतां साधितवान् । १४१३ वर्षत: तुर्कदेशस्य राज्ञ: मृत्यो: अनन्तरम् अलि-शाह इत्यभिधानस्य राज्ञ: शासनसमये हिन्दुधर्मस्य ध्वस्ततायां श्रेष्ठनायकभावेन स: पुरस्कृत: सन् प्रधानमन्त्रिपदव्याम् अधिष्ठित: अभवत्। १४१८ ख्रीष्टीयवर्षे जैन् - अल् -अविदिन् इति नाम्ना राजा काश्मीरराज्यस्य सिंहासनम् आरूह्य देशस्य शान्तिप्रतिष्ठानिमित्तं प्रचेष्टाम् अचालयत्। अतो हिन्दुधर्मस्य पुन: संस्थापनाय विपुलानाम् अर्थानां व्ययमाध्यमेन तत्र स्थितान् ब्राह्मणान् देशान्तरं प्रेषयित्वा हिन्दुधर्मस्य सर्वेषां मौलिकग्रन्थानां संग्रहं स कृतवान् ।

काश्मीरदेशस्य ऐतिहासिकपूर्णतथ्यविषये वर्णित: जोनराजविरचित: राजतरङ्गिणी इति पौराणिकग्रन्थ: भवति मूकसाक्षिसदृश:।

शास्त्रेष्वथर्ववेदस्य माहात्म्यं परिपश्यताम् ।
काश्मिरिकानां तत् प्राप्त्यै चिरमासीन् मनोरथ: ।।१२६९।।
काले ऽथ विपुले जाते सूहभट्टभयाकुल: ।
युद्धभट्टाभिधो मानी देशान्तरमगात् गुणी ।।१२७०।।
यजुष: पठनात् प्रीतै: कर्णाटै: सो ऽथ पाठित: ।
सरहस्यमथर्वाणं निजां प्रत्यागतो भुवम् ।।१२७१।।
श्रिजैनल्लाभदेनस्य गुणिनो गुणरागिण: ।
उपदिकृत्य तं वेदं परां तुष्टिम् अजीजनत् ।।१२७२।।

एवं भावेन बहुषु दिवसेषु अतिवाहितेषु सूहभट्टकृतभयव्याकुल-मयपरिवेशात् मुक्त: सन् यजुर्वेदवित् विद्वान् युद्धभट्ट कर्णाटप्रदेशं गत्वा तत्र अथर्ववेदस्य अध्ययनं समाप्य स्वदेशं प्रत्यगात् । तत्र विद्यमाने अहलानाम्नि मठे अथर्वणवेदस्य लेखनम् अपि विहितम्। अत्र अयं प्रश्नो भवेत् यत् अहलामठे लिखितायां संहितायाम् उपलब्ध: स्वरसंकेत एतस्या: शाखाया अवशेषांशविशेष:, अथवा यजुर्वेदविद: युद्धभट्टस्य स्वकीय-प्रयासस्य फलम्?

पुनश्च राजतरङ्गिणीग्रन्थे उल्लिखितम् अस्ति यत् -

दत्तस्वकीयवस्त्रान्नः शिर्यभट्टो ऽथ धर्मवित् ।
तेनैवाथर्ववेदं तं द्विजपुत्रान् अपाठयत् ।।
सा धर्मिष्ठा तु शालास्य शिर्यभट्टस्य धीमतः ।
कर्णाटानामपि परमागमत् स्पृहणीयताम् ।।

परवर्त्तिसमये शिर्यभट्ट इति नाम्ना कश्चित् विद्वान् ब्राह्मणबालकद्वयं शिष्यरुपेण स्वीकृत्य अन्नवस्त्रादिदानपूर्वकं पैप्पलादशाखाया अध्यापनां चकार । स च तदानीन्तनसमये कर्णाटदेशेन सह सुसंपर्कमपि निरवच्छिन्न-भावेन सुरक्षितवान् । अतः कदाचित् कर्णाटप्रदेशे स्वरसंकेत आसीत् न वा इति संशयम् उपस्थापयति ।

अत्र अन्य एक प्रसङ्गः, पञ्चदशशताब्द्याम् उत्कलप्रदेशस्य वालेश्वरमण्डलाऽन्तर्गतमयूरग्रामे निवसता श्री-नृसिंह-चरण परिचारकेण श्रीमन्महामहोपाध्यायश्रीधरेण संपादितायां विवाहादिकर्मपञ्जिकायां वेदाध्ययनविधिविषये उल्लेखः अस्ति । तद्यथा -

प्लुतदीर्घक्रमां दृष्ट्वा सानुस्वारं सुलक्षिताम् ।
ऋचमुच्चारयेत् प्राज्ञो न दृतं न बिलम्बितम् ।।

अत्र निर्दिष्टः स्वरविषयको नियमः संपूर्णतया लौकिकः, तथा च अनेन स्पष्टम् अनुमीयते यत् पञ्चदशशताब्दीसमये उत्कलप्रदेशेऽपि पैप्पलाद-शाखायाः स्वरसंकेतव्यवस्था संपूर्णं विलुप्ता आसीत् । अन्यस्मिन् पक्षे पञ्चदशशताब्द्याः प्रारम्भकाले कर्णाटप्रदेशात् युद्धभट्टसंगृहीतायां संहितायां विद्यमानेषु ७८९९ मन्त्रेषु केचन मन्त्राः पूर्णस्वरसंकेतविशिष्टा अपिच केचन आंशिकस्वरसंकेतविशिष्टाः दृश्यन्ते । शुद्धस्वरविशिष्टा मन्त्रसंख्या अतीव स्वल्पा । अयं स्वरविधिः पैप्पलादशाखायाः प्रातिशाख्यानुसारम् अथवा शिक्षाशास्त्रानुसारं निर्दिष्टः अथवा न इति संदेहास्पदविषयः । अत इदमेव तत्त्वं विदुषां समीक्षणायोग्यम् इति मत्वा केचन मन्त्रा अस्य लेखस्य शेषभागे संयोजिताः । पुनश्च अथर्वणवेदस्य ब्राह्मणग्रन्थे *गोपथब्राह्मणे* अपि स्वरसंकेतोनास्ति । अन्यवैदिकशाखातः स्वरसंकेतमानीय पैप्पलादशाखायां

प्रवर्त्तनं न युक्तियुक्तमिति मे मतिः। यदि एतत्कार्यं श्रीजगद्गुरुकाञ्चिकामकोटि-पीठाधीश्वराणाम् आज्ञया स्यात् तर्हि तदेवोचितं भवेत् ।

बहुदिनानि यावत् अस्याः शाखायाः क्रमवर्द्धिष्णुपाठशालासु अध्ययन -रतानां विद्यार्थिनां कृते विशुद्धपाठ्यपुस्तकस्य आवश्यकता अपूरणीया आसीत्। विगतबहुसहस्राब्दीः अभिव्याप्य पूर्ववर्त्तिलेखकानां प्राचीन-पाण्डुलिपितः नूतनपाण्डुलिपिप्रस्तुतिकरणसमये असावधानतावशतः मौलिकपाठस्य भाषाविकारः तथा व्याकरणगतत्रुटयश्च संजाताः। अपरस्मिन् पक्षे देवनागरीवर्णमालया सह ओड़िआवर्णमालाया उच्चारणागतसंमिश्रणेन तथा लिपिवैषम्येन उपर्युक्ताः त्रुटयः बहुगुणिता अभवन् । तस्मिन् विषये केचन व्यतिक्रमा यथा अनुभूताः तथा निम्नतः प्रदत्ताः।

ओड़िआभाषायां समोच्चारितवर्णानां प्रभेदविषये ज्ञानाभावात् ऋ-रु, ज-य इत्यनयोः मध्ये व्यवहारव्यतिक्रमः। सामान्यतः असावधानतावशतः अ, ता, चा, ग इति वर्णचतुष्टयस्य ज्ञानाभावात् त्रुटिः। त्रयाणां स, श, ष काराणाम् उच्चारणज्ञानाभावात् लेखने कस्यचित् एकस्य आधिक्यम् । विगतं वर्षमेकम् अभिव्याप्य निरवच्छिन्नतया प्रत्यहम् अष्टौ दश वा घण्टाः व्ययीकृत्य कठिनपरिश्रमेण मौलिकपाठस्य त्रुटिसंशोधनपूर्वकसम्पादनार्थं प्रयत्नम् अहं कृतवान्। अयं परिश्रमो यदि विदग्धपण्डितानां तथा पैप्पलाद-शाखाध्यायिनाम् आवश्यकतापरिपूरणे सहायको भवेत् तर्हि मे श्रमस्य सार्थकता जाता इति ज्ञास्यामि। परिशेषे काञ्चिकामकोटिपीठाधीश्वराणां श्रीचरणकमलयोः प्रणिपातं विज्ञाप्य तथा श्रीअथर्ववेदपुरुषं साष्टाङ्गं प्रणम्य विरतो भवामि।

आथर्वणाभिधो वेदो धवलो मर्कटाननः।
अक्षमालान्वितो वामे दक्षे कुम्भधरः स्मृतः॥

कुञ्ज बिहारी उपाध्यायः
पुरी - ७५२००१
दिनाङ्क - २८ फरवरी २०१०

१-२५

हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः ।
या अग्निं गर्भं दधिरे सुवर्णास्ता न आपः शं स्योना भवन्तु ॥१॥
यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम् ।
या अग्निं गर्भं दधिरे सुवर्णास्ता न आपः शं स्योना भवन्तु ॥२॥
यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति ।
या अग्निं गर्भं दधिरे सुवर्णास्ता न आपः शं स्योना भवन्तु ॥३॥
शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोप स्पृशत त्वचं मे ।
घृतश्चुतः शुचयो याः पावकास्ता न आपः शं स्योना भवन्तु ॥४॥

(इति प्रथमकाण्डे पञ्चमोऽनुवाकः)

१-१०४

प्रथमा ह व्युवास सा धेनुरभवद्यमे ।
सा नः पयस्वती दुहा उत्तरामुत्तरां समाम् ॥१॥
यां देवाः प्रतिनन्दन्ति धेनुं रात्रिमुपायतीः ।
संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली ॥२॥
संवत्सरस्य प्रतिमां यें त्वा रात्र्युपासते ।
तेषामायुष्मतीं प्रजां रायस्पोषेण सं सृज ॥३॥
इयमेव सा या प्रथमा व्यौच्छत् सास्वन्तरासु चरति प्रविष्टा ।
वधूर्जिगाय नवगज्जनित्री त्रय एनां महिमानः सचन्ते ॥४॥

१-९६

रायस्पोषं धेहि नो जातवेद ऊर्जावदग्ने यशः सूनृतावत् ।
दधाम भागं सुनवाम सोमं यज्ञेन त्वामुप शिक्षेम शक्र ॥१॥
वयमग्ने धनवन्तः स्यामालं यज्ञायोत दक्षिणायै ।
ग्रावा वदेदभि सोमस्यांशुनेन्द्र शिक्षेमेन्दुना सुतेन ॥२॥
ईशानं त्वा शुश्रुमा वयं पुरो दधानां धनपते ।
गोमदग्ने अश्ववद्भूरि पुष्टं हिरण्यवदन्नवद्धेहि मह्यम् ॥३॥
दुहां मे द्यौः पृथिवी पयोऽजगरो मा सीदकोभि वि सर्पतु ।
प्रजापतिना तन्वमा प्रीणेऽरिष्टो म आत्मा ॥४॥

## १-१०९

सोमारुद्रा वि वृहतं विषूचीममीवा या नो गयमाविवेश ।
बाधेथां द्वेषो निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुक्तमस्मत् ।।१।।
तिग्मायुधौ तिग्महेती सुशेवौ सोमारुद्राविह सु मृळतं नः ।
प्र णो मुञ्चतं दुरितादवद्याद् गोपायतं नः सुमनस्यमानौ ।।२।।
सोमारुद्रा धारयेथां वसुवीर्यं प्र वामिष्ट्वा अरमश्नुवातै ।
युवं नो धत्तमिह भेषजानि प्र यच्छतं वृषणा जेत्वानि ।।३।।
सोमारुद्रा युवमस्मास्वन्तस्तनूषु विश्वा भेषजानि धत्तम् ।
अव स्यतं मुञ्चतं किञ्चिदेनो अङ्गेषु बद्धमुत यद् दूषत् ते ।।४।।

## १-११०

घृतस्य जूतिः समना सदेवाः संवत्सरं हविषा वर्धयन्ती ।
श्रोत्रं चक्षुः प्राणोऽच्छिन्नो नो अस्त्वच्छिन्ना वयमायुषो वर्चसः ।।१।।
उपास्मान् प्राणो ह्वयतामुप वयं प्राणं हवामहे ।
वर्चो जग्राह पृथिव्यन्तरिक्षं वर्चः सोमो बृहस्पतिर्विधर्ता ।।२।।
वर्चसो द्यावापृथिवी संग्रहणी बभूवतुर्वर्चो गृहीत्वा पृथिवीमनु सं चरेम ।
यशसा गावो गोपतिमुप तिष्ठन्त्यायतीर्यशो गृहीत्वा
पृथिवीमनु सं चरेम ।।३।।
व्रजं कृणुध्वं स हि वो नृपाणो वर्मा सीव्यध्वं बहुला पृथूनि ।
पुरः कृणुध्वमायसीरधृष्टा मा वः सुस्रोच्चमसो दृंहता तम् ।।४।।

## २-१८

सिंहे व्याघ्र उत या पृदाकौ त्विषिरग्नौ ब्राह्मणे सूर्ये या ।
इन्द्रं या देवी सुभगा ववर्ध सा न ऐतु वर्चसा संविदाना ।।१।।
या हस्तिनि द्वीपिनि या हिरण्ये त्विषिरश्वेषु पुरुषेषु गोषु या ।
इन्द्रं या देवी सुभगा ववर्ध सा न ऐतु वर्चसा संविदाना ।।२।।
या राजन्ये दुन्दुभावायतायां त्विषिः सेनायां स्तनयित्नौ घोषे या ।
इन्द्रं या देवी सुभगा ववर्ध सा न ऐतु वर्चसा संविदाना ।।३।।
रथे अक्षेष्वृषभस्य वाजे पर्जन्ये वाते वरुणस्य शुष्मे ।
इन्द्रं या देवी सुभगा ववर्ध सा न ऐतु वर्चसा संविदाना ।।४।।
या रुद्रेषु या वसुष्वादित्येषु मरुत्सु या ।
त्विषिर्या विश्वेषु देवेषु सा न ऐतु वर्चसा संविदाना ।।५।।

१-८४

यत् ते भूमिं चतुःस्रक्तिं मनो जगाम दूरकम् ।
तत् त आ वर्तयामसीह क्षयाय जीवसे ॥२॥
यत् ते यमं वैवस्वतं मनो जगाम दूरकम् ।
तत् त आ वर्तयामसीह क्षयाय जीवसे ॥३॥
यत् ते समुद्रमर्णवं मनो जगाम दूरकम् ।
तत् त आ वर्तयामसीह क्षयाय जीवसे ॥४॥
यत् ते दिवं यत् पृथिवीं मनो जगाम दूरकम् ।
तत् त आ वर्तयामसीह क्षयाय जीवसे ॥५॥
यत् ते वायुमन्तरिक्षं मनो जगाम दूरकम् ।
तत् त आ वर्तयामसीह क्षयाय जीवसे ॥६॥
यत् ते सूर्यं यदुषसं मनो जगाम दूरकम् ।
तत् त आ वर्तयामसीह क्षयाय जीवसे ॥७॥
यत् ते चन्द्रं नक्षत्राणि मनो जगाम दूरकम् ।
तत् त आ वर्तयामसीह क्षयाय जीवसे ॥८॥
यत् ते आपो यदोषधीर्मनो जगाम दूरकम् ।
तत् त आ वर्तयामसीह क्षयाय जीवसे ॥९॥
यत् ते परमां परावतं मनो जगाम दूरकम् ।
तत् त आ वर्तयामसीह क्षयाय जीवसे ॥१०॥

१२-१४

यः पृथिवीं व्यथमानामदृंहद् यः पर्वतान् प्रकुपिताङ् अरम्णात्।
यो अन्तरिक्षं विममे वरीयो यो द्यामस्तभ्नात् स जनास इन्द्रः॥२॥
यो हत्वाहिमरिणात् सप्त सिन्धून् यो गा उदाजदपधा वलस्य।
यो अश्मनोरन्तरग्निं जजान संवृक् समत्सु स जनास इन्द्रः॥३॥
येनेमा विश्वा च्यवना कृतानि यो दासं वर्णमधरं गुहाकः।
श्वघ्नीव यो जिगीवाँल्लक्षमाददर्यः पुष्टानि स जनास इन्द्रः॥४॥
यं स्मा पृच्छन्ति कुह सेति घोरमुतेमाहुर्नैषो अस्तीत्येनम्।
सो अर्यः पुष्टीर्विज इवा मिनाति श्रदस्मै धत्त स जनास इन्द्रः॥५॥
यो रध्रस्य चोदिता यः कृशस्य यो ब्रह्मणो नाधमानस्य कीरेः।
युक्तग्राव्णो योऽविता सुशिप्रः सुतसोमस्य स जनास इन्द्रः॥६॥
यस्याश्वासः प्रदिशि यस्य गावो यस्य ग्रामा यस्य विश्वे रथासः।
यः सूर्यं य उषसं जजान यो अपां नेता स जनास इन्द्रः॥७॥
यं क्रन्दसी संयती विह्वयेते परेऽवर उभया अमित्राः।
समानं चिद् रथमातस्थिवांसा नाना हवेते स जनास इन्द्रः॥८॥
यस्मान् नर्ते विजयन्ते जनासो यं युध्यमाना अवसे हवन्ते।
यो विश्वस्य प्रतिमानं बभूव यो अच्युतच्युत् स जनास इन्द्रः॥९॥
यः शश्वतो मह्येनो दधानानबुध्यमानान् शर्वा जघान।
यः शर्धते नानुददाति शृध्यां यो दस्योर्हन्ता स जनास इन्द्रः॥१०॥

१२-१५

यः शम्बरं पर्वतेषु क्षियन्तं चत्वारिंश्यां शरद्यन्वविन्दत्।
ओजायमानं यो अहिं जघान दानुं शयानं स जनास इन्द्रः॥१॥
यः शम्बरं पर्यचरच्छचीभिर्यो वा वृकस्य नापिबत् सुतम्।
अन्तर्गिरौ यजमानं वहुं जनं यस्तंनासुरुक्षु स जनास इन्द्रः॥२॥

यः सप्तरश्मिर्वृषभस्तुविष्मानवासृजत् सर्तवे सप्त सिन्धून् ।
यो रौहिणमस्फुरद् वज्रबाहुर्द्यामारोहन्तं स जनास इन्द्रः ।।३।।
द्यावा चिदस्मै पृथिवी नमेते शुष्माच्चिदस्य पर्वता भयन्ते।
यः सोमपा निचितो वज्रबाहुर्यो वज्रहस्तः स जनास इन्द्रः ।।४।।
यः सुन्वन्तमवति यः पचन्तं यः शंसन्तं यः शशमानमूती ।
यस्य ब्रह्म वर्धनं यस्य सोमो यस्येदं राधः स जनास इन्द्रः ।।५।।
यः सुन्वते पचते दुध्र आ चिद्वाजं दर्दर्षि स किलासि सत्यः।
वयं त इन्द्र विश्वह प्रियासः सुवीरासो विदथमा वदेम ।।६।।
जातो व्यख्यत् पित्रोरुपस्थे भुवो न वेद जनितुः परस्य ।
तविष्यमाणो न्वोजो अख्यद् व्रता देवानां स जनास इन्द्रः ।।७।।
यः सोमकामो हर्यश्व आसु यस्माद्रेजन्ते भुवनानि विश्वा ।
यो जघान शम्बरं यश्च शुष्णं य एकवीरः स जनास इन्द्रः ।।८।।

१२-१६

शं न इन्द्राग्नी भवतामवोभिः शं न इन्द्रावरुणा रातहव्या ।
शमिन्द्रासोमा सुविताय शं योः शं न इन्द्रापूषणा वाजसातौ ।।१।।
शं नो भगः शमु नः शंसो अस्तु शं नः पुरन्धिः शमु सन्तु रायः।
शं नः सत्यस्य सुयमस्य शंसः शं नो अर्यमा पुरुजातो अस्तु ।।२।।
शं नो धाता शमु धर्ता नो अस्तु शं न उरूची भवतु स्वधाभिः।
शं रोदसी बृहती शं नो अद्रिः शं नो देवानां सुहवानि सन्तु ।।३।।
शं नो अग्निर्ज्योतिरनीको अस्तु शं मित्रावरुणावश्विना शम् ।
शं नः सुकृतां सुकृतानि सन्तु शं न इषिरो अभि वातु वातः ।।४।
शं नो द्यावापृथिवी पूर्वहूतौ शमन्तरिक्षं दृशये नो अस्तु ।
शं न ओषधीर्वनिनो भवन्तु शं नो रजसः पतिरस्तु जिष्णुः ।।५।।

शं न इन्द्रो वसुभिर्देवो अस्तु शमादित्येभिर्वरुणः सुशंसः।
शं नो रुद्रो रुद्रेभिर्जलाषः शं नस्त्वष्टा ग्नाभिरिह शृणोतु ॥६॥
शं नः सोमो भवतु ब्रह्म शं नः शं नो ग्रावाणः शमु सन्तु यज्ञाः।
शं नः स्वरूणां मितयो भवन्तु शं नः प्रस्वः शम्वस्तु वेदि ॥७॥
शं नः सूर्य उरुचक्षा उदेतु शं नो भवन्तु प्रदिशश्चतस्रः।
शं नः पर्वता ध्रुवयो भवन्तु शं नः सिन्धवः शमु सन्त्वापः ॥८॥
शं नो अदितिर्भवतु व्रतेभिः शं नो भवन्तु मरुतः स्वर्काः।
शं नो विष्णुः शमु पूषा नो अस्तु शं नो भवित्रं शम्वस्तु वायुः ॥९॥
शं नो देवः सविता त्रायमाणः शं नो भवन्तुषसो विभातीः।
शं नः पर्जन्यो भवतु प्रजाभ्यः शं नः क्षेत्रस्य पतिरस्तु शम्भुः ॥१०॥

१२-१७

शं नः सत्यस्य पतयो भवन्तु शं नो अर्वन्तः शमु सन्तु गावः।
शं न ऋभवः सुकृतः सुहस्ताः शं नो भवन्तु पितरो हवेषु ॥१॥
शं नो देवा विश्वदेवा भवन्तु शं सरस्वती सह धीभिरस्तु।
शमभिषाचः शमु रातिषाचः शं नो दिव्याः पार्थिवाः शं नो अप्याः ॥२॥
शं नो अज एकपाद् देवो अस्तु शमहिर्बुध्न्यः शं समुद्रः।
शं नो अपां नपात् पेरुरस्तु शं नः पृश्निर्भवतु देवगोपा ॥३॥
आदित्या रुद्रा वसवो जुषन्तामिदं ब्रह्म क्रियमाणं नवीयः।
शृण्वन्तु नो दिव्याः पार्थिवासो गोजाता उत ये यज्ञियासः ॥४॥
ये देवानामृत्विजो यज्ञियासो मनोर्यजत्रा अमृता ऋतज्ञाः।
ते नो रासन्तामुरुगायमद्य यूयं पात स्वस्तिभिः सदा नः ॥५॥
तदस्तु मित्रावरुणा तदग्ने शंयोरस्मभ्यमिदमस्तु शस्तम्।
अशीमहि गातुमुत प्रतिष्ठां नमो दिवे बृहते सादनाय ॥६॥

१८–२

शुची ते चक्रे यात्या व्यानो अक्ष आहतः ।
अनो मनस्मयं सूर्यारोहत् प्रयती पतिम् ।।१।।
सूर्याया वहतुः प्रागात् सविता यमवासृजत् ।
मघासु हन्यन्ते गावः फाल्गुनीषु व्युह्यते ।।२।।
यदश्विना पृच्छमानावयातं त्रिचक्रेण वहतुं सूर्यायाः ।
क्वैकं चक्रं वामासीत् क्व देष्ट्राय तस्थथुः ।।३।।
यदयातं शुभस्पती वरेयं सूर्यामुप ।
विश्वे देवा अनु तद् वामजानन्
पुत्रः पितराववृणीत पूषा ।।४।।
द्वे ते चक्रे सूर्ये ब्रह्माण ऋतुथा विदुः ।
अथैकं चक्रं यद् गुहा तदद्धातय इद् विदुः ।।५।।
प्र त्वा मुञ्चामि वरुणस्य पाशाद् येन त्वाबध्नात् सविता सुशेवाः।
ऋतस्य योनौ सुकृतस्य लोके स्योनं ते अस्तु सहपत्न्यै वधु ।।६।।
अर्यमणं यजामहे सुबन्धुं पतिवेदनम् ।
उर्वारुकमिव बन्धनादितो मुञ्चन्तु मामुतः ।।७।।
प्रेतो मुञ्चन्तु मामुतः सुबद्धाममुतस्करत्।
यथेयमिन्द्र मीढ्वः सुपुत्रा सुभगासति ।।८।।
भगस्त्वेतो नयतु हस्तगृह्याश्विना त्वा प्र वहतां रथेन ।
गृहान् गच्छ गृहपत्नी यथासो वशिनी त्वं विदथमा वदासि।।९।।
इह प्रियं प्रजायै ते समृध्यतामस्मिन् गृहे गार्हपत्याय जागृहि।
एना पत्या तन्वं सं स्पृशस्वाथ जिर्विर्विदथमा वदासि ।।१०।।

त

१८–३

इहैव स्तं मा वि यौष्टं दीर्घमायुर्व्यश्नुतम् ।
क्रीडन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वे गृहे ।।१।।
पूर्वापरं चरतो माययैतौ शिशू क्रीडन्तौ परि यातो अध्वरम्।
विश्वान्यन्यो भुवना विचष्ट ऋतूँरन्यो विदधज्जायते नवः ।।२।।
नवोनवो भवति जायमानोह्नां केतुरुषसामेत्यग्रम् ।
भागं देवेभ्यो वि दधात्यायन् प्र चन्द्रमास्तिरते दीर्घमायुः ।।३।।
परा देहि शामुल्यं ब्रह्मभ्यो वि भजा वसु ।
कृत्यैषा पद्वती भूत्वा जाया विशते पतिम् ।।४।।
नीललोहितं भवति कृत्यासक्तिर्व्यज्यते ।
एधन्ते अस्या ज्ञातयः पतिर्बन्धेषु बध्यते ।।५।।
अश्लीला तनूर्भवति रुशती पापयामुया ।
पतिर्यद् वध्वो वाससः स्वमङ्गमभ्यूर्णुते ।।६।।
आशसनं विशसनमथो अधिविकर्तनम् ।
सूर्यायाः पश्य रूपाणि तानि ब्रह्मोत शुन्धति ।।७।।
तृष्टमेतत् कटुकमपाष्ठवद् विषवन्नैतदत्तवे ।
सूर्यां यो ब्रह्मा वेद स इद् वाधूयमर्हति ।।८।।
स वै तत् स्योनो हरति ब्रह्मा वासः सुमङ्गलम् ।
प्रायश्चित्तिं यो अध्येति येन जाया न रिष्यति ।।९।।
युवं भगं सं भरतः समृद्धमृतं वदन्तावृतोद्येन ।
ब्रह्मणस्पते पतिमस्यै रोचयामुं
चारु संभलो वदतु वाचमेताम्।।१०।।

१८-२१

सुखं सूर्य रथमंशुमन्तं स्योनं सुवह्निमधि तिष्ठ वाजिनम् ।
यं वहन्ति हरितो वहिष्ठाः शतमश्वा यदि वा सप्त बह्वीः ।।१।।
सप्त सूर्यो हरितो यातवे रथे हिरण्यत्वचसो बृहतीरयुक्त ।
अमोची शुक्रो रजसः परस्ताद् विधूय देवस्तमो दिवमारुहत् ।।२।।
उत् केतुना बृहता देव आगन्नपावृक्तमोऽभि ज्योतिरश्रैत् ।
दिव्यः सुपर्णः स वीरो व्यख्यददितेः पुत्रो भुवनानि विश्वा ।।३।।
उद्यन् रश्मीना तनुषे प्रजाः सर्वा वि पुष्यसि ।
उभा समुद्रैः क्रतुना वि भाति सर्वाल्लोकान् परिभूर्भ्राजमानः ।।४।।
पूर्वापरं चरतो माययैतौ शिशु क्रीडन्तौ परियातो अर्णवम् ।
विश्वान्यन्यो भुवना भिवस्ते हैरण्यैरन्य हरितो वहन्ति।।५।।
दिवि त्वात्त्रिरधारयत् सूर्या मासाय कर्तवे ।
स एषि: सुधृतस्तपन् बिश्वा भूतावचाकशत् ।। ६ ।।
उभावन्तौ समर्षति वत्सः संमातराविव ।
नन्वेतदितः पुरा ब्रह्म देवा अमी विदुः ।। ७ ।।
यत् समुद्रमनु श्रितं तत् सिषासति सूर्यः ।
अध्वास्य विततो महान् पूर्वश्चापरश्च यः ।। ८ ।।
तं समाप्नोति जूतिभिस्तस्मान्नापि चिकित्सति ।
तेनामृतस्य भक्षं देवानां नाव रुन्धते ।। ९ ।।
उदु त्यं जातवेदसं देवं वहन्ति केतवः ।
दृशे विश्वाय सूर्यम् ।। १० ।।

१८-२२

अप त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः ।
सूराय विश्वचक्षसे ॥ १ ॥
अदृश्रन्नस्य केतवो वि रश्मयो जनाँङ् अनु ।
भ्राजन्तो अग्नयो यथा ॥ २ ॥

---

तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्यः ।
विश्वमा भासि रोचनः ॥ ३ ॥
प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि मानुषी ।
प्रत्यङ् विश्वं स्वर्दृशे ॥ ४ ॥
येना पावक चक्षुषा भुरण्यन्तं जनाङ् अनु ।
त्वं वरुण पश्यसि ॥ ५ ॥
वि द्यामेषि रजस्पृथ्वहर्मिमानो अक्तुभिः ।
पश्यन् जन्मानि सूर्य ॥ ६ ॥
सप्त त्वा हरितो रथे वहन्ति देव सूर्य ।
शोचिष्केशं विचक्षणम् ॥ ७ ॥
अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्यः ।
ताभिर्याति स्वयुक्तिभिः ॥ ८ ॥
अभि मा वर्चसा गिरः सिञ्चतीराचरण्यवः ।
अभि वत्सं न धेनवः ॥ ९ ॥
ता अर्षन्तु शुभ्रियः पृञ्चन्तीर्वर्चसा प्रियः ।
जातं जात्रीर्यथा हृदा ॥ १० ॥

---

१९-६

वरणो वारयाता अयं देवो वनस्पतिः ।
यक्ष्मो यो अस्मिन्नाविष्टस्तमु देवा अवीवरन् ।। १ ।।
इन्द्रस्य वचसा वयं मित्रस्य वरुणस्य च ।
देवानां सर्वेषां वाचा यक्ष्मं ते वारयामहे ।। २ ।।
यथा वृत्र इमा आपस्तस्तम्भ विश्वधा यतीः ।
एवा ते अग्निना यक्ष्मं वैश्वानरेण वारये ।। ३ ।।
ध्रुवं ध्रुवेण हविषाभि सोमं मृशामसि ।
अत्रा त इन्द्रः केवलीर्विशो बलिहृतस्करत् ।। ४ ।।
आ त्वाहार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलत् ।
विशस्त्वा सर्वा आ यन्तु मा त्वद्राष्ट्रमधि भ्रशत् ।। ५ ।।

१९-२२

नमो ऽस्तु सर्पेभ्यो ये के च पृथिवीमनु ।
ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ।। १ ।।
ये चामी रोचने दिवो ये च सूर्यस्य रश्मिषु ।
येषामप्सु सदस्कृतं तेभ्यः सर्पेभ्यो नमः ।। २ ।।
या इषवो यातुधानानां ये वा वनस्पतीनाम् ।
ये वावटेषु शेरते तेभ्यः सर्पेभ्यो नमः ।। ३ ।।
यवोच्छिष्ट हविषा वर्धयेमं यथा द्युम्नैः कृणुवद् वीर्याणि ।
सजूर्देवेभिरभि भूः सपत्नान् आयुष्मत् क्षत्रमजरं ते अस्तु ।।४।।
पुंसा यवेन हविषा पयस्वतोच्छिष्टस्यायं रक्षन्तु देवाः ।
देवाह्यस्मिन् निदधुर्नृम्णं बृहदस्मा इन्द्रो वयो दधातु ।।५।।
समुच्छिष्टस्य हविषा समुक्थै समायुषा वर्चसा पयो दधातु ।
देवाह्यस्मिन् निदधुर्नृम्णं बृहदस्मा इन्द्रो वयो दधातु।। ६ ।।

न

११-४४

मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः ।
माध्वीर्गावो भवन्तु नः ।। ५ ।।
मधु नक्तं उतोषसो मधुमत् पार्थिवं रजः ।
माध्वीर्नः सन्त्वोषधीः ।। ६ ।।
मधुमान् नो वनस्पतिर्मधुमाँ२ अस्तु सूर्यः ।
मधु द्यौरस्तु नः पिता ।। ७ ।।
आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन ।
महे रणाय चक्षसे ।। ८ ।।
यो वः शिवतमो रसस्तस्य भाजयतेह नः ।
उशतीरिव मातरः ।। ९ ।।
तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ ।
आपो जनयथा च नः ।। १० ।।
आयं गौः पृश्निरक्रमीदसदन् मातरं पुरः ।
पितरं च प्रयन्त्स्वः ।। ११ ।।
अन्तश्चरति रोचनास्य प्राणादपानतः ।
व्यख्यन्महिषो दिवम् ।। १२ ।।
त्रिंशद् धाम वि राजति वाक्पतङ्गाय शिश्रियत् ।
प्रति वस्तोरहर्द्युभिः ।। १३ ।।
यच्छक्रा वाचमारुहन्नन्तरिक्षं सिषासन्तः ।
सं देवा अमदन् वृषा ।। १४ ।।
शक्रो वाचमधृष्टायोरुवाचो अधृष्णुहि ।
मंहिष्ठ आ मदर्दिवि ।। १५ ।।
शक्रो वाचमधृष्णुहि धामधर्मन् वि राजति ।
विमदन् बर्हिरासरन् ।। १६ ।।

# Primary Sources: Manuscripts

The manuscripts used in this edition are six palm-leaf mss. Of the six, two manuscripts are available with me while three manuscripts are in digital form besides one is a xerox copy of the original.

**Collection**

No 1. Ms.is in the possession of Sudhakara Panda, At\Po : Guhiapal, Dist - East Singbhum, Jharkhand.

No 2. Ms. is in the possession of Aditya Kumar Praharaj, At\Po:-Baripada,Mayurbhanj district. Odisha who has collected it from Fakira Charan Upadhyaya of Parikul, Balasore, Odisha.

No 3. Ms.is with Dr. Jagabandhu Mishra, At-Mangala Aalati, Po\Dist:- Puri,Odisha. Digital photographs of which are available with the author.

No 4. Ms. is with Ananda Chandra Panda, Jiuli-Sasan, Mayurbhanj district. Odisha. Xerox copy of the same text are available with the author.

No 5. Ms. owned by Benudhara Panda, At\Po-Guhiapal,East Sing- bhum district.Odisha. Digital photogr -aphs of the Ms.is available with the author.

No 6. The author has the digital copies of the original Ms. owned by Gopinath Upadhyaya, At:- Parvati -pur, Po:-Narsingpur,Cuttack district. Odisha.

## Secondary Sources

**Atharvaveda Samhita :** Edited by Shankar Panduranga Pundit IV volumes (with the commentary of Sayana) published at Krishnadas Academy, Varanasi.U.P

**The Atharvaveda and its Paippaladasakha :** Edited by Arlo Griffiths and Annette Schmiedchen(Historical and Philological Papers on A Vedic Tradition) published at Shaker-Verlag, Aachen 2007, email: info@shaker.de.

**The paippalada-Samhita of The Atharvaveda :** Edited by Dipak Bhattacharya consisting of the first fifteen Kandas, published at The Asiatic Society, 1, Park Street, Calcutta - 16.

**Aharvaveda of the Paippaladas :** Edited by Dr. Raghu Vira and published at Aars.a Sahitya Prachar Trust, 2-F, Kamala Nagar,New Dilhi - 7.

**R.gvedasamhita :** Edited by Pundit Sripada Damodar Satvalekar and published at swadhyayaMandal, Paradi, Dist-Balsad,Gujurat.

**Suklayajurvediiya Kan.vasamhita :** Edited by Aatmavidyabhus.an.a - shastraratnakarah Jagadiswara-shastri & Brahfmashree Shivaramakrishnaghanapathi. Published at Kanchi Kamakoti Mutt,Kanchipuram,Tamilnadu.

**Vedic - Kosha :** Authors of the kos.a - Hamsaraj & Bhagavad Datta spublished at Vishva Bharati Research Ins-titute, Varanasi,U.P.

**Samaveda Samhita :** Edited by Pundit Sripada Damodar Satvalekar and published at swadhyayamandal, Paradi, Dist- Balsad, Gujurat.

**Kauthuma Sakhiiya Samaveda Samhita:** Edited by R.Sankar Narayan Srauti, published at Kanchi Kamakoti Mutt,Kanchipuram,Tamilnadu.

.....................

अथर्वाणां चन्द्रमा देवतं तदेव ज्योतिः सर्वाणि छन्दांस्यापः स्थानम् । 'शन्नो देवीरभिष्टय " इत्येवमादिं कृत्वा अथर्ववेदमधियते । अद्भ्यः स्थावरजङ्गमो भूतग्रामः सम्भवति, तस्मात् सर्वमापोमयं भूतं सर्वं भृग्वङ्गिरोमयम् । अन्तरैते त्रयो वेदा भृगूनङ्गिरसः श्रिता इत्यबिति प्रकृतिरपामोङ्कारेण चैतस्माद् व्यासः पुरोवाच भृग्वङ्गिरोविदा संस्कृतो ऽन्यान् वेदानधीयीत नान्यत्र संस्कृतो भृग्वङ्गिरस ऽधीयीत अथ सामवेदे खिलश्रुतिः ब्रह्मचर्य्येण चैतस्मादथर्वाङ्गिरसो ह यो वेद स वेद सर्वमिति ब्राह्मणम् ।

*(गोपथब्राह्मणे पूर्व भागे प्रथम: प्रपाठक २९ कण्डिका)*

सर्वसादेर्द्विगोश्च लो वक्तव्यः। सर्ववेदः सर्वतन्त्रः।
सवार्त्तिकः ससंग्रहः। पञ्चकल्पः द्वितन्त्रः।

*(महाभाष्य - ४:२:६०)*

पञ्चकल्पं अथर्वाणं कृत्याभिः परिवृङ्हितम्।
कल्पयन्ति हि मां विप्रा अथर्वाणविदा स्तथा।।

*(महाभारत - १२:३३०:३४)*

द्विवेदं ब्राह्मणं राजा पुरोहितं अथर्वणं।
पञ्चकल्पविधानज्ञं वरयेत सुदर्शनम्।।

*(विष्णुधर्मोत्तरपुराण - २:५:३)*

पुरोहितं उदितोदितकुलोशीलं साङ्गे वेदे दैवे निमित्ते दण्डनीत्यां चाभिविनीतां आपदां दैवमानुषीणां अथर्वभिरुपायैश्च प्रतिकर्तारं कुर्वीत। *(अर्थशास्त्र - १:९:९)*

पुरोहितं प्रकुर्वीत दैवज्ञं उदितोदितम्।
दण्डनित्यां च कुशलं अथर्वाङ्गिरसे तथा।।

*(याज्ञवल्क्यस्मृति - १:३१३)*

सौरं शैवं पञ्चरात्रं प्रमाणं वैमलं मतम्।
अथर्वं सांख्ययोगं च बौद्धं आरहतादिकम्।
विशेषाख्यं यतस्तन्त्रं विशेषासमयात् स्थिति।।

*(जयद्रथयामल, षट्क - १)*

ग्रन्थो ऽयं मदीय पूज्यपाददिवंगतपितामह पण्डित भोलानाथ उपाध्याय महोदयस्य स्मृतिमभिलक्ष्य उत्सर्गीकृतः ।

# अथ चतुर्चोनाम प्रथमकाण्ड:

१-१

शं नो देवीरभिष्टय आपो भवन्तु पीतये ।
शं योरभि स्रवन्तु न: ।।१।।
आप: पृणीत भेषजं वरूथं तन्वे मम ।
ज्योक् च सूर्यं दृशे ।।२।।
अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा ।
अग्निं च विश्वशंभुवम् ।।३।।
ईशाना वार्याणां क्षयन्तीश्चर्षणीनाम् ।
अपो याचामि भेषजम् ।।४।।

१-२

अम्बयो यन्त्यध्वभिर्जामयो अध्वरीयताम् ।
पृञ्चतीर्मधुना पय: ।।१।।
अमूर्या उप सूर्ये याभिर्वा सूर्य: सह ।
ता नो हिन्वन्त्वध्वरम् ।।२।।
अपो देवीरुप ब्रुवे यत्र गाव: पिबन्ति न: ।
सिन्धुभ्य: कर्त्वं हवि: ।।३।।
अप्स्वन्तरमृतमप्सु भेषजम् ।
अपामुत प्रशस्तिष्वश्वा भवथ वाजिन: ।।४।।

१ - ३

विद्मा शरस्य पितरं पर्जन्यं भूरिधायसम् ।
विद्मो ह्यस्य मातरं पृथिवीं विश्वधायसम् ।।१।।
ज्यायके परि णो नमाश्मा भवत नस्तनू: ।
विरुड्विहि वरीयोरातीरप द्वेषांस्या कृधि ।।२।।
वृक्षं यद् गाव: परिषस्वजाना अनस्फुरं शरमर्च्यन्त्यृभुम् ।
शरमस्मद् यावय दिद्युमिन्द्र शं नो भवन्त्वप ओषधीरिमा:।।३।।
इन्द्रस्य वज्रो अप हन्तु रक्षस आराद् विसृष्टा इषव: पतन्त्वस्मत् ।।४।।

१ - ४

विद्म ते शर पितरं पर्जन्यं भूरिरेतसम्
तेना ते तन्वे शं करं पृथिव्यां ते निषेचनं बहिष्टे अस्तु बालिति ।।१।।
विद्म ते शर पितरं इन्द्रं भूरिरेतसम्
तेना ते तन्वे शं करं पृथिव्यां ते निषेचनं बहिष्टे अस्तु बालिति ।।२।।
विद्म ते शर पितरं वरुणं भूरिरेतसम्
तेना ते तन्वे शं करं पृथिव्यां ते निषेचनं बहिष्टे अस्तु बालिति ।।३।।
विद्म ते शर पितरं चन्द्रं भूरिरेतसम्
तेना ते तन्वे शं करं पृथिव्यां ते निषेचनं बहिष्टे अस्तु बालिति ।।४।।
विद्म ते शर पितरं सूर्यं भूरिरेतसम्
तेना ते तन्वे शं करं पृथिव्यां ते निषेचनं बहिष्टे अस्तु बालिति ।।५।।
यदान्त्रेषु गवीन्योर्यद् वस्तावधि संश्रुतम् ।
तेना ते तन्वे शं करं पृथिव्यां ते निषेचनं बहिष्टे अस्तु बालिति ।।६।।
प्र ते भिनद्मि मेहनं वर्त्रं वेशन्त्या इव ।
तेना ते तन्वे शं करं पृथिव्यां ते निषेचनं बहिष्टे अस्तु बालिति ।।७।।

यथेषुका परापतदवसृष्टाधि धन्वनः ।
एवा ते मूत्रमुच्यतां बहिर्बालिति सर्वकम् ।।८।।

१-५

वषट् ते पूषन्नस्यै सुवृक्तिमर्यमा होता कृणोतु वेधाः ।
सिस्रतां नार्युत प्रदाता वि पर्वाणि जिहतां सूतवा उ ।।१।।
चतस्रो दिशः प्रदिशश्चतस्रो भूम्या उत ।
देवा गर्भं समैरयन् ते व्यूर्णुवन्तु सूतवे ।।२।।
सुष्टा व्यूर्णोतु वि योनिं हापयामसि ।
श्रथया सूषणे त्वमव त्वं बिष्कले सृज ।।३।।
नेव स्नावसु न पर्वसु न केशेषु नखेषु च ।
अवैतु पृश्नि शेवलं शुने जराय्वत्तवे ।।४।।
नेव मांसे न पीवसि नेव कस्मिंश्चनायत्तम् ।
अव जरायु पद्यताम् ।।५।।

*(इति चतुर्चनामप्रथमकाण्डे प्रथमो ऽनुवाकः)*

१-६

ये त्रिषप्ताः पर्यन्ति विश्वा रूपाणि बिभ्रतः ।
वाचष्पतिर्बला तेषां तन्वमद्य दधातु मे ।।१।।
उप न एहि वाचस्पते देवेन मनसा सह ।
असोष्पते नि रमय मय्येव तन्वं मम ।।२।।
इहैवाभि वि तनूभे आर्त्नी इव ज्यया ।
वाचस्पतिर्नि यच्छतु मय्येव तन्वं मम ।।३।।
उपहूतो वाचस्पतिरुपहूतोऽहं वाचस्पत्युः ।
सं श्रुतेन राधिषीय मा श्रुतेन वि राधिषि ।।४।।

१-७

दिव्यो गन्धर्वो भुवनस्य यस्पतिरेकायुवो नमसा विक्ष्वीड्य: ।
तं त्वा यौमि ब्रह्मणा देव दिव्य नमस्ते अस्तु दिवि ते सधस्थम्।।१।।
दिव स्पृष्टो यजत: सूर्यत्वगवयाता हरसो दैव्यस्य ।
एकायुवो नमसा सुशेवो मृडाद् गन्धर्वो भुवनस्य यस्पति:।।२।।
अनवद्याभि: समु जग्म आभिरप्सराभिरपि गन्धर्व आसु ।
समुद्र आसां सदनं म आहुर्यत: सद्य आ च परा च यन्ति ।।३।।
अभ्रिये दिद्युन्नक्षत्रिये या विश्वावसुं गन्धर्वं सचध्वे ।
ताभ्यो वो देवीर्नम इत् कृणोमि ।।४।।
या: क्लन्दास्तमिषीचयो अक्षकामा मनोमुह: ।
ताभ्यो गन्धर्वपत्नीभ्यो अप्सराभ्योऽकरं नम: ।।५।।

१-८

अमुष्मादधि पर्वतादवत्कमसि भेषजम् ।
भेषजं सुभेषजं यत्ते कृणोमि भेषजम् ।।१।।
आदङ्गा कुविदङ्गा शतं यद् भेषजानि ते सहस्रं वा घ यानि ते।
तेषामसि त्वमुत्तममनास्रावमरोगणम् ।।२।।
अरुस्यानमिदं महत् पृथिव्या अध्युद्धतम् ।
तदास्रावस्य भेषजं तदु रोगमनीनशत् ।।३।।
उपजीका उद्धरन्ति समुद्रादधि भेषजम् ।
अरुस्यानमस्याथर्वणं रोगस्थानमस्याथर्वणम् ।।४।।

१-९

अयं देवानामसुरो वि राजति वशा हि सत्या वरुणस्य राज्ञ:।
ततस्परि ब्रह्मणा शाशदान उग्रस्य मन्योरुदिमं नयामि ।।१।।

नमस्ते राजन् वरुणास्तु मन्यवे विश्वं हि देव निचिकेषि द्रुग्धम् ।
शतं सहस्रं प्र सुवाम्यन्यानयं नो जीवं शरदो व्यापेत्।।२।।
यदुवक्थानृतं जिह्वया वृजिनं बहु ।
राज्ञस्त्वा सत्य धर्मणो मुञ्चामि वरुणादहम् ।।३।।
अमुञ्चं त्वा वैश्वानरादर्णवान् महतस्परि ।
सजातानुग्र आ वद ब्रह्म चाप चकीहि नः ।।४।।

१-१०

सीसायान्वाह वरुणः सीसायाग्निरुपावति ।
सीसं म इन्द्रः प्रायच्छदमीवायास्तु चातनम् ।।१।।
इदं विष्कन्धं सहत इदं बाधते अत्त्रिणः ।
अनेन विश्वा सासहै या जातानि पिशाच्याः ।।२।।
येऽमावास्यां रात्रिमुदस्थुर्भ्राजमत्त्रिणः ।
अग्निस्तुरीयो यातुहा स उ नः पातु तेभ्यः ।।३।।
यदि हंस्यश्वं यदि गां यदि पूरुषम् ।
सीसेन विध्यामस्त्वा यथा नोसो अवीरहा ।।४।।

*(इति चतुर्चनामप्रथमकाण्डे द्वितीयो ऽनुवाकः)*

१-११

अभीवर्तेन मणिना येनेन्द्रो अभिवावृते ।
तेनेमं ब्रह्मणस्पते अभि राष्ट्राय वर्तय ।।१।।
अभिवृत्य सपत्नाभि या नो अरातयः ।
अभि पृतन्यन्तं तिष्ठाभि यो नो दुरस्यति ।।२।।
अभि त्वा देवः सविताभि सोमो अवीवृतत् ।
अभि त्वा विश्वा भूतान्यभीवर्तो यथाससि ।।३।।

उदसौ सूर्ये अगादुदिदं मामकं वच: ।
यथाहं शत्रुहासान्यसपत्न: सपत्नहा ।।४।।
सपत्नक्षयणो वृषाभिराष्ट्रो विषासहि: ।
यथाहमेषां वीराणां विराजानि जनस्य च ।।५।।

१-१२

तुभ्यमेव जरिमन् वर्धतामयं मैनमन्ये मृत्यवो हिंसिषुस्त्वत् ।
मातेव पुत्रं प्रमना उपस्थे मित्र एनं मित्र्यात् पात्वंहस: ।।१।।
मित्रश्च त्वा वरुणश्च रिशादौ जरांमृत्युं कृणुतां संविदानौ ।
तदग्निर्होता वयुनानि विद्वान् विश्वानि देवो जनिमा विवक्तु ।।२।।
द्यौष्टे पिता पृथिवी माता जरांमृत्युं कृणुतां दीर्घमायु: ।
यथा जीवा अदित्या उपस्थे प्राणापानाभ्यां गुपित: शतं हिमा:।।३।।
त्वमीशिषे पशूनां पार्थिवानां ये जाता उत ये जनित्वा ।
मेमं प्राण हासीन्मो अपानो मैनं मित्रा वधिषुर्मो अमित्रा: ।।४।।

१-१३

इन्द्रेण दत्तो वरुणेन शिष्टो मरुद्भिरुग्र: प्रयतो न आगन् ।
एतं वां द्यावापृथिवी परि ददामि स मा तृषत् स मा क्षुधत्।।१।।
ऊर्जमस्मा ऊर्जस्वती धत्तं पयोऽस्मै पयस्वती धत्तम् ।
ऊर्जमस्मै द्यावापृथिवी अधातां विश्वे देवा मरुत ऊर्जमाप:।।२।।
शिवा अस्य हृदयं तर्पयन्त्वनमीवो मोदमानश्चरेह ।
सवासिनौ पिबतां मन्थमेतमश्विनो रूपं परिधाय मायाम् ।।३।।
तस्य पातारं सचतां पुरीषमूर्जा स्वधा सचतामेतमेषा ।
इन्द्र एतां ससृजे विद्धो अग्र ऊर्जां स्वधामजरां सा त एषा ।
तया त्वं जीव शरद: सुवर्चा मा त आ सुस्रोद्भिषजस्ते अक्रन् ।।४।।

## १-१४

विश्वे देवासो अभि रक्षतेममुतादित्या जागृत यूयमस्मिन् ।
मेमं समान उत वान्यनाभिर्मेमं प्रापत् पौरुषेयो वधो य: ।।१।।
ये वो देवा: पितरो ये च पुत्रा: सचेतसो मे शृणुतेदमुक्तम् ।
सर्वेभ्यो व: परि ददाम्येतं त एनं स्वस्ति जरसे नयाथ ।।२।।
ये देवा दिवि ष्ठ ये पृथिव्यां ये अन्तरिक्ष औषधीष्वप्सु ।
ते कृणुत जरसमायुरस्मै शतमन्यान् परि वृणक्त मृत्यून् ।।३।।
येषां प्रयाजा उत वानुयाजा हुतभागा हुतादश्च देवा: ।
येषां व: पञ्च प्रदिशो विभक्तास्तां वो अस्मै सत्रसद: कृणोमि ।।४।।

## १-१५

अहं ते भगमा ददेऽधि शीर्ष्णो इव स्रजम् ।
महामूल इव पर्वतो ज्योक् पितृष्वासासै ।।१।।
इयं ते राजन् कन्या वधूर्नि धूयते यम: ।
सा मातुर्बध्यतां गृहेऽथो भ्रातुरथो पितु: ।।२।।
इयं ते केतपा राजन्निमां ते परि दध्मसि ।
ज्योक् पितृष्वासाता आ शीर्ष्ण: समोप्यात् ।।३।।
असितस्य ब्रह्मणा कश्यपस्य गयस्य च ।
अन्त: कोशमिव जामयोऽपि नह्यामि ते भगम् ।।४।।

*(इति चतुर्चनामप्रथमकाण्डे तृतीयो ऽनुवाक:)*

## १-१६

नक्तंजातास्योषधे रामे कृष्णे असिक्नि च ।
इदं रजनि रजय किलासं पलितं च यत् ।।१।।

किलासं च पलितं च निरितो नाशया पृषत् ।
आ त्वा स्वो अश्नुतां वर्ण: परा श्वेतानि पातय ।।२।।
असितं ते प्रलयनमास्थानमसितं तव ।
असिक्न्यस्योषधे निरितो नाशया पृषत् ।।३।।
अस्थिजस्य किलासस्य तनूजस्य च यत्त्वचि ।
दूष्या कृतस्य ब्रह्मणा लक्ष्म श्वेतमनीनशम् ।।४।।

१-१७

जरायुज: प्रथम उस्त्रियो वृषा वातभ्रजा स्तनयन्नेति वृष्ट्या ।
स नो मृडाति तन्व ऋजुगो रुजन् य एकमोजस्त्रेधा विचक्रे।।१।।
अङ्गेअङ्गे शोचिषा शिश्रियाणो यो अग्रभीत् परुरस्य ग्रभीता ।
अङ्गं समङ्गं हविषा यजामि हृदि श्रितो मनसा यो जजान।।२।।
मुञ्चामि शीर्षक्त्या उत कास एनं परुस्परुराविवेश यो अस्य ।
यो अभ्रजा वातजा यश्च शुष्मो वनस्पतीन् सचतां पर्वतांश्च।।३।।
शं ते परस्मै गात्राय शमस्त्ववराय ते ।
शं ते पृष्टिभ्यो मज्जभ्य: शमस्तु तन्वे तव ।।४।।

१-१८

आ यातु मित्र ऋतुभि: कल्पमान: संवेशयन् पृथिवीमुस्त्रियाभि:।
तदस्मभ्यं वरुणो वायुरग्निर्बृहद्राष्ट्रं संवेश्यं दधातु ।।१।।
धाता मित्रो वरुणो देवो अग्निरिन्द्रस्त्वष्टा प्रति गृह्णन्तु मे वच:।
हुवे देवीमदितिं शूरपुत्रां सजातानां मध्यमेष्ठा स्यामहम् ।।२।।
हुवे सोमं सवितारं नमोभिर्विश्वान् देवाङ् अहमुत्तरत्वे ।
अयमग्निर्दीदायदाह्नमेव सजातैरिद्धो अप्रतिब्रुवद्भि: ।।३।।
इहेदसाथ न पुरो गमाथेर्यो गोपा: पुष्टपतिर्व आजत् ।
अस्मै व: कामायोप कामिनीर्विश्वे वो देवा उप संद्यामिह।।४।।

१-१९

अस्मिन् वसु वसवो धारयन्त्विन्द्रस्त्वष्टा वरुणो मित्रो अग्निः ।
इममादित्या उत विश्वे च देवा उत्तमे देवा ज्योतिषि धारयन्तु ।।१।।
अस्मै देवाः प्रदिशज्ज्योतिरस्तु सूर्यो अग्निरुत वा हिरण्यम् ।
उत्तरेण ब्रह्मणा वि भाहि कृण्वानो अन्यानधरान् सपत्नान् ।।२।।
येनेन्द्राय समभरं पयांस्युत्तरेण ब्रह्मणा जातवेदः ।
तेन त्वमग्न इह वर्धयेमं रायस्पोषं श्रैष्ठ्यमा धेह्यस्मै ।।३।।
ऐषां यज्ञमुत वर्चो भरेहं रायस्पोषमुत वित्तान्यग्ने ।
सपत्ना अस्मदधरे भवन्तूत्तमे देवा ज्योतिषि धत्तनेमम् ।।४।।

१-२०

मा नो विदन् विव्याधिनो मो अभिव्याधिनो विदन् ।
आराच्छरव्या अस्मद् विषूचीरिन्द्र पातय ।।१।।
विष्वञ्चो अस्मच्छरवः पतन्तु ये अस्ता ये चास्याः।
देवा मनुष्या ऋषयोमित्रान्नो वि विध्यत ।।२।।
यः समानो योसमानोमित्रो नो जिघांसति ।
रुद्रः शरव्यया तानमित्रान्नो वि विध्यतु ।।३।।
सबन्धुश्चासबन्धुश्च यो न इन्द्राभिदासति ।
देवास्तं सर्वे धूर्वन्तु ब्रह्म वर्म ममान्तरम् ।।४।।

*(इति चतुर्थनामप्रथमकाण्डे चतुर्थो ऽनुवाकः)*

१-२१

नासन्न सन् स्वयं स्रसन्नसतीभ्यो असत्तराः ।
सेहोररसतरा लवणाद्विक्लेदीयसीः ।।१।।

अपचित: प्र पतत: सुपर्णो वसतेरिव ।
सूर्य: कृणोतु भेषजं चन्द्रमा वोपोच्छतु ।।२।।
एन्येका श्येन्येका कृष्णैका रोहिणी द्वे ।
सर्वासामग्रभं नामावीरघ्नीरपेतन ।।३।।
असूतिका रामायण्यपचित् प्र पतिष्यति ।
ग्लौरित: प्र पतिष्यति स गलन्तो न शिष्यति ।।४।।
अपेतो अपचित्वरीरिन्द्र: पूषा च चिक्यतु: ।
अपेत्वस्य ग्रीवाभ्यो अप पद्भ्यां विजामत: ।।५।।

१-२२

आशानामाशापालेभ्यश्चतुर्भ्यो अमृतेभ्य: ।
इदं भूतस्याध्यक्षेभ्यो विधेम हविषा वयम् ।।१।।
य आशानामाशापालाश्चत्वार स्थन देवा: ।
ते नो निर्ऋत्या: पाशेभ्यो मुञ्चतांहसोअंहस: ।।२।।
अश्लोणस्ते हविषा विधेयमस्रामस्ते घृतेना जुहोमि ।
य आशानामाशापालस्तुरीयो देव: स न: सुभूतमेह वक्षत् ।।३।।
स्वस्ति मात्र उत पित्रे नो अस्तु स्वस्ति गोभ्य उत पूरुषेभ्य:।
विश्वं सुभूतं सुविदत्रमस्तु नो ज्योगेव दृशेम सूर्यम् ।।४।।

१-२३

इदं जनासो विदथं महद् ब्रह्म वदिष्यति ।
न तत् पृथिव्यां नो दिवि यत: प्राणन्ति वीरुध: ।।१।।
अन्तरिक्षे समहासां स्थानं श्रान्तसदामवि ।
आस्थानमस्य भूतस्य विदुष्टद्वेधसो जना: ।।२।।

यद्रोदसी रेजमाने भूमिश्च निरतक्षताम् ।
आर्द्रं तदद्य सर्वदा भिदुरस्येव वर्तसी ।।३।।
विश्वमन्याभि ववार विश्वमन्यस्यामधि श्रितम् ।
दिवे च विश्ववेदसे पृथिव्यै चाकरं नमः ।।४।।

१-२४

सं सं स्रवन्तु सिन्धवः सं वाता दिव्या उत ।
तेभिर्मे सर्वैः संस्रावैर्धनं सं स्रावयामसि ।।१।।
ये संस्रावाः संस्रवन्ति क्षीरस्य चोदकस्य च ।
तेभिर्मे सर्वैः संस्रावैर्धनं सं स्रावयामसि ।।२।।
ये नदीभ्यः संस्रवन्त्युत्सासः सदमक्षिताः ।
तेभिर्मे सर्वैः संस्रावैर्धनं सं स्रावयामसि ।।३।।
इदं हव्या उपेतनेदं संस्रावणा उत ।
इहैतु सर्वो यः पशुरस्य वर्धयता रयिम् ।।४।।

१-२५

हिरण्यवर्ण्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः।
या अग्निं गर्भं दधिरे सुवर्णास्ता न आपः शं स्योना भवन्तु ।।१।।
यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम् ।
या अग्निं गर्भं दधिरे सुवर्णास्ता न आपः शं स्योना भवन्तु।।२।।
यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति ।
या अग्निं गर्भं दधिरे सुवर्णास्ता न आपः शं स्योना भवन्तु।।३।।
शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोप स्पृशत त्वचं मे ।
घृतश्चुतः शुचयो याः पावकास्ता न आपः शं स्योना भवन्तु।।४।।

*(इति चतुर्चनामप्रथमकाण्डे पञ्चमो ऽनुवाकः)*

१-२६

सुपर्णो जात: प्रथमस्तस्य त्वं पित्तमासिथ ।
तदासुरी युधा जीता रूपं चक्रे वनस्पतीन् ।।१।।
आसुरी चक्रे प्रथमेदं किलासभेषजमिदं किलासनाशनम् ।
अनीनशत् किलासं सरूपामकरत्त्वचम् ।।२।।
सरूपा नाम ते माता सरूपो नाम ते पिता ।
सरूप कृत्त्वमोषधे सा सरूपमिदं कृधि ।।३।।
यत्तनूजं यदग्निजं चित्रं किलासं जज्ञिषे ।
तदस्तु सुत्वक् तन्वो यतस्त्वाप नयामसि ।।४।।
श्यामा सरूपंकरणी पृथिव्या अध्युद्धता ।
इदमू षु प्र साधय पुना रूपाणि कल्पय ।।५।।

१-२७

अभयं सोम: सविता कृणोत्वभयं द्यावापृथिवी उभे ।
अभयं स्वरन्तरिक्षं नो अस्तु सप्तऋषीणां हविषाभयं नोऽस्तु ।।१।।
अभयं द्यावापृथिवी इहास्तु नो अग्निनामित्रान् प्रत्योषत प्रतीच: ।
मा ज्ञातारं मा प्रतिष्ठां विदन्त मिथो विघ्नाना उप यन्तु मृत्युम्।।२।।
पञ्च देवा अभयस्येशत इन्द्रस्त्वष्टा वरुणो मित्रो अग्नि: ।
मायं ग्रामो दुरितमेन आरदन्यत्र राज्ञामभि यात मन्यु: ।।३।।
अस्मै ग्रामाय प्रदिशश्चतस्त्र ऊर्जं सुभूतं सविता दधातु ।
अशत्रुमिन्द्रो अभयं कृणोतु मध्ये च विशां सुकृते श्याम।।४।।

१-२८

अनु सूर्यमुदयतां हृद्द्योतो हरिमा च ते ।
यो रोहितस्य गोर्वर्णस्तेन त्वा परि दध्मसि ।।१।।

परि त्वा रोहितैर्वर्णैर्दीर्घायुत्वाय दध्मसि ।
यथा त्वमरपा असो अथोहरितो भव ।।२।।
या रोहिणीर्देवपत्या गावो या रोहिणीरुत ।
रूपंरूपं वयोवयस्तेन त्वा परि दध्मसि ।।३।।
शुकेषु ते हरिमाणं प्रपणाकासु दध्मसि ।
अथो हारिद्रवेषु ते हरिमाणं नि दध्मसि ।।४।।

१-२९

याः पुरस्तादाचरन्ति नीचैः सूर्यादथो दिवः ।
एतमप्सरसां व्रातं ब्रह्मणाच्छा वदामसि ।।१।।
या अधरादाचरन्ति जिह्मा मुखा करिक्रतीः ।
आहता अप ता हतो नश्यन्त्वतश्चिन्वतीः ।।२।।
याः कुल्या या वन्या या उ चोन्मादयिष्णवः ।
सर्वास्ता मृश्मशाकरं दृषदा खल्वाङ् इव ।।३।।
चेतन्तीमश्मलां पलां तासां वो नमो अर्चिषे ।
आराद्यक्ष्मं नि धत्तास्मान्नो अधि पूरुषात् ।।४।।

१-३०

कामस्तदग्रे समवर्तत मनसो रेतः प्रथमं यदासीत् ।
स काम कामेन बृहता सयोनी रायस्पोषं यजमानाय धेहि।।१।।
त्वं काम सहसासि प्रतिष्ठितो विभुर्विभाव सुषखा सखीयते।
त्वमुग्रः पृतनासु सासहिः सह ओजो यजमानाय धेहि।।२।।
दूराच्चकमानाय प्रविपाणायाक्षये ।
आस्मा अशृण्वन्नाशाः कामेन माजनयत् स्वः ।।३।।
कामेन मा काम आगन् हृदयाद्धृदयं परि ।
यदमीषामदो मनस्तदैतूप ममिह ।।४।।

यत् काम कामयमाना इदं कृण्मसि ते हविः ।
तन्नः सर्वं समृध्यतामथैतस्य हविषो वीहि स्वाहा ।।५।।
क इदं कस्मा अदात् कामः कामयादात् ।
कामो दाता कामः प्रतिग्रहीता कामः समुद्रमा विवेश ।
कामेन त्वा प्रति गृह्णामि कामैतत्ते ।।६।।

*(इति चतुर्चनामप्रथमकाण्डे षष्ठो ऽनुवाकः)*

१-३१

इमं मे कुष्ठ पूरुषं तमा वह तं निष्कृधि ।
तमु मे अगदं कृधि ।।१।।
उदग् जातो हिमवतः स प्राच्यां नीयसे जनम् ।
तत्र कुष्ठस्य नामान्युत्तमानि वि भेजिरे ।।२।।
उत्तमो नामास्युत्तमो नाम ते पिता ।
यतः कुष्ठ प्रजायसे तत एह्यरिष्टतातये ।।३।।
शीर्षहत्यामुपहत्यामक्ष्योस्तन्वो रपः ।
कुष्ठो नो विश्वतस्पातु दैवं समह वृष्ण्यम् ।।४।।

१-३२

यदग्निरापो अदहत् प्रविश्य यत्राकृण्वन् धर्मधृतो नमांसि ।
तत्र त आहुः परमं जनित्रं स नः संविद्वान् परि वृङ्धि तक्मन् ।।१।।
यदि शोको यद्यभीशोको रुद्रस्य प्राणो यदि वारुणोऽसि ।
हुडुर्नामासि हरितस्य देव स नः संविद्वान् परि वृङ्धि तक्मन् ।।२।।
यद्यर्चिर्यदि वासि धूमः शाकल्येषु यदि वा ते जनित्रम् ।
हुडुर्नामासि हरितस्य देव स नः संविद्वान् परि वृङ्धि तक्मन् ।।३।।
नमः शीताय तक्मने नमो रूराय कृण्मो वयं ते ।
योन्येद्युरुभयद्युश्चरन्ति तृतीयकाय नमो अस्तु तक्मने ।।४।।

तृतीयकं वितृतीयं सदन्दिमुत हायनम् ।
तक्मानं विश्वशारदं ग्रैष्मं नाशय वार्षिकम् ।।५।।

१-३३

आपो अद्यान्वचारिषं रसेन समसृक्ष्महि ।
पयस्वानग्न आगमं तं मा सं सृज वर्चसा ।।१।।
सं माग्ने वर्चसा सृज प्रजया च बहुं कृधि ।
विद्युर्मे अस्य देवा इन्द्रो विद्यात् सहर्षिभि: ।।२।।
इदमाप: प्रवहता वद्यं च मलं च यत् ।
यच्च दुद्रोहानृतं यच्च शेपे अभीरुणम् ।।३।।
शिवेन मा चक्षुषा पश्यताप: शिवया तन्वोप स्पृशत त्वचं मे ।
शिवानग्नीनप्सुषदो हवामहे मयि क्षत्रं वर्च आ धत्त देवी:।।४।।
यदापो नक्तं मिथुनं चचार यद्वा दुद्रोह दुरितं पुराणम् ।
हिरण्यवर्णास्तत उत् पुनन्तु मा प्र मा मुञ्चन्तु वरुणस्य पाशात्।।५।

१-३४

अग्निर्जनविन् मह्यं जायामिमामदात् ।।१।।
सोमो वसुविन् मह्यं जायामिमामदात् ।।२।।
पूषा ज्ञाति विन् मह्यं जायामिमामदात् ।।३।।
इन्द्र: सहीयान् मह्यं जायामिमामदात् ।।४।।

१-३५

अग्नये जनविदे स्वाहा ।।१।।
सोमाय वसुविदे स्वाहा ।।२।।
पूष्णो ज्ञातिविदे स्वाहा ।।३।।
इन्द्राय सहीयसे स्वाहा ।।४।।

*(इति चतुर्थनामप्रथमकाण्डे सप्तमो ऽनुवाक:)*

१-३६

याः पुरस्तादाचरन्ति या वा पश्चात् सदान्वाः ।
अश्मानमृच्छन्तीर्यन्तु योयं स्वादावनाद्यः ॥१॥
या अधरादाचरन्त्युत्तराद् वा सदान्वाः ।
अश्मानमृच्छन्तीर्यन्तु योयं स्वादावनाद्यः ॥२॥
याः पश्चादाचरन्ति पुरस्ताद् वा सदान्वाः ।
अश्मानमृच्छन्तीर्यन्तु योयं स्वादावनाद्यः ॥३॥
या उत्तरादाचरन्त्यधराद् वा सदान्वाः ।
अश्मानमृच्छन्तीर्यन्तु योयं स्वादावनाद्यः ॥४॥

१-३७

उभयीरहमायताः पराचीरकरं त्वत् ।
देवेभिरन्या अस्ता बह्वीरन्या अथो दिवम् ॥१॥
नमस्ते रुद्रास्यते नमः प्रतिहिताभ्यः ।
नमो विसृज्यमानाभ्यो नमो निपतिताभ्यः ॥२॥
हिरण्ययीर्मे उल्बणयः षट् सहस्राणि षट् शता ।
ताभिः परि श्रयामहे ता नो रक्षन्तु सर्वतः ॥३॥
बह्विदमन्यद्विष्ठितं तस्य कामं वि विध्यत ।
अयस्मयं मे विमितं यूस्मद्भिया महत् कृतं नमसा न ऽन्यम् ।
तेना परि श्रयामहे तन्नो रक्षतु सर्वतः ॥४॥
अयस्मयं वर्म कृण्वे द्वारं कृण्वे अयस्मयम् ।
खीलानयस्मयान् कृण्वे ते नो रक्षन्तु सर्वतः ।
बह्वीदमन्यद्विष्ठितं तस्य कामं वि विध्यत ॥५॥

१-३८

इमा यास्तिस्रः पृथिवीस्तासां ह भूमिरुत्तमा ।
तासामधि त्वचो अहं समु जग्रभ भेषजम् ।।१।।
श्रेष्ठमसि वैरुधानां वसिष्ठं भेषजानम् ।
यज्ञो भग इव यामेषु देवेषु वरुणो यथा ।।२।।
रेवतीरनाधृष्टाः सिषासन्तीः सिषासथ ।
एता स्थः केशवर्धनीरथो स्थ केशदृंहणीः ।।३।।
दृंह मूलमाग्रं यच्छ विमध्यं यमयौषधे ।
केशवर्धनमस्याथर्वणं केशदृंहणमस्याथर्वणम् ।।४।।

१-३९

अग्ने गोभिर्न आ गहीन्दो रय्या सचस्व नः ।
इन्द्रो धर्ता गृहेषु नः ।।१।।
सविता यः सहस्त्रियः स नो गृहेषु रण्यतु ।
आ पुष्टमेत्वा वसु ।।२।।
त्वष्टा यो वृषभो युवा स नो गृहेषु रारणत् ।
सहस्रेण शतेन च ।।३।।
धाता दधातु नो रयिमीशानो जगतस्पतिः ।
स नः पूर्णेन यच्छतु ।।४।।

१-४०

ममोभा मित्रावरुणा ममोभेन्द्राबृहस्पती ।
मम त्वष्टा च पूषा च ममैव सविता वशे ।।१।।
मम विष्णुश्च सोमश्च ममैव मरुतो भुवन् ।
सरस्वांश्च भगश्च विश्वे देवा वशे मम ।।२।।

ममोभे द्यावापृथिवी अन्तरिक्षं स्वर्मम ।
ममेमा: सर्वा ओषधीराप: सर्वा वशे मम ।।३।।
मम गावो ममाश्वा ममाजाश्चावयश्च ममैव पुरुषा भुवन् ।
ममेदं सर्वामात्मन्वदेजत् प्राणद् वशे मम ।।४।।
मह्यमाप मधुमतेरयन्त मह्यं सूर्यो अभरो ज्योतिषाकम् ।
मह्यं देवा उत विश्वे तपोजा मह्यं देव: सविता व्यचोधात् ।।५।।

*(इति चतुर्चनामप्रथमकाण्डे अष्टमो ऽनुवाक:)*

१-४१

अग्नेभ्यावर्तिन्नभि न आ ववृत्स्व ।
आयुषा वर्चसा सन्या मेधया प्रजया धनेन ।।१।।
अग्ने जातवेद: शतं ते सन्त्वावृत: सहस्रं त उपावृत: ।
अधा पुष्टस्येशान: पुनर्नो रयिमा कृधि ।।२।।
सह रय्या नि वर्तस्वाग्ने पिन्वस्व धारया ।
विश्वप्सन्या विश्वतस्परि ।।३।।
पुनरूर्जा ववृत्स्व पुनरग्ने विशायुषा ।
पुनर्न: पाह्यंहस: ।।४।।

१-४२

या: सेना अभीत्वरीराव्याधिनीरुगणा उत ।
यस्तेनो यश्च तस्करस्तांस्ते अग्नेपि दधाम्यासनि ।।१।।
जम्भैर्मलिम्लूनग्ने दंष्ट्राभ्यां तस्करानुत ।
हनूभ्यां स्तेनान् मघवन्तांस्त्वं खाद सुखादितान् ।।२।।
ये ग्रामेषु मलिम्लुच स्तेनासस्तस्करा वने ।
ये कक्षेष्वघायवस्तांस्तेऽग्नेपि दधाम्यासनि ।।३।।

यो अस्मभ्यमरातीयाद् यश्च नो द्वेषदिज्जनः ।
आमादः क्रव्यादो तिपूंस्तानग्ने सं दहा त्वम् ।।४।।

१-४३

आ क्रन्दय धनपते उदेनमर्दयामुतः ।
अर्वाञ्चं पुनरा कृधि यथाहं कामये तथा ।।१।।
परिसर्तः परि धावाकर्तः पुनरा कृधि ।
अथो म इन्द्रश्चाग्निश्चामुमा नयतादिह ।।२।।
एकार्क एककामाय यस्मै कामाय खायसे ।
तेन मे विश्वधावीर्यामुमा नयतादिह ।।३।।
यत्र यत्र चरन्तं न्यग्रेगभि सूर्यः ।
ततो मे पथ्ये रेवत्यमुमा नयतादिह ।।४।।

१-४४

असितस्य तैमातस्य बभ्रोरपोदकस्य च ।
सर्वा विषस्य धामान्युद्नेवाग्निमवीवरे ।।१।।
इषीकादन्त दूळभ किं मे सखायमा तुदः ।
न मामपश्यआगतं सतीनं विषदूषणम् ।।२।।
यत्तालव्ये दति संसिसिक्षे विषं त्वम् ।
त्रयस्तुदा रुजामसि बभ्रुवो नकुलस्त्वत् ।।३।।
त्रयो वै स्मः सखायो बभ्रुवो नकुलस्त्वत् ।
ते सर्वे अप्यपातयन्नाहेयमरसं विषम् ।।४।।

१-४५

सारस्वतं वृषणं बभ्रुवक्षं शीतरूरे तन्वावस्य भीमे ।
अन्येद्युकं सदन्दिं त्वा तृतीयक हुवे नमस्यं सहदेवमप्सुजम् ।।१।।

यो अप्सुजो अरुणो मानुषे जने विवेश बभ्रुर्हर्षयिष्णुरक्षित: ।
शीतरूराय तर्षयिष्णवे जुगुशीर्षसावये शं नमो अस्तु देवा: ।।२।।
यो हर्यक्षञ्जभ: स्वेदनो वशी वश: प्रार: शीतरूराशीषे मनून् ।
सो अस्मभ्यं मृडयन् प्रेहि संसितो यं वयं द्विष्मस्तमभिप्रजानन् ।।३।।
नमस्ते विद्म ते कासनायनं यतोयत: सुरभे सं बभूविथ ।
स नो मा हिंसीर्नमो अस्तु तुभ्यं शीर्षक्त्यायस्मादिह पारया न: ।।४।।

*(इति चतुर्चनामप्रथमकाण्डे नवमो ऽनुवाक:)*

१-४६

अस्य त्वं ददत: सोम राजन् वर्मेव तन्वं परि पाहि विश्वत: ।
यो ब्रह्मणे राधो विद्धों ददाति तस्य सोम प्र तिर दीर्घमायु:।।१।।
अस्य सोम प्र तिर दीर्घमायुरहानीव सूर्यो वासराणि ।
मास्या सुस्रोन्नाशया व्यध्मनो विषं बहि: शल्यश्चरतु रोगो अस्मात्।।२।।
दानं तृष्णाया: परि पातु विद्धं दानं क्षुधो दानविदेव मृत्यो: ।
अविष्कन्धो भवतु यो ददात्या प्यायते पपुरिर्दक्षिणया ।।३।।
आ प्यायतां पपुरिर्दक्षिणया वर्मेव स्यूतं परि पाहि विश्वत: ।
बहिर्विषं तन्वो अस्त्वस्य स्रंसतां शल्यो अध्यारे अस्मात् ।।४।।
ब्रह्मा शरव्यामप बाधतामितो नद्या: कूलान्नावमिवाधि शम्बी ।
तस्मै दद दीर्घमायुष्कृणुष्व शतं च न: शरदो जीवतादिह ।।५।।
यदा ददाति प्रददाति यदा ब्रह्मा प्रति गृह्णाति राधो अस्य ।
आदिद्विद्यादुपहत्याराति: सर्वे यक्ष्मा अप तिष्ठन्तु साकम् ।।६।।

१-४७

व्याघ्ररूप: सुरभि: सिंहस्य रेतसा कृत ।
मध्ये पृथिव्या निष्ठितं समख्यद् यातुधान्य: ।।१।।

अभि प्रेहि माप विक्था: पदे गृभाय मापदे ।
अत्रैव सर्वा जम्भय या: काश्च यातुधान्य: ।।२।।
प्रतीबोधश्चतुरक्ष: स्रक्त्यापे अस्मेव वीडुभित् ।
प्रतीची: कृत्या आकृत्यामुं कृत्याकृतं जहि ।।३।।
कृत्याकृतं वलगिनं मूलिनं शपथेय्यम् ।
इन्द्रस्तु सर्वांस्तान् हन्तु सप्तघ्नेन रुवामिव ।।४।।

१-४८

अरसस्य शर्कोटस्य नीचीनस्योपसर्पत: ।
विषं हि सर्वमादिष्यथो एनमजीजभम् ।।१।।
न ते बाह्वोरसो अस्ति न शीर्षे नोत मध्यत: ।
किमिदं पापयामुया पुच्छे विभर्ष्यर्भकम् ।।२।।
यत्तेस्कन्धानुपतस्थौ विजाम्नि यच्च ते परौ ।
अपमित्यमिवाभृतं मलं ते प्रति दध्मसि ।।३।।
अदन्ति त्वा पिपीलिका वि वृश्चन्ति मयूर्य: ।
सर्वे भल ब्रवाथ शार्कोटमरसं विषम् ।।४।।

१-४९

कृतं मे दक्षिणे हस्ते सव्ये मे जय आहित ।
गोजिद्भूयासमश्वजित् कृतञ्जयो हिरण्यजित् ।।१।।
अक्षा: फलवतीं दिवं दत्त गां क्षीरिणीमिव ।
सं मा कृतस्य धारया धनु: स्नाव्नेव नह्यत ।।२।।
उभौ हस्तौ प्रतिदीव्नो ब्रह्मणापोम्भामसि ।
कलिरेनं यथा हनदास्य वेदो भरामहे ।।३।।

आ भद्रं द्वापरमुत त्रेतां परा कलिम् ।
कृतं मे हस्त आहितं स हि सौमनसो महान् ।।४।।

१-५०

यदेयथ परेयथ यत् त एतन् मन ईयते ।
ततस्त्वा पुनरर्वाञ्चं भूतस्याजीगमत् पतिः ।।१।।
आ त्वा नयाद्भूतपतिरा देवो बृहस्पतिः ।
आदित्याः सर्वे त्वा नेषन् विश्वे देवाः सुवर्चसः ।।२।।
अनुमतिः सरस्वती भगो राजा न्या नयात् ।
शाला मानस्य पत्नीहैवास्य मनस्करत् ।।३।।
यस्त्वा निनानयकः स उ त्वेहा नयात् पुनः ।
मनो हि ब्रह्मणो विदुर्विश्वकर्मा मनीषिणः ।।४।।

*(इति चतुर्चनामप्रथमकाण्डे दशमोऽनुवाकः)*

१-५१

गातो हविर्जनयन्तस्थ इन्द्राग्रं ज्येष्ठ पर्यगामेह देव ।
स गातो गातोत्तमापयापिमस्मभ्यमिन्द्र ददतः प्रचेतः ।।१।।
अग्निर्नः पुरएतास्त्वञ्जसा बृहस्पतिः सन्यास्तु नः सखा ।
इन्द्रं हुवे वृत्रहणं पुरन्दरं भगेनाद्य भगवन्तः स्याम ।।२।।
त्वं सोम दिव्यो नृचक्षाः सुगां अस्मभ्यं पथो अनु ख्यः ।
अभि नो गोत्रं विदुष इव नेषोऽच्छा नो वाचमुशतीं जिगासि ।।३।।
इमामग्ने शरणिं मीमृषो न इममध्वानं यमगाम दूरम् ।
आपिः पिता प्रमतिः सोम्यानां भृमिरस्यृषिकृन्मर्त्यानाम् ।।४।।

१-५२

ये पुरस्तादास्यन्देते गावौ स्वत्रृषभे इव ।
कृणोम्यर्वणी अहमश्ववारादणीयसी ।।१।।

ये अधरादास्यन्देते गावौ स्वऋषभे इव ।
कृणोम्यर्वणी अहमश्ववारादणीयसी ।।२।।
ये पश्चादास्यन्देते गावौ स्वऋषभे इव ।
कृणोम्यर्वणी अहमश्ववारादणीयसी ।।३।।
ये उत्तरादास्यन्देते गावौ स्वऋषभे इव ।
कृणोम्यर्वणी अहमश्ववारादणीयसी ।।४।।

१-५३

अग्ने यशस्विन् यशसा वर्धयेममिन्द्रवतीमुपचितिमिहा वह ।
अयं मूर्धा परमेष्ठी सुवर्चाः समानानामुत्तमश्लोको अस्तु ।।१।।
धाता विधर्ता परमोत संदृक् प्रजापतिः परमेष्ठी विराट् ।
स्तोमाश्छन्दांसि निविदो म आहुस्ते अस्मै राष्ट्रमुप सं नमन्तु ।।२।।
भद्र मिच्छन्त ऋषयः स्वर्विदस्तपो दीक्षामुपनिषेदुरग्रे ।
ततो राष्ट्रं बलमोजश्च जातं तदस्मै देवा उप सं नमन्तु ।।३।।
उपा वर्तध्वमुप न एत सर्वेऽयं चेत्ताधिपतिर्वो अस्तु ।
समानं मन्त्रमभि मन्त्रयाध्वा इमं पश्चादुप जीवाथ सर्वे ।।४।।

१-५४

त्वमग्ने प्रमतिस्त्वं पितासि नस्त्वं सखा युज्योसि जातवेदः ।
त्वं विश्वविद् गातुवित् कविर्विश्वा आशा अभयाः सन्त्वस्मे ।।१।।
इदं वर्चो अग्निना दत्तमागन् भर्गो यशः सह ओजो वयो बलम् ।
त्रयस्त्रिंशद् यानि वीर्याणि तान्यग्निः प्र ददातु मे ।।२।।
वर्च आ धेहि मे तन्वां सह ओजो वयो बलम् ।
इन्द्रियाय त्वा कर्मणे वीर्याय प्रति गृह्णामि शतशारदाय ।।३।।
ऊर्जे त्वा बलाय त्वौजसे सहसे त्वा ।
अभिभूयाय त्वा राष्ट्रभृत्याय पर्यूहामि शतशारदाय ।।४।।

ऋतुभिष्ट्वार्तवैरायुषे वर्चसे त्वा ।
संवत्सरस्य तेजसा तेन संहनु कृण्मसि ।।५।।

१-५५

इदमाञ्जनमानजे शैलूनभाकनिक्रदम् ।
अभि मा चक्रन्द भग ऋषभो वासितामिव ।।१।।
अश्वः क्रनिक्रदद् यथा प्रत्यङ् मा भग आगमत् ।
तमहं प्रेण्या अधि पुत्रमिवोपस्थ आधिषि ।।२।।
अक्ष्यौ मे मधुसंकाशे जिह्वा मे मधुवादिनी ।
नसोरधि प्रमन्दनं दत्सु मे सारघं मधु ।।३।।
मधुमन्मम नीसनं जघनं मधुमन्मम ।
मामित् किल त्वं वावनः शाखां मधुमतीमिव ।।४।।

*(इति चतुर्चनामप्रथमकाण्डे एकादशो ऽनुवाकः)*

१-५६

प्रेता जयता नर उग्रा वः सन्तु बाहवः ।
इन्द्रो वः शर्म यच्छत्वनाधृष्या यथासथ ।।१।।
उद्धर्षन्तां मघवन्नायुधान्युत सत्वनां मामकानां मनांसि ।
उद्धर्षन्तां वाजिनां वाजिनान्युद्वीराणां जयतामेतु घोषः ।।२।।
पृथग् घोषा उलुलयः केतुमन्त उदीरताम् ।
देवा इन्द्रज्येष्ठा मरुतो यन्तु सेनया ।।३।।
अवसृष्टा परा पत शरव्ये ब्रह्मसंशिते ।
जयामित्रान् प्र पद्यस्व मामीषां कञ्चनोच्छिषः ।।४।।

१-५७

दूष्या दूषिरसि हेत्या हेतिरसि मेन्या मेनिरसि ।
आप्नुहि श्रेयांसमति समं क्राम ।।१।।

स्रक्त्योसि प्रतिसरोसि पुनः सरोसि प्रत्यभिचरणोसि।
आप्नुहि श्रेयांसमति समं क्राम ।।२।।
प्रति तमभि चर योऽस्मान् द्वेष्टि यं वयं द्विष्मः ।
आप्नुहि श्रेयांसमति समं क्राम ।।३।।
सूरिरसि वर्चोधास्तनूपानायुष्य: कृत्यादूषण:।
आप्नुहि श्रेयांसमति समं क्राम ।।४।।
शुक्रोसि भ्राजोसि ज्योतिरसि स्वरसि ।
आप्नुहि श्रेयांसमति समं क्राम ।।५।।

१-५८

विष्कन्धस्य काबवस्य कर्दमस्योलूक्या: ।
अपस्थानस्य कृत्या यास्तेषां त्वं खृगले जहि ।।१।।
प्र मृणीह्युपहत्यां कर्दमं नीलशाक्यम् ।
अथा सारमिव दारुण आयुष्कृणोम्यन्तरम् ।।२।।
विविद्धस्यावतृण्णस्य हृदस्य चाहृदस्य च ।
त्रिपर्णी विश्वभेषजीदं कृणोतु भेषजम् ।।३।।
काबवस्य विष्कन्धस्यापस्थापनभेषजम् ।
इदं कृणोमि भेषजं यथायमगदोसति ।।४।।

१-५९

यस्मादङ्गात् संसुस्राव यद् बभूव गलन्त्यशः ।
गावो वत्समिव जानान्त्स्तत् परैतु यथायथम् ।।१।।
ना सृगस्ति पतङ्गस्य तर्दस्य मशकाद्या: ।
वेणो: पुतुद्रोर्नास्त्यसृङ् मास्य ग्लौर्मापचिद्धुवत् ।।२।।
अहं वेद यथासिथ गुर्विका नाम वा असि ।
अमुं त्वं तमितो गच्छ यमहं द्वेष्मि पुरुषम् ।।३।।

तस्यापि मध्य आ सीद नील ग्रीवासु सीदता ।
वातस्यानु प्रवां मशकस्यानु संविदम् ।।४।।
प्रेतो यन्त्वग्रुवो निरितो यन्त्वग्रुव: ।
अधराचीमित: पर: ।।५।।
प्राहं ग्लावमध्मासं निरहं ग्लावमध्मासम् ।
अधराचीरित: पर: ।।६।।

१-६०

अभि त्वामहमोजसेन्द्रो दस्यूनिवाभुवम् ।
सपत्नि नश्यतादितो दूरं गच्छाध्योकस: ।।१।।
सासहा इदहं पतिं सासहै श्वशुरा उभौ ।
अथो सपत्नीं सासहै यथा नश्यात्योकस: ।।२।।
अभिभूरहमागमं विश्वकर्मा महावदात् ।
अहं मित्रस्य कल्पन्येषु गृहेषु दुष्टरात् ।।३।।
उत्तिष्ठ मम वा इदं न तवेहापि किं चन ।
माञ्चैव पश्यन्नायत्यमुञ्च दिवि सूर्यम् ।।४।।

*(इति चतुर्चनामप्रथमकाण्डे द्वादशो ऽनुवाक:)*

१-६१

यस्त्वा मृत्युरभ्यधत्त जायमानं सुपाशया ।
तन्ते सत्यस्य हस्ताभ्यामुदमुञ्चद् बृहस्पति: ।।१।।
अभि त्वा जरिमाहित गामुक्षणमिव रज्ज्वा ।
व्यन्ये यन्तु मृत्यवो यानाहुरितराञ्छतम् ।।२।।
प्र विशतं प्राणापानावनड्वाहाविव व्रजम् ।
शरीरमस्याङ्गानि जरिम्णे नयतं युवम् ।।३।।

इहैव स्तं प्राणापानौ मेमं हासिष्टं मृत्यवे ।
अयं जरिम्ण: शेवधिररिष्ट इह वर्धताम् ।।४।।
जरसे त्वा परि दध्मो जरसे नि धुयामसि ।
जरा त्वा भद्रया नेषत् ।
व्यन्ये यन्तु मृत्यवो यानाहुरितराञ्छतम् ।।५।।

१-६२

मुञ्चामि त्वा हविषा जिवनाय कमज्ञातयक्ष्मादुत राजयक्ष्मात्।
ग्राह्या गृभीतो यद्येष एतत्तत इन्द्राग्नी प्र मुमुक्तमेनम्।।१।।
यदि क्षितायुर्यदि वा परेतो यदि मृत्योरन्तिकं नीत एव ।
तमा हरामि निर्ऋतेरुपस्थादस्पार्षमेनं शतशारदाय ।।२।।
सहस्राक्षेण शतवीर्येण शतायुषा हविषाहार्षमेनम् ।
इन्द्रो यथैनं जरसे नयात्यति विश्वस्य दुरितस्य पारम् ।।३।।
शतं जीव शरदो वर्धमान: शतं हेमन्तांछतमु वसन्तान् ।
शतमिन्द्राग्नी सविता बृहस्पति: शतायुषा हविषाहार्षमेनम् ।।४।।

१-६३

यत् ते अन्नं भुवस्पत आक्षियेत पृथिवीमनु ।
तस्य नस्त्वं भुवस्पते सं प्र यच्छ प्रजापते ।।१।।
व्यात् ते परमेष्ठिनो ब्रह्मणापीपदाम तम् ।
संवत्सरस्य दंष्ट्राभ्यां हेतिस्तं समधादभि ।।२।।
इयं त्वं भवस्त्वाहुति: समिद्देवी सहीयसि ।
राज्ञो वरुणस्य बन्धोसि सोमुमामुष्यायण
ममुष्या: पुत्रमह्ने रात्रये बधान ।।३।।
मृणोसि देव सवितर्गायत्रेणच्छन्दसा मृणामुष्य
पशून् द्विपदश्चतुष्पद: ।।४।।

योऽस्मान् द्वेष्टि यं वयं द्विष्मस्तं जहि तं मृणस्तस्मै
मा मीमृणस्तस्मै दुराहा ।।५।।

१-६४

नि ते पदं पदे मम नि चित्तमेतु निष्कृत: ।
यथास: केवलो ममाहं साधारणी तव ।।१।।
पदेन गामनु यन्ति पदेनाश्वं पदा रथम् ।
पदेन मर्या मत्त्वं न एषो नो अहं त्वत् ।।२।।
माप सृपो मा परा सृपो मान्यत्रास्मन् मनस्कृथा: ।
यं त्वाहिरिव भोगैर्नाकुलेन परीमसि ।।३।।
नि त्वा कृण्वे संनहने नि कुरीरे न्योपशे ।
नि त्वाधमस्मि लोम्नि न्वि त्वा मुष्कयोर्मृजे ।।४।।

१-६५

घृताह्रदा पृथिवी मा न एनोऽस्मान्
प्रजान्वोचत किल्बिषाणि ।
अनातुरा: सुमनस: सुवीरा ज्योग्
जीवन्तस्तव सख्ये स्याम ।।१।।
अन्तरेमि यातुधानानन्तरेमि किमीदिन: ।
धियाम पित्र्या वयं सरस्वत्या चरामसि ।।२।।
मा ते रिषं खनिता यस्मै च त्वा खनामसि ।
द्विपाच्चतुष्पादस्माकं मा रिषद् देव्योषधे ।।३।।
अन्या वो अन्यामवत्वन्यान्यस्या उपावत ।
सध्रीची: सव्रता भूत्वा अस्यावत वीर्यम् ।।४।।

*(इति चतुर्चना प्रथमकाण्डे त्रयोदशोऽनुवाक: )*

१-६६

ध्रुवस्तिष्ठ भुवनस्य गोप मा सं विक्था वनस्पते ।
अत्रैव त्वमिह वयं सुवीरा विश्वा मृधो अभिमातीर्व्यस्य ।।१।।
यो वानस्पत्यानामधिपतिर्बभूव यस्मिन्निमा विश्वा भूवनान्यार्पिता।
तमनज्मी मधुना दैव्येन तस्मान् मणिं निर्ममे विश्वरूपम् ।।२।।
इमं मणिं विश्वजितं सुवीरमस्मादश्वत्थात् पर्युद्धरामि।
येन विश्वाः पृतनाः सञ्जयान्यथो द्युमत्समितिमा वदानि।।३।।
सबन्धुश्चासबन्धुश्च यो न इन्द्राभिदासति ।
वृश्चामि तस्याहं मूलं प्रजां चक्षुरथो बलम् ।।४।।

१-६७

देवी देव्यां जातासि पृथिव्यामध्योषधे ।
तं त्वा नितत्नि केशेभ्यो दृंहणाय खनामसि ।।१।।
इन्द्रस्त्वाखनत् प्रथमो वरुणस्य दुहितृभ्यः ।
दृह जातां जनयाजातां ये जातास्तानु वर्षीयसस्कृधि ।।२।।
यस्ते केशोवततः समूलो यश्च वृह्यते ।
सर्वं तं विश्वभेषज्याभि षिञ्चामि वीरुधा ।।३।।
अभीशुना मेयोऽस्तु वियामेनानुमेयः ।
केशो नड इव वर्धतां शीर्ष्णस्ते असितस्परि ।।४।।

१-६८

यथा नडं कशिपुने स्त्रियो भिन्दन्त्यश्मना ।
एवा भिनद्मि ते मुष्कौ तस्मै त्वामवसे हुवे ।।१।।
त्वं वीरुधां श्रेष्ठतमाभिश्रुतास्योषधे ।
सामुमद्य पूरुषं क्लीवमोपशिनं कृधि ।।२।।

क्लीवं कृध्योपशिनमथो कुरीरिणं कृधि ।
उभाभ्यामस्य ग्रावभ्यामिन्द्रो भिनत्त्वाण्ड्यौ ।।३।।
क्लीव क्लीवं त्वाकरं वध्रे वध्रिं त्वाकरमरसारसं
त्वाकरमरसारसोसि ।
कुरीरमस्य शीर्षणि कुम्भं चाधिनिदध्मसि ।।४।।
ये ते नाड्यौ देवकृते ययोस्तिष्ठति वृष्ण्यम् ।
ते ते भिनद्मि शम्मयामुष्या अधि मुष्कयो: ।।५।।

१-६९

जायमानो निररुजत् सपत्नान् दोधतोभयान् ।
स वै सपत्नानां सभा अवालप्स्यो अनाशयत् ।।१।।
आरादरातिं कृणुतेऽशस्तिमप बाधते ।
अवालप्स्य: स यो मणि: सहस्वानभिमातिहा ।।२।।
चक्षुरस्य सूत्रमासीत् तर्द्म श्रोत्रमुताभरत् ।
अवालप्स्य: स यो मणि: सहस्वानभिमातिहा ।।३।।
इमं मणिमावालप्स्यं यस्मिन्नारोहयामसि ।
स वै सपत्नाना दत्ते स एनं पातु विश्वत:
स एनं जरसे नयात् ।।४।।

१-७०

यतो जीवेभ्यो न पितृनुपैति यमानशे दुष्कृतं दैधिषव्यम् ।
अयज्ञ: प्रथमो यो विवेश कृच्छ्रादिज्ज्योतिरभ्यश्नवातै ।।१।।
नास्यौषधीष्वप्यस्ति नाप्स्वन्तर्नास्य सूर्यं संदृशमेति चक्षु: ।
भूमिर्द्वेष्टि चरन्तमेनं यमानशे दुष्कृतं दैधिषव्यम् ।।२।।
कृते देवा अमृजतैन एतत् कृत एनं मनुष्येष्वमृष्ट ।
तत एतदमुया रक्ष ईर्ते प्रमुक्तं ज्योतेरधि दूरमेति ।।३।।

येभि: पाशैर्दिधिषूपतिर्विबद्ध: परौ परावार्पितो अङ्गेअङ्गे ।
वि ते चृत्यन्तां विचृतो हि सन्ति भ्रूणघ्नि पूषन् दुरितानि मुष्टा:।।४।।

*(इति चतुर्थनामप्रथमकाण्डे चतुर्दशो ऽनुवाक:)*

१-७१

अग्निष्टे विश आ नयादिन्द्रो वायुर्बृहस्पति: ।
स ते धर्ममदीधरद्धातेव भुवनेभ्य: ।।१।।
बृहस्पते पुरयेता विशामिह्यग्नि: पश्चादभि नुदात्यायती:।
वायुरेना दक्षिणत: पूषोत्तरादपानुदात् ।।२।।
आ सहस्री शतरथ आ रेवान्येतु नो विशन् ।
इन्द्रो वामेन विश्पतिरा रूपेण बृहस्पति: ।।३।।
स्वर्जुष्ट: कश्यपस्य स राष्ट्रे जागरत् स्वे ।
ऋषभ: शातमातुर: श्वेतन्तादविहृतो देवान् यज्ञेन बोधयात् ।।४।।

१-७२

महाजना: प्रथमा ये दिदिविरे धने संहत्य महति द्विराजे ।
तेषां वरे य: प्रथमो जिगाय तस्याहं लोकमनूद्भिदेयम्।।१।।
मेदिनस्ते वैभीदकास्तत इन्द्र उपावतु ।
अव्या वृक इव संरभ्य जिगीवानस्तमायसि ।।२।।
उद्बाहू हिरण्यजिद् गोजिदश्वजितौ भरे ।
व्याघ्रो जघ्निवाङ् इवोत्तिष्ठाधि देवनात् ।।३।।
आदिनवं प्रतिदीव्ने कृतेनास्माङ् अभि क्षर ।
वृक्षमिवाशन्या जहि यो अस्मान् प्रतिदीव्यति ।।४।।

१-७३

दिवस्पृथिव्या: पर्यन्तरिक्षाद्वनस्पतिभ्यो अध्योषधीभ्य: ।
यत्रयत्र विभृतो जातवेदास्ततस्ततो जुषमाणो न एहि ।।१।।

यस्ते अप्सु महिमा यो वनेषु य ओषधीषु पशुष्वप्स्वन्त:।
अग्ने सर्वास्तन्व: सं रभस्व ताभिर्न एहि द्रविणोदा अजस्र:।।२।।
यस्ते देवेषु महिमा स्वर्गो या ते तनू: पितृष्वाविवेश ।
पुष्टिर्या ते मनुष्येषु पप्रथेऽग्ने तया रयिमस्मासु धेहि ।।३।।
श्रुत्कर्णाय कवये वेद्याय वचोभिर्वाकैरुप याम रातिम् ।
यतो भयमभयं तन्नो अस्त्वव देवानां यज हेड अग्ने ।।४।।

१-७४

इन्द्रो देवानां वरुणो धृतव्रत: सोमो वीरुधां जगत: परस्पा: ।
वायु: पशूनां पशुपा जनानामयं पुरोरा नो अस्यास्तु मूर्धा ।।१।
मूर्धा दिवो अन्तरिक्षस्य मूर्धा मूर्धा सिन्धूनामुत पर्वतानाम् ।
मूर्धा विश्वस्य भुवनस्य राजाऽयं पुरोरा नो अस्यास्तु मूर्धा ।।२।
मृधस्ते सम्राड् वहन्तु सर्वाँ अमित्रान् राजा वरुणो विषूच: ।
इन्द्र: शत्रूनसुनीतिं नयाति तेऽयं पुरोरा नो अस्यास्तु मूर्धा ।।३।
विशस्त्वा राजन् प्रदिशो जुषन्तां दैवीर्विश: सुप्रकेता: सकेता: ।
विश्वा आशा मनुष्यो वि भाह्ययं पुरोरा नो अस्यास्तु मूर्धा ।।४।

१-७५

वि बाधस्व दृंहस्व वीडयस्वाधस्पदं शत्रवस्ते भवन्तु ।
सपत्नसाह ऋषभो जनाषाडुग्रश्चेत्ता पञ्च कृष्टीर्वि राज ।।१।।
शिवं क्षेत्रमनमीवन्ते अस्तूत्तमे नाके अधि तिष्ठेहि ।
पुत्रान् भ्रातृन् बहुलान् पश्यमानो विश्वे त्वा देवा इह धारयन्तु ।।२।।
त्वष्टा रूपेण सविता सवेनाहर्मित्रेण वरुणेन रात्री ।
इन्द्रो जैष्ठ्यैन ब्रह्मणायं बृहस्पतिर्धाता त्वा धीभिरभि रक्षत्विह ।।३।।

वास्तोस्पत इह नः शर्म यच्छ घने वृत्राणां सङ्गथे वसूनाम् ।
इहैवैधि ग्रामपतिर्जनाषाड् विश्वैर्देवैर्गुपितो रक्षमाणः ।।४।।

*(इति चतुर्चनामप्रथमकाण्डे पञ्चदशो ऽनुवाकः)*

१-७६

ऊर्ध्वो भव प्रति विध्याध्यस्मदुग्रं धनुरोजस्वाना तनुष्व ।
प्रति दुर्हार्दं हरसा शृणीहि कृत्वानमग्ने अधरं कृणुष्व।।१।।
प्रत्येनं याहि प्रतिभङ्ध्येनं विविध्यन्नग्ने वितरं वि भाहि ।
प्रत्यङ् प्रेहि वर्त्मना जहृषाणः कृत्याकृते दुष्कृते माधि वोचः ।।२।।
यो नो दुर्हार्द्धृदयेनाभिवस्ते यश्चक्षुषा मनसा यश्च वाचा ।
प्रत्यङ् दंष्ट्राभ्यामभि तं वभूषं कृत्याकृतं दुष्कृतं निर्दहाग्ने ।।३।।
प्रतीबोधश्चतुरक्षो दिव्यो अश्मेव वीड्डुभित् ।
प्रभञ्जञ्छत्रून् प्रति याह्यग्ने कृत्याकृतं दुष्कृतं हृदये विध्य मर्मणि।।४।।

१-७७

इन्द्र क्षत्रमभि वाममोजोऽजायथा वृषभ चर्षणीनाम् ।
अपानुदो जनममित्रयन्तमुरुं देवेभ्यो अकृणोरु लोकम् ।।१।।
मृगो नो भीमः कुचरो गिरिष्ठाः परावत आ जगामा परस्याः।
सृकं संशाय पविमिन्द्र तिग्मं वि शत्रून्ताडि वि मृधो नुदस्व ।।२।।
अंहोमुचे प्र भरे मनीषामाशुत्राम्णे सुमतिमावृणानः ।
इदमिन्द्र प्रति हव्यं गृभाय सत्याः सन्तु यजमानस्य कामाः।।३।।
अंहोमुचं वृषभं यज्ञानां विराजन्तं प्रथममध्वराणाम् ।
अपां नपातमश्विनौ हुवे धिय इन्द्रेण न इन्द्रियं धत्तमोजः।।४।।

१-७८

धातारमिन्द्रं सवितारमूतये हुवे देवाङ् अमृतान् मर्त्यः सन् ।
श्रेष्ठो नो वसवो धत्त धाम्नि मा रधाम द्विषते मो अरातये ।।१।।

अधि ब्रवीत्वधिवक्ता न इन्द्रो अधि ब्रवीतु सविता दैव्येन ।
स्वस्ति मित्रावरुणा च धत्तां रात्रिंरात्रिमहरहश्च देवा: ।।२।।
अधि ब्रवीतु पृथिवी उत द्यौरधि ब्रुवन्तु मरुत: पृश्निमातर:।
यो नो द्वेष्ट्यरणो य: सनाभि: पविरिव नेमेरधर: सो अस्तु ।।३।।
यस्य त्रया गतमनुप्रयन्ति देवा मनुष्या: पशवश्च सर्वे ।
तन्नो देवं मनो अधि ब्रवीतु सुनीतिन्नो नयतु द्विषते मा रधाम ।।४।।

१-७९

वर्चस्वानसि देवेषु वर्चस्वानोषधीष्वा ।
अथो वर्चस्विनं कृधि यमश्वत्थाधिरोहसि ।।१।।
यमश्वत्थो अध्यरुक्षद्राजा मनुष्यं जनम् ।
इन्द्रमिव वि मृधो हनत्तस्माद्राष्ट्रमनपच्युतम् ।।२।।
आरोहो नाम वा असि सहस्वानुदजायथा: ।
तं त्वा सपत्नसासहमश्वत्थ बिभरादयम् ।।३।।
राजा वा असि भूतानामृषभो वीरुधां पति: ।
स न: सपत्नानश्वत्थ विषूचो व्युदा कृधि ।।४।।

१-८०

संपश्यमाना अमृता य आयन् शुद्धा योनिभ्योस्परिजायमाना:।
शिवं कृण्वाना उप जिघ्रतेमं वीरं वीरेष्वप्या कृणुध्वम् ।।१।।
शिवो वो वीर इह जातो अस्तु शुद्धो योनिभ्यस्परिजायमान:।
अरिष्टोऽयं वर्धतां सर्वमायुर्वर्म ज्यायोभ्यो हविषा कृणोतु ।।२।।
जरांमृत्युं प्रेप्सतु जीव एष नास्य क्रिमिरीशातो नोत जम्भ:।
संरभ्य जीव शरद: सुवर्चा अग्निष्टे गोपा अधिपा वसिष्ठ: ।।३।।
जरामृत्युर्जरायुर्जराचक्षुर्जरास्व: ।
जरसे त्वा जरदष्टिं परि ददामि ।।४।।

द्यौष्टे पिता पृथिवी मतान्तरिक्षमात्मा ।
वात: प्राण: सूर्यश्चक्षुर्दिवस्पय: ।
सुपर्णस्त्वाभ्यव पश्यादायुषेवर्चसे ऽयमन्नस्यान्नपतिरस्तु वीर: ।।५।।

*(इति चतुर्चनामप्रथमकाण्डे षोडशो ऽनुवाक:)*

१-८१

यज्ञस्य चक्षु: प्रभृतिर्मुखं च वाचा श्रोत्रेण मनसा जुहोमि ।
इमं यज्ञं विततं विश्वकर्मणा देवा यन्तु सुमनस्यमाना: ।।१।।
ये देवानामृत्विजो ये च यज्ञिया येभ्यो हव्यं क्रियते भागधेयम् ।
इमं यज्ञं सह पत्नीभिरेत्य यावन्तो देवास्तति मादयन्ताम् ।।२।।
यन्मा हुतं यदहुतमाजगाम यस्मादन्नान् मनसोद्गारजीमि ।
यद् देवानां चक्षुष आगसिनमग्निष्टद्धोता सुहुतं कृणोतु ।।३।।
अग्नेष्ट्वा जिह्वया हुतमिष्टं मरुद्भिरनुमतं पितृभि: प्राश्नामि ।।४।।

१-८२

अग्ने: प्रजातं परि यद्धिरण्यममृतं दधे अधि मर्त्येषु ।
य एनद् वेद स इदेनदर्हति जरामृत्युर्भवति यो बिभर्ति ।।१।।
यद्धिरण्यं सूर्येण सुवर्णं प्रजावन्तो मनव: पूर्व ईषिरे ।
तत् त्वा चन्द्रं वर्चसा सं सृजात्यायुष्मान् भवति यो बिभर्ति ।।२।।
आयुषे त्वा वर्चसे त्वौजसे च बलाय च ।
यथा हिरण्यतेजसा विभासासि जनाङ् अनु ।।३।।
यद् वेद राजा वरुणो वेद देवो बृहस्पति: ।
इन्द्रो यद् वृत्रहा वेद तत्त आयुष्यं भुवत् तत्ते वर्चस्यं भुवत् ।।४।।

१-८३

यदावध्नन् दाक्षायणा हिरण्यं शतानीकाय सुमनस्यमाना: ।
तत् ते वध्नामि शतशारदायायुष्मान् जरदष्टिर्यथास: ।।१।।

नैनं रक्षांसि न: पिशाचा: सहन्ते देवानामोज: प्रथमजं ह्येतत् ।
यो बिभर्ति दाक्षायणा हिरण्यं स जीवेषु कृणुते दीर्घमायु: ।।२।।
अपां रेतो ज्योतिरोजो बलं च वनस्पतीनामुत वीर्याणि ।
इन्द्र इवेन्द्रीयमव रुध्मो अस्मिन् स दक्षमाणो बिभरद्धिरण्यम् ।।३।।
समानां मासामृतुभिष्ट्वाहं संवत्सरस्य पयसा पिपर्मि ।
इन्द्राग्नी त्वा ब्रह्मणा वावृधानावायुष्मन्तमुत्तमं त्वा करात: ।।४।।

१-८४

यत् ते चतस्र: प्रदिशो मनो जगाम दूरकम् ।
तत् त आ वर्तयामसीह क्षयाय जीवसे ।।१।।
यत् ते भूमिं चतु:स्रक्तिं मनो जगाम दूरकम् ।
तत् त आ वर्तयामसीह क्षयाय जीवसे ।।२।।
यते ते यमं वैवस्वतं मनो जगाम दूरकम् ।
तत् त आ वर्तयामसीह क्षयाय जीवसे ।।३।।
यत् ते समुद्रमर्णवं मनो जगाम दूरकम् ।
तत् त आ वर्तयामसीह क्षयाय जीवसे ।।४।।
यत् ते दिवं यत् पृथिवीं मनो जगाम दूरकम् ।
तत् त आ वर्तयामसीह क्षयाय जीवसे ।।५।।
यत् ते वायुमन्तरिक्षं मनो जगाम दूरकम् ।
तत् त आ वर्तयामसीह क्षयाय जीवसे ।।६।।
यत् ते सूर्यं यदुषसं मनो जगाम दूरकम् ।
तत् त आ वर्तयामसीह क्षयाय जीवसे ।।७।।
यत् ते चन्द्रं नक्षत्राणि मनो जगाम दूरकम् ।
तत् त आ वर्तयामसीह क्षयाय जीवसे ।।८।।

यत् ते आपो यदोषधीर्मनो जगाम दूरकम् ।
तत् त आ वर्तयामसीह क्षयाय जीवसे ।।९।।
यत् ते परमां परावतं मनो जगाम दूरकम् ।
तत् त आ वर्तयामसीह क्षयाय जीवसे ।।१०।।

१-८५

यं गृह्णन्त्यप्सरसो यं मथ्नाति बृहस्पतिः ।
तं कश्यपस्य ब्रह्मणा सविता पुनरा भरत् ।।१।।
यो भर्ताकूः परिधाय मृगेष्वपि धावति ।
तं कश्यपस्य ब्रह्मणा सविता पुनरा भरत् ।।२।।
सविताग्निर्ब्रह्म सोम इन्द्रस्त्वष्टा बृहस्पतिः ।
एते मरुद्युतं त्वा ब्रह्मणा पुनरा भरन् ।।३।।
भद्रां वाचं शिवं चक्षुर्मरुद्युताय कृण्मसि ।
इमा ह्यस्मा ओषधिमा हराम्यरुन्धतीम् ।।४।।

*(इति चतुर्चनामप्रथमकाण्डे सप्तदशो ऽनुवाकः)*

१-८६

त्रिभ्यो रुद्रेभ्यः प्रवसन् यजामि ज्येष्ठः कनिष्ठ उत मध्यमो यः ।
ज्योतिष्कारा: कवयः सोमपा ये कण्वा अदन्तु निरितो वधेन ।।१।।
इन्द्राग्नी वीतं हविषः संविदानौ समिद्धो अग्निः समिधा गीर्भिरिन्द्रः ।
नुदेथां कण्वा निरितो अरातिमाराद्रक्षांसि तपतं व्यस्मत् ।।२।।
वास्तोष्पते सुप्रजसः सुवीरा षष्ठीस्यामि शरदः शतानि ।
दुर्वास्तु कण्वा अभि निर्णुदस्व सुवास्त्वस्माङ् उप सं विशस्व ।।३।।
या तन्तिषत् खलसद् या च गोष्ठे या जाताः शकधूमे सभायाम् ।
प्रपायां जाता उत याश्च भित्सु ताश्चातयामः शिवता नो अस्तु ।।४।।

दुद् वा च दुद् वती च स्थस्तद् वां नाम तद् वां नामधेयम् ।
रुद्रप्रेषिते स्तो व्ये नाम पर्यस्मान् वृङ्क्तम् ।
यो नो द्वेष्टि तमृच्छतम् ।।५।।
वीची नामास्यघहारा नाम ।
नमस्ते अस्तु वातके ऽन्यत्रास्मदघं कृधि ।।६।।
ऋजीते परि णो नमाग्रेण परि णो नम ।
अश्मानं तन्वं कृण्महे अद्या नः सोम मृडय ।।७।।

१-८७

त्वं दर्भासि पतिरोषधीनां विभिन्दन् यासि कन्या इवैनाम् ।
भिन्धि शिर: कृमेर्जायां न्यस्य शरीरं भिन्ध्युत भिन्ध्यस्थि ।।१।।
य: कीकसास्थ्नो वीरदात् परूंषि यस्योद्धार उष्णिहास्ता हि वव्रे।
हनिष्यामि वां निरत: परेतं तृणान्यत्तमवसीरिणामिव ।।२।।
अयं य आस्ते जठरेष्वन्त: कास्फीवशं निरुजं मर्त्यस्य ।
हनिष्यामि वां निरत: परेतं स्तायदेयथु: प्रति वामभुत्सि ।।३।।
येनेयथुस्तेन पथा परेतं स्तायदेयथु: प्रति वामभुत्सि ।
ब्रह्मणा वां परिगृह्य समन्तं विच्छेत्स्यामि नकुल इव सर्पम् ।।४।।

१-८८

यज्ञपतिमृषय एनसाहुर्निर्भक्ता भागादनु तप्यमाना:।
यदेनश्चकृवान् बद्ध एष ततो विश्वकर्मन् प्र मुमुग्ध्येनम् ।।१।।
अदान्यान् सोमपान् मन्यमानो यज्ञस्य विद्वान् समये न धीर: ।
मधव्यान् स्तोकानप यान् रराध सं मा तै: सृजतु विश्वकर्मा ।।२।।
ये भक्षयन्तो न वसून्यानृधुर्यानग्नयो अन्वतप्यन्त्व धृष्ण्या ।
या तेषामवया दुरिष्टात् स्विष्टं तद्विश्वकर्मा कृणोतु ।।३।।

भीमा ऋषयो नमो अस्त्वेभ्यश्चक्षुर्यदेषां मनसश्च संदृक् ।
बृहस्पतये महिषाय दिवे नमो विश्वकर्मन् नमस्ते पाह्यस्मान् ।।४।।

१-८९

सर्वा इमा ओषधय: पृथिव्यामधि निष्ठिता: ।
अथैव भद्रिके त्वमसुरेभ्यो अजायथा: ।।१।।
शतं जह्यप्सरसां शतं श्वन्वतीनाम् ।
गन्धर्वपत्नीनां शतस्येन्द्रो अपि कृतच्छिर: ।।२।।
या: पतन्ति पुरोवातं पतन्ति रेष्मभि: सह ।
चेतन्तीमश्मलां पलामिन्द्रो अप्सरसो हनत् ।।३।।
वि वो यशो हवामहे वि वो हविष्यमोदनम् ।
अपावरीरयोर्णुतास्मद् यक्ष्ममपोर्णुत वातस्तेजन्यं यथा।।४।।

१-९०

असितस्य विद्रधस्य लोहितस्य वनस्पते ।
विसल्पकस्यौषधे मोच्छिष: पिशितं चन ।।१।।
यत् ते बलास तिष्ठत: कक्षे मुष्कावयाकृतम् ।
वेदाहं तस्य भेषजं चीपद्रामभिचक्षणम् ।।२।।
निर्बलासं बलासिनो विसल्पमुत विद्रधम् ।
परोपहत्यां ते वयं परा यक्ष्मं सुवामसि ।।३।।
शीर्षरोगमङ्गरोगं शूक्तिबल्गं विलोहितम् ।
परा ते अज्ञातं यक्ष्ममधराञ्चं सुवामसि ।।४।।

*(इति चतुर्चनामप्रथमकाण्डे अष्टादशो ऽनुवाक:)*

१-९१

पयो देवेषु पय ओषधिषु पय आशासु पयोऽन्तरिक्षे ।
तन् मे धाता सविता च धत्तां विश्वे तद् देवा अभि सं गृणन्तु ।।१।।

पयो यदप्सु पय उस्रियासु पय उक्थेषूत पर्वतेषु ।
तन् मे धाता सविता च धत्तां विश्वे तद् देवा अभि सं गृणन्तु ।।२।।
यन् मृगेषु पय आविष्टमस्ति यदेजति पतति यत् पतत्रिषु ।
तन् मे धाता सविता च धत्तां विश्वे तद् देवा अभि सं गृणन्तु ।।३।।
यानि पयांसि दिव्यार्पितानि यान्यन्तरिक्षे वहुधा वहूनि ।
तेषामीशाने वशिनी नो अद्य प्र दत्तां द्यावापृथिवी अहृणीयमाने।।४।।

१-९२

आगन् मेमां समितिं विश्वरूपां यस्यां पूर्वमवदद् देव एकः।
सा नः सुक्तैर्जुजुषाणा समीच्यस्मान् वृणीतां सुमनस्यमाना ।।१।।
इयं देवी समितिर्विश्वरूपा शिल्पं कृण्वाना चरति जनेषु ।
तां राजानः कवयो हृत्सु केतैरराजानश्च वदनैः पुनन्ति ।।२।।
आग्निं सामित्यमुप सं सदेम वाचा प्रियं मधुमत्या वदन्तः।
सोमो राजा वरुणो मित्रधर्मा मयि श्रीयमाण उप सं नमन्तु ।।३।।
यो वः शुष्मो हृदये यो बाह्वोर्यश्च चक्षुषि ।
जिह्वाया अग्रे यो मन्युस्तं वो वि नयामसि ।।४।।

१-९३

त्रिष्कुष्ठासि वृत्राज्जातस्त्रिर्दिवस्परि जज्ञिरे ।
त्रिः सोमाज्जज्ञिषे त्वं त्रिरादित्येभ्यस्परि ।।१।।
जीवलं नघारिषं जयत्कमपराजितम् ।
तं त्वामृतस्येशानं राजन् कुष्ठा वदामसि ।।२।।
अन्तरा द्यावापृथिवी अन्तरिक्षमिदं महत् ।
तत्रामृतस्येशानं कुष्ठं देवा अबध्नत ।।३।।
कुष्ठोसि देवकृतो हिमवद्भ्यो निराभृतः ।
तीक्ष्णाभिरभ्रिभिः खातुः स चकर्तारसं विषम् ।।४।।

## १-९४

यास्ते शतं धमनयः सहस्राणि च विंशतिः ।
बभ्रोरश्वस्य वारेणापि नह्यामि ता अहम् ।।१।।
शतस्य ते धमनीनां सहस्रस्यायुतस्य च ।
दृतेः पदमिव सारथिरपि नह्यामि यद् बिलम् ।।२।।
परमस्यां परावति शुष्को भण्डुश्च तिष्ठतः ।
ततः शुष्कस्य शुष्मेण तिष्ठन्तु लोहिनीरपः ।।३।।
परि वः सिकतामयं मरुं बिले वपामसि ।
दकचिदस्रवित् पुरा तकचिदशमीदिदम् ।।४।।

## १-९५

रुद्र मा त्वा जिहीडाम सुष्टुत्या मघवन् मा सुहूत्या ।
भिषक्तमं त्वा भिषजां श्रुणोम्युन्नो वीराङ् ईरय भेषजेभिः।।१।।
रुद्र यत् ते गुह्यं नाम यत् ते अद्धातयो विदुः ।
शिवा शरव्या या तव तया नो मृड जीवसे ।।२।।
अग्निं त्वाहुर्वैश्वानरं सदनान् प्रदहन्वगाः ।
स नो देवत्राधि ब्रूहि मा रिषामा वयं तव ।।३।।
याः देवैः प्रहितेषुः पतात् तपसे वा महसे वावसृष्टा ।
सोमस्त्वामस्मद्यावयतु विद्वानवन्तु नः पितरो देवहूतिषु ।।४।।

*(इति चतुर्चनामप्रथमकाण्डे ऊनविंशोऽनुवाकः)*

## १-९६

रायष्पोषं धेहि नो जातवेद ऊर्जावदग्ने यशः सूनृतावत् ।
दधाम भागं सुनवाम सोमं यज्ञेन त्वामुप शिक्षेम शक्र ।।१।।
वयमग्ने धनवन्तः स्यामालं यज्ञायोत दक्षिणायै ।
ग्रावा वदेदभि सोमस्यांशुनेन्द्रं शिक्षेमेन्दुना सुतेन ।।२।।

ईशानं त्वा शुश्रुमा वयं पुरो दधानां धनपते ।
गोमदग्ने अश्ववद्भूरि पुष्टं हिरण्यवदन्नवद्धेहि मह्यम् ।।३।।
दुह्रां मे द्यौः पृथिवी पयोऽजगरो मा सोदकोभि वि सर्पतु ।
प्रजापतिना तन्वमा प्रीणोऽरिष्टो म आत्मा ।।४।।

१-९७

अस्मां जुषध्वमसवो ऽद्य मा नः पुरा जरसो ऽसवो वधिष्ठ।
पाका गृणीमस्तव वीर्याय शतं हिमानधिपतिर्न एहि ।।१।।
उन् मृणो अगादार्जुनमगात् सुश्रुद्भगवो गोपाय मा ।
अह्नेद्यात्मानं परि ददे सूर्यप्राणो भवामि ।।२।।
नि मृणो अगादासितमगात् सुश्रुद्भगवो गोपाय मा ।
रात्रयेद्यात्मानं परि ददे ऽग्निप्राणो भवामि ।।३।।
अनाभूरस्यनाभो ऽनाभुवो भूयास्म ।
स यत्र त्वं प्रजापते त्रिरेकस्याह्नः प्रजाः संपश्यसि ।
तत्र मामपि सं पश्यानष्टपशुर्भुवनस्य गोपाः ।।४।।

१-९८

यथा मृगं रोपयसि तिरश्चर्मातिविध्यसि ।
एवा त्वमुग्र ओषधे ऽमुं रोपय मामभि ।।१।।
बन्धश्चेमा उपधिश्च मधुमन्नौ समञ्जनम् ।
द्वारौ भगस्येमा ऊरू मृगस्तुष्यन्निवा चर ।।२।।
अभि त्वाधामभिधिना जालेनेव महाजषम् ।
यथा मम क्रतावसो मम चित्ते सचावहै ।।३।।
अहं वै त्वदुत्तरास्म्यध त्वमुपधिर्मम ।
सं नौ बध्नामि संबन्धनेन यथासावाविचर्त्यावा
मृत्योरा परावतः ।।४।।

१-९९

अपोच्छन्ती दुष्वप्न्यमप दुर्हार्दमुच्छतम् ।
अपोष्टं सर्वं क्षेत्रियं सर्वाश्च यातुधान्य: ।।१।।
उदगातां भगवती विचृतौ नाम तारके ।
वि क्षेत्रियस्य मुञ्चतां सं ग्राम्थिं हृदयस्य च ।।२।।
नमो अस्तु वरत्राभ्यो नम ईषायुगेभ्य: ।
मृगायारण्ये तिष्ठते क्षेत्रियायाकरं नम: ।।३।।
आखोरिदं क्षैत्रपत्यं मनोश्च मानवस्य च ।
मन: सर्वस्य पश्यत इह भूय: स्यादिति ।।४।।

१-१००

उदेहि देवि कन्य आचिता वसुना सह ।
न त्वा तरन्त्योषधयो बाह्या: पर्वतीया उत ।।१।।
यथा त्वा देव्योषधे सर्व: कामयते जन: ।
एवा भगस्य नो धेहि देवेभ्य इवामृतं परि ।।२।।
उत्सक्तपत्न्योषध आवतंकरणीदसि ।
यदेषी यन्निषीदसि तत्र त्वाहं समग्रभमश्वमिवाश्वाभिधान्या।।३।।
यथा कुमारस्तरुणो मातरं प्रति नन्दति ।
एवास्मान् प्रति नन्दतु यां वयं कामयामहे ।।४।।

*(इति चतुर्चनामप्रथमकाण्डे विंशो ऽनुवाक:)*

१-१०१

त्रीणि पात्राणि प्रथमान्यासन् तानि सत्यमुत भूतं ततक्ष ।
ऋतस्य माने अधि या ध्रुवाणि येभिर्देवा अमृतं भक्षयन्ति ।।१।।
स्वर्यद् देवा विभजन्त आयं त्रीणि पात्राणि प्रथमान्यासन् ।
आदित्या एकं वसवो द्वितियं तृतीयं रुद्रा अधि सं बभुवु:।।२।।

धाता वेद सवितैतानि सर्वा बृहस्पतिः प्रथमो देवो अग्निः।
येभिरिन्द्रो जठरमापृणीते त्रिभिः पात्रैरुत विश्वे च देवाः ।।३।।
ऊर्ध्वा तिष्ठन्ति न नु जिह्वा भवन्ति नोनं बभुव कतमच्चनैषाम् ।
देवानां पात्राणि निहितानि यानि तानि सं पाति
य ऋतस्य गोपाः।।४।।

१-१०२

पौर्णमासी प्रथमा यज्ञियासीदह्नां रात्रीणामतिशर्वरेषु ।
ये त्वां यज्ञैर्यज्ञेन बोधयन्त्यमी ते नाकं सुकृतः परेता ।।१।।
पूर्णा पश्चादुत पूर्णा पुरस्तात् पौर्णमासी मध्यत उज्जिगाय ।
तस्यां देवैः संवसन्तो महित्वा नाकस्य पृष्ठे समिषा मदेम ।।२।।
चतस्र दिशः प्रदिशो ह पञ्च षड्डुर्वीराहू रजसो विमानीः।
द्वादशर्तव आर्तवाश्च ते मा प्याययन्तु भुवनस्य गोपाः।।३।।
यथादित्या अंशुमाप्याययन्ति यमक्षितमक्षितये पिबन्ति ।
एवा मामिन्द्रो वरुणो बृहस्पतिरा प्याययन्तु भुवनस्य गोपाः ।।४।।

१-१०३

आगन् रात्री संगमनी वसूनां विश्वं पुष्टं वस्वावेशयन्ती ।
अमावास्यायै हविषा विधेमोर्जं वसाना पयसा न आगन् ।।१।।
मा त्वा रात्रि पुरो दघन् मोत पश्चा विभावरि ।
आयुष्मन्तः सुप्रजसः सुवीरा ऋध्यास्म त्वा सुवर्चसः ।।२।।
यस्य देवस्य सुमतौ सुनीतिरेति सुमतिं गृहाणाम् ।
आ मा पुष्टं च पोष्यं च रात्र्या देवानां सुमतौ स्याम ।।३।।
अहमेवास्म्यमावास्या मा विशन्ति सुकृतो मयीमे ।
मयि देवा उभये साध्याश्चेन्द्रज्येष्ठाः समगच्छन्त सर्वे ।।४।।

१-१०४

प्रथमा ह व्युवास सा धेनुरभवद्य मे ।
सा नः पयस्वती दुहा उत्तरामुत्तरां समाम् ।।१।।
यां देवाः प्रतिनन्दन्ति धेनुं रात्रिमुपायतीः ।
संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली ।।२।।
संवत्सरस्य प्रतिमां ये त्वा रात्र्युपासते ।
तेषामायुष्मतीं प्रजां रायस्पोषेण सं सृज ।।३।।
इयमेव सा या प्रथमा व्यौच्छत् साप्स्वन्तरासु चरति प्रविष्टा ।
वधूर्जिगाय नवगज्जनित्री त्रय एनां महिमानः सचन्ते ।।४।।

१-१०५

वानस्पत्या ग्रावाणो घोषमक्रत हविष्कृण्वन्तः परिवत्सरीणम् ।
एकाष्टके सुप्रजसः सुवीरा वयं स्याम पतयो रयीणाम्।।१।।
ईडायास्पदं घृतवत् सरीसृपं जातवेदः प्रति हव्या गृभाय ।
ये ग्राम्याः पशवो विश्वरूपास्तेषां सप्तानां मयि रन्तिरस्तु ।।२।।
इडया जुह्वतो हविर्देवान् घृतवता यजे ।
गृहानलुभ्यतो वयं दृषदो मोप गोमतः ।।३।।
यज ऋतुभ्य आर्तवेभ्यो माद्भ्यः संवत्सराय च ।
धात्रे विधर्त्रे समृधे भूतस्य पतये यजे ।।४।।

१-१०६

आयमगन् संवत्सरः पतिरेकाष्टके तव ।
तस्मै देवाय हविषा विधेम स उ नः शर्म यच्छतु ।।१।।
एकाष्टकायै हविषा विधेम यर्तून् पञ्चानु प्रविष्टा ।
सस्येन सस्यमुपसंचरन्तो ऽरिष्टास ऋतुनर्तुमुप सं चरेम ।।२।।

वसन्तो ग्रीष्मो मधुमन्त वर्षाः शरद्धेमन्त ऋतवो नो जुषन्ताम् ।
आ नो गोषु भजन्त्वा प्रजायां सुशर्मण्येषां त्रिवरुथे स्याम ।।३।।
एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम् ।
तेन देवा व्यषहन्त शत्रून् हन्तासुराणामभवच्छचीपतिः ।।४।।
पूर्णादर्वे परा पत सुपूर्णा पुनरा पत ।
सर्वान् यज्ञान् संपृञ्चतीषमूर्जं न आ भर ।।५।।
इषमूर्जं न आभृत्येडया पशुभिः सह ।
सरस्वति त्वमस्मासु रायस्पोषं नि यच्छ ।।६।।

*(इति चतुर्चनामप्रथमकाण्डे एकविंशो ऽनुवाक:)*

१-१०७

वातस्य नु महिमा रथस्यारुजन्नेति स्तनयन्नस्य घोषः ।
दिवस्पृगेत्यरुणानि कृण्वन्नथो एति पृथिव्या रेणुमस्यन् ।।१।।
सं प्रेरते अनुवातस्य विष्ठामैनं गच्छन्ति समनेव योषाः ।
ताभिर्विद्वान् सरथं देव ईयते पतिर्विश्वस्य भुवनस्य गोपाः ।।२।।
आत्मा देवानां भुवनस्य गोपा यथावशं चरति देव एषः ।
घोष इदस्य श्रूयते न रूपं तस्मै देवाय हविषा विधेम।।३।।
अन्तरिक्षे पथिभिरीयमानो न नि विशते कतमच्चनाहः ।
अपां योनिः प्रथमजा ऋतस्य क्व स्विज्जातः कुत आ बभुव।।४।।
अन्तरिक्षे पतयन्तं वात त्वामाशुमाशुभिः ।
पश्यन्ति सर्वे चक्षुषा न सर्वे मनसा विदुः।।५।।
उपत्रिकं संचविचं त्रिर्यमं चतुरेकजम् ।
तं मातरिश्वानं देवं दिवो देवा अवासृजन् ।।६।।

१-१०८

अप न्यधुः पौरुषेयं वधं मदिन्द्राग्नी धाता सविता बृहस्पतिः।
सोमो राजा वरुणो अश्विना यमः पूषास्मान् परि पातु मृत्योः।।१।।
यानि चकार भुवनस्य यस्पतिः प्रजापतिर्मातरिश्वा प्रजाभ्यः ।
प्रदिशो यानि वसते दिशश्च तानि मे वर्माणि बहुलानि सन्तु ।।२।।
यत् तनुष्वनह्यन्त देवा द्विराजयोधिनः ।
इन्द्रो यच्चक्रे वर्म तदस्मान् पातु विश्वतः ।।३।।
वर्म मे द्यावापृथिवी वर्माहर्वर्म सूर्यः ।
वर्म मे विश्वे देवाः क्रन्मा मा प्रापत् प्रतीचिका ।।४।।

१-१०९

सोमारुद्रा वि बृहतं विषूचीममीवा या नो गयमाविवेश ।
बाधेथां द्वेषो निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुक्तमस्मत् ।।१।।
तिग्मायुधौ तिग्महेती सुशेवौ सोमारुद्राविह सु मृडतं नः ।
प्र णो मुञ्चतं दुरितादवद्याद् गोपायतं नः सुमनस्यमानौ।।२।।
सोमारुद्रा धारयेथां वसुवीर्यं प्र वामिष्ट्वा वरमश्नवातै ।
युवं नो धत्तमिह भेषजानि प्र यच्छतं वृषणा जेत्वानि ।।३।।
सोमारुद्रा युवमस्मास्वन्तस्तनूषु विश्वा भेषजानि धत्तम् ।
अव स्यतं मुञ्चतं किञ्चिदेनो अङ्गेषु बद्धमुत यद् दूषत् ते ।।४।।

१-११०

घृतस्य जूतिः समना सदेवाः संवत्सरं हविषा वर्धयन्ती ।
श्रोत्रं चक्षुः प्राणोऽच्छिन्नो नो अस्त्वच्छिन्ना वयमायुषो वर्चसः।।१।।
उपास्मान् प्राणो ह्वयतामुप वयं प्राणं हवामहे ।
वर्चो जग्राह पृथिव्यन्तरिक्षं वर्चः सोमो बृहस्पतिर्विधर्ता ।।२।।

वर्चसो द्यावापृथिवी संग्रहणी बभूवतुर्वर्चो गृहीत्वा पृथिवीमनु सं चरेम।
यशसा गावो गोपतिमुप तिष्ठन्त्यायतीर्यशो गृहीत्वा
पृथिवीमनु सं चरेम ।।३।।
व्रजं कृणुध्वं स हि वो नृपाणो वर्मा सीव्यध्वं बहुला पृथूनि ।
पुरः कृणुध्वमायसीरधृष्टा मा वः सुस्रोच्चमसो दृंहता तम् ।।४।।

१-१११

न्यग्वातो वाति न्यक्तपति सूर्यः।
नीचीनमध्न्या दुहे न्यग् भवतु ते विषम् ।।१।।
नि गावो गोष्ठे असदन्नि वत्सा अधि तन्त्याम् ।
न्यूर्मयो नदीनां नि शुष्मा अरसानाम् ।।२।।
अहीनामहिकानां सं हि शीर्षाण्यग्रभम् ।
हृदं सहस्रबाहुः परेत्य व्यनिजमहेर्विषम् ।।३।।
तुराणामतुराणां विशामुरुक्षितामुत ।
कृणोमि तुभ्यं भेषजमाहेयमरसं विषम् ।।४।।

१-११२

इमा ऊरू सवासिनौ वर्चसाञ्जे अहं मम ।
नाम ह्येनयोर्वेद यथा न बहवो विदुः ।।१।।
वर्चसा पीना पृथिवी सूर्येणोत्तभिता द्यौः ।
त्विषिं यां पश्यामो वाते तां नि यच्छे ममोर्वोः ।।२।।
वेद वै वां नामधेयं जिगीवाङ् अपराजितम् ।
प्रजां च वह्नीमा शासे राष्ट्रं चेन्द्राभिरक्षितम् ।।३।।
विदुषी वां नामधेयमश्विना सारघं मधु ।
सूर्य इव चक्षुर्भूतानां प्रजां धारयतं मयि
रयिं धारयतं मयि ।।४।।

शतपाशां वि तनोम्यूरुभ्यां जघनेन च ।
तस्मिन् यो बध्यते बन्धे स मे अस्त्वन्यक्षक: ।।५।।

*(इति चतुर्चनामप्रथमकाण्डे द्वाविंशो ऽनुवाक:)*

*इत्यथर्ववेदे पैप्पलाद संहितायां चतुर्चोनामप्रथम: काण्ड:समाप्त.*

# अथ पञ्चर्चोनाम द्वितीयकाण्डः

२-१

अरसं प्राच्यं विषमरसं यदुदीच्यम् ।
अथेदमधराच्यं करम्भेण वि कल्पते ॥१॥
करम्भं कृत्वा तिर्यं पीवस्पाकमुदारथिम् ।
क्षुधा किल त्वा दुष्टनो यक्षिवां स न रूरुपः ॥२॥
वि ते मदं मदवति शरुमिव पातयामसि ।
प्र त्वा चरुमिव येषन्तं वचसा स्थापयामसि ॥३॥
परि ग्राममिवाचितं परि त्वा स्थापयामसि ।
तिष्ठा वृक्ष इव स्थामन्नभ्रिखाते न रूरुपः ॥४॥
पवस्तैस्त्वा पर्यक्रीणं दूर्शेभिरजिनैरुत ।
प्रक्रीरसि त्वमोषधेभ्रिखाते न रूरुपः ॥५॥

२-२

आविद्य द्यावापृथिवी आविद्य भगमश्विना ।
आविद्य ब्रह्मणस्पतिं कृणोम्यरसं विषम् ॥१॥
अरसं हेदिदं विषं यथैनदहमाशिषम् ।
उतैनदद्यात् पुरुषो भवादिदगदः पुनः ॥२॥
मा बिभेर्न मरिष्यसि परि त्वा पामि विश्वतः ।
रसं विषस्य नाविदमुद् नः फेनमदन्निव ॥३॥
अपावोचदपवक्ता प्रथमो दैव्यो भिषक् ।
समक्षमिन्द्र गा इव या वाचो विषदूषणीः ॥४॥
यच्च पिष्टं यच्चापिष्टं यद् दिग्धं यच्च देह्यम् ।
देवाः सर्वस्य विद्वांसोरसं कृणुता विषम् ॥५॥

२-३

क्षेत्रियात्त्वा निर्ऋत्या जामिशंसाद् द्रुहो मुञ्चामि वरुणस्य पाशात् ।
अनागसं ब्रह्मणा त्वा कृणोमि शिवे ते द्यावापृथिवी अभूताम्।।१।।
शं ते अग्नि: सहाद्भिरस्तु शं गाव: सहौषधीभि: ।
शमन्तरिक्षं सह वातमस्तु ते शं ते भवन्तु प्रदिशश्चतस्र:।।२।।
या देवी: प्रदिशश्चतस्रो वातपत्नीरभि सूर्यो विचष्टे ।
तास्वेतं जरस आ दधामि प्र यक्ष्म एतु निर्ऋति: पराचै:।।३।।
सूर्यमृतं तमसो ग्राह्या यथा देवा मुञ्चन्तो असृजन्निरेनस: ।
एवा त्वा क्षेत्रियान्निर्ऋत्या जामिशंसाद् द्रुहो मुञ्चामि वरुणस्य पाशात्।।४।।
अमोचि यक्ष्माद् दुरितादवद्याद् द्रुह: पाशाद् ग्राह्याश्चोदमोचि ।
जहदवर्तिमविदत् स्योनामप्यभूद्भद्रे सुकृतस्य लोके ।।५।।

२-४

नि: सालां धृष्णुं धिषणमेकावाद्यां जिघत्स्वम् ।
सर्वाश्चण्डस्य नप्त्यो नाशयाम: सदान्वा: ।।१।।
यदि वा घ क्षेत्रिया यदि वा पुरुषेषितात् ।
यदि स्थ दस्युभ्यो जाता नश्यतेत: सदान्वा: ।।२।।
परि धामान्यासामाशुर्गाष्ठामिवासरम् ।
अजैषं सर्वानाजीन् वो नश्यतेत: सदान्वा: ।।३।।
निर्वो गोष्ठादजामसि निर्योनेर्निरुपानसात् ।
निर्वो मुगुन्द्या दुहितरो गृहेभ्यश्चातयामसि ।।४।।
अमुष्मिन्नधरे गृहे सर्वा: सन्त्वराय्य: ।
तत्र पाप्मा न्यच्यतु सर्वाश्च यातुधान्य: ।।५।।

२-५

द्यावापृथिवी उर्वन्तरिक्षं क्षेत्रस्य पत्न्युरुगायो अद्भुत: ।
उतान्तरिक्षमुरु वातगोपं ते घ तप्यन्तां मयि तप्यमाने ।।१।।
इदमिन्द्र शृणुहि सोमप यत् त्वा हृदा शोचता जोहवीमि ।
वृश्चामि तं कुलिशेनेव वृक्षं यो अस्माकं मन इदं हिनस्ति ।।२।।
इदं देवा: शृणुत ये च यज्ञिया स्थ भरद्वाजो मह्यमुक्थानि शंसतु।
पाशे स बद्धो दुरिते न्यच्यतां यो अस्माकं मन इदं हिनस्ति ।।३।।
अशीतिभिस्तिसृभि: सामगेभिरादित्येभिर्वसुभिरङ्गिरोभि: ।
इष्टापूर्तमवतु न: पितृणामामुं ददे हरसा दैव्येन ।।४।।
द्यावापृथिवी अनु मा दीधीथां विश्वे देवासो अनु मा रभध्वम् ।
अङ्गिरस: पितर: सोम्यास: पापमार्छत्वपकामस्य कर्ता ।।५।।
अतीव यो मरुतो मन्यते नो ब्रह्म वा यो निन्दिषत् क्रियमाणम् ।
तपूंषि तस्मै वृजिनानि सन्तु ब्रह्मद्विषमभि तं शोचतु द्यौ:।।६।।
आ दधामि ते पदं समिद्धे जातवेदसि ।
अग्नि: शरीरं वेवेष्टु यमं गच्छतु ते असु: ।।७।।
सप्त प्राणानष्टौ मज्ज्ञस्तांस्ते वृश्चामि ब्रह्मणा ।
यमस्य गच्छ सादनमग्निदूतो अरंकृत: ।।८।।

*(इति पञ्चर्चोनामद्वितीयकाण्डे प्रथमो ऽनुवाक:)*

२-६

वेनस्तत् पश्यत् परमं पदं यत्र विश्वं भवत्येकनीडम् ।
इदं धेनुरदुहज्जायमाना: स्वर्विदो अभ्यनूषत व्रा ।।१।।
प्र तद् वोचेदमृतं न विद्वान् गन्धर्वो धाम परमं गुहा यत् ।
त्रीणि पदा निहिता गुहास्य यस्तानि वेद स पितुष्पितासत् ।।२।।

स नो बन्धुर्जनिता स विधर्ता धामानि वेद भुवनानि विश्वा ।
यत्र देवा अमृतमानशाना: समाने धामन्नध्यैरयन्त ।।३।।
परि विश्वा भुवनान्यायमुपातिष्ठे प्रथमजा ऋतस्य ।
वाचमिव वक्तरि भुवनेष्ठा धास्युर्न्वेष नन्वेषो अग्नि: ।।४।।
परि द्यावापृथिवी सद्य आयमृतस्य तन्तुं विततं दृशे कम् ।
देवो देवत्वमभिरक्षमाण: समानं बन्धुं व्यपृच्छदेक: ।।५।।

२-७

इन्द्र जुषस्वा याहि शूर पिबा सुतस्य मधोश्चकान: ।
चारुर्मदाय ।।१।।
आ त्वा विशन्तु सुतास इन्द्र पृणस्व कुक्षी विड्ढि शक्र ।
धियेह्या न: ।।२।।
इन्द्र जठरं पृणस्व मधोरस्य सुतस्य ।
उप त्वा मदेषु वाजो अस्तु ।।३।।
इन्द्रस्तुराषाड् जघान वृत्रं सासाह शत्रून् समत्सु वज्री ।
मदे सोमस्य ।।४।।
श्रुधी हवं मे गिरो जुषस्वेन्द्र स्वयुग्भिर्मत्स्व मदाय ।
महे रणाय ।।५।।

२-८

उदित्ये अक्रमन् त्रयो व्याघ्र: पुरुषो वृक: ।
हिरुग् ज्योति: सूर्यो हिरुग् देवो
वनस्पतिर्हिरुङ् नवन्तु शत्रव:।।१।।
परमेण पथा वृक: परेण स्तेनो अर्षतु ।
ततो व्याघ्र: परम: ।।२।।

अक्षौ च ते हनू च ते व्याघ्रं जम्भयामसि ।
आत् सर्वान् विंशतिं नखान् ।।३।।
यत् संनशो वीन्नशो यद्विनशो न सं नशः ।
मूर्णा मृगस्य दन्ता अपिशीर्णा उ पृष्टयः ।।४।।
व्याघ्रः दत्वतां वयं प्रथमं जम्भयामसि ।
आदित स्तेनमहिं यातुधानमथो वृकम् ।।५।।
नेव रप्ससै न गृहः परश्चर ।
द्विपाच्चतुष्पान्नो मा हिंसीरिन्द्रजाः सोमजा असि ।।६।।

२-९

इयं वीरुन्मधुजाता मधुने त्वा खनामसि ।
मधोरधि प्रजातासि सा नो मधुमतस्कृधि ।।१।।
जिह्वाया अग्रे मे मधु जिह्वामूले मधूलकम् ।
यथा मां कामिन्यसो यथा मामन्वायसि ।।२।।
परि त्वा परितत्नुनेक्ष्णाकामविद्विषे ।
यथा न विद्विषावहै न विभवाव कदाचन ।।३।।
राज्ञे ब्रूहि वरुणायाश्वाय पुरुषाय च ।
यथा मे पथ्ये रेवति जायामा वह साधुना ।।४।।
जायां मे मित्रावरुणा जायां देवी सरस्वती ।
जायां मे अश्विनोभा धत्तां पुष्करस्रजा ।।५।।

२-१०

दशवृक्ष मुञ्चेममंहसो ग्राह्याश्च ।
अथो एनं वनस्पते जीवानां लोकमुन्नय ।।१।।
यश्चकार स निष्करत् स एव सुभिषक्तमः ।
स एव तुभ्यं भेषजं चकार भिषजाति च ।।२।।

चीतिं ते देवा अविदन् ब्रह्माण उत वीरुध: ।
चीतिं तेऽद्योत्तमामविदन् भूम्यामधि ।।३।।
आगादुदगादयं जीवानां व्रातमप्यगात् ।
अभूदु पुत्राणां पिता नृणां च भगवत्तम: ।।४।।
अधीतिमध्यगादयमधि जीवपुरा अगात् ।
शतं च यस्य वीरुध: सहस्रमुत भेषजा ।।५।।

*(इति पञ्चर्चोनामद्वितीतकाण्डे द्वितीयो ऽनुवाक:)*

## २-११

दीर्घायुत्वाय बृहते रणायारिष्यन्तो दक्षमाणा: सदैव ।
मणिं विष्कन्धदूषणं जङ्गिडं बिभृमो वयम् ।।१।।
जङ्गिडो जम्भाद्विशराद्विष्कन्धादभिशोचनात् ।
मणि: सहस्रवीर्य: परि ण: पातु विश्वत:।।२।।
अयं विष्कन्धं सहते अयं रक्षोप बाधते ।
अयं नो विश्वभेषजो जङ्गिड: पात्वंहस: ।।३।।
देवैर्दत्तेन मणिना जङ्गिडेन मयोभुवा ।
विष्कन्धं सर्वा रक्षांसि व्यायामे सहामहे ।।४।।
शणश्च त्वा जङ्गिडश्च विष्कन्धादधि मुञ्चताम् ।
अरण्यादन्य आभृत: कृष्या अन्यो रसेभ्य:।।५।।

## २-१२

एह यन्तु पशोव ये परेयुर्वायुर्येषां सहचारं जुजोष ।
त्वष्टा येषां रूपधेयानि वेदास्मिन्तान् गोष्ठे
सविता नि यच्छात् ।।१।।
इमं गोष्ठं पशव: सं सृजन्तु बृहस्पतिरा नयतु प्रजानन् ।
सिनीवाली नयत्वाग्रमेषामाजग्मुषो अनुमतिर्नि यच्छात् ।।२।।

सं सं स्रवन्तु पशवः समश्वा उत पूरुषाः ।
सं धान्यस्य या स्फातिः संस्राव्येण हविषा जुहोमि ।।३।।
सं सिञ्चामि गवां क्षीरं समाज्येन बलं रसम् ।
सं सिक्ता अस्माकं वीरा मयि गावश्च गोपतौ ।।४।।
आ हरामि गवां क्षीरमाहार्षं धान्यं रसम् ।
आहार्षमस्माकं वीराना पत्नीमेदमस्तकम् ।।५।।

२-१३

सं वः सृजत्वर्यमा सं पूषा सं बृहस्पतिः ।
समिन्द्रो यो धनञ्जय इह पुष्यत यद् वसु ।।१।।
इहैव गाव एतनेहो शका इव पुष्यत ।
इहैवोत प्र जायध्वं मयि संज्ञानमस्तु वः ।।२।।
मया गावो गोपत्या सचध्वमयं वो गोष्ठ इह पोषयाति ।
रायस्पोषेण बहुला भवन्तीर्जीवा जीवन्तीरुप वः सदेम ।।३।।
सं वो गोष्ठेन सुषदा सं रय्या सं सुपुष्ट्या ।
अहर्जातस्य यन्नाम तेन वः सं सृजामसि ।।४।।
संजानाना अविहृता अस्मिन् गोष्ठे करीषिणीः ।
बिभ्रतीः सोम्यं हविः स्वावेशास एतन ।।५।।

२-१४

उद्यन्नादित्यः क्रिमीन् हन्तु सूर्यो निम्रोचन् रश्मिभिर्हन्तु ।
ये अन्तः क्रिमयो गवि ।।१।।
यो विश्वरूपश्चतुरक्षः क्रिमिः सारङ्गो अर्जुनः ।
हतो हतभ्राता क्रिमिर्हतमाता हतस्वसा ।।२।।
हतो राजा क्रिमीणामुतैषां स्थपतिर्हतः ।
हतासो अस्य वेशसो हतासः परिवेशसः ।।३।।

प्र ते शृणामि शृङ्गे याभ्यां त्वं वितुदायसि ।
अथो भिनद्मि तं कुम्भं यस्मिन् ते निहितं विषम् ।।४।।
अत्रिवत्त्वा क्रिमे हन्मि कण्ववज्जमदग्निवत् ।
अगस्त्यस्य ब्रह्मणा सर्वे ते क्रिमयो हता: ।।५।।

२-१५

इन्द्रस्य या मही दृषत् क्रिमेर्विश्वस्य तर्हणी ।
तया पिनष्मि सं क्रिमीन् दृषदा खल्वाँ इव ।।१।।
दृष्टमदृष्टमतृहमथो कुरूरुमतृहम् ।
अल्गण्डून् सर्वाञ्छलूलान् क्रिमीन् वचसा जम्भयामसि ।।२।।
अल्गण्डून् हन्मि महता वधेन दूना अदूना अरसा अभूवन्।
शिष्टानशिष्टान्नि तिरामि वाचा यथा क्रिमीणां नकिरुच्छिषातै।।३।।
अन्वान्त्र्यं शीर्षण्यमथो पार्ष्टेयं क्रिमिम् ।
अवस्कवं व्यध्वरं क्रिमीन् वचसा जम्भयामसि ।।४।।
ये क्रिमय: पर्वतेषु ये वनेषु य ओषधीषु पशुष्वप्स्वन्त: ।
ये अस्माकं तन्वं स्थाम चक्रिर इन्द्रस्तान् हन्तु महता वधेन।।५।।

*(इति पञ्चर्चोनामद्वितीयकाण्डे तृतीयोऽनुवाक:)*

२-१६

या शत्रून् प्राशं जयात् सहमानाभिमूरसि ।
सामून् प्रतिप्राशो जह्यरसान् कृण्वोषधे ।।१।।
सुपर्णस्त्वा ऽन्वविन्दत् सूकरस्त्वाखनन्नसा ।
इन्द्रस्त्वा चक्रे बाह्वोरसुरेभ्य स्तरीतवे ।।२।।
पाटामिन्द्रो व्याश्नाद्धन्तवा असुरेभ्य: ।
त्वयाहं शत्रून् साक्षीयेन्द्र: शालावृकानिव ।।३।।

रुद्र जलासभेषज नीलशिखण्ड कर्मकृत् ।
प्रश्नं दुरस्यतो जहि यो अस्माङ् अभिदासति ।।४।।
तस्य प्रश्नं त्वं जहि यो न इन्द्राभिदासति ।
अधि नो ब्रूहि शक्तिभि: प्राशि मामुत्तरं कृधि ।।५।।

२-१७

यथेदं भूम्यामधि वातस्तृणं मथायति ।
एवा मथ्नामि ते मनो यथा मां कामिन्यसो
यथा मामन्वायसि ।।१।।
एयमगन् पतिकामा जनिकामोहमागमम् ।
अश्व: कनिक्रदद्यथा भगेनाहं सहागमम् ।।२।।
सं चेन्नयाथो अश्विना कामिना सं च नेषथ: ।
सं वां मनांस्यग्मत सं चक्षूंषि समु व्रता ।।३।।
यदन्तरं तद् बाह्यं यद् बाह्यं तदन्तरम् ।
कन्यानां विश्वरूपाणां मनो गृभायौषधे ।।४।।
या सुपर्णापक्षणवानपक्षणावा ।
अत्रा त आर्पितं मन: शल्य इव कुर्मलं यथा ।।५।।

२-१८

सिंहे व्याघ्र उत या पृदाकौ त्विषिरग्नौ ब्राह्मणे सूर्ये या ।
इन्द्रं या देवी सुभगा ववर्ध सा न ऐतु वर्चसा संविदाना ।।१।।
या हस्तिनि द्वीपिनि या हिरण्ये त्विषिरश्वेषु पुरुषेषु गोषु या ।
इन्द्रं या देवी सुभगा ववर्ध सा न ऐतु वर्चसा संविदाना ।।२।।
या राजन्ये दुन्दुभावायतायां त्विषि: सेनायां स्तनयित्लौ घोषे या ।
इन्द्रं या देवी सुभगा ववर्ध सा न ऐतु वर्चसा संविदाना ।।३।।

रथे अक्षेष्वृषभस्य वाजे पर्जन्ये वाते वरुणस्य शुष्मे ।
इन्द्रं या देवी सुभगा ववर्ध सा न ऐतु वर्चसा संविदाना ।।४।।
या रुद्रेषु या वसुष्वादित्येषु मरुत्सु या ।
त्विषिर्या विश्वेषु देवेषु सा न ऐतु वर्चसा संविदाना ।।५।।

२-१९

यदि गाधानां यदि नाव्यानां नदीनां पारे नृपतिः सखा नः।
विश्वे देवासो अभि रक्षतैनं यथा जीवो विदथमावदासि ।।१।।
यद्यपारे यदि वा घ पारे यदि धन्वनि नृपतिः सखा नः ।
विश्वे देवासो अभि रक्षतैनं यथा जीवो विदथमावदासि ।।२।।
यदि यत्सु यदि दृत्यां यदि समित्यां नृपतिः सखा नः ।
विश्वे देवासो अभि रक्षतैनं यथा जीवो विदथमावदासि ।।३।।
अधस्पद्यन्तामधरे भवन्तु ये नः सूरिं मघवानं पृतन्यान् ।
विश्वे देवासो अभि रक्षतैनं यथा जीवो विदथमावदासि ।।४।।
यम मृत्यो मैनं हिंसीर्यमहं हृदा मनसा जुगोप ।
यो मां पिपर्ति यमहं पिपर्मि स प्रजावान् मघवान् सूरिरस्तु ।।५।।

२-२०

इमां नावमा रोहताच्छिद्रां पारयिष्णवम् ।
नराशंसस्य या गृहे शतारित्रा भगस्य च ।।१।।
उप ध्रुव गुल्गुलुना यक्ष्माः सन्त्वघ्न्यायाः ।
रुद्रस्येष्वा यातुधानानथो राज्ञो भगस्य च ।।२।।
रुद्रावीशाते द्विपदां चतुष्पदां तयोर्वयमधिवाके स्याम ।
पक्वैर्वित्यैः प्रतिभूषन्त एनौ वयं देवानां सुमतौ स्याम ।।३।।
प्रतीची नाम ते माता शतवारो घ ते पिता ।
ततो ह यज्ञिषे त्वमरिष्यन्त्यरुन्धति ।।४।।

माता नामासि मातृतो अमृतस्यैव वा असि ।
अरुन्धति त्वं सर्वमभि जीवमधा इदम् ।।५।।

*(इति पञ्चर्चोनामद्वितीयकाण्डे चतुर्थो ऽनुवाक:)*

२-२१

आ नो अग्ने सुमतिं सम्भलो गेदिमां कुमारीं सह नो भगेन ।
जुष्टा वरेषु समनेषु वल्गुरोषं पत्या भवतु सम्भगेयम् ।।१।।
इयमग्ने नारी पतिं विदेष्ट सोमो हि राजा सुभगां कृणोतु ।
सुवाना पुत्रान् महिषी भवाति गत्वा पतिं सुभगा वि राजात् ।।२।।
सोमजुष्टो ब्रह्मजुष्टो अर्यम्णा सम्भृतो भग: ।
धातुर्देवस्य सत्येन कृणोमि पतिवेदनम् ।।३।।
यथाखरो मघवंश्चारुरेष प्रियो मृगाणां सुषदा बभूव ।
एवेयं जुष्टा भगस्यास्तु संप्रिया पत्याविराधयन्ती ।।४।।
भगस्य नावमा रोह पूर्णामनपदस्वतीम् ।
तयोपप्रयाहि तं य: पति: प्रतिकाम्य: ।।५।।
इदं हिरण्यं गुल्गुल्वयमौक्षो अथो भग: ।
एते पतिभ्यस्त्वामदु: प्रतिकामाय वेत्तवे ।।६।।

२-२२

युनक्त सीरा वि युगा तनोत कृते क्षेत्रे वपतेह बीजम् ।
विराज: श्नुष्टि: सभरा असन्नो नेदीय इत् सृण्य: पक्वमा यवम्।।१।।
सीरा युञ्जन्ति कवयो युगा वि तन्वते पृथग् धीरा देवेषु सुम्नयौ ।
अनड्वाह: पुरुषा ये कृषन्ति लाङ्गलं फालं समनज्मि स्फात्या ।।२।।
शुनं कीनाशो अन्वेतु वाहाञ्छुनं फालो विनुदन्नेतु भूमिम् ।
शुनासीरा हविषा यो ददातै सुपिप्पला ओषधय: सन्तु तस्मै ।।३।।
शुनं नरो लाङ्गलेनानडुद्भिर्भग: फालै: क्षेत्रपतिर्मरुद्भि: ।
पर्यन्यो बीजमिरयेदं हिनोतु शुनासीरा कृणुतं धान्येह ।।४।।

इन्द्रः सीतां नि गृह्णातु तां पूषाभि रक्षतु ।
सा नः पयस्वती दुहामुत्तरामुत्तरां समाम् ।।५।।
उदस्थाद्रथजिद् गोजिदश्वजिद्धिरण्यजित् सूनृतया परीवृतः ।
एकचक्रेण सविता रथेनोर्जो भागैः पृथिवी नेत्यापृणन्।।६।।

२-२३

गवां गृहाणां रसमोषधीनामनुज्येष्ठं वर्च आयुर्विकल्प्य ।
स मा हिंसीः पितरौ वर्धमानो भद्राच्छ्रेयांसमभि लोकमेहि।।१।।
यदीदं भक्तं यदि वा विभक्तं क्षेत्रं देवानां यदि वा पितृणाम् ।
यदि सूर्य उदिते यदि वा मनुष्यवच्छिवा नो अस्तु
पृथिवी उत द्यौः ।।२।।
ऊर्जा वां भागो वरया पृथिव्यां देवी द्वारौ ब्रह्मणा वां धारयामि ।
शिवं शग्ममवसानं नो अस्तु रातं देवेभिः पितृभिर्मनुष्यैः ।।३।।
विश्वावसोस्त्वा सदनं कुलायं गन्धर्वासो वेधसो मह्यमूचुः ।
स मा हिंसीः शेवधिं यन्त एतं शतं हिमाः परि दध्मो मनुष्यम्।।४।।
रुद्रा उत्से सदमक्षीयमाणे देवा मदन्ति पितरो मनुष्याः ।
अयं भागो भागपतिश्च देवा उर्वीरस्तर्याः शरदस्तरेम ।।५।।

२-२४

यो अस्मिन् यक्ष्मः पुरुषे प्रविष्ट इषितं दैव्यं सहः ।
अग्निष्टं घृतबोधनो अप स्कन्दयत्वधि दूरमस्मत्
सो अन्येन समृच्छतां तमस्मै प्र सुवामसि ।।१।।
यस्त्वा यक्ष्मो देवेषित इषितः पितृभिश्च यः ।
तस्मात् त्वा विश्वे देवा मुञ्चन्तु पर्यंहसः ।
ते ते यक्ष्ममप स्कन्दयन्त्वधि दूरमस्मत्
सो अन्येन समृच्छतां तमस्मै प्र सुवामसि ।।२।।

यत् त्वमेनो अन्यकृतं यदात्मकृतमारिथ
तस्मात् त्वा विश्वा भूतानि मुञ्चन्तु पर्यंहसः ।
तानि ते यक्ष्ममप स्कन्दयन्त्वधि दूरमस्मत्
सो अन्येन समृच्छतां तमस्मै प्र सुवामसि ।।३।।
यत् त्वा स्व आदृशा यद् वा चकार निष्ट्यः ।
तस्मात् त्वा पृथिवी माता मुञ्चन्तु पर्यंहसः ।
सा ते यक्ष्ममप स्कन्दयन्त्वधि दूरमस्मत्
सो अन्येन समृच्छतां तमस्मै प्र सुवामसि ।।४।।
अपस्कन्देन हविषा यक्ष्मं ते नाशयामसि ।
तदग्निराह तदु सोम आह बृहस्पतिः सविता तदिन्द्रः ।
ते ते यक्ष्ममप स्कन्दयन्त्वधि दूरमस्मत्
सो अन्येन समृच्छतां तमस्मै प्र सुवामसि ।।५।।

२-२५

अग्न्यग्रा इन्द्रबला आदित्या या युधो विदुः ।
युधो अधि प्रतिष्ठिता होत्रा जैत्राय जुह्वति ।।१।।
अभियुक्तस्य प्रधने ऽनु योद्धारमिच्छताम् ।
हवींष्यग्रे युध्यतां प्रति गह्णीत जुह्वताम् ।।२।।
जेत्रा राज्ञा वरुणेन जेत्रा रुद्रेण केशिना ।
भवेन जिष्णुना जयति पर्यन्येन सहीयसा ।।३।।
अस्त्रा ताम्रेण बृहता अस्त्रा सर्वेण युध्यता ।
गन्धर्वेण त्विषीमता रथेनासमयोधिना ।।४।।
सिनीवाल्यनुमतिर्वाहाश्वा निषङ्गिणः ।
जयन्तो ऽभि प्रेतामित्रान् साकमिन्द्रेण मेदिना ।।५।।

*(इति पञ्चर्चोनामद्वितीयकाण्डे पञ्चमो ऽनुवाकः)*

## २-२६

यत् स्वप्ने निजगन्थ यद्वा शेपिषे ऽनृतम् ।
अग्निष्ट्वा तस्मादेनसो ब्रह्मा मुञ्चत्वंहस: ।।१।।
यदक्षेषु दुद्रोहिथ यद्वा मित्रेभ्यस्त्वम् ।
सोमस्त्वा तस्मादेनसो ब्रह्मा मुञ्चत्वंहस: ।।२।।
यत् कुमार: कुमारेषु यद्वा ज्यायस्तरेषु च ।
नीविं यत् कृत्वा शेपिषे तत् कृण्मो अगदं शिवम् ।।३।
प्रतीचीनफलो हि त्वमपामार्ग बभूविथ ।
सर्वान् मच्छपथाँ अधि वरीयो यावया त्वम् ।।४।।
अपामार्ग ओषधीनां विश्वासामेक इत् पति: ।
तेन ते मृज्म आस्थितमथ त्वमगदश्चर ।।५।।

## २-२७

शतवारो अनीनशद् यक्ष्मान् रक्षांसि तेजसा ।
आरोहन् वर्चसा सह मणिर्दुर्णामचातन: ।।१।
शृङ्गाभ्यां रक्षो नुदते मूलेन यातुधान्य: ।
मध्येन यक्ष्मं बाधते नैनं पाप्माति तत्रति ।।२।।
ये यक्ष्मासो अर्भका महान्तो ये च शब्दिन: ।
सर्वान् दुर्णामहा मणि: शतवारो अनीनशत् ।।३।।
शतं वीरानजनयच्छतं यक्ष्मानपावपत् ।
दुर्णाम्न: सर्वान् हत्वा अप रक्षांसि धूनुते ।।४।।
हिरण्यशृङ्ग ऋषभ: शतवारो अयं मणि: ।
दुर्णाम्न: सर्वांस्तृड्वा अप रक्षांस्यक्रमीत् ।।५।।
शतमहं दुर्णाम्नीनां गन्धर्वाप्सरसां शतम् ।
शतं श्वन्वतीनां शतवारेण वारये ।।६।।

## २-२८

विश्वं विव्यज्मि पृथिवीव पुष्टमादायत् प्रति गृह्णाम्यन्नम् ।
वैश्वानरस्य महतो महिम्नाग्निष्टद् विश्वादगदं कृणोतु ।।१।।
यदन्नमद्मि बहुधा विरूपं हिरण्यमश्वमुत गामजामविम् ।
वैश्वानरस्य महतो महिम्नाग्निष्टद् विश्वादगदं कृणोतु ।।२।।
यदन्नमद्म्यनृतेन देवा दास्यन्नदास्यन्नुत वाकरिष्यन् ।
वैश्वानरस्य महतो महिम्नाग्निष्टद् विश्वादगदं कृणोतु ।।३।।
यन्मा हुतं यदहुतमाजगाम यस्मादन्नान्मनसोद्रारजीमि ।
वैश्वानरस्य महतो महिम्नाग्निष्टद् विश्वादगदं कृणोतु ।।४।।
जमदग्नि: कश्यप: स्वाद्वेतद्भरद्वाजो मध्वन्नं कृणोतु ।
प्रतिग्रहीत्रे गोतम वसिष्ठो विश्वामित्रो न: प्र तिरात्यायु: ।।५।।

## २-२९

अग्ने यज्ञस्य चक्षो ।
इदं वेदाम यथेदं भविष्यति स्वाहा ।।१।।
अग्ने यज्ञस्य श्रोत्र ।
इदं वेदाम यथेदं भविष्यति स्वाहा ।।२।।
अग्ने यज्ञस्य प्राण ।
इदं वेदाम यथेदं भविष्यति स्वाहा ।।३।।
अग्ने यज्ञस्यापान ।
इदं वेदाम यथेदं भविष्यति स्वाहा ।।४।।
अग्ने यज्ञस्यात्मन्।
इदं वेदाम यथेदं भविष्यति स्वाहा ।।५।।
अग्ने यज्ञस्य सर्व ।
इदं वेदाम यथेदं भविष्यति स्वाहा ।।६।।

## २-३०

देवानां भद्रा सुमतिर्ऋजूयतां देवानां रातिरभि नो नि वर्तताम् ।
देवानां सख्यमुप सेदिमा वयं देवा न आयुः प्र तिरन्तु जीवसे ।।१।।
तान् पूर्वया निविदा हूमहे वयं भगं मित्रमदितिं दक्षमस्त्रिधम् ।
अर्यमणं वरुणं सोममश्विना सरस्वती नः सुभगा मयस्करत् ।।२।।
इदं पितृभ्यो नमो अस्त्वद्य ये पूर्वासो ये परासः परेयुः ।
ये पार्थिवे रजस्या निषत्ता ये वा नूनं सुवृजनासु दिक्षु ।।३।।
प्रत्यञ्चो अग्ने शरवः पतन्तु कृत्याकृते रिपवे मर्त्याय ।
क्रव्यादे अत्रिणे मा मीमृणः क्रविष्णुमा धेहि निर्ऋतेरुपस्थे ।।४।।
ज्यायसः शंसादुत वा कनीयसः सजातिशंसादुत जामिशंसात् ।
अनादिष्टमन्यकृतं यदेनस्त्वं नस्तस्माज्जातवेदो मुमुग्धि ।।५।।

## २-३१

इमौ पादौ प्र हराम्या गृहेभ्यः स्वस्तये ।
इन्द्रः पश्चादिन्द्रः पुरस्तादिन्द्रो नः पातु मध्यतः ।।१।।
इन्द्रो भयं व्यस्यतु शूद्राच्च न आर्याच्च ।
इन्द्रः पथिभिरद्रवदसमृद्धा अघायवः ।।२।।
इन्द्रो हनिष्यतां वधं वि नः पाशाङ् इवाचृतत् ।।३।।
एमं पन्थामरुक्षाम सुगं स्वस्तिवाहनम् ।
येन विश्वाः परि द्विषो वृणक्ति विन्दते विश्वास्तमेत्यनाहतः ।।४।।
परा व्रजतु कृन्तत्यवकां विक्षणन्निव ।
विष्वञ्चो यन्त्वस्य पाला विष्वञ्चः परिपन्थिनः ।
विष्वक् पुनर्भुवा मनो असमृद्धा अघायवः ।।५।।
स्वस्त्यन्वचाकशं स्वस्ति प्रत्यचाकशम् ।

स्वस्ति पथिषु धन्वसु स्वस्त्यप्स्वन्त: ।
परि व्रजं स्वरित स्वस्त्ययनमसि
भारद्वाजं स्वस्ति पुनरायनम्।।६।।

२-३२

य उत्तरादाजायते मधुघो मधुघादधि ।
वेदाहं तस्मिन् भेषजं जिह्वा मधुमती मम ।।१।।
मधुमत्ते पर्णमासा मधु शृङ्गेत पुष्पकम् ।
मधुमान् पर्वतासिथ यतो जायस ओषधे ।।२।।
गर्भो अस्योषधीनामपां गर्भ उतासिथ ।
अथो सोमस्य भ्रातासि मधुघ प्राव मे वच: ।।३।।
शुनमहं मधुघस्य पितुर्नामेव जग्रभ ।
यो मा हिरण्यवर्चसं कृणवत् पूरुषप्रियम् ।।४।।
प्रियं मा कृणु देवेषु प्रियं राजसु मा कृणु ।
प्रियं सर्वस्य पश्यत उत शूद्र उतार्ये ।।५।।

२-३३

ऊघ्ना वन हृदा वन मुखेन जिह्वया वन ।
प्रपीना पयसा वन ।।१।।
वाञ्छ पदो वाञ्छ त्वचं वाञ्छाक्षौ वाञ्छ सक्थ्यौ ।
वत्समनु प्र ते मनो निम्नं वारिव धावतु ।।२।।
ऊर्ध्वानि ते लोमानि तिष्ठन्तक्ष्यौ कामेन शुष्यताम् ।
समिद्वत्सेन गौरिव मुद्रा सुरेव पृच्यताम् ।।३।।
इमा गाव: सबन्धव: समानं वत्समक्रत ।
हिङ्ङ्क्रति करिक्रतीराद्धारानिरमवश्वसा ।।४।।

शृङ्गौपशा गलभूषा अघ्न्याश्चर्मवासिनीः ।
गावो घृतस्य मातरस्ता वत्से वानयामसि ।।५।।

२-३४

यच्च वर्चः कन्यासु यच्च हस्तिष्वाहितम् ।
हिरण्ये गोषु यद्वर्चस्तस्य भक्षीय वर्चसः ।।१।।
यच्च वर्चो राजरथे यच्च राजस्वाहितम् ।
निष्के रुक्मे च यद्वर्चस्तस्य भक्षीय वर्चसः ।।२।।
यदप्सु यद्वनस्पतौ यदग्नौ यच्च सूर्ये ।
यज्ञे यद् दक्षिणायां वर्चस्तस्य भक्षीय वर्चसः ।।३।।
वर्चस्वन्मे मुखमस्तु वर्चस्वदुत मे शिरः ।
वर्चस्वान् विश्वतः प्रत्यङ् वर्चस्वान् वर्णो अस्तु मे ।।४।।
सुभागं मे मुखमस्तु सुभागमुत मे शिरः ।
सुभागो विश्वतः प्रत्यङ् सुभागो वर्णो अस्तु मे ।।५।।

२-३५

उदसौ सूर्यो अगात् सहावतुना मम ।
अहं ते मधुमती मधुघान् मधुमत्तरा ।।१।।
यद्गिरिषु पर्वतेषु गोष्वश्वेषु यन् मधु ।
सुरायां सिच्यमानायां कीलाले अधि यन् मधु
तेन मधु तन् मयि ।।२।।
यथा सुरा यथा मधु यथाक्षा अधि देवने ।
यथाह गव्यतो मन एवा मामभि ते मनः ।।३।।
आ ते पदं पदेनादिष्या ते मनसा मनः ।
प्रत्यञ्चमग्रभं त्वाश्वमिवाश्वाभिधान्या ।।४।।

मह्यं त्वा द्यावापृथिवी मह्यं देवी सरस्वती ।
मह्यं त्वा मध्यं भूम्या उभावन्तौ समस्यताम् ।।५।।

(इति पञ्चर्चोनामद्वितीयकाण्डे सप्तमोऽनुवाक:)

२-३६

या वैश्वदेवीरिषवो या वसूनां या रुद्रस्य सोमस्य या भगस्य ।
विश्वे देवा इषवो यावतीर्वस्ता वो अग्निना शर्मणा शमयामि ।।१।।
या आदित्यानामिषवो या वसूनां या रुद्रस्याश्विनोर्यावतीस्ता: ।
विश्वे देवा इषवो यावतीर्वस्ता वो देव: सविता शमयाति ।।२।।
यास्ते अग्न इषवो वात यास्ते ऽपामदित्यामुत या मरुत्सु ।
इन्द्रश्च साम्ना वरुणश्च राजा ता व: सूर्यो बृहता शमयाति ।।३।।
मा वृक्षमज्यादित्येभ्यो मा वसुभ्यो मा रुद्रायाग्नये पार्थिवाय ।
इन्द्रस्य शुचो वरुणस्य या: शुचस्ता वो देव्यदिति: शमयाति ।।४।।
याश्च वाते विष्वग्वाते याश्च रुद्रस्य धन्वनि ।
अग्निष्टा वसोरीशान: सर्वास्ता भेषजा: करत् ।।५।।

२-३७

चित्तिं यजामि मनसा चित्तिं देवाङ् ऋतावृध: ।
जातवेद: प्र णस्तिराग्ने विश्वाभिरूतिभि: ।।१।।
यावयास्मद् द्वेषांसि यवमयेन हविषा ।
यस्ते त्रित दुष्वप्न्यस्य भाग: स त एष तं त
एतं प्र हिण्म:।।२।।
यथा कलां यथा शफं यथर्णं संनयन्ति ।
एवाह दुष्वप्न्यं सर्वमप्रिये सं नयामसि ।।३।।
अररो है शतमद्य गवां भक्षीय शतमजानां शतमवीनां

शतमश्वानां शतं पुरुषाणाम् ।
तत्रापि भक्षीयामुमामुष्यायणममुष्या: पुत्रम् ।।४।।
तमहं निर्ऋतये प्र यच्छामि तं मृत्यो: पाशे बध्नामि ।
स बद्धो हतो अस्तु स ततो मा मोचि ।।५।।

## २-३८

ये न: शपन्त्यप ते भवन्तु वृक्षानिव वृक्णां अति तां अयाम ।
द्राघीय आयु: प्रतरं दधाना वयं देवानां सुमतौ स्याम ।।१।।
कृत्याकृतं प्रत्यवसानदर्शनमग्ने प्रति स्म बुध्यस्व ।
प्रति स्म देव तं दह ।।२।।
यस्त्वा कृत्ये प्रतिघाय विद्वाङ् अविदुषो गृहम् ।
पुनस्त्वा तस्मा आ दध्मो यथा कृत्याकृतं हनत् ।।३।।
पुन: कृत्यां कृत्याकृते हस्तगृह्य परा णय ।
उतो तमुत सा पुनस्तर्द इव सदनं स्वम् ।।४।।
कृत्या यन्तु कृत्याकृतं वृकीवाविमतो गृहम् ।
स्तोकं पाकस्य वर्धतां सुवृष्ट ओषधीरिव ।।५।।

## २-३९

यत्ते ग्रावा बाहुच्युतो अचक्रोन्नरो यद्वा ते हस्तयोरधुक्षं ।
तत् त आ प्यायतां तत् ते नि ष्ट्यायतां सोम राजन् ।।१।।
यत् ते ग्राव्णा चेच्छिदु: सोम राजन् प्रियाण्यङ्गानि सुकृता पुरूणि ।
तत् सं धत्स्वाज्येनोत वर्धयस्वानागसो यथा सदमित् संक्षियेम।।२।।
यां ते त्वचं विभिदुर्या च योनिं यद्वा स्थानात् प्रच्युतो यदि वा सुतोसि।
त्वया सोम क्लृप्तमस्माकमेतदुप नो राजन् सुकृते ह्वयस्व ।।३।।
सं प्राणापानाभ्यां समु चक्षुषा सं श्रोत्रेण गच्छस्वं सोम राजन् ।
यत् ते विरिष्टं समु तत् त एतज्जानीतान्न: संगमने पथीनाम् ।।४।।

अहा: शरीरं पयसा समेत्यन्योअन्यो भवति वर्णो अस्य ।
तस्मै त इन्द्रो हविषा विधेम वयं स्याम पतयो रयीणाम् ।।५।।
अभि क्षरन्ति जुह्वो घृतेनाङ्गा परूंषि तव वर्धयन्ती ।
तस्मै ते सोम नम इद्वषड्वोप नो राजन् सुकृते ह्वयस्व ।।६।।

## २-४०

इहेत देवीरयमस्तु पन्था अयं वो लोक: शरणाय साधु: ।
इदं हविर्जुषमाणा उदेत क्षिप्रा राज्ञा वरुणेन प्रसूता:।।१।।
इहैतु राजा वरुणोजिराभिर्देवो देवीभिर्हविषो जुषाण: ।
कृणुष्व पन्थामुदयानमूर्मिभिरनेन बभ्रो महता पृथिव्या:।।२।।
प्रिये ध्रियध्वमुत या न मुञ्चतीरोकैघानामिह रारणीतु ।
अनेन वेगानसृजत् प्रजापतिरिह ध्रियध्वं शरणं सरस्वती:।।३।।
इह वो जूतिर्ध्रियतां समान्यपामग्नीनां वरुणस्य सोम ।
अनेन वेगानसृजत् त्विषीमतोहिंस्राज्छम्भूर्नजिराङ् अतृष्णाज:।।४।।
ये पारतो मध्यतो ये ते अन्तयो अप्सुषदो निहितास्तीरे अग्नय:।
ते देवजा इह नो मृडयन्त्वापश्च जन्मन्नुभये सवन्तव:।।५।।
इदं व आपो हृदयमयं वत्स ऋतावरी: ।
इहेत्थमेत शक्वरीर्यत्रेमं वेशयामसि ।।६।।

*(इति पञ्चर्चोनामद्वितीयकाण्डे अष्टमो ऽनुवाक:)*

## २-४१

उदसौ सूर्यो अगादुदयं मामको भग: ।
तेनाहं विद्वला पतिमभ्यसाक्षि विषासहि: ।।१।।
अहं केतुरहं मूर्धाहमुग्रा विवाचनी ।
ममेदपि क्रतुं पति: सेहानाया उपाचरात् ।।२।।

मम पुत्राः शत्रुहणो ऽथो मे दुहिता विराट् ।
उताहमस्मि संजया पत्यां मे श्लोक उत्तमः ।।३।।
येन देवा असुरेभ्योभवन् द्युम्नवत्तराः ।
इदं तदक्रि देवा असपत्ना किलाभुवम् ।।४।।
असपत्ना सपत्नघ्नी जयन्त्यभिभूवरी ।
मुष्णाम्यन्यासां भगं वासो अस्थेयसामिव ।।५।।

२-४२

शेरभक शेरभ ।
पुनर्वो यन्तु यातवः पुनर्जूतिः किमीदिनः ।
यस्य स्थ तमत्त यो वः प्राहैत्तमत्त स्वा मांसान्यत्त ।।१।।
शेवृधक शेवृध ।
पुनर्वो यन्तु यातवः पुनर्जूतिः किमीदिनः ।
यस्य स्थ तमत्त यो वः प्राहैत्तमत्त स्वा मांसान्यत्त ।।२।।
सर्पानुसर्प ।
पुनर्वो यन्तु यातवः पुनर्जूतिः किमीदिनः ।
यस्य स्थ तमत्त यो वः प्राहैत्तमत्त स्वा मांसान्यत्त ।।३।।
म्रोकानुम्रोक ।
पुनर्वो यन्तु यातवः पुनर्जूतिः किमीदिनः ।
यस्य स्थ तमत्त यो वः प्राहैत्तमत्त स्वा मांसान्यत्त ।।४।।
जूर्णभरूज्यर्जुन्युपब्दो ।
पुनर्वो यन्तु यातवः पुनर्जूतिः किमीदिनः ।
यस्य स्थ तमत्त यो वः प्राहैत्तमत्त स्वा मांसान्यत्त ।।५।।

२-४३

द्यावापृथिवी उपश्रुतये मा पातं स्वाहा ।।१।।
धनायायुषे प्रजायै मा पातं स्वाहा ।।२।।
प्राणापानौ मृत्योर्मा पातं स्वाहा ।।३।।
सूर्य चक्षुषे मा पाहि स्वाहा ।।४।।
अग्ने विश्वम्भर विश्वतो मा पाहि स्वाहा ।।५।।

२-४४

आयुर्दाग्निरायुर्मे दात् स्वाहा ।।१।।
वर्चोदाग्निर्वर्चो मे दात् स्वाहा ।।२।।
तेजोदाग्निस्तेजो मे दात् स्वाहा ।।३।।
सहोदाग्निः सहो मे दात् स्वाहा ।।४।।
बलदाग्निर्बलं मे दात् स्वाहा ।।५।।

२-४५

आयुरस्यायुर्मयि धेहि स्वाहा ।।१।।
वर्चोऽसि वर्चो मयि धेहि स्वाहा ।।२।।
तेजोऽसि तेजो मयि धेहि स्वाहा ।।३।।
सहोऽसि सहो मयि धेहि स्वाहा ।।४।।
बलमसि बलं मयि धेहि स्वाहा ।।५।।

*(इति पञ्चर्चोनामद्वितीयकाण्डे नवमो ऽनुवाकः)*

२-४६

पिशाचक्षयणमसि पिशाचजम्भनमसि स्वाहा ।।१।।
यातुधानक्षयणमसि यातुधानजम्भनमसि स्वाहा ।।२।।
सदान्वाक्षयणमसि सदान्वाजम्भनमसि स्वाहा ।।३।।

सपत्नक्षयणमसि सपत्नजम्भनमसि स्वाहा ।।४।।

भ्रातृव्यक्षयणमसि भ्रातृव्यजम्भनमसि स्वाहा ।।५।।

२-४७

आ ते सौवीर्यं ददे मयि ते सौवीर्यम् ।।१।।

आ ते सौवर्चो ददे मयि ते सौवर्चः ।।२।।

आ ते सौतेजो ददे मयि ते सौतेजः ।।३।।

आ ते सौनृम्णं ददे मयि ते सौनृम्णम् ।।४।।

आ ते सौशुक्रं ददे मयि ते सौशुक्रम् ।।५।।

२-४८

अग्ने यत्ते तपस्तेन तं प्रति तप यो ऽस्मान् द्वेष्टि यं वयं द्विष्मः ।।१।।

अग्ने यत्ते हरस्तेन तं प्रति हर यो ऽस्मान् द्वेष्टि यं वयं द्विष्मः ।।२।।

अग्ने यत्ते शोचिस्तेन तं प्रति शोचय योऽस्मान् द्वेष्टि यं वयं द्विष्मः।।३।।

अग्ने यत्ते ऽर्चिस्तेन तं प्रत्योषय यो ऽस्मान् द्वेष्टि यं वयं द्विष्मः ।।४।।

अग्ने यत्ते ज्योतिस्तेन तं प्रति दह यो ऽस्मान् द्वेष्टि यं वयं द्विष्मः।।५।।

२-४९

प्राची दिग् गायत्रं देवता ।

यद् देवेषु पितृषु मनुष्येष्वेनश्चकारायं त्वं तस्यावयजनमसि ।

मुञ्चेममस्माद् यक्ष्मादस्मादामयतः स्वाहा ।।१।।

दक्षिणा दिग् रथन्तरं देवता ।

यद् देवेषु पितृषु मनुष्येष्वेनश्चकारायं त्वं तस्यावयजनमसि ।

मुञ्चेममस्माद् यक्ष्मादस्मादामयतः स्वाहा ।।२।।

प्रतीची दिग् वामदेव्यं देवता ।

यद् देवेषु पितृषु मनुष्येष्वेनश्चकारायं त्वं तस्यावयजनमसि ।

मुञ्चेममस्माद् यक्ष्मादस्मादामयतः स्वाहा ।।३।।

उदीची दिग् यज्ञायज्ञियं देवता ।
यद् देवेषु पितृषु मनुष्येष्वेनश्चकारायं त्वं तस्यावयजनमसि ।
मुञ्चेममस्माद् यक्ष्मादस्मादामयत: स्वाहा ।।४।।
ऊर्ध्वा दिग् बृहद् देवता ।
यद् देवेषु पितृषु मनुष्येष्वेनश्चकारायं त्वं तस्यावयजनमसि ।
मुञ्चेममस्माद् यक्ष्मादस्मादामयत: स्वाहा ।।५।।

२-५०

अग्निं वयं त्रातारं हवामहे
य इमं त्रायाता अस्माद् यक्ष्मादस्मादामयत: ।
जुषाणो अग्निराज्यस्य त्राता त्रायतां स्वाहा ।।१।।
मित्रावरुणौ वयं त्रातारौ हवामहे
याविमं त्रायैते अस्माद् यक्ष्मादस्मादामयत: ।
जुषाणौ मित्रावरुणावाज्यस्य त्रातारौ त्रायेतां स्वाहा ।।२।।
मरुतो वयं त्रातृन् हवामहे
य इमं त्रायान्ता अस्माद् यक्ष्मादस्मादामयत: ।
जुषाणा मरुत आज्यस्य त्रातारस्त्रायन्तां स्वाहा ।।३।।
पितृन् वयं त्रातृन् हवामहे
य इमं त्रायान्ता अस्माद् यक्ष्मादस्मादामयत: ।
जुषाणा: पितर आज्यस्य त्रातारस्त्रायन्तां स्वाहा ।।४।।
बृहस्पतिं वयं त्रातारं हवामहे
य इमं त्रायात्ता अस्माद् यक्ष्मादस्मादामयत: ।
जुषाणो बृहस्पतिराज्यस्य त्राता त्रायतां स्वाहा ।।५।।

*(इति पञ्चर्चोनामद्वितीयकाण्डे दशमोऽनुवाक:)*

२-५१

आग्निं वयं त्रातारं यजामहे मेनिहनं बलगहनम् ।
जुषाणो अग्निराज्यस्य मेनिहा बलगहा
त्राता त्रायतां स्वाहा ।।१।।
इन्द्र वयं त्रातारं यजामहे मेनिहनं बलगहनम् ।
जुषाण इन्द्र आज्यस्य मेनिहा बलगहा
त्राता त्रायतां स्वाहा ।।२।।
सोम वयं त्रातारं यजामहे मेनिहनं बलगहनम् ।
जुषाण: सोम आज्यस्य मेनिहा बलगहा
त्राता त्रायतां स्वाहा ।।३।।
विश्वान् वयं देवांस्त्रातृन् यजामहे मेनिघ्नो बलगघ्न: ।
जुषाणा विश्वे देवा आज्यस्य मेनिहनो
बलगहनस्त्रातारस्त्रायन्तां स्वाहा ।।४।।
बृहस्पतिं वयं त्रातारं यजामहे मेनिहनं बलगहनम् ।
जुषाणो बृहस्पतिराज्यस्य मेनिहा बलगहा
त्राता त्रायतां स्वाहा ।।५।।

२-५२

ये केशिन: प्रथमा: सत्त्रमासथ येभिराभृतं यदिदं विरोचते ।
तेभ्यो जुहोमि हविषा घृतेनाश्ववान् गोमानयमस्तु वीर: ।।१।।
नर्ते दानात्तमसो मुच्यते परि द्विनाम्नीं दीक्षां वशिनीं य आयत् ।
प्रास्य केशा: सुवते काण्डिनो भवन्ति तेषां ब्रह्मेशे वपनस्य नान्य: ।।२।।
येनावपत् सविता शीर्ष्णो ऽग्रे क्षुरेण सोमस्य राज्ञो वरुणस्य केशान् ।
तेन ब्रह्माणो वपतेदमस्याश्रामो दीर्घायुरयमस्तु वीर: ।।३।।
मा ते केशाङ् अनु गाद्वर्च एतत् तथा धाता दधातु ते ।
तुभ्यमिन्द्रो वरुणो बृहस्पति: सविता वर्च आदधन् ।।४।।

आ रोह प्रोष्ठं वि षहस्व शत्रून् वास्रा दीक्षां वशिनी ह्युग्रा ।
देहि दक्षिणां ब्रह्मणेभ्यो ऽथो मुच्यस्व वरुणस्य पाशात् ।।५।।

२-५३

ये देवा: पुर:सदो ऽग्निनेत्रा रक्षोहण: ।
ते न: पान्तु ते नोवन्तु तेभ्यो नमस्तेभ्य: स्वाहा ।।१।।
ये देवा दक्षिणासदो यमनेत्रा रक्षोहण: ।
ते न: पान्तु ते नोवन्तु तेभ्यो नमस्तेभ्य: स्वाहा ।।२।।
ये देवा: पश्चात्सदो मरुन्नेत्रा रक्षोहण: ।
ते न: पान्तु ते नोवन्तु तेभ्यो नमस्तेभ्य: स्वाहा ।।३।।
ये देवा उत्तरासद: सोमनेत्रा रक्षोहण: ।
ते न: पान्तु ते नोवन्तु तेभ्यो नमस्तेभ्य: स्वाहा ।।४।।
ये देवा अन्तरिक्षसदो बृहस्पतिनेत्रा रक्षोहण: ।
ते न: पान्तु ते नोवन्तु तेभ्यो नमस्तेभ्य: स्वाहा ।।५।।

२-५४

अग्नये पुर: सदे रक्षोघ्ने स्वाहा ।।१।।
यमाय दक्षिणासदे रक्षोघ्ने स्वाहा ।।२।।
मरुद्भ्य: पश्चात्सद्भ्यो रक्षोहभ्य: स्वाहा ।।३।।
सोमायोत्तरामने रक्षोघ्ने स्वाहा ।।४।।
बृहस्पतये ऽन्तरिक्षसदे रक्षोघ्ने स्वाहा ।।५।।
अवस्पते दिवस्पते रक्षोघ्ने स्वाहा ।।६।।

२-५५

दिवो जातो दिवस्पुत्रो यस्माज्जातं महत् सह ।
अश्वत्थमग्रे जैत्रायाच्छा देवं वदामसि ।।१।।

तं त्वाश्वा यथारथमुप तिष्ठन्तु राजान: ।
समितिभ्यो विवक्तवे ।।२।।
त्वया वयं देवजात: सर्वा: प्राशो जयामसि ।
उत सत्या उतानृता: ।।३।।
यो ऽश्वत्थेन मित्रेण समितीरव गच्छति ।
जयात् स सर्वा: पृतना याश्च सत्या उतानृता: ।।४।।
अधराञ्चो निर्द्रवन्तु समित्या उलुलाकृता: ।
अश्वत्थमित्रं पुरुषं ये वाचा पृतन्यात् ।।५।।

*(इति पञ्चर्चोनामद्वितीयकाण्डे एकादशोऽनुवाक:)*

२-५६

उग्रा नाम स्थ तेषां व: पुरो गृहा:
प्राची दिक् तेषां वो अग्निरिषव: ।
ते नो मृडत द्विपदे चतुष्पदे तेषां वो यान्यायुधानि
या इषवस्तेभ्यो नमस्तेभ्य: स्वाहा ।।१।।
क्रव्या नाम स्थ तेषां वो दक्षिणा गृहा
दक्षिणा दिक् तेषां व आप इषव: ।
ते नो मृडत द्विपदे चतुष्पदे तेषां वो यान्यायुधानि
या इषवस्तेभ्यो नमस्तेभ्य: स्वाहा ।।२।।
विराजो नाम स्थ तेषां व: पश्चाद् गृहा:
प्रतीची दिक् तेषां व: काम इषव: ।
ते नो मृडत द्विपदे चतुष्पदे तेषां वो यान्यायुधानि
या इषवस्तेभ्यो नमस्तेभ्य: स्वाहा ।।३।।
अवस्था नाम स्थ तेषां व उत्तरा गृहा
उदीची दिक् तेषां वो वात इषव: ।

ते नो मृडत द्विपदे चतुष्पदे तेषां वो यान्यायुधानि
या इषवस्तेभ्यो नमस्तेभ्य: स्वाहा ।।४।।
उत्तरे नाम स्थ तेषां व उपरि गृहा
ऊर्ध्वा दिक् तेषां वो वर्षमिषव: ।
ते नो मृडत द्विपदे चतुष्पदे तेषां वो यान्यायुधानि
या इषवस्तेभ्यो नमस्तेभ्य: स्वाहा ।।५।

२-५७

यदीदं देवो दिव आजगाम यद्यन्तरिक्षाद् यदि पार्थिवो य:।
यदि यज्ञो यज्ञपते: स्वर्गस्तेभ्य: सर्वेभ्यो नमसा विधेम ।।१।।
यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सोममाहु: ।
यमग्निमाहुर्यमु सूर्यमाहुस्तेभ्य: सर्वेभ्यो नमसा विधेम ।।२।।
ये श्मशानानि मनसा नयन्ति सूर्यस्य रश्मीननु संचरन्ति ।
ये देवानामृत्विजो यज्ञियानां तेभ्य: सर्वेभ्यो नमसा विधेम ।।३।।
ये तन्त्रिया जल्प्या: प्रोर्णुवन्ति स्वप्नं दुर्भूतमभि ये किरन्ति ।
ये देवानां धर्मधृतो बभूवुस्तेभ्य: सर्वेभ्यो नमसा विधेम ।।४।।
स्वभ्यसैरभि ये भा यन्ति ये भा: कृण्वन्ति य उ रोदयन्ति ।
ये वा स्त्रीणां प्रतिरूपा बभूवुस्तेभ्य: सर्वेभ्यो नमसा विधेम ।।५।।

२-५८

व्यावृत्तौ पथो ग औ व्यस्यौ युग्या उत ।
विद्वेषणं किलासिथ यथैनौ व्यदिद्विष: ।।१।।
वि किलैनावदिद्विष: शश्वतीभ्य: समाभ्य: ।
अथोल्मुकमिव खादिरमग्निर्वामस्त्वन्तरा ।।२।।
सिंहस्ते अस्तु चक्षुषे व्याघ्र: परिष्वज्जने ।
अग्निर्वामस्त्वन्तरा यथा वां न सहासति ।।३।।

व्यद्यौर्व्यद्य ततनद् व्यास्तत् कपट्विव ।
या ओषधे प्रसर्पसि व्यग्निरिव तौ दह ।।४।।
वि वां यन्तु हृदयानि वि चित्तानि नमांसि च ।
अथो यत् तन्वोः सङ्गतं तद्वामस्तु विदूरकम् ।।५।।
अस्ति वै वां विद्विकमुभौ शयने अन्तरा ।
विषञ्चौ पर्यावर्तेथां यथा वां न सहासति ।।६।।

२-५९

त्रयः पोषास्त्रिवृतः श्रयन्तामनक्तु पूषा पयसा घृतेन ।
अन्नस्य भूमा पुरुषस्य भूमा भूमा पशूनां त इह श्रयन्ताम् ।।१।।
इममादित्या वसुना समुक्षतेममाग्ने वर्धय वावृधानः ।
अस्मिंस्त्रिवृच्छ्रयतां पोषयिष्णुरिममिन्द्र सं सृज वीर्येण ।।२।।
भूमिष्ट्वा पातु हरितेन विश्वभृदग्निः पिपर्त्वयसा सजोषाः ।
वीरुद्भिस्ते अर्जुनं संविदानं वर्चो दधातु सुमनस्यमानम्।।३।।
त्रेधा जातं जन्मनेदं हिरण्यमग्नेरेकं प्रियतमं बभूव ।
सोमस्यैकं हिंसितस्य परापतदपामेकं वेधसो
रेत आहुस्तत्ते हिरण्यं त्रिवृतस्त्वायुषे ।।४।।
त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् ।
त्रेधामृतस्य चक्षणं त्रीण्यायूंषि निस्कृधि ।।५।।
त्रयः सुपर्णास्त्रिवृता यदायन्नेकाक्षरमभिसम्भूय: शक्राः।
प्रत्युह्य मृत्युममृतेन साकमन्तर्दधाना भुवनानि विश्वा ।।६।।
दिवस्त्वा पातु हरितं मध्यात्त्वा पात्वर्जुनम् ।
भूम्या अयस्मयं पातु प्रागाद् देवपुरा अयम् ।।७।।
इमास्तिस्रो देवपुरास्तास्त्वा रक्षन्तु सर्वतः ।
तास्त्वं बिभ्रदायुष्मान् वर्चस्वानुत्तरो द्विषतो भव ।।८।।

पुरं देवानाममृतं हिरण्यं य आबेधे प्रथमो देवो अग्रे ।
तस्मै नमो दश प्राचीः कृणोम्यनु मन्यतां त्रिवृता वधेन।।९।
नव प्राणान्नवभिः सं मिमीते दीर्घायुत्वाय शतशारदाय ।
हरिते त्रीणि रजते त्रीण्ययसि त्रीणि तपसाविष्ठितानि ।।१०।।
आ ते चृतत्वर्यमा पूषा बृहस्पतिः ।
अहर्यातस्य यन्नाम तेन ते ऽति चृतामसि ।।११।।
ऋतुभिष्ट्वार्तवैरायुषे वर्चसे त्वा ।
संवत्सरस्यतेजसा तेन संहनु कृण्मसि ।।१२।।

२-६०

यज्ञं यन्तं तपसा बृहन्तमन्वारोहामि मनसा सयोनिः ।
उपहूताग्ने जरसः परस्तात् तृतीये नाके सधमादं मदेम।।१।।
तं प्रजानन् प्रति गृह्णातु विद्वान् प्रजापतिः प्रथमजा ऋतस्य ।
अस्माभिर्दत्तं जरसः परस्तादच्छिन्नं तन्तुमनु सं चरेम ।।२।।
श्येनः सुपर्णो दिव्यो नृचक्षाः सहस्रपाच्छतयोनिर्वयोधाः ।
स नो नि यंसद्वसु यत् पराभृतमस्माकमस्तु पितृषु स्वधावत्।।३।।
एतं सधस्थाः परि णो ददामि यमावहाच्छेवधिं जातवेदाः ।
अन्वागन्ता यजमानः स्वस्ति तं स्म जानीत परमे व्योमन् ।।४।।
जानीत स्मैनं परमे व्योमन् देवाः सधस्था विद लोकमेतम्।
इष्टापूर्तमनुसंक्राम विद्वान् यत्र ते दत्तं बहुधा विबन्धुषु ।।५।।

*(इति पञ्चर्चोनामद्वितीयकाण्डे द्वादशो ऽनुवाकः)*

२-६१

येभिः पाशैरभि दधासि दुह्वणः समामिनो अनृतं ये समामिरे।
तांस्ते वि ष्याम्यायुषे बलायानमीवं पितुमद्धि प्रसूतः ।।१।।

अनागा बभ्रो अयमस्तु वीरो द्रुहः पाशेभ्यः परि पाह्येनम् ।
राजन् प्रविद्वान् प्र मुमुग्धि पाशान् यस्मै चरामि हविषा घृतेन।।२।।
कश्यप इन्द्राय हविषा चचार हरित्वतीषु मघवा मघोने ।
पस्पार विश्वा भुवनस्य गोपा अन्तरिक्षस्य महतो विमाने ।।३।।
अपूपं नाभिलं ते घृतश्चुतं नदीनां पदे सुश्रुतं जुहोमि ।
प्रविद्वान् राजन् प्र मुमुग्धि पाशानस्य पत्नी विधवा यथासत्।।४।।
अनातुरेण वरुणः पथेमं स्वस्तिभिरति दुर्गाणि नेषत् ।
तमश्विना प्रतिगृह्या स्वस्तये दोषा एनमुषसे सं प्र यच्छात् ।।५।।

२-६२

ये पिशाचा इमां वित्तिमाकूतिं मोहयन्ति नः ।
तेषां त्वमग्ने नाशय वर्चश्चित्तमथो प्रजाम् ।।१।।
नाशयाग्ने पिशाचानां वर्चश्चित्तमथो प्रजाम् ।
अथाशां मह्यं राधय यथाहं कामये तथा ।।२।।
आशां मह्यं राधयत्वेन्द्रियेण यथा मृताम् ।
त्वमग्ने क्रव्यादः सर्वान् पिशाचां अर्चिषादह ।।३।।
प्रति दह यातुधानान् मूरदेवान् विचर्षणे ।
ये नो दुरस्याद्वेषेणाथाशां मोहयन्ति नः ।।४।।
ये नः पशुषु दिप्सन्त्याशायां पुरुषेषु च ।
तास्त्वं सहस्राक्षेशानः पिशाचाङ् अर्चिषादह ।।५।।

२-६३

सहस्वेदं सहमाने अथो देवि सरस्वति ।
अथेदमश्विना लक्ष्म रोहितं कृणुतं युवम् ।।१।।
आसुरस्य मुखस्याग्ने लक्ष्म मुखं नामासि ।
मेतो ज्यायो भूरित इत् कनीयोसो नश्येतः
पुरो मा त्वा हिंसिषम् ।।२।।

यासां पिता पर्जन्यो भूमिर्माता बभूव ।
ह्वयामि सर्वा ओषधीर्गोजाता: सोम जिन्व ता: ।।३।।
इदं सप्तप्रखे त्वं किलासं नाशया त्वच: ।
निष्कृतिर्नाम वा असि सेदं निष्कृधि भद्रया ।।४।।
निष्कृतिर्नाम ते माता निष्कृतिर्नाम ते पिता ।
उतो त्वमसि निष्कृति: सेदं निष्कृधि भद्रया ।।५।।

२-६४

और्ध्वनभस: प्रथम: सूर्यचेता उशद्भ्य: ।
चकार कृत्यामासुर: सा नो भवतु भद्रया ।।१।।
य इमां कृत्यामुपजह्रुर्ये वा चकमिरे ऽक्षितम् ।
देवानां सर्वेषां स्वसा तान् देवी निर्ऋतिर्हनत् ।।२।।
कश्यपस्य प्रतिसरो द्यौष्पिता पृथिवी माता ।
यथाभिचक्र देवास्तथापि कृणुता पुन: ।।३।।
या: कृत्या नीलवतीर्या: कृत्या: पाश्यावती: ।
कृत्या याश्चक्रुर्लोहिनीस्ता इतो नाशयामसि ।।४।।
यदि वा इदमाजह्रुरिमे भद्रा असन्निति ।
कृत्यासि कल्याण्यसि सामुं कर्तारमन्विहि ।।५।।

२-६५

वृहत्ते वर्च: प्रथतामुपद्यां मित्रेभ्य एधि सुरभि: सुवर्चा: ।
अधि ते राजा वरुणो ब्रवीतु तस्मा उ त्वं हविषा भागधा अस:।
शतं हेमन्तान् दमया सपत्नान् विशस्त्वा सर्वा अनु गुङ्ग्वो भवन्तु ।।१।।
यस्त्वोत्पिपानं प्रत्युत्पिपाति यस्त्वा सजातो विरिफात्यन्तित: ।
इन्द्रस्तं योक्त्रे अधि मे युनक्तु तस्मा उ त्वं हविषा भागधा अस:।
शतं हेमन्तान् दमया सपत्नान् विशस्त्वा सर्वा अनु गुङ्ग्वो भवन्तु।।२।।

यस्त्वा यच्छन्तं प्रतियंयमीति यस्त्वा जिगीषात् पृतना: समर्ये ।
बृहस्पतिस्तमव जङ्घनीतु तस्मा उ त्वं हविषा भागधा अस: ।
शतं हेमन्तान् दमया सपत्नान् विशस्त्वा सर्वा अनु गुङ्गवो भवन्तु।।३।।
ये ते शुल्कमाहरां य उ ते बलिं सोम: सजाताङ् उत संनयाति ते ।
अग्नि: सयुग्धानधि ते ब्रवीतु तस्मा उ त्वं हविषा भागधा अस: ।
शतं हेमन्तान् दमया सपत्नान् विशस्त्वा सर्वा अनु गुङ्गवो भवन्तु।।४।।
वरिष्ठै अधि पुरु: प्रजया सुवीरो अभि प्र युंक्ष्व दमया सपत्नान् ।
इन्द्रो मरुत्वानधि ते ब्रवीतु तस्मा उ त्वं हविषा भागधा अस: ।
शतं हेमन्तान् दमया सपत्नान् विशस्त्वा सर्वा अनु गुङ्गवो भवन्तु।।५।।

*(इति पञ्चर्चोनामद्वितीयकाण्डे त्रयोदशो ऽनुवाक:)*

## २-६६

भगाय राज्ञे प्रथमं जुहोमि विश्वे देवा उत्तरे मादयन्ताम् ।
उशन् पत्नीभ्य उशतीभ्य आभ्य: पतिमग्न आ वह रातहव्य:।।१।।
पतिं वृणीष्व हविषा गृणाना तमा वहात् सविता तं ते अग्नि:।
तस्मै नमस्व शतशारदाय भगभक्ता भगवती सुवीरा ।।२।।
यमर्यमन् पतिमस्यै दिदेशिथ जने चित् सन्तं तमिहा वहासि ।
सुमङ्गल्यपतिघ्नी सुशेवा रायस्पोषेण तमिषा सचस्व ।।३।।
यं ते पतिमर्यमा जायमानायै धाता चकल्प तमिहा वहासि ।
अभि वरेण हविषा जुहोमि प्रजानन्नैतु सुमनस्यमान: ।।४।।
पतिं ते द्यावापृथिवी अधातां पतिर्मित्रावरुणा वातौ अग्नि: ।
सप्त ऋषयो ऽदिति: सोम इन्द्रस्ते त्वा देवा: पतिवत्नीं कृण्वन्तु।।५।।

## २-६७

यस्त्वाराय: प्रविवेशाजानिर्जनिवाङ् उत ।
अथो यस्तन्वं पस्पर्श तमितो निर्णयामसि ।।१।।

निष्ट्वाराय नयामसि य इमां प्रविवेशिथ ।
आत्मानमस्या मा हिंसीरन्यत्र चर मेह भू: ।।२।।
यदरायेमामुपायसि धेह्यस्यै रयिपोषणम् ।
प्रजां चिदस्या मा हिंसीरन्यत्र चर मेह भू: ।।३।।
यदरायेहायसि हनाम वीरुधा त्वा ।
अथो खनित्रिमैस्त्वाद् वृषेण यथा भगम् ।।४।।
यदरायासूयं स्त्रैषूयमावतोक्यम् ।
यत् पैतृषद्यं दौर्भाग्यं तदितो निर्णयामसि ।।५।।

२-६८

अग्नेर्वो बलवतो बलेन मन्युं वि नयामसि ।।१।।
इन्द्रस्य वो बलवतो बलेन मन्युं वि नयामसि ।।२।।
सोमस्य वो बलवतो बलेन मन्युं वि नयामसि ।।३।।
बृहस्पतेर्वो बलवतो बलेन मन्युं वि नयामसि ।।४।।
प्रजापतेर्वो बलवतो बलेन मन्युं वि नयामसि ।।५।।
यत् ते सूर्य दिवि देवेषु वर्चस्तस्य नो धेहि त्वमसि प्रचेता:।
अहं त्वदुग्रस्त्विषितस्त्विषीमानिमां वाचं वि साक्षीय ।।६।।

२-६९

वार्त: पुरस्तात् पवसे नभस्वान् ।
नमस्ते विद्म ते नामधेयं मा नो हिंसी: ।।१।।
तपोजा असुरो दक्षिणत: पवसे नभस्वान् ।
नमस्ते विद्म ते नामधेयं मा नो हिंसी: ।।२।।
विश्वायुर्विश्वजनीन: प्रतीच्या दिश: पवसे नभस्वान् ।
नमस्ते विद्म ते नामधेयं मा नो हिंसी: ।।३।।

शिवो वैश्वदेव उदीच्या दिश: पवसे नभस्वान् ।
नमस्ते विद्म ते नामधेयं मा नो हिंसी: ।।४।।
अतिष्ठावान् बार्हस्पत्य ऊर्ध्वाया दिश: पवसे नभस्वान्।
नमस्ते विद्म ते नामधेयं मा नो हिंसी: ।।५।।

२-७०

अप द्यौरपातातनदपस्कद् य वधेदहिम् ।
कल्याण्या यथा स्मृतं शमुन: सन्तु विद्युत: ।।१।।
यत् पर्यन्य स्तनयति सर्वं संविजते जगत् ।
पतिं तदृत्वियावती पृथिवी प्रति मोदते ।।२।।
एष एनाभ्यक्रन्दीद् वृषाश्वो धेनुका इव ।
अहींस्त्वं विद्युतां जहि मास्माकं पुरुषान् वधी: ।।३।।
अभिक्रन्दा स्तनयित्लोरवस्फूर्जादशन्या उत ।
देवा नरुतो मृडत न: पातु नो दुरितादवद्यात् ।।४।।
ऋजीते परि णो नमादित्या: शर्म यच्छत ।
युयुत् पर्णिनं शरमुतापर्णं रिशादस: ।।५।।

*(इति पञ्चर्चोनामद्वितीयकाण्डे चतुर्दशो ऽनुवाक:)*

२-७१

कृतव्यधनि विध्य तं यश्चकार तमिज्जहि ।
न त्वामचक्रुषे वयं वधाय सं सिसीमहे ।।१।।
यथा ते देव्योषधे प्रतीचीनं फलं कृतम् ।
एवा त्वं कृत्वने कृत्यां हस्तगृह्य परा णय ।।२।।
पुन: कृत्यां कृत्याकृते गोधेवावटमन्नयत् ।
सक्तुरिव सक्तुप्रेष्यं प्रतीची: प्रति दध्म सत् ।।३।।

यां ते चक्रुर्वर्तनेषु वार्ताकुषु वृतासु च ।
मण्डूके कृत्यां यां चक्रुस्तया कृत्याकृतो जहि ।।४।।
अग्निरिवैतु प्रतिकूलमनुकूलमिवोदकम् ।
सुखे रथ इव वर्तता कृत्या कृत्याकृतं कृता ।।५।।

२-७२

अग्निर्द्युम्नेन सूर्यो ज्योतिषा द्यौर्महिम्नान्तरिक्षं व्यचसा ।
दिश आशाभिः पृथिवी पयोभिरिदं राष्ट्रं वर्धयन्तु प्रजावत् ।।१।।
त्वष्टा रूपेण सविता सवेनाहर्मित्रेण वरुणेन रात्री ।
पूषा पुष्टैर्भगो अंशेन भक्त्येदं राष्ट्रं वर्धयन्तु प्रजावत् ।।२।।
यां विश्वकर्मा निजघान मेथिमन्तरा द्यावापृथिवी उभे ।
तस्या आहुः क्षत्रियं गर्भमेतं परि माव पत्या मूर्धनि धारयस्व ।।३।।
छन्दांस्यस्या अभितो मयूखा स्तोमा आत्मा यजुरस्याः पुरीषम् ।
तस्या आहुः क्षत्रियं निर्मितं परि माव पत्या मूर्धनि धारयस्व।।४।।
परा णुदस्व व्यथयाभिमातिमधस्पदं कृणुष्व दुर्धरायतः ।
मा त्वा दभन् सपत्ना दिप्सन्तस्तव राष्ट्रमुत्तरं द्युम्नमस्तु ।।५।।

२-७३

इदं तन्मित्रावरुणा हविर्वां येनाग्रे देवा अमृतत्वमायन् ।
येनास्मै क्षत्रमधिधारयौजोऽसपत्नाः प्रदिशः सन्त्वस्मै ।।१।।
घृतस्य धारा मित्रावरुणा दुहां वां धेनुरनुपस्फुरन्ती ।
देवः सवितोत वायुरग्निर्भूतस्य पतिरिह शर्म यच्छात्।।२।।
शं नस्तन्मित्रावरुणा गृणीतं दृढावमित्रा बहुधा वि शेराम् ।
जयतु सेनोप घोष एतु पृथक् सत्वानो बहुधा भरन्ताम् ।।३।।
हनाम मित्रावरुणावमित्रान् भवाम भद्रे सुकृतस्य लोके ।
पारयान्नः सविता देवो अग्निर्जयामेदं हविषा कश्यपस्य ।।४।।

वातोयं मित्रावरुणा तदाह विश्वन्तरं निर्मितं कश्यपस्य ।
अध्वर्यवो मरुतो अस्यासन् तेन देवेभ्यो वरिमाणि चक्रु:।।५।।

२-७४

अचिक्रदत् स्वपा इह भवदग्ने यजस्व रोदसी उरूची ।
आमुं नय नमसा रातहव्यो युञ्जन्तु सुप्रजसं पञ्च जना: ।।१.
दूरे चित् सन्तमरुषास इन्द्रमा च्यावयन्तु सख्याय विप्रम् ।
यद् गायत्रीं बृहतीकर्ममस्मै सौत्रामण्या दधृषन्त देवा:।।२।।
अद्भ्यस्त्वा राजा वरुणो जुहाव सोमस्त्वायं ह्वयतु पर्वतेभ्य
इन्द्रस्त्वायं ह्वयतु विड्भ्य आभ्य: श्येनो भूत्वा विश आ पतेमा:।।३।।
श्येनं हविर्नयत्वा परस्मादन्यक्षेत्रे अपरुद्धं चरन्तम् ।
अश्विना पन्थां कृणुतां सुगं ते गर्भ सजाता अभिसंविशध्वम्।।४।।
श्येनं हवि: कश्यपस्योप शिक्षेन्द्रं वात: प्रहितो दूत आ वह ।
विषह्य शत्रून् सेनाग्रैर्विशो वृणानो ऽव गच्छ कामी ।।५।।
यस्ते हवं परितिष्ठात् सजात उत निष्ट्य: ।
अपाच इन्द्र तां नीत्वाथेममव गमय ।।६।।
ह्वयन्तु त्वा पञ्च जना: पतिमित्रा अवर्षत ।
इन्द्राग्नी विश्वे देवा विशि क्षेममदीधरन्।।७।।

२-७५

प्रजापतिरनवर्ति: स प्रजाभिरनवर्ति: ।
स मानवर्तिरनवर्तिं कृणोतु ।।१।।
इन्द्रो ऽनवर्ति: स वीर्येणानवर्ति: ।
स मानवर्तिरनवर्तिं कृणोतु ।।२।।
सोमो ऽनवर्ति: स ओषधीभिरनवर्ति: ।
स मानवर्तिरनवर्तिं कृणोतु ।।३।।

आपो ऽनवर्तयस्ता: पर्यन्येनानवर्तय: ।
ता मानवर्तयो ऽनवर्तिं कृण्वन्तु ।।४।।
देवा अनवर्तयस्ते ऽमृतेनानवर्तय: ।
ते मानवर्तयो ऽनवर्तिं कृण्वन्तु ।।५।।

*(इति पञ्चर्चोनामद्वितीयकाण्डे पञ्चदशो ऽनुवाक:)*

२-७६

पयो मह्यमोषधय: पयो मे वीरुधो दधन् ।
अपां पयस्वद् यत् पयस्तन् मे वर्षन्तु वृष्टय: ।।१।।
पयो मह्यं पयस्वन्तो हस्तिनो मे पयो दधन् ।
पय: पतत्रिणो मह्यमैणेया मे पयो दधन् ।।२।।
पयस्वन् मे क्षेत्रमस्तु पयस्वदुत धान्यम् ।
अहं पयस्वान् भूयासं गावो म उत पयस्वती: ।।३।।
पयो मह्यमप्सरसो गन्धर्वा मे पयो दधन् ।
पयो मे विश्वा भूतानि वातो दधातु मे पय: ।।४।।
पयो मह्यं द्यावापृथिवी अन्तरिक्षं पयो दधत् ।
पयो म इन्द्रश्चाग्निश्च धाता दधातु मे पय: ।।५।।

२-७७

अहं बिभर्मि ते मनो अहं चित्तमहं व्रतम् ।
ममेदपि क्रतावसो मम चित्ते सचावहै ।।१।।
आमना अस इहमना अस इह ते रमतां मन: ।
मयि ते रमतां मन: ।।२।।
आञ्जनस्य मधुघस्य कुष्ठस्य नलदस्य च ।
वीरोदेकस्य मूलेन मुखे निमन्दनं कृतम् ।।३।।

मधु मे अन्तरास्ये मुखे निमन्दनं कृतम् ।
तन्नो त्वं वि वर्तस्व नराचीव वर्तसि ।।४।।
यथा नेमी रथचक्रं समन्तं परिषस्वजे ।
एवा परि ष्वजस्व मा यथासन् मयि ते मनः ।।५।।

२-७८

यथेदमश्विना तृणं वातो वहति भूम्याः ।
एवा वयं वहामसि यां वयं कामयामहे ।।१।।
उत् त्वा माता स्थापयतु प्र त्वा नुदतामश्विना ।
अधा शिशुरिव मातरं मावेवान्वेतु ते मनः ।।२।।
यथा क्षीरं च सर्पिश्च मनुष्याणां हृदः प्रियम् ।
एवाहमस्या नार्या हृदो भूयासमुत्तरः ।।३।।
अग्नेष्ट्वा तपस्तपतु वातस्य ध्राजिः ।
मा स्पृक्षथा निषदनाय साधव उत्तिष्ठ
प्रेह्यग्निवत् ते कृणोमि ।।४।।
सूर्यस्य त्वा तपस्तपतु वातस्य ध्राजिः ।
मा स्पृक्षथा निषदनाय साधव उत्तिष्ठ
प्रेहि सूर्यवत् ते कृणोमि ।।५।।

२-७९

हिरण्यपुष्पी सुभगा कूपश्चायं सुमङ्गलः ।
तावेनां भद्रया धत्താममृतावमृते भगे ।।१।।
हिरण्यं पृङ्वद्धरितं तत् ते अङ्गेषु रोहतु ।
तेनेमामश्विना नारीं भगेनाभि षिञ्चतम् ।।२।।
यथा कूपमुदहृदस्तृष्यन्तो यन्ति कामिनः ।
एवा त्वा सर्वे देवरः पतयो यन्तु कामिनः ।।३।।

हिरण्याक्षि मधुवर्णे हिरण्यपरिचर्तने ।
अङ्को हिरण्ययस्तव तेनास्यै पतिमा वह ।।४।।
यदि वासि तिरोजनं यदि वा नद्यस्तिर: ।
इयं त्वा मह्यमोषधिरङ्केनेव न्यानयात् ।।५।।

२-८०

पुन: प्राणं पुनरपानमस्मै पुनर्व्यानमुत सोम धेहि ।
आत्मायं चक्षुरुदते समानस्तमू नु पाहि तमू नु जीव जागृहि ।।१।।
त्वष्टा रूपेण सविता सवेनाहर्मित्रेण वरुणेन रात्री ।
इन्द्रो ज्यैष्ठ्येन ब्रह्मणायं बृहस्पति: पूषास्मै पुनरसुं दधातु ।।२।।
य आदित्या वसवो ये च रुद्रा विश्वे देवा अदितिर्या च रात्री ।
यज्ञो भग: सविता ये च देवा यमो ऽस्मै पुनरसुं दधातु ।।३।।
पुनस्ते राजा वरुणो दधातु सोमो राजा ऽसुमित् ते पुनर्दात् ।
इन्द्रो मरुद्भिरश्विना ते भिषज्यतामग्नी रुद्रो ऽसुमित् ते पुनर्दात्।।४।।
पुनर्द्यौर्देवी पुनरन्तरिक्षमग्निर्वात: पवमानो भिषज्यतु ।
ग्राह्या: पाशान्निर्ऋत्या: पाशान्मृत्यो: पाशाद्
वाक् त्वा देवी पुनर्ददातु ।।५।।

*(इति पञ्चर्चोनामद्वितीयकाण्डे षोडशो ऽनुवाक:)*

२-८१

इदं चक्षुर्ऋतावरी मा मा हासीत् पुरायुष: ।
यद् वां तमो यदृपिशमप वां तन्नि दध्मसि ।।१।।
यदन्धियं यदल्पाणं यो ऽर्मो अधिरोहति ।
अयस्मयस्तदङ्कुशो ऽक्षोर्ममप लुम्पतु ।।२।।
यमज्याजिमजयं नृचक्षा यं वा श्येन: शकुनिर्य सुपर्ण: ।
यदाहुश्चक्षुरदितेरनन्तं सोमो नृचक्षा मयि तद् दधातु ।।३।।

यथा चक्षुः सुपर्णस्य यथाश्वस्य यथा शुनः ।
एवा मे अश्विना चक्षुः कृणुतं पुष्करस्रजा ।।४।।
यस्याः सुपर्णः प्रपतन् चक्षुषा चक्षुराददे ।
तस्याः समुद्रजे तव चक्षुषा चक्षुराददे ।।५।।

२-८२

अग्निं ते हरः सिषक्तु यातुधान स्वाहा ।।१।।
वातं ते प्राणः सिषक्तु यातुधान स्वाहा ।।२।।
सूर्यं ते चक्षुः सिषक्तु यातुधान स्वाहा ।।३।।
अन्तरिक्षं ते श्रोत्रं सिषक्तु यातुधान स्वाहा ।।४।।
परमां ते परावतं मनः सिषक्तु यातुधान स्वाहा ।।५।।

२-८३

अपस्ते रसः सिषक्तु यातुधान स्वाहा ।।१।।
ओषधीस्ते लोमानि सिसक्तन्तु यातुधान स्वाहा ।।२।।
पृथिवीं ते शरीरं सिषक्तु यातुधान स्वाहा ।।३।।
समुद्रं ते वाक् सिषक्तु यातुधान स्वाहा ।।४।।
निर्ऋत्यास्त्वासनि जुहोमि यातुधान स्वाहा ।।५।।

२-८४

इदं ते शिरो भिनद्मि यातुधान स्वाहेदं ते
मस्तिष्कं नि तृणद्मि भूम्याम् ।।१।।
इदं ते हनू भिनद्मि यातुधान स्वाहेदं ते
जिह्वा नि तृणद्मि भूम्याम् ।।२।।
इदं ते ग्रीवा भिनद्मि यातुधान स्वाहेदं ते
स्कन्धा नि तृणद्मि भूम्याम् ।।३।।
इदं ते अंसौ भिनद्मि यातुधान स्वाहेदं ते
बाहू नि तृणद्मि भूम्याम् ।।४।।

इदं ते हृदयं भिनद्मि यातुधान स्वाहेदं ते
क्लोमानं नि तृणद्मि भूम्याम् ।।५।।
इदं ते पृष्ठी भिनद्मि यातुधान स्वाहेदं ते
पर्शू नि तृणद्मि भूम्याम् ।।६।।
इदं ते श्रोणी भिनद्मि यातुधान स्वाहेदं ते
वस्त्रं नि तृणद्मि भूम्याम् ।।७।।
इदं ते ऊरू भिनद्मि यातुधान स्वाहेदं ते
जङ्घे नि तृणद्मि भूम्याम् ।।८।।
इदं ते कुल्फौ भिनद्मि यातुधान स्वाहेदं ते
पादौ नि तृणद्मि भूम्याम् ।।९।।
इदं ते त्वचं भिनद्मि यातुधान स्वाहेदं ते
प्राणान् नि तृणद्मि भूम्याम् ।।१०।।
इदं ते परूंषि भिनद्मि यातुधान स्वाहेदं ते
मज्ज्ञो नि तृणद्मि भूम्याम् ।।११।।

२-८५

नर्दमोद लवुन्तक जिष्णो ह्यपराजित: ।
अमुं भ्रूणान्यर्पय स्वयं पाशं न्यायति ।।१।।
असुरैतु सहक्रतुरात्मा प्राणो अथो बलम् ।
स नो दधातु भद्रयाग्निर्विश्वाद्वसुमान् स्वस्तये ।।२।।
दक्षिणा मा दक्षिणतो दक्षिणा पातु सव्यत: ।
पश्चादनु व्याधात् पातु पुरस्तात् पातु दक्षिणा ।।३।।
शतमापो दिव्या मित्रस्य च दक्षिणा: ।
धाता सविताद्रुद्रस्ते नो मुञ्चन्त्वंहस: ।।४।।

शतं पाशा वरुणस्य ब्रह्मणस्पतेरु शतम् ।
मर्तात् पाशान्नो वि ष्य शतात् पाशेभ्यो वयं त्वाम् ।।५।।

*(इति पञ्चर्चोनामद्वितीयकाण्डे सप्तदशो ऽनुवाक:)*

२-८६

प्राचीं दिशमास्थामग्निर्मावत्वोजसे बलाय दिशां प्रियो भूयासम् ।
अनमित्रा मे दिशो भवन्तु घृतप्रतीका: ।।१।।
दक्षिणा दिशमास्थामिन्द्रो मावत्वोजसे बलाय दिशां प्रियो भूयासम्।
अनमित्रा मे दिशो भवन्तु घृतप्रतीका: ।।२।।
प्रतीचीं दिशमास्थां वरुणो मावत्वोजसे बलाय दिशां प्रियो भूयासम्।
अनमित्रा मे दिशो भवन्तु घृतप्रतीका: ।।३।।
उदीचीं दिशमास्थां सोमो मावत्वोजसे बलाय दिशां प्रियो भूयासम् ।
अनमित्रा मे दिशो भवन्तु घृतप्रतीका: ।।४।।
ध्रुवां दिशमास्थां विष्णुर्मावत्वोजसे बलाय दिशां प्रियो भूयासम्।
अनमित्रा मे दिशो भवन्तु घृतप्रतीका: ।।५।।
ऊर्ध्वां दिशमास्थां बृहस्पतिर्मावत्वोजसे बलाय दिशां प्रियो भूयासम्।
अनमित्रा मे दिशो भवन्तु घृतप्रतीका: ।।६।।

२-८७

मनायी तन्तुं प्रथमं पश्चेदन्या अतन्वत ।
तन्नारी: प्र ब्रवीमि व: साध्वीर्व: सन्तूर्वरी: ।।१।।
साधुर्वस्तन्तुर्भवतु साधुरोतुरथो वृता ।
अथो होर्वरीर्यूयं प्रातर्वढ़ेव धावत ।।२।।
खल्गाला इव पत्वरीरपामुग्रमिवायनम् ।
पतन्तु पत्वरीरिवोर्वरी: साधुना पथा ।।३।।

अपाच्यौ तोतुद्येते तोदेनाश्वतराविव ।
प्र स्तौममुर्वरीणां शसयानामस्ताविषम् ।।४।।
नारी पञ्चमयूखं सूत्रवत् कृणुतं वसु ।
अरिष्टो अस्य वस्ता पेन्द्र वास उतौरिव ।।५।।

२-८८

शास इत्था महाङ् अस्यमित्रघातो अद्भुत: ।
न यस्य हन्यते सखा न जीयते कदा चन ।।१।।
वि रक्षो वि मृधो जहि वि वृत्रस्य हनू रुज ।
वि मन्युमिन्द्र वृत्रहन्नमित्रस्याभिदासति ।।२।।
वि न इन्द्र वि मृधो जहि नीचा यच्छ पृतन्यत: ।
अधमं गमया तमो यो अस्माङ् अभिदासति ।।३।।
स्वस्तिदा विशां पतिर्वृत्रहा विमृधो वशी ।
वृषेन्द्र: पुर एतु न: सोमपा अभयङ्कर: ।।४।।
अपेन्द्र द्विषतो मनो ऽप जिज्यासतो वधम् ।
वि महच्छर्म यच्छ वरीयो यावया वधम् ।।५।।

२-८९

अयं योतितरो मणिस्तेनाति तर दु:श्यस: ।
सपत्नां द्विषतो मणे प्र णुदस्व पृतन्यत: ।।१।।
प्र णुदस्व प्र सहस्व सपत्नां द्विषतो मणे ।
तराभिमातिं दु:श्यसां वर्चो भङ्गृधि पृतन्यताम् ।।२।।
वर्चो जहि मन्युं जह्याकूतिं द्विषतां मणे ।
देवो योतितरो मणिस्तेनाति तर धूर्वत: ।।३।।
ये धूर्वन्ति ये द्रुह्यन्ति ये द्विषन्ति पृतन्यत: ।
सर्वां सपत्नांस्ते मणिर्निर्मन्युं द्विषतस्करत् ।।४।।

अपाच्यौ तोतुद्येते तोदेनाश्वतराविव ।
प्र स्तौममुर्वरीणां शसयानामस्ताविषम् ।।४।।
नारी पञ्चमयूखं सूत्रवत् कृणुतं वसु ।
अरिष्टो अस्य वस्ता पेन्द्र वास उतौरिव ।।५।।

२-८८

शास इत्था महाङ् अस्यमित्रघातो अद्भुत: ।
न यस्य हन्यते सखा न जीयते कदा चन ।।१।।
वि रक्षो वि मृधो जहि वि वृत्रस्य हनू रुज ।
वि मन्युमिन्द्र वृत्रहन्नमित्रस्याभिदासति ।।२।।
वि न इन्द्र वि मृधो जहि नीचा यच्छ पृतन्यत: ।
अधमं गमया तमो यो अस्माङ् अभिदासति ।।३।।
स्वस्तिदा विशां पतिर्वृत्रहा विमृधो वशी ।
वृषेन्द्र: पुर एतु न: सोमपा अभयङ्कर: ।।४।।
अपेन्द्र द्विषतो मनो ऽप जिज्यासतो वधम् ।
वि महच्छर्म यच्छ वरीयो यावया वधम् ।।५।।

२-८९

अयं योतित्तरो मणिस्तेनाति तर दु:श्यस: ।
सपत्नां द्विषतो मणे प्र णुदस्व पृतन्यत: ।।१।।
प्र णुदस्व प्र सहस्व सपत्नां द्विषतो मणे ।
तराभिमातिं दु:श्यसां वर्चो भङ्ग्धि पृतन्यताम् ।।२।।
वर्चो जहि मन्युं जह्याकूतिं द्विषतां मणे ।
देवो योतितरो मणिस्तेनाति तर धूर्वत: ।।३।।
ये धूर्वन्ति ये द्रुह्यन्ति ये द्विषन्ति पृतन्यत: ।
सर्वां सपत्नांस्ते मणिर्निमन्युं द्विषतस्करत् ।।४।।

वातजूते मनोजव: पुनर्वो यन्तु यातव: पुनर्जूति: किमीदिनी: ।
यस्य स्थ तमत्त यो व: प्राहैत्तमत्त स्वा मांसान्यत्त ।।५।।

*(इति पञ्चर्चोनामद्वितीयकाण्डेऽष्टादसोऽनुवाक:)*

***इत्यथर्ववेदे पैप्पलाद संहितायां पञ्चर्चोनामद्वितीय: काण्ड: समाप्त:***

# अथ षड्‌चोनाम तृतीयकाण्ड:

## ३-१

आ त्वा गन् राष्ट्रं सह वर्चसोदिहि प्राङ् विशां पतिरेकराट् त्वं वि राज।
सर्वास्त्वा राजन् प्रदिशो ह्वयन्तूपसद्यो नमस्यो भवेह ।।१।।
त्वां विशो वृणतां राज्याय त्वामिमा: प्रदिश: पञ्च देवी: ।
वर्ष्मन् राष्ट्रस्य ककुदि श्रयस्वातो वसूनि वि भजास्युग्र: ।।२।।
अच्छ त्वा यन्तु हविन: सजाता अग्निर्दूतो अजिर: सन्तुराति: ।
जाया: पुत्रा: सुमनसो भवन्तु बहुं बलिं प्रति पश्यासा उग्र:।।३।।
अश्विना त्वाग्रे मित्रावरुणोभा विश्वे देवा मरुतस्त्वा ह्वयन्तु ।
सजातानां मध्यमेष्ठेयमस्या: स्वे क्षेत्रे सवितेव वि राज ।।४।।
आ प्र द्रव परमस्या: परावत: विश्वे ते द्यावापृथिवी अभूताम् ।
तदयं राजा वरुणस्तथाह स त्वायमह्वत् स इहेदमेहि ।।५।।
इन्द्रेन्द्रं मनुष्य: परेहि सं यज्ञियास्त्वा वरुणेन संविदान: ।
स त्वायमह्वत् स्वे सधस्थे स देवान् यक्षत् स उ कल्पयाद्विश:।।६।।
पथ्या रेवतीर्बहुधा विरूपा: सर्वा: सङ्गत्य वरिवस्ते अक्रन् ।
तास्त्वा सर्वा: संविदाना ह्वयन्तु दशमीमुग्र: सुमना वशेह ।।७।।
यदजिरेण हविषाव त्वा गमयामसि ।
अत्रात इन्द्र: केबलीर्विशो बलिहृतस्करत् ।।८।।

## ३-२

हरिणस्य रघुष्यदो ऽधि शीर्षणि भेषजम् ।
सुक्षेत्रियं विषाणयाद् विषूचीनमनीनशत् ।।१।।
अनु त्वा हरिणो वृषा पद्भिश्चतुर्भिरक्रमीत् ।
विषाणे वि ष्य गुष्पितं यत् किञ्च क्षेत्रियं हृदि ।।२।।

अदो यदवरोचते चतुष्पक्षमिव च्छदि: ।
तेन ते सर्वं क्षेत्रियमङ्गेभ्यो नाशयामसि ।।३।।
उदगातां भगवती विचृतौ नाम तारके ।
वि क्षेत्रियस्य मुञ्चतामधमं पाशमुत्तमम् ।।४।।
यदासुते: क्रियमाणाया: क्षेत्रियं त्वा व्यानशे ।
वेदाहं तस्य भेषजं क्षेत्रियं नाशयामि ते ।।५।।
अपवासे नक्षत्राणामपवास उतोषसाम् ।
अपास्मत् सर्वमामयदप क्षेत्रियमक्रमीत् ।।६।।
आप इद् वा उ भेषजीरापो अमीवचातनी: ।
आपो विश्वस्य भेषजीस्तास्त्वा मुञ्चन्तु क्षेत्रियात् ।।७।।

३ - ३

पुमान् पुंस: परिजातो ऽश्वत्थ: खदिरादधि ।
स हन्तु शत्रून् मामकान् यांश्चाहं द्वेष्मि ये च माम् ।।१।।
तानश्वत्थ नि: शृणीहि शत्रून् वैबाध दोधत: ।
इन्द्रेण वृत्रघ्ना मेद्यग्निना वरुणेन च ।।२।।
यथाश्वत्थ नि: शृणासि पूर्वान् जातानुतापरान् ।
एवा पृतन्यतस्त्वमभि तिष्ठ सहस्व च ।।३।।
यथाश्वत्थ विभिनत्स्यन्तर्महत्यर्णवे ।
एवा मे शत्रोश्चित्तानि विष्वग् भिन्धि सहस्व च ।।४।।
य: सहमानश्चरसि सासहान इवर्षभ: ।
तेनाश्वत्थ त्वया वयं सपत्नान् सहिषीमहि ।।५।।
सिनात्वेनान् निर्ऋतिर्मृत्यो: पाशैरमोक्यै: ।
अश्वत्थ शत्रून् मामकान् यांश्चाहं द्वेष्मि ये च माम्।।६।।
अधराञ्च: प्र प्लवन्तां छिन्ना नौरिव बन्धनात् ।
न निर्बाधप्रणुत्तानां पुनरस्ति निवर्तनम् ।।७।।

प्रैणान्नुदामि मनसा प्र चित्तेन प्र ब्रह्मणा ।
प्रैणान् वृक्षस्य शाखयाश्वत्थस्य नुदामसि ।।८।।

३-४

यदद: संप्रयतीरहावनदता हते ।
तस्मादा नद्यो नाम स्थ ता वो नामानि सिन्धव:।।१।।
यत् प्रेषिता वरुणेनाच्छीभं समवल्गत ।
तदाप्नोदिन्द्रो वो यतीस्तस्मादापो अनु ष्ठन ।।२।।
अपकामं स्यन्दमाना अवीवरत वो हिकम् ।
इन्द्रो व: शक्तिभिर्देवीस्तस्माद् वार्णाम वो हिकम् ।।३।।
एको वो देव उपातिष्ठत् स्यन्दमाना उपेत्य ।
उदानिषुर्महीरिति तस्मादुदकमुच्यध्वे ।।४।।
आपो देवीर्घृतमिदाप आहुरग्नीषोमौ बिभ्रत्याप इत्ता: ।
तीव्रो रसो मधुपृचामरङ्गम आ मा प्राणेन सह वर्चसा गन् ।।५।।
आदित् पश्याम्युत वा शृणोम्या मा घोषो गच्छति वाङ्मासाम्।
मेने भेजानो अमृतस्य तर्हि हिरण्यवर्णा अतृपं यदाप:।।६।।

३-५

अग्निर्नो दूत: प्रत्येतु शत्रून् प्रतिदहन्नभिशस्तिमरातिम् ।
स चित्तानि मोहयतु परेषां निर्हस्तांश्च कृणवज्जातवेदा:।।१।।
अयमग्निरमूमुहद् यानि चित्तानि वो हृदि ।
वि वो धमात्योकस: प्र वो धमाति सर्वत: ।।२।।
इन्द्र चित्तानि मोहयार्वागाकूत्या अधि ।
अग्नेर्वातस्य ध्राज्या तान् विषूचो वि नाशय ।।३।।
व्येषामाकूतय इताथो चित्तानि मुह्यत ।
अथो यदद्यैषां हृदि तदेषां परि निर्जहि ।।४।।

अमीषां चित्तानि प्रतिमोहयन्ती गृहाणाङ्गान्यप्वे परेहि ।
अभि प्रेहि निर्दह हृत्सु शोकैर्ग्राह्यामित्रांस्तमसा विध्य शत्रून् ।।५।।
असौ या सेना मरुत: परेषामस्मानभ्यैत्योजसा स्पर्धमाना ।
तां गुहत तमसापव्रतेन यथैषामन्यो अन्यं न जानात् ।।६।।

*(इति षड्चोनामतृतीयकाण्डे प्रथमोऽनुवाक:)*

३-६

अग्निर्नो विद्वान् प्रत्येतु शत्रून् प्रतिदहन्नभिशस्तिमरातिम् ।
स सेनां मोहयतु परेषां निर्हस्तांश्च कृणवज्जातवेदा: ।।१।।
यूयमुग्रा मरुत ईदृशे स्थाभि प्रेत मृडत सहध्वम् ।
अमीमृडन् वसवो नाथितेभ्यो ऽग्निर्ह्येषां विद्वान् प्रत्येतु शत्रून् ।।२।।
अमित्रसेनां मघवन्नस्माञ्छत्रूयतामभि ।
युवं तानिन्द्र वृत्रहन्नग्निश्च दहतं प्रति ।।३।।
प्रसूत इन्द्र: प्रवता हरिभ्यां प्र ते वज्र: प्रमुणन्नेतु शत्रून् ।
जहि प्रतीचो अनूच: पराचो विश्वं हि रिष्टं कृणुहि सत्यमेषाम् ।।४।।
सेनामोहनं कृण्विन्द्रामित्रेभ्यस्त्वम् ।
अग्नेर्वातस्य ध्राज्या तान् विषूचो वि नाशय ।।५।।
इन्द्र: सेनां मोहयतु मरुतो घ्नन्त्वोजसा ।
चक्षूंष्यग्निरा दत्तां पुनरेतु पराजिताम् ।।६।।

३-७

एकशतं विष्कन्धानि विष्ठिता पृथिवीमनु ।
तेषान्तु सर्वेषामिदमस्तु विष्कन्धदूषणम् ।।१।।
कर्षफस्य विषफस्य द्यौष्पिता पृथिवी माता ।
यताभिचक्र देवास्तथापि कृणुता पुन: ।।२।।
अश्लेष्माणो ऽधारयन् तथा तन् मनुना कृतम् ।
कृणोमि वध्रि विष्कन्धं मुष्काबर्हो गवामिव ।।३।।

सूत्रे पिशङ्गे खृगलं यदाबध्नन्ति वेधस: ।
श्रवस्यं शुष्मं काबवं वध्रिं कृण्वन्तु बन्धुर: ।।४।।
येना श्रवस्यो चरथ देवा इवासुरमायया ।
शुनां कपिरिव दूषणो बन्धुरा काबवस्य च ।।५।।
दुष्ट्यै हि त्वा भन्त्स्यामि दूषयित्वा काबवम् ।
उदाशवो रथा इव शपथेभि: सरिष्यथ ।।६।।

३-८

यमस्य लोकादध्या बभूविथ प्रमदा मर्तान् प्र युनक्षुधीर: ।
एकाकिना सरथं यासि विद्वान् स्वप्न मिमानो असुरस्य योनौ।।१।।
बम्बस्त्वाग्रे विश्ववयावपश्यत् पुरा रात्र्या जनितोरेके अह्नि ।
तत: स्वप्नेदमध्या बभूविथ विष्वङ्वरूपमपगूहमान:।।२।।
बृहन् ग्रावासुरेभ्यो ऽधि देवानुपाववर्त महिमानमिच्छन् ।
तस्मै स्वप्नाय दधुराधिपत्यं त्रयस्त्रिंशास: स्वरानशाना: ।।३।।
नैतां विदु: पितरो नोत देवा यैषा जल्पिश्चरत्यन्तरेदम् ।
त्रिते स्वप्नमदधुराप्त्ये नर आदित्यासो वरुणेनानुशिष्टा:।।४।।
व्यस्य क्रूरमभि यन्तु दुष्कृतोस्वप्नेन सुकृत: पुण्यमायु: ।
स्वर्मदसि परमेण बन्धुना तप्यमानस्य मनसोधि जज्ञिषे ।।५।।
विद्म ते सर्वा: परिजा: पुरस्ताद् विद्म स्वप्न यो अधिपा इहो ते ।
यशस्विनो नो यशसेह पाह्यारात् द्विषेभिरप याहि दूरम्।।६।।

३-९

अम्बा: सुमुखा: सृजत पद्वत् सृजत सत्यज्ञेयम् ।
सृजाम्यहं दूतानस्मै विषाय हन्तवे ।
वारुग्रमरसं विषमाहेयमरसं विषं निर्विषम् ।।१।।
इन्द्रमहमिह हुवे सोमपामुभयाविनमस्मै विषाय हन्तवे ।
वारुग्रमरसं विषमाहेयमरसं विषं निर्विषम् ।।२।।

वरुणमहमिह हुव उग्रं राजन्यैः सहास्मै विषाय हन्तवे ।
वारुग्रमरसं विषमाहेयमरसं विषं निर्विषम् ।।३।।
अदितिमहमिह हुवे सूरपुत्रां कनीनिकामस्मै विषाय हन्तवे
वारुग्रमरसं विषमाहेयमरसं विषं निर्विषम् ।।४।।
बृहस्पतिमहमिह हुवे यो देवानां पुरोहितो ऽस्मै विषाय हन्तवे।
वारुग्रमरसं विषमाहेयमरसं विषं निर्विषम् ।।५।।
आणाश्चाणाश्चण्डामर्का अस्मै विषाय हन्तवे ।
वारुग्रमरसं विषमाहेयमरसं विषं निर्विषम् ।।६।।
नवानां नवतीनां विषस्य रोपुषीणाम् ।
सर्वासामग्रभं नाम वीतापेतारसं विषम् ।।७।।

३-१०

मृत्युरेको यम एकः शर्व एकः शरुर्भवः ।
ते नः कृण्वन्तु भेषजं देवसेनाभ्यस्परि ।।१।।
पुनर्नो यमः पितृभिर्ददातु पुनर्मित्रावरुणा वातो अग्निः।
अघमारो अघशंसः पुनर्दात् पुनर्नो देवी निर्ऋतिर्ददातु ।।२।।
या देवैः प्रहितेषुः पतात्तपसे वा महसे वावसृष्टा ।
सोमस्त्वामस्मद् यावयतु विद्वान् पितरो वा
देवहूता नृचक्षसः।।३।।
सहस्राक्षो अमर्त्यः पुरुरूप इहावतु ।
सख्ये त उग्र मा रिषं सहगुः सहपूरुषः ।।४।।
यस्ते मन्युः सहस्राक्ष विषेण परिषिच्यते ।
तेन त्वमस्मभ्यं मृड शिवो नः शम्भुरा चर ।।५।।
मा ते मन्यौ सहस्राक्ष भामे भून्मामकं जगत् ।
यो नो द्वेष्टि तं गच्छ यं द्विष्मस्तं जहि ।।६।।

*(इति षड्चोनामतृतीयकाण्डे द्वितीयो ऽनुवाकः)*

## ३-११

ये स्थास्यां प्राच्यां दिशि हेतयो नाम देवास्तेषां वो अग्निरिषवः।
ते नो मृड़त ते नो ऽधि ब्रूत तेभ्यो नमस्तेभ्यः स्वाहा ।।१।।
ये स्थास्यां दक्षिणायां दिश्यविष्यवो नाम देवास्तेषां व आप इषवः।
ते नो मृड़त ते नो ऽधि ब्रूत तेभ्यो नमस्तेभ्यः स्वाहा ।।२।।
ये स्थास्यां प्रतीच्यां दिशि विराजो नाम देवास्तेषां वः काम इषवः।
ते नो मृड़त ते नो ऽधि ब्रूत तेभ्यो नमस्तेभ्यः स्वाहा ।।३।।
ये स्थास्यामुदीच्यां दिशि प्रविध्यन्तो नाम देवास्तेषां वो वात इषवः।
ते नो मृड़त ते नो ऽधि ब्रूत तेभ्यो नमस्तेभ्यः स्वाहा ।।४।।
ये स्थास्यां ध्रुवायां दिशि विलिम्पा नाम देवास्तेषां वो ऽन्नमिषवः।
ते नो मृड़त ते नो ऽधि ब्रूत तेभ्यो नमस्तेभ्यः स्वाहा ।।५।।
ये स्थास्यामूर्ध्वायां दिश्यविष्यन्तो नाम देवास्तेषां वो वर्षमिषवः।
ते नो मृड़त ते नो ऽधि ब्रूत तेभ्यो नमस्तेभ्यः स्वाहा ।।६।।

## ३-१२

यो अप्स्वन्तर्यो वृत्रे अन्तर्यः पुरुषे यो अश्मनि ।
य आविवेशौषधीर्यो वनस्पतींस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ।।१।।
यः सोमे अन्तर्य उ गोष्वन्तर्य आविष्टो वयसि यो मृगेषु ।
य आविवेश द्विपदो यश्चतुष्पदस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ।।२।।
य इन्द्रेण सरथं संबभूव वैश्वानर उत विश्वदाव्यः ।
यं जोहवीमि पृतनासु सासहिं तेभ्यो अग्निभ्यो हुतमस्त्वेतत्।।३।।
यो देवो विश्वाद् यमु काममाहुर्यं दातारं प्रतिगृह्णन्तमाहुः ।
यो धीरः शक्रः परिभूरदाभ्यस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ।।४।
यं त्वा होतारं मनसाभि संविदुस्त्रयोदश भौवनाः पञ्च मानवाः
वर्चोधसे यशसे सूनृतावते तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ।।५।।

उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे ।
वैश्वानरस्य ज्येष्ठेभ्यस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ।।६।।
दिवं पृथिवीमन्वन्तरिक्षं ये विद्युतमनुसंचरन्ति ।
ये दिक्ष्वन्तर्य उ वाते अन्तस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ।।७।।
बृहस्पतिं वरुणं मित्रमग्निं हिरण्यपाणिं सवितारमिन्द्रम् ।
विश्वान् देवानङ्गिरसो हवामहे इमं क्रव्यादं शमयन्त्वग्निम् ।।८।।
शान्तो अग्निः क्रव्यादथो पुरुषरेषणः।
अथो यो विश्वदाव्यस्तं क्रव्यादमशीशमम् ।।९।।

३-१३

आयमगन् पर्णमणिर्बली बलेन प्रमृणं सपत्नान् ।
ओजो देवानां पय ओषधीनां मयि राष्ट्रं जिन्वत्वप्रयुच्छन् ।।१।।
मयि राष्ट्रं पर्णमणे मयि धारया श्रियम् ।
अहं राष्ट्रस्याभीवर्गे युजा भूयासमुत्तरः ।।२।।
यं निदधुर्वनस्पतौ वाजं देवाः प्रियं निधिम् ।
तं म इन्द्रः सहायुषा मणिं दधातु भर्तवे ।।३।।
सोमस्य पर्णः सह उग्रमागन्निन्द्रेण दत्तो वरुणेन सख्या ।
तमहं बिभर्मि बहु रोचमानो दीर्घायुत्वाय शतशारदाय ।।४।।
आ मा रूक्षत् पर्णमणिर्मह्या अरिष्टतातये ।
यथाहमुत्तरोसानि मानुष्या अधि सम्पदः ।।५।।
पुनर्मैत्विन्द्रियं पुनरात्मा द्रविणं ब्राह्मणं च ।
पुनरग्नयो धिष्ण्यासो यथास्थाम कल्पयन्तामिहैव ।।६।।
ये तक्षाणो रथकाराः कर्मारा ये मनीषिणः ।
सर्वांस्तान् पर्ण रन्धयोपस्तिं कृणु मे जनम् ।।७।।
उपस्तिरस्तु वैश्य उत शूद्र उतार्यः ।
सर्वांस्तान् पर्ण रन्धयोपस्तिं कृणु मे जनम् ।।८।।

३-१४

येन वेहद् बभूविथ नाशयामसि तद् वयम्।
इदं तदन्यत्र त्वदप दूरे नि दध्मसि ।।१।।
आ ते गर्भो योनिमेतु पुमान् वाण इवेषुधिम् ।
आ वीरो ऽत्र जायतां पुत्रस्ते दशमास्य: ।।२।।
पुमांसं पुत्रं जनय तं पुमाननु जायताम् ।
भवासि पुत्राणां माता जातानां जनयासि च ।।३।।
यानि भद्राणि बीजान्यृषभा जनयन्ति ।
तैस्त्वं पुत्रं विन्दस्व सा प्रसूर्धेनुका भव ।।४।।
कृणोमि ते प्राजापत्यमा गर्भो योनिमेतु ते ।
विन्दस्व पुत्रं नारि यस्तुभ्यं शमसच्छमु तस्मै त्वं भवा ।।५।।
यासां पिता पर्जन्यो भूमिर्माता बभूव ।
तास्त्वा पुत्रविद्याय देवी: प्रावन्त्वोषधी: ।।६।।
यस्ते योनिमुदिङ्गयादृषभो रेतसा सह ।
स त आ सिञ्चतु प्रजां दीर्घायुं शतशारदाम् ।।७।।

३-१५

यां त्वा वातोवरयदार्द्रनाभा महर्षभ: ।
तस्यास्ते विश्वधायसो विषदूषणमुद्धरे ।।१।।
यां त्वा वराहो अखनदेकस्मिन्नधि पुष्करे ।
तस्यास्ते विश्वधायसो विषदूषणमुद्धरे ।।२।।
यां त्वादितिरवपद् बीजवापमधि पुष्करे ।
तस्यास्ते विश्वधायसो विषदूषणमुद्धरे ।।३।।
यस्या: कुलायं सलिले अन्तर्महत्यर्णवे ।
तस्यास्ते विश्वधायसो विषदूषणमुद्धरे ।।४।।

उत्ते भर उत्तमाया अधमायास्त उद्धरे ।
उन् मध्यमान्मध्यमे तद्विषदूषणमुद्धरे ।।५।।
अग्रभं समग्रभमुभावन्तौ समग्रभम् ।
दिवश्च पृथिव्याश्च विषदूषणमुद्धरे ।।६।।

*(इति षड्चोनामतृतीयकाण्डे तृतीयो ऽनुवाक:)*

३-१६

पैद्वोसि पृतनायु: स्वाहा ।।१।।
सोममहिंसी: सोमहिंसितोसि स्वाहा ।।२।।
ब्राह्मणमहिंसीर्ब्रह्महिंसितोसि स्वाहा ।।३।।
नाभूदहिर्भूणमारदहिरद्रिमरसावधीत् ।
विषस्य ब्रह्मणामासीत् ततो जीवन्न मोक्षसे ।।४।।
उष्टोहि: समुष्टो हि निर्धीतो अरस: कृत: ।
विषस्य ब्रह्मणामासीत् ततो जीवन्न मोक्षसे ।।५।।
पुनर्ददामि ते विषं पूर्वपद्यमिदारिथ ।
मां ददश्वान् मन्यसे मया दष्टो न मोक्षसे ।।६।।

३-१७

एकशतं भेषजानि तेषां मातास्योषधे ।
समुद्रमव गच्छसि पृथिव्यामधि निष्ठिता ।।१।।
तस्यां वेदाधि भेषजं दशशीर्षो दशजिह्व: ।
यस्ते प्रथम आददे शं श्चावन्त ओषधे यमदाद्वीरयुग् भिषक्।।२।।
पुनश्चक्षु: पुन: प्राणं पुनरायुर्न आगमत् ।
निष्ट्वाकरं निष्कृत्या निष्ट्वा निष्कृत्याकरम् ।।३।।
मुञ्चामि त्वा शपथ्यादथो वरुण्यादुत ।
अथो यमस्य पड्वीशाद्विश्वस्माद् देवकिल्बिषात् ।।४।।

सं ते शीर्ष्णः कपालानि हृदयस्य च यो विदुः ।
उद्यन् सूर्य अदित्यो अङ्गद्योतमनीनशत् ।।५।।
हिमवतः प्र स्रवथ सिन्धौ समह सङ्गमः ।
ता आपः सर्वाः सङ्गत्य चक्षुः प्राणञ्च धत्त नः ।।६।।

३-१८

हस्तिवर्चसं प्रथतां बृहत् यशो अदित्या यत्तन्वः संबभूव ।
तत् सर्वे सवितुर्मह्यमेतद् विश्वे देवासो अदितिः सजोषाः।।१।।
मित्रश्च वरुणश्चेन्द्रो रुद्रश्च वेधतु ।
देवासो विश्वधायसस्तेन माञ्जन्तु वर्चसा ।।२।।
यत् ते वर्चो जातवेदो बृहद्भवत्याहुते ।
तेन मामद्य वर्चसा अग्ने वर्चस्विनं कृधि ।।३।।
येन हस्ती वर्चसा संबभूव येन राजा मनुष्येष्वन्तः ।
येन देवा ज्योतिषा द्यामुदायन् तेन माग्ने वर्चसा सं सृजेह।।४।।
यावद् वर्चः सूर्यस्यासुरस्य च हस्तिनः ।
तावन् मे अश्विना वर्चः कृणुतं पुष्करस्रजा ।।५।।
यावच्चतस्रः प्रदिशश्चक्षुर्यावत् समश्नुते ।
तावत् समैत्विन्द्रियं मयि तद्धस्तिवर्चसम् ।।६।।

३-१९

संशितं म इदं ब्रह्म संशितं वीर्यं मम ।
संशितं क्षत्रं मे जिष्णु येषामस्मि पुरोहितः ।।१।।
समहमेषां राष्ट्रं श्यामि समोजो वीर्यं बलम् ।
वृश्चामि शत्रूणां बाहू सं श्यामि स्वानहन् ।।२।।
तेक्ष्णीयांसः पर्शोरग्नेतस्तीक्ष्णतरा उत ।
इन्द्रस्य वज्रात् तेक्ष्णीयांसो येषामस्मि पुरोहितः ।।३।।

अधस्पद्यन्तामधरे भवन्तु ये न इन्द्रं मघवानं पृतन्यान् ।
क्षणामि ब्रह्मणामित्रानुन्नयामि स्वानहम् ।।४।।
एषामहमायुधा सं श्याम्येषां राष्ट्रं सुवीरं वर्धयामि ।
एषां क्षत्रमजरमस्तु जिष्णूग्रमेषां चित्तं विश्वेवन्तु देवा: ।।५।।
अभि प्रेत जयत प्रसूता: सं व श्यामि नर आयुधानि ।
तीक्ष्णेषवोबलधन्वनो हतोग्रायुधा अबलानुग्रबाहव: ।।६।।

३-२०

इहैव ध्रुवां नि मिनोमि शालां क्षेमे तिष्ठाति घृतमुक्षमाणा।
तां त्वा शाले सर्ववीरा: सुवीरा अरिष्टवीरा अभि सञ्चरेम।।१।।
इहैव ध्रुवा प्रति तिष्ठ शाले अश्वावती गोमती सूनृतावती।
ऊर्जस्वती घृतवती पयस्वत्युच्छ्रयस्व महते सौभगाय।।२।।
धरुण्यसि शाले बृहच्छन्दा: पूतिधान्या ।
आ त्वा वत्सो मीमयदा कुमार आ धेनव: सायमा स्यन्दमाना: ।।३।।
इमां शालां सविता वायुरग्निस्त्वष्टा होता नि मिनोतु प्रजानन्।
उक्षन्तूध्ना मरुतो घृतेन भगो नो राजा नि कृषिं तनोतु।।४।।
मानस्य पत्नी शरणा स्योना देवी देवेभिर्निमितास्यग्रे ।
तृणं वसाना सुमना असस्त्वं रयिं नो धेहि सुभगे सुवीरम्।।५।।
आ त्वा कुमारस्तरुण आ वत्सो जगता सह ।
आ त्वा परिश्रुत: कुम्भ आ दध्न: कलश्ययत् ।।६।।

*(इति षड्चोनामतृतीयकाण्डे चतुर्थो ऽनुवाक:)*

३-२१

इममिन्द्र वर्धय क्षत्रियं म इमं विशामेकवृषं कृणु त्वम् ।
निरमित्रानक्ष्णुह्यस्य सर्वास्तान् रन्धयास्मा अहमुत्तरेषु ।।१।।
अयमस्तु धनपतिर्धनानामयं विशां विश्पतिरस्तु राजा ।
अस्मिन्निन्द्र महि वर्चांसि धेह्यवर्चसं कृणुहि शत्रुमस्य।।२।।

एमं भज ग्रामे अश्वेषु गोषु निष्टं भज यो ऽमित्रो अस्य ।
वर्ष्मत् क्षत्राणामयमस्तु राजेन्द्र शत्रूं रन्धय सर्वमस्मै ।।३।।
अस्मै द्यवापृथिवी भूरि वामं सं दुहातां घर्मदुघे इव धेनुं ।
अयं राजा प्रिय इन्द्रस्य भूयात् प्रियो गवामोषधीनामुतापाम्।।४।।
युनज्मि त उत्तरावन्तमिन्द्रं येन जयन्ति न पराजयन्ते ।
यस्त्वा करदेकवृषं जनानामुत राजन्नुत्तमं मानवानाम्।।५।।
उत्तरस्त्वमधरे सन्त्वन्ये ये के च राजन् प्रतिशत्रवस्ते ।
एकवृष इन्द्रसखा जिगीवां छत्रूयतामभि तिष्ठा महांसि।।६।।

३-२२

विषाणास्याङ्गिरसी देवजा: प्रतिचक्षणी ।
दिवस्पृथिव्या: संभूता सहस्राक्षीहैधि न: ।।१।।
सहस्राक्षी या तु गृभाति पश्यास्योषधे ।
सदान्वाघ्नी रक्षोघ्नी भवेह प्रतिचक्षणी ।।२।।
ये हरन्त्यासुतेयं पयस्फातिं चौषधे ।
तांस्त्वं सहस्रचक्षो गृभाय कृतवीर्ये ।।३।।
य आतुरं रन्धयन्ते ऽर्ष्मन्तं च विहृतम् ।
तांस्त्वं सहस्रचक्षो गृभाय कृतवीर्ये ।।४।।
यथाश्वा चतुरक्षो रात्रिंनक्तातिपश्यति ।
एवा सहस्रचक्षो त्वं प्रति पश्यास्यायत: ।।५।।
गोभिरश्वैर्वसुभिरपक्रीतास्योषधे ।
श्यावस्याश्वस्य चक्षुषा प्रति पश्य किमीदिन: ।।६।।

३-२३

सं सचध्वं सं पिबध्वमन्नं वो मधुमत् सह ।
व्रतं व: सर्वं सध्र्यक् समानं चेतो अस्तु व: ।।१।।

संं जानीध्वमिन्द्रश्चेत्ता वो ऽस्त्वयं वो ऽग्निर्नि हर: शमयाति।
यद्वैरहत्यमुत भीममासीद्विश्वे देवा अप तत् प्लावयन्तु।।२।।
शं व: स्यास्तु बृहस्पति: शं द्यावापृथिवी उभे ।
शमन्तरिक्षमुत वो मरुत्वान् शं व: स्यास्त्वदितिर्देवपुत्रा ।।३।।
कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधी: ।
कल्पन्तामग्नय: सर्वे ऽस्मै श्रैष्ठ्याय सव्रता: ।।४।।
सं व: सृजामि हृदयं संसृष्टं मनो अस्तु व: ।
संसृष्टा वस्तन्व: सन्तु संसृष्ट: प्राणो अस्तु व: ।।५।।
सं व: पशूनां हृदयं सृजामि सं पुत्राणामुत या दुहितरो व:।
सं वो जायानां मनसा मनांसि सं पतीनामुत चक्षु: सृजामि ।।६।।

३-२४

प्राची दिगग्निरधिपतिरसितो रक्षितादित्या इषव: ।
तेभ्यो नमो ऽधिपतिभ्यो नमो रक्षितृभ्यो नम इषुभ्यो नमो वो ऽस्तु ।
यो ऽस्मान् द्वेष्टि यं वयं द्विष्मस्तं वो जम्भे दध्मस्तमु प्राणो जहातु।।१।।
दक्षिणा दिगिन्द्रो ऽधिपतिस्तिरश्चिराजी रक्षिता वसव इषव: ।
तेभ्यो नमो ऽधिपतिभ्यो नमो रक्षितृभ्यो नम इषुभ्यो नमो वो ऽस्तु ।
यो ऽस्मान् द्वेष्टि यं वयं द्विष्मस्तं वो जम्भे दध्मस्तमु प्राणो जहातु।।२।।
प्रतीची दिग् वरुणो ऽधिपति: पृदाकू रक्षिता मित्र इषव: ।
तेभ्यो नमो ऽधिपतिभ्यो नमो रक्षितृभ्यो नम इषुभ्यो नमो वो ऽस्तु ।
यो ऽस्मान् द्वेष्टि यं वयं द्विष्मस्तं वो जम्भे दध्मस्तमु प्राणो जहातु।।३।।
उदीची दिक् सोमो ऽधिपति: स्वजो रक्षिता वात इषव: ।
तेभ्यो नमो ऽधिपतिभ्यो नमो रक्षितृभ्यो नम इषुभ्यो नमो वो ऽस्तु ।
यो ऽस्मान् द्वेष्टि यं वयं द्विष्मस्तं वो जम्भे दध्मस्तमु प्राणो जहातु।।४।।
ध्रुवा दिग् विष्णुरधिपति: कल्माषग्रीवो रक्षिता वीरुध इषव: ।

तेभ्यो नमो ऽधिपतिभ्यो नमो रक्षितृभ्यो नम इषुभ्यो नमो वो ऽस्तु ।
यो ऽस्मान् द्वेष्टि यं वयं द्विष्मस्तं वो जम्भे दध्मस्तमु प्राणो जहातु।।५।।
ऊर्ध्वा दिग् बृहस्पतिरधिपतिश्चित्रो रक्षिताशनिरिषव: ।
तेभ्यो नमो ऽधिपतिभ्यो नमो रक्षितृभ्यो नम इषुभ्यो नमो वो ऽस्तु ।
यो ऽस्मान् द्वेष्टि यं वयं द्विष्मस्तं वो जम्भे दध्मस्तमु प्राणो जहातु।।६।।

३-२५

अनड्वान् दाधार पृथिवीं द्यामुतामूमनड्वान् दाधारोर्वन्तरिक्षम् ।
अनड्वान् दाधार प्रदिश: षड्डुर्वीरनड्वानिदं विश्वं भुवनमा विवेश।।१।।
अनड्वान् दुहे सुकृतस्य लोक ऐनं प्यायेत पवमान: पुरस्तात् ।
पर्जन्यो धारा मरुत ऊधो अस्य यज्ञ: पयो दक्षिणा दोहो अस्य।।२।।
अनड्वानिन्द्र: स पशुभ्यो वि चष्टे त्रयांछक्रोप मिमीते अध्वन: ।
स भूतं भविष्यद्भुवनं दुहान: सर्वा देवानां बिभ्रच्चरति व्रतानि।।३।।
यस्य नेशे यज्ञपतिर्न यज्ञो नास्य दातेशे न प्रतिग्रहीता ।
यो विश्वभृद् विश्वकर्मा धर्मं नो ब्रूत यतमश्चतुष्पात् ।।४।।
इन्द्र एष मनुष्येष्वन्तर्धर्मस्तप्तश्चरति शोशुचान: ।
सुप्रजा असत् स उदारे न सर्षद् यो नाश्नीयादनडुहो विजानन्।।५।।
येन देवा: स्वरारुरुहुर्हित्वा शरीरममृतस्य धाम ।
तेन गेष्म सुकृतस्य लोकं घर्मस्य व्रतेन यशसा तपस्यया।।६।।
द्वादशैता रात्रीर्व्रत्या आहु: प्रजापते: ।
तत्रापि ब्रह्मणो व्रतं तत्राप्यनडुहो बलम् ।।७।।
यास्त आहु: प्रजापतेर्व्रत्या रात्रीर्द्वादश ।
तत्रापि ब्रह्म यो वेद तद् वा अनडुहो बलम् ।।८।।
दुहे वा अनड्वान् सायं दुहे प्रातर्दुहे दिवा ।
दोहा ये अस्य संयन्ति तान् विद्मानुपदस्वत:।।९।।

यो वेदानडुहो दोहान् सप्तानुपदस्वत: ।
प्रजां च लोकं चाप्नोति तथा सप्तर्षयो विदु:।।१०।।
मध्यमेतदनडुहो यत्रैष वह आहित: ।
एतावदस्य प्राचीनं यावान् प्रत्यङ् समाहित:।।११।।
पद्भि: सेदिमवक्रामन्निरां जङ्घाभिरुत्खिदन् ।
श्रमेणानड्वान् कीलालं कीनाशश्चाभि गच्छत:।।१२।।
इन्द्र एष मनुष्येष्वनड्वानित्युच्यते ।
शफासो अस्य मा रिषन् सर्वा याश्चास्य कुष्ठिका:।।१३।।
इन्द्रो बलेनासि परमेष्ठी व्रतेन येन गौस्तेन वैश्वदेव: ।
यो अस्मान् द्वेष्टि यं वयं द्विष्म-
स्तस्य प्राणान् सं बृहत्तस्य प्राणान् वि वृह।।१४।।

*(इति षड्चोनामतृतीयकाण्डे पञ्चमो ऽनुवाक:)*

३-२६

गृहानैमि मनसा मोदमान ऊर्जं बिभ्रद् वसुमनि: सुमेधा: ।
अघोरेण चक्षुषा मित्रियेण गृहाणां पश्यन् पय उत्तरामि।।१।।
इमे गृहा मयोभुव ऊर्जस्वन्त: पयस्वन्त: ।
पूर्णा वामस्य तिष्ठन्तस्ते नो जानन्तु जानत: ।।२।।
सूनृतावन्त: सुभगा इरावन्तो हसामुदा: ।
अक्षुध्या अतृष्यासो गृहा मास्मद् बिभीतन ।।३।।
येषामध्येति प्रवसन् येषु सौमनसो बहु: ।
गृहानुपं ह्वयामहे ते नो जानन्त्वायत: ।।४।।
उपहूता इह गाव उपहूता अजावय: ।
अथो अन्नस्य कीलाल उपहूतो गृहेषु न: ।।५।।
उपहूता भूरिधना: सखाय: स्वादुसंमुद: ।
अरिष्टा: सर्वपूरुषा गृहा न: सन्तु सर्वदा ।।६।।

३-२७

हन्तायमस्त्वप्रतिघात्य: सासह्वां इन्द्र: पृतना अभिष्टि: ।
प्रजापतिरदधादोजो अस्मै बृहद्धविर्हविषा वर्धनेन ।।१।।
प्रजापते हविषा वर्धनेन हन्तारमिन्द्रमकृणोरघात्यम् ।
तस्मै विशो देवकृता नमन्त स हि हन्ता
स हि हव्यो बभूव ।।२।।
प्रजापते अभि नो नेष वस्य ऊर्वीं गव्यूतिमभिमातिषाह:।
वर्धयन्निन्द्रं बृहते रणाय देवं देवेन हविषा वर्धनेन ।।३।।
यथा विश्वा: पृतना: संजयासि यथा शत्रून् सहमान: सहासै।
यथास: सम्राट् सुसम्राडेवा त्वेन्द्रो ऽप्रतिवधं कृणोतु ।।४।।
अयं वीरो ऽप्रति हन्तु शत्रून् विश्वे देवा अप सदस्कराथ ।
मास्य प्रजां रीरिषन् मोत वीरानिममिन्द्रोऽप्रतिवधं कृणोतु ।।५।।
जहि शत्रून् प्रति रन्धयस्वाग्निष्टे गोपा अधिपा वसिष्ठ: ।
शर्म ते राजा वरुणो नियच्छादेवा त्वेन्द्रोऽप्रतिवधं कृणोतु ।।६।।

३-२८

सं स्पृशेथां तनूभ्यां सं मुखाभ्यां समात्मना ।
सं वां ब्रह्मणस्पति: सोम: सं स्पर्शयाति वाम् ।।१।।
अभ्यस्य नाम वाचा दधामि नाह मोक्ष्यते ।
ममेदहैनं कामे लभै कृष्णमिवाखरे ।।२।।
य: प्रेमा प्रेण्यामासीद् दत्त: सोमेन बभ्रुणा ।
तस्मादधि श्रुतं मम मय्यस्य मन आहितम् ।
यं पुमांसं कामयसे यस्मिन् वा भगमिच्छसे ।।३।।
हृच्छोकमस्मिन्ना दध्मो यथा शुष्याति त्वामनु ।
यथास्य हृदयं शुष्यादपिच्छिन्नेव शंगुणी ।।४।।

चक्षुराकास्यं भीमं मांपश्यमभिरोरुदम् ।
प्रियंकरणमुत्तमं मधुघेन तदाभृतम् ।।५।।
त्वं हासि वर्चस्यो ऽथो हासि सुमङ्गलः ।
अथो सर्वासां वीरुधां प्रियंकरणमुच्यसे ।।६।।

३-२९

प्रतीची सोममस्योषधे प्रतीच्युत सूर्यम् ।
प्रतीची विश्वान् देवांस्तथा त्वाच्छावदामसि ।।१।।
इमां खनाम्योषधिं नितत्नीमनुतन्तमाम् ।
आयतः प्रतिनन्दनीं परायतो निवर्तनीम् ।।२।।
अमुष्याहं परायत आयतो मनो अग्रभम् ।
अग्रभं हस्त्यं मनो ऽथो हृदय्यं मनः ।।३।।
मयि ते मन आहितं मयि चित्तं मयि व्रतम् ।
ममेदपि ऋतावसो मम चित्ते सचावहै ।।४।।
अहं वदानि मा त्वं सभायां घ त्वं वद ।
ममेदसस्त्वं केवलो नान्यासां कीर्तयाश्चन ।।५।।
यदि वासि तिरोजनं यदि वा नद्यस्तिरः।
इयं त्वा मह्यमोषधिर्बद्ध्वेव न्यानयात् ।।६।।

३-३०

यथा कलां यथा शफं यथर्णं संनयन्ति ।
एवाह दुष्वप्न्यं सर्वमप्रिये सं नयामसि ।।१।।
सं राजानो ऽगुः समृणान्यगुः सं कुष्ठा अगुः सं कला अगुः।
समस्मासु सुष्वप्न्यं निर्द्विषते दुष्वप्न्यं सुवामः।।२।।
देवानां पत्नीनां गर्भ यमस्य करणः ।
यो भद्रः स्वप्नः स मम यः पापस्तं द्विषते प्र हिण्मः।।३।।

तृष्णामा नामासि कृष्णाशकुनेर्मुखं निर्ऋतेर्मुखम् ।
तं त्वा स्वप्न तथा विद्म ।।४।।
स त्वं स्वप्नाश्व इवाकायमश्व इव नीनाहम् ।
अनास्माकं देवपीयुं पियारुं वप्स: ।।५।।
यदस्मासु दुष्वप्न्यं यद् गोषु यच्च नो गृहे ।
अनास्माकस्तद् देवपीयु: पीयारुं निष्कमिव प्रति मुञ्चताम्।।६।।
नवारत्नीनवमायास्माकं तन्वस्परि ।
दुष्वप्न्यं सर्वे दुर्भूतं द्विषते निर्दिशामसि ।।७।।

*(इति षड्चोनामतृतीयकाण्डे षष्ठो ऽनुवाक:)*

३-३१

देवा मरुत: पृश्निमातरो ऽपो दत्तोदधिं भिन्त ।
दिवस्पृथिव्या उरोरन्तरिक्षादस्मै क्षत्रायानेन
ब्रह्मणाभ्य: प्रजाभ्य आभ्य ओषधीभ्य: स्वाहा ।।१।।
देवा अग्न इन्द्र सूर्यापो दत्तोदधिं भिन्त ।
दिवस्पृथिव्या उरोरन्तरिक्षादस्मै क्षत्रायानेन
ब्रह्मणाभ्य: प्रजाभ्य आभ्य ओषधीभ्य: स्वाहा ।।२।।
देवा: सयुजो मित्र वरुणार्यमन्नपो दत्तोदधिं भिन्त ।
दिवस्पृथिव्या उरोरन्तरिक्षादस्मै क्षत्रायानेन
ब्रह्मणाभ्य: प्रजाभ्य आभ्य ओषधीभ्य: स्वाहा ।।३।।
देवा: पितरो ऽवमा आयव: क्राव्य अपो दत्तोदधिं भिन्त।
दिवस्पृथिव्या उरोरन्तरिक्षादस्मै क्षत्रायानेन
ब्रह्मणाभ्य: प्रजाभ्य आभ्य ओषधीभ्य: स्वाहा ।।४।।
देवाप्सुषदो ऽपां नपात्तनूनपान्नराशंसापो दत्तोदधिं भिन्त ।
दिवस्पृथिव्या उरोरन्तरिक्षादस्मै क्षत्रायानेन
ब्रह्मणाभ्य: प्रजाभ्य आभ्य ओषधीभ्य: स्वाहा ।।५।।

देव बृहस्पते ऽपो धेह्युदधिं भिन्धि ।
दिवस्पृथिव्या उरोरन्तरिक्षादस्मै क्षत्रायानेन
ब्रह्मणाभ्य: प्रजाभ्य आभ्य ओषधीभ्य: स्वाहा ।।६।।
देव प्रजापते ऽपो धेह्युदधिं भिन्धि ।
दिवस्पृथिव्या उरोरन्तरिक्षादस्मै क्षत्रायानेन
ब्रह्मणाभ्य: प्रजाभ्य आभ्य ओषधीभ्य: स्वाहा ।।७।।
देव परमेष्ठिन्नपो धेह्युदधिं भिन्धि ।
दिवस्पृथिव्या उरोरन्तरिक्षादस्मै क्षत्रायानेन
ब्रह्मणाभ्य: प्रजाभ्य आभ्य ओषधीभ्य: स्वाहा ।।८।।

### ३-३२

प्रजापतेर्जायमाना: प्रजा जाताश्च या इमा: ।
ता अस्मै प्रति वेदय चिकित्वाङ् अनु मन्यताम् ।।१।।
येषामीशे पशुपति: पशूनां चतुष्पदामुत वा ये द्विपाद: ।
निष्क्रीतास्ते यज्ञिया यन्ति लोकं रायस्पोषाय यजमानं सचन्ताम्।।२।।
प्रमुञ्चन्तो भुवनस्य गोपा गातुं देवा यजमानाय धत्त ।
उपाकृतं शशमानं यदस्थात् प्रियं देवानामप्येतु पाथ: ।।३।।
ये बध्यमानमनु दीध्यानां अन्वैक्षन्त मनसा चक्षुषा च ।
अग्निष्टानग्रे प्र मुमुक्त देव प्रजापति: प्रजया संविदान: ।।४।।
येषां प्राणा अन्वबध्नन्त बद्धं गवां पशूनामुत पूरुषाणाम् ।
इन्द्रस्तानग्रे प्र मुमुक्त देव: प्रजापति: प्रजया संविदान: ।।५।।
य आरण्या: पशवो विश्वरूपा ये विश्वरूपा उतैकरूपा: ।
वायुष्टानग्रे प्र मुमुक्त देव: प्रजापति: प्रजया संविदान: ।।६।।
प्रजानन्त: प्रति गृह्णन्तु देवा: प्राणमङ्गेभ्यस्पर्याचरन्तम् ।
द्यां गच्छ प्रति तिष्ठा: शरीरै: स्वर्गं याहि पथिभि: शिवेभि: ।।७।।

## ३-३३

समास्त्वाग्न ऋतवो वर्धयन्तु संवत्सर ऋषयो यानि सत्या ।
सं द्युम्नेन दीदिहि रोचनेन विश्वा आ भाहि प्रदिशश्चतस्र:।।१।।
सं चेध्यस्वाग्ने प्र च बोधयैनमुच्च तिष्ठ महते सौभगाय ।
मा ते रिषन्नुपसत्तारो अत्र ब्राह्मणास्ते यशस: सन्तु मान्ये।।२।।
त्वामग्ने वृणते ब्राह्मणा इमे शिवो अग्ने प्रतरणो न एधि ।
सपत्नहाग्ने अभिमातिजिद् भव स्वे क्षये दीदिह्यप्रयुच्छन् ।।३।।
इहैवाग्ने अधि धारया रयिं मा त्वा दभन् पुर्वचित्ता निकारिण:।
क्षत्रमग्ने सुयममस्तु तुभ्यमुपसत्ता वर्धतां ते अनिष्टृत:।।४।।
क्षत्रेणाग्ने स्वेन सं रभस्व मित्रेणाग्ने मित्रधेयं यतस्व ।
सजातानां मध्यमेष्ठेयमस्या राज्ञामग्ने विहव्यो दीदिहीह।।५।।
अति निहो अति निर्ऋतीरत्यरातीरति द्विष: ।
विश्वा ह्यग्ने दुरिता तर त्वमथास्मभ्यं सहवीरं रयिं दा:।।६।।
अनाधृष्यो जातवेदा अनिष्टृतो विराडग्ने क्षत्रभिर्दीदिहीह ।
व्यमीवा: प्रमुञ्चन्मानुषेभ्य: शिवेभिरद्य परि पाहि नो गयै:।।७।।

## ३-३४

अयं ते योनिर्ऋत्वियो यतो जातो अरोचथा: ।
तं जानन्नग्न आ रोहाथा नो वर्धया रयिम् ।।१।।
प्रदातारं हवामहे अग्निमुग्रमूतये ।
शुचिर्यो वृत्रहन्तम: ।।२।।
अग्ने अच्छा वदेह न: प्रत्यङ् न: सुमना भव ।
प्र णो यच्छ विशां पते धनदा असि नस्त्वम् ।।३।।
प्र णो यच्छत्वर्यमा प्र भग: प्र बृहस्पति: ।
प्र पूषा प्रोत सूनृता रयिं देवी दधातु न: ।।४।।

अर्यमणं बृहस्पतिमिन्द्रं दानाय चोदय ।
वातं विष्णुं सरस्वतीं सवितारं च वाजिनम् ।।५।।
सोमं राजानमवसे ऽग्निं गीर्भिर्हवामहे ।
आदित्यं विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम् ।।६।।
इन्द्रवायू बृहस्पति: सुहवेह हवामहे ।
यथा न: सर्वमिज्जगत् सङ्गत्यां सुमना असत् ।।७।।
त्वं नो अग्ने अग्निभिर्ब्रह्म यज्ञं च वर्धय ।
त्वं नो देव दातवे रयिं दानाय चोदय ।।८।।
वाजस्येदं प्रसवे सं बभूव मेमा च विश्वा भुवनान्यन्त:।
उतादित्सन्तं दापयति प्रजानन् रयिं च न:
सर्ववीरं नि यच्छात् ।।९।।
दुह्रां मे पञ्च प्रदिशो दुह्रामुर्वीर्यथाबलम् ।
प्रापेयं सर्वामाकूतिं मनसा हृदयेन च ।।१०।।
गोसनिं वाचमुदेयं वर्चसा माभ्यूर्णुहि ।
आ रुन्धां सर्वतो वायुस्त्वष्टा पोषाय ध्रियताम् ।।११।।

३-३५

यत इन्द्र भयामहे ततो नो अभयं कृधि ।
मघवञ्छग्धि तव त्वं न ऊतिभिर्वि द्विषो वि मृधो जहि ।।१।।
इन्द्रं वयमनूराधं हवामहे ऽनु राध्यास्म द्विपदा चतुष्पदा।
मा न: सेना अररुषीरुप गुर्विषूचीरिन्द्र द्रुहो वि नाशय ।।२।।
इन्द्रस्त्रातोत वृत्रहा परस्पा नो वरेण्य: ।
स रक्षिता चरमत: स मध्यत: स पश्चात् स पुरस्तान्नो अस्तु।।३।।
उरुं नो लोकमनु नेषि विद्वान् स्वर्यज्ज्योतिरभयं स्वस्ति।
उग्रा त इन्द्र स्थविरस्य बाहू उप क्षियेम शरणा बृहन्ता ।।४।।

अभयं नः करत्यन्तरिक्षमभयं द्यावापृथिवी उभे ।
अभयं पश्चादभयं पुरस्तादुत्तरादधरादभयं नो अस्तु ।।५।।
अभयं मित्रादभयममित्रादभयं ज्ञातादभयं पुरो यः ।
अभयं नक्तमभयं दिवा नः सर्वा आशा मम मित्रं भवन्तु ।।६।।

*(इति षडृचोनामतृतीयकाण्डे सप्तमो ऽनुवाकः)*

## ३-३६

जय प्रेहि माप क्रामः शत्रूणां वेद आ खिद ।
इन्द्रः सपत्नहा भीमः सञ्जयस्ते समानृधत् ।।१।।
त्वं जयासि न परा जयासा अर्भेष्वाजौ मघवन् महत्सु च ।
उग्रं चित् त्वामवसे सं शिशीमहे स त्वं न इन्द्र हवनेषु मृड़।।२।।
गोजिता बाहू असमक्रतू युधि कर्मन्कर्मञ्छतमूती खजङ्करा ।
अकल्प इन्द्रो ऽप्रतिमानमोजः स त्वं न इन्द्र हवनेषु मृड़।।३।।
वेदाहमैन्द्रं प्रियमस्य शेवधिं यदस्य नाम गुह्यं समीके ।
स इज्जयाति मघवा ममासत्यस्माकं युध्मो विहवे हवं गमत्।।४।।
वयं जयेम त्वायुजा भृतो अस्माकमंशमुदवा भरेभरे ।
अस्मभ्यमिन्द्र वरिवः सुगं कृधि प्र शत्रूणां मघवन् वृष्ण्या रुज।।५।।
त्वां देवेषु प्रथमं हवामहे त्वं बभूविथ पृतनासु सासहिः ।
सेमं नः कारुमुपमन्युमुद्भिदमिन्द्र करासि प्रसवे रथं पुरः ।।६।।

## ३-३७

स्मर स्मरो ऽसि देवैर्दत्तो ऽसि स्मर ।
अमुष्य मन आ स्मर यथाहं कामये तथा ।।१।।
शोचयास्य हृदयं काम गच्छाङ्गज्वरो दहतु शोचतु त्मना ।
सङ्कल्पा अस्य समरन्ताधीभिरियमेवास्य दिगमहन्यन्याः।।२।।
निरानन्दाः प्रमुच्छदो मनोमुहोनयुवो नष्टकृत्वा अरण्यवः ।
आवेशिनीः प्रद्रुपो रोपयिष्णुरेत आस्ताध्यः प्र हिणोमि ब्रह्मणा ।।३।।

हृत्कर्तनी ऋतुदा ग्रामान्नाशनी: स्वप्नच्छिद उघ्ननीघ्ना मनोमुह:।
आवेशिनी: प्रद्रुपो रोपयिष्णुरेत आस्ताध्य: प्र हिणोमि ब्रह्मणा ।।४।।
इन्द्राग्नी मित्रावरुणा ते अद्योभे च द्यावापृथिवी मातरिश्वा ।
अश्विना देव: सविता भगश्च मनस्त उघ्नन्तु न रमासा अत्र।।५।।
त्रयस्त्रिंशत्त्वा उत घ्नन्तु देवा आध्यश्चित्तमुप ते भरन्ताम् ।
भरद्वाजस्य मतयस्त ईशतां छिन्नेव नौर्बन्धनात् प्र प्लवस्व।।६।।
एता: एतन्त्याध्यो वार्षिकीरिव विद्युत: ।
तासां प्रतिग्रहो भव सायं गोष्ठे गवामिव ।।७।।
नि शीर्षतो नि पातित आध्यो वेशयामि ते ।
तास्त्वा समुत्तुदन्तीर्बोधयन्तीरुपासताम् ।।८।।
एतास्त आध्य: प्र हिणोमि ब्रह्मणा तृप्रा अश्रीपुरोगवा: ।
तास्त्वा तृणमिव शोषयानथो त्वा रोदयान् बहु ।।९।।

३-३८

अजो ह्यग्नेरजनिष्ट शोकात् सोऽपश्यज्जनितारमग्रे ।
तेन देवा देवतामग्र आयन् तेन रोहानरोहन्नुप मेधीयांस:।।१।।
क्रमध्वमग्निभिर्नाकमुख्यां हस्तेषु बिभ्रत: ।
दिवस्पृष्ठं स्वर्गत्वा मिश्रा देवेभिराध्वम् ।।२।।
अग्ने प्रेहि प्रथमो देवयतां चक्षुर्देवानामुत मर्त्यानाम् ।
इयक्षमाणा भृगुभि: सजोषस: स्वर्यन्तु यजमाना: स्वस्ति ।।३।।
स्वर्यन्तो नापेक्षन्त आ द्यां रोहन्तु राधस: ।
यज्ञं ये विश्वतोधारं सुविद्वांसो वितेनिरे ।।४।।
ओदनमनज्मि शवसा घृतेन दिव्यं समुद्रं पयसं बृहन्तम् ।
तेन गेष्म सुकृतस्य लोकं सरो रुहाणा अधि नाकमुत्तमम् ।।५।।
यौ ते पक्षावजरौ पतत्रिणौ याभ्यां रक्षांस्यपहंस्योदन ।
ताभ्यां पत्यास्म सुकृतस्य लोकं यत्रर्षय: प्रथमजा: पुराणा:।।६।।

यतस्तिष्ठो दिवस्पृष्ठे व्योमन्नध्योदन ।
अन्वायन् सत्यधर्माणो ब्राह्मणा राधसा सह ।।७।।
पृष्ठात् पृथिव्या अहमन्तरिक्षमारुहमन्तरिक्षाद्दिवमारुहम् ।
दिवो नाकस्य पृष्ठात् स्वर्ज्योतिरगामहम् ।।८।।
अजो ऽस्यज स्वर्गोसि त्वया लोकमङ्गिरस: प्र जानन् ।
तं लोकमनु प्र ज्ञेष्म ।।९।।
येना सहस्रं वहसि येन वा सर्ववेदसम् ।
तेनेमं यज्ञं नो वह स्वर्देवेषु गन्तवे ।।१०।।
अजं च पचत पञ्च चौदनान् ।
अजं पञ्चौदनं पक्त्वा देवा लोकान् समानशु: ।।११।।

३-३९

या ते प्रजापिहिता पुराभूद् ध्रुवेणाश्विनापतं भरामि ।
अग्निष्टे तामाद् यम: पुनर्दाद्वैश्वानर: परमस्माद् व्योम्न: ।।१।।
त्वं पति: शिवो ऽग्नेद्वितीयो ऽस्यै प्रजां जरदष्टिं सृजस्व ।
मुञ्चैनां ग्रह्या निर्ऋतिर्यद्बन्धाग्ने प्रजां प्रजाकामायै धेहि।।२।।
त्वामग्ने वृषभं वाशितेयमाच्य जानु पुत्रकामा सपर्यति ।
तामारोह सुमनस्यमान: प्रजापते: प्रजया सं सृजैनाम् ।।३।।
तुभ्यं नारी पुत्रकामेयमग्ने शुद्धं पूतं घृतमा जुहोति ।
तामधिस्कन्द वीरयस्व रेतोधा उग्र: प्रजया सं सृजैनाम्।।४।।
पर्वताद् दिवो योनेर्गात्राद्गात्रात् समाशृतम् ।
रेतो देवस्यदेवस्य त्सरौ पर्णमिवा धाम् ।।५।।
इन्द्रस्य जातस्य प्र पपात नाभिस्तामेको देव: प्रति जग्राह कामी।
त्वया वयं ब्राह्मणा: सोमपा: सूपयाम उत या न सूते।।६।।

३-४०

तेजनात् त्यजनं जातं तेजनं जायते शरात् ।
न येषति न शोचति यस्त्वा बिभर्ति तेजन ।।१।।
परुत्लमसि तेजन परुत्लन्ते प्रभञ्जनम् ।
परुत्लो अस्तु स कामो येनामून् कामयामहे ।।२।।
यावदोष: शरो अस्त्वोजनेभ्य: कृणवद्धयम् ।
तावदोषस्त्वन्तेजन त्यजनं भवतादिह ।।३।।
त्यजनं म आपो दधन् त्यजनं मरुतो दधन् ।
त्यजनं मे विश्वे देवास्त्यजनं पितरो दधन् ।।४।।
तेनाहमन्येषां स्त्रियो अत्याक्षं विद्विष: पुरा ।
पुरा द्विषो अत्याक्षं पुरा मध्यन्दिनादुत ।
पुरा सायत्वादत्याक्षं तेजने हि महद्बलम् ।।५।।
अस्थाद्द्यौरस्थात् पृथिव्यस्थाद्विश्वमिदं जगत् ।
अस्थादवहृदेवात्तिष्ठात् कामो अयं तव ।।६।।

*(इति षड्ऋचोनामतृतीयकाण्डेऽष्टमो ऽनुवाक:)*

**इत्यथर्ववेदे पैप्पलाद संहितायां षड्ऋचोनामतृतीय: काण्ड: समाप्त:**

# अथ सप्तर्चोनाम चतुर्थकाण्ड:

## ४-१

हिरण्यगर्भ: समवर्तताग्रे भूतस्य जात: पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतामुं तस्मै देवाय हविषा विधेम ।।१।।
य ओजोदा बलदा यश्च विश्व उपासते प्रशिषं यस्य देवा: ।
यस्य च्छायामृतं यस्य मृत्युस्तस्मै देवाय हविषा विधेम ।।२।।
य: प्राणतो निमिषतो विधर्ता पतिर्विश्वस्य जगतो बभूव ।
य ईशे ऽस्य द्विपदो यश्चतुष्पदस्तस्मै देवाय हविषा विधेम ।।३।।
येन द्यौरुग्रा पृथिवी च दृढ़ा येन स्व: स्तभितं येन नाक: ।
यो अन्तरिक्षं विममे वरीयस्तस्मै देवाय हविषा विधेम ।।४।।
य इमे द्यावापृथिवी तस्तभानाधारयदवसा रेजमाने ।
यस्मिन्नधि वितत एति सूर्यस्तस्मै देवाय हविषा विधेम ।।५।।
यस्य विश्वे हिमवन्तो महित्वा समुद्रं यस्य रसया सहाहु: ।
दिशो यस्य प्रदिश: पञ्च देवीस्तस्मै देवाय हविषा विधेम ।।६।।
आपो ह यस्य विश्वमायुर्दधाना गर्भं जनयन्त मातर: ।
तत्र देवानामधि देव आस्त एक स्थूणे विमिते दृढ़ उग्रे ।।७।।
आपो गर्भं जनयन्तीर्वत्समग्रे समैरयन् ।
तस्योत जायमानस्योल्ब आसीद्धिरण्यय: ।।८।।
हिरण्य उल्ब आसीद् योग्रे वत्सो अजायत ।
तं योन्योर्विद्रवन्त्यो: पर्यपश्यद् दितिर्मही ।।९।।

## ४-२

भूतो भूतेषु पय आ दधाति स भूतानामधिपतिर्बभूव ।
स ते मृत्युश्चरति राजसूयं स राजा राज्यमनु मन्यतामिदम् ।।१।।

अभि प्रेहि वीरयस्वोग्रश्चेत्ता सपत्नहा ।
आ तिष्ठ मित्रवर्धन तुभ्यं देवा अधि ब्रुवन् ।।२।।
आतिष्ठन्तं परि विश्वे अभूषञ्छ्रियं वसानश्चरति स्वरोचिः।
महत्तद् वृष्णो असुरस्य नामा विश्वरूपो अमृतानि तस्थौ।।३।।
एना व्याघ्रं परिषस्वजानाः सिंहं हिन्वन्ति महते सौभगाय ।
महिषं न सुभुवस्तस्थिवांसं मर्मृज्यन्ते द्वीपिनमप्स्वन्तः ।।४।।
व्याघ्रो अधि वैयाघ्रे वि क्रमस्व दिशो महीः ।
विशस्त्वा सर्वा आयन्त्वापो दिव्याः पयस्वतीः ।।५।।
या आपो दिव्याः पयसा मदन्ति या अन्तरिक्ष उत पार्थिवा याः।
तासां त्वा सर्वासामपामभि षिञ्चामि वर्चसा ।।६।।
अभि त्वा वर्चसा सिचं दिव्येन पयसा सह ।
यथासो मित्रवर्धनस्तथा त्वा सविता करत् ।।७।।

## ४-३

यत्ते चन्द्रं कश्यप रोचनावद् यत् संहितं पुष्कलं चित्रभानु ।
यस्मिन् सूर्या आर्पिताः सप्त साकं तस्मिन् राजानमधि वि श्रयेमम्।।१।।
येभिः शिल्पैः पप्रथानामदृंहो येभिर्दिवमभ्यपिंशः प्रविद्वान् ।
येभिर्वाचं पुष्कलैरव्ययस्तेन मागने वर्चसा सं सृजेह ।।२।।
येभिः सूर्य आतपति प्रकेतुभिर्येभिरग्निर्ददृशे चित्रभानुः ।
येभिरापश्चन्द्रवर्णा अजिन्वन् तेन मागने वर्चसा सं सृजेह ।।३।।
आयं भातु प्रदिशः पञ्च देवीरिन्द्र इव ज्येष्ठो भवतु प्रजानाम् ।
अस्मिन् धेहि पुष्कलं चित्रभान्वयं पृणातु रजसोरुपस्थम् ।।४।।
अनु त्वेन्द्रोवत्वनु बृहस्पतिरनु त्वा सोमो अन्वग्निरावीत् ।
अनु त्वा विश्वे अवन्तु देवाः सप्त राजानो य उदाभिषिक्ताः।।५।।

अनु त्वा मित्रावरुणेहावतामनु द्यावापृथिवी ओषधीभिः ।
सूर्योहोभिरनु त्वावतु चन्द्रमा नक्षत्रैरनु त्वेदमावीत् ।।६।।
द्यौश्च त्वा पृथिवी च प्रचेतसौ शुक्रो बृहन् दक्षिणा त्वा पिपर्तु।
अनु स्वधा चिकितां सोमो अग्निः पूषा त्वावतु सविता सवेन ।।७।।

४-४

स्तुवानमग्न आ नय यातुधानं किमीदिनम् ।
त्वं हि देवान्तितो हन्ता दस्योर्बभूविथ ।।१।।
आज्यस्य परमेष्ठिन् जातवेदस्तनूवशिन् ।
अग्ने तौलस्य प्राशान् यातुधानान् वि लापय ।।२।।
वि लपन्तु यातुधाना अत्रिणो ये किमीदिनः ।
अथेदमग्ने नो हविरिन्द्रश्च प्रति हर्यतम् ।।३।।
अग्निः पुरस्तादा यच्छतु प्रेन्द्रो नुदतु बाहुमान् ।
ब्रवीतु सर्वो यातुमानयमस्मीत्येत्य ।।४।।
पश्यामि ते वीर्या जातवेदः प्र णो ब्रूहि यातुधानान् नृचक्षः।
त्वया सर्वे परितप्ताः पुरस्तादा यन्तु प्रब्रुवाणा उपेदम्।।५।।
आ रभस्व जातवेदो हृदः कामाय रन्धय ।
दूतो नो अग्निरुत्तिष्ठ यातुधानानिहा नय ।।६।।
त्वमग्ने यातुधानानुपबद्धानिहा नय ।
अथैषामिन्द्रो वज्रेणापि शीर्षाणि वृश्चतु ।।७।।
इदं हविर्यातुधानान्नदी फेनमिवा वहात् ।
यदीदं स्त्री पुमानकरिह स स्तुवतां जनः ।।८।।
यातुधानस्य सोमप जहि प्रजां नयस्व च ।
निष्टुवानस्य पातय परमक्ष्युतावरम् ।।९।।
अयं स्तुवान आगमत्तं स्मोत प्रति हर्यत ।
बृहस्पते वशे कृथा अग्नीषोमा वि विध्यतम् ।।१०।।

## ४-५

यां त्वा गन्धर्वो अखनद् वरुणाय मितभ्रजे ।
तां त्वा वयं खनामस्योषधिं शेपहर्षणीम् ।।१।।
वृषणस्ते खनितारो वृषा त्वमस्योषधे ।
वृषासि वृष्ण्यावती वृषणे त्वा खनामसि ।।२।।
उदुषा उदु सूर्य उच्छुष्मा ओषधीनाम् ।
उदेजति प्रजापतिर्वृषा शुष्मेण वाजिना ।।३।।
ऊर्ध्वश्राणमिदं कृधि यथा स्म ते विरोहतो अभितप्तमिवानति।
ततस्ते शुष्मवत्तरमियं कृणोत्वोषधि: ।।४।।
अपां रस ओषधीनामथो वनस्पतीनाम् ।
अथो सोमस्य भ्रातास्याश्र्यमसि वृष्ण्यम् ।।५।।
अश्वस्य ऋश्यस्य बस्तस्य पुरुषस्य च ।
य ऋषभस्य वाजस्तमस्मै देह्योषधे ।।६।।
सं वाजा ऋषभाणां सं शुष्मा ओषधीनाम् ।
सं पूषामिन्द्र वृष्ण्यमस्मै धेहि तनूबलम् ।।७।।
अद्याग्ने अद्य सवितरद्य देवि सरस्वति ।
अद्या मे ब्रह्मणस्पते धनुरिवा तानया पस: ।।८।।
ऊर्ध्वास्तिष्ठन्ति गिरय ऊर्ध्वा वाता उदीरते ।
ऊर्ध्वोयं मामको मयूख इवाधि भूम्याम् ।।९।।
उत्तिष्ठोग्र वि धूनुष्व वि तेघ्ना यन्तु नाड्य: ।
अतन्द्रो अश्वपा इव नावग्लायो ऽधि मुष्कयो: ।।१०।।

*(इति सप्तर्चोनामचतुर्थकाण्डे प्रथमो ऽनुवाक:)*

४-६

हिरण्यश्रृङ्गो वृषभो य: समुद्रादुदाचरत् ।
तेना सहस्येना वयं नि जनान्त्स्वापयामसि ।।१।।
न भूमिं वातो ऽति वाति नाति तपति सूर्य: ।
जनांश्च सर्वान् स्वापय शुनश्चेन्द्रसखा चरन् ।।२।।
वह्येशया: प्रोष्ठेशया नारीर्यास्तल्पशीवरी: ।
स्त्रियो या: पुण्यगन्धास्ता: सर्वा: स्वापयामसि ।।३।।
एजदेजदजग्रभं चक्षु: प्राणमजग्रभम् ।
अङ्गान्यग्रभं सर्वा रात्रीणामतिशर्वरे ।।४।।
य आस्ते यश्च चरति यश्च तिष्ठन् विपश्यति ।
तेषां सं दध्मो अक्षाणि यथेदं हर्म्यं तथा ।।५।।
स्वप्तु माता स्वप्तु पिता स्वप्तु श्वा स्वप्तु विश्पति: ।
स्वपन्तु सर्वे ज्ञातय: सर्वं नि ष्वापया जनम् ।।६।।
स्वप्न स्वप्नाभिकरणेन सर्वं नि ष्वापया जनम् ।
ओत्सूर्यमन्यान् स्वापयाव्युषं चरतादहमिन्द्र इवारिष्टो अक्षित:।।७।।

४-७

अक्षीभ्यां ते नासिकाभ्यां कर्णाभ्यामास्यादुत ।
यक्ष्मं शीर्षण्यं मस्तिष्काल्ललाटाद् वि वृहामसि ।।१।।
ग्रीवाभ्यस्त उष्णिहाभ्य: कीकसाभ्यो अनूक्यात् ।
यक्ष्मं दोषण्यमंसाभ्यामुरस्तो वि वृहामसि ।।२।।
क्लोम्नस्ते हृदय्याभ्यो हलीक्ष्णात् पार्श्वाभ्याम् ।
यक्ष्मं मतस्नाभ्यां प्लीह्नो यक्नस्ते वि वृहामसि ।।३।।
आन्त्रेभ्यस्ते गुदाभ्यो वनिष्ठोरुदरादुत ।
यक्ष्मं पाण्यरङ्गुलिभ्यो नखेभ्यो वि वृहामसि ।।४।।

अस्थिभ्यस्ते मांसेभ्य: स्नावभ्यो धमनिभ्य: ।
यक्ष्मं पृष्टिभ्यो मज्जभ्यो नाभ्या वि वृहामसि ।।५।।
ऊरुभ्यां ते अष्ठीवद्भ्यां पार्ष्णिभ्यां प्रपदाभ्याम् ।
यक्ष्मं भसद्यं श्रोणिभ्यां भंससो वि वृहामसि ।।६।।
अङ्गादङ्गाल्लोम्नोलोम्नो बद्धं पर्वणिपर्वणि ।
यक्ष्मं त्वचस्यन्ते वयं विष्वञ्चं वि वृहामसि ।।७।।
अङ्गादङ्गादहं तव परुष: परुषस्परि ।
कश्यपस्य विवृहेण यक्ष्मन्ते वि वृहामसि ।।८।।

४-८

अग्नी रक्षोहा तिग्मस्तिग्मशृङ्ग ऋषिरार्षेय: कवि: कवितम: ।
अपाघशंसं नुदतां सहतामरातिं प्रत्यक्
प्रतिहरणेनाधायते ऽघं प्रति हराम: ।।१।।
इन्द्रो रक्षोहा तिग्मस्तिग्मशृङ्ग ऋषिरार्षेय: कवि: कवितम: ।
अपाघशंसं नुदतां सहतामरातिं प्रत्यक्
प्रतिहरणेनाधायते ऽघं प्रति हराम: ।।२।।
सोमो रक्षोहा तिग्मस्तिग्मशृङ्ग ऋषिरार्षेय: कवि: कवितम: ।
अपाघशंसं नुदतां सहतामरातिं प्रत्यक्
प्रतिहरणेनाधायते ऽघं प्रति हराम:।।३।।
वरुणो रक्षोहा तिग्मस्तिग्मशृङ्ग ऋषिरार्षेय: कवि: कवितम:।
अपाघशंसं नुदतां सहतामरातिं प्रत्यक्
प्रतिहरणेनाधायते ऽघं प्रति हराम:।।४।।
वायू रक्षोहा तिग्मस्तिग्मशृङ्ग ऋषिरार्षेय: कवि: कवितम: ।
अपाघशंसं नुदतां सहतामरातिं प्रत्यक्
प्रतिहरणेनाधायते ऽघं प्रति हराम:।।५।।

त्वष्टा रक्षोहा तिग्मस्तिग्मशृङ्ग ऋषिरार्षेय: कवि: कवितम:।
अपाघशंसं नुदतां सहतामरातिं प्रत्यक्
प्रतिहरणेनाघायते ऽघं प्रति हराम:।।६।।
धाता रक्षोहा तिग्मस्तिग्मशृङ्ग ऋषिरार्षेय: कवि: कवितम: ।
अपाघशंसं नुदतां सहतामरातिं प्रत्यक्
प्रतिहरणेनाघायते ऽघं प्रति हराम:।।७।।
सविता रक्षोहा तिग्मस्तिग्मशृङ्ग ऋषिरार्षेय: कवि: कवितम:।
अपाघशंसं नुदतां सहतामरातिं प्रत्यक्
प्रतिहरणेनाघायते ऽघं प्रति हराम:।।८।।
सूर्यो रक्षोहा तिग्मस्तिग्मशृङ्ग ऋषिरार्षेय: कवि: कवितम: ।
अपाघशंसं नुदतां सहतामरातिं प्रत्यक्
प्रतिहरणेनाघायते ऽघं प्रति हराम:।।९।।
चन्द्रमा रक्षोहा तिग्मस्तिग्मशृङ्ग ऋषिरार्षेय: कवि: कवितम:।
अपाघशंसं नुदतां सहतामरातिं प्रत्यक्
प्रतिहरणेनाघायते ऽघं प्रति हराम:।।१०।।
बृहस्पती रक्षोहा तिग्मस्तिग्मशृङ्ग ऋषिरार्षेय: कवि: कवितम:।
अपाघशंसं नुदतां सहतामरातिं प्रत्यक्
प्रतिहरणेनाघायते ऽघं प्रति हराम:।।११।।
प्रजापती रक्षोहा तिग्मस्तिग्मशृङ्ग ऋषिरार्षेय: कवि: कवितम:।
अपाघशंसं नुदतां सहतामरातिं प्रत्यक्
प्रतिहरणेनाघायते ऽघं प्रति हराम:।।१२।।
परमेष्ठी रक्षोहा तिग्मस्तिग्मशृङ्ग ऋषिरार्षेय: कवि: कवितम:।
अपाघशंसं नुदतां सहतामरातिं प्रत्यक्
प्रतिहरणेनाघायते ऽघं प्रति हराम:।।१३।।

४-९

संवसव इति वो नामधेयमुग्रंपश्या राष्ट्रभृतो ह्यक्षा: ।
तस्मै त इन्द्रो हविषा विधेम वयं स्याम पतयो रयीणाम् ।।१।।
इदमुग्राय बभ्रवे यो ऽक्षेषु तनूवशी ।
कृतेन कलिं शिक्षाणि स नो मृड़ातीदृशे ।।२।।
घृतमग्ने अप्सराभ्यो वह त्वं पांशूनक्षेभ्य: सिकता अपश्च ।
यथाभगं हव्यदातिं जुषाणा मदन्तु देवा उभयानि हव्या ।।३।।
यो नो देवो धनमिदं दिदेश यो अक्षाणां ग्रहणं शेषणञ्च ।
स नोवतु हविरिदं जुषाणो गन्धर्वै: सधमादं मदेम ।।४।।
या अप्सरस: सधमादं मदन्त्यन्तरा हविर्धानं सूर्यं च ।
ता नो हस्तौ कृतेन सं सृजन्तु सपत्नं न: कितवं रन्धयन्तु।।५।।
यद् देवान्नाथितो हुवे ब्रह्मचर्यं यदूषिम ।
अक्षां यद् बभ्रूनालभे ते नो मृड़न्त्वीदृशे ।।६।।
आदिनवं प्रतिदीव्ने कृतेनास्माङ् अभि क्षर ।
वृक्षमिवाशन्या जहि यो अस्मान् प्रतिदीव्यति ।।७।।

४-१०

भगस्त्वेतो नयतु हस्तगृह्य बृहस्पति: पुर एता ते अस्तु ।
देवस्त्वा सविता सत्यधर्मोपसद्यां नमस्यां कृणोतु ।।१।।
यामश्विना मधुकशां देवा अग्रे अजनयन् ।
तया त्वा पत्यामोतां कृण्मो मधुमतीं वयम् ।।२।।
उत्तरा श्वश्रुवा भव ननान्दुरुपशिक्षया ।
यशस्त्वा पत्यां कृण्मो भवा देवृषु प्रिया ।।३।।
अद्भिरात्मानं तन्वं शुम्भमाना गृहान् प्रेहि महिषी भवासि ।
तत्र त्वादुर्गार्हपत्याय देवा: प्रजावती जरदष्टिर्यथास: ।।४।।

उदुत्तरमारोहन्ती व्यस्यन्ती पृतन्यत: ।
अभ्यष्टा: शत्रोर्मूर्धानं सहपुत्रा विराड् भव ।।५।।
श्वश्रूणां श्वशुराणां गृहाणाञ्च भगस्य च ।
वि राज पत्यां देवृषु सजातानां विराड् भव ।।६।।
यद् गिरिषु पर्वतेषु गोष्वश्वेषु यन् मधु ।
येनाक्षा अभ्यषिच्यन्त तेनाहमस्या मूर्धानमभि षिञ्चामि नार्या: ।।७।।
यद् वर्चो गवि कल्याणे यद् वा सूयवसे तृणे ।
अभ्यञ्जनस्य यद् वर्चस्तेन मानज्मि वर्चसा ।।८।।

*(इति सप्तर्चोनामचतुर्थकाण्डे द्वितीयो ऽनुवाक:)*

४-११

येनाचरदुशना काव्योग्रे विद्वान् ऋतूनामुत देवतानाम् ।
सहृदयेन हविषा जुहोमि सध्रीचीनं वो मनो ऽस्तूग्रम् ।।१।।
महत् सत्यं महद्धविरुशना काव्यो महान् ।
देवानामुग्राणां सतां हृदयानि सहाकरम् ।।२।।
अहं सत्येन सयुजा चराम्यहं देवीमनुमतिं प्र वेद ।
इन्द्रो देवानां हृदयं वो अस्तु सध्रीचीनं वो मनो ऽस्तूग्रम्।।३।।
त्वष्टा वायु: कश्यप इन्द्रमग्निर्मनसान्वायन् हविषस्पदेन ।
अविन्दञ्छक्रं रजसि प्रविष्टं सध्रीचीनं वो मनो ऽस्तूग्रम् ।।४।।
येनेमे द्यावापृथिवी विचष्कभुर्येनाभवदन्तरिक्षं स्वर्यत् ।
मनसा विद्वान् हविषा जुहोमि सध्रीचीनं वो मनो ऽस्तूग्रम्।।५।।
द्यावापृथिवी हृदयं ससूवतुर्येनेदं त्वष्टा विकृणोति धीर: ।
तस्योशना ऋतुभि: संविदानश्चित्तं विवेद मनसि प्रविष्टम् ।।६।।
चित्तं चैतदाकूतिश्च येन देवा विषेहिरे ।
एतत् सत्यस्य श्रद्धय ऋषय: सप्त जुह्वति ।।७।।

४-१२

त्वया मन्यो सरथमारुजन्तो हर्षमाणासो हृषिता मरुत्वन् ।
तीक्ष्णेषव आयुधा संशिशाना उप प्र यन्तु नरो अग्निरूपा: ।।१।।
अग्निरिव मन्यो तरसा सहस्व सेनानीर्न: सहुरे हूत एधि ।
जित्वाय शत्रून् वि भजासि वेद ओजो मिमानो वि मृधो नुदस्व ।।२।।
सहस्व मन्यो अभिमातिमस्मे रुजन् मृणन् प्रमृणन्नेहि शत्रून् ।
उग्रं ते शर्धो नन्वा रुरुध्रे वशी वशं नयासा एकज त्वम् ।।३।।
एको बहूनामसि मन्यवीड़िता पशून्पशून् युद्धाय सं शिशाधि ।
अकृत्तरुक् त्वया युजा वयं द्युमन्तं घोषं विजयाय कृण्महे।।४।।
विजेषकृदिन्द्र इवानवब्रवो ऽस्माकं मन्यो अधिपा भवेह ।
प्रियं ते नाम सहुरे गृणीमसि विद्मा तमुत्सं यत आबभूविथ ।।५।।
आभूत्या सहसा वज्र सायक सहो बिभर्ष्यभिभूत उत्तरम् ।
क्रत्वा नो मन्यो सह मेद्येधि महाधनस्य पुरुहूत संसृजि ।।६।।
संसृष्टं धनमुभयं समाकृतमस्मभ्यं दत्तं वरुणश्च मन्यो ।
भियो दधाना हृदयेषु शत्रव: पराजिता यन्तु परमां परावतम् ।।७।।

४-१३

शं नो देवी पृश्निपर्ण्यशं निर्ऋतये करत् ।
उग्रा हि कण्वजम्भनी तां त्वाहार्षं सहस्वतीम् ।।१।।
सदान्वाघ्नी प्रथमा पृश्निपर्ण्यजायत ।
तया कण्वस्याहं शिरश्छिनद्मि शकुनेरिव ।।२।।
ऊर्जभृतं प्राणभृतं प्रजानामुत तर्पणीम् ।
सर्वास्ता: पृश्निपर्णीत: कण्वामा अनीनशत् ।।३।।
समाकृत्यैना निरज तीक्ष्णशृङ्ग इव ऋषभ: ।
अरायं कण्वं पाप्मानं पृश्निपर्णि सहस्वति ।।४।।

त्वमग्रे पृश्निपर्ण्यग्निरिव प्रदहन्निहि कण्वा जीवितयोपनी ।
गिरिमेना आ वेशय तमांसि यत्र गच्छांस्तत् पापीरपि पादय।।५।।
अरायमसृक्पावानं यश्च स्फातिं जिहीर्षति ।
गर्भादं कण्वं नाशय पृश्निपर्णि सहस्वति ।।६।।
या नो गा या नो गृहां या नः स्फातिमुपाहरान् ।
ता उग्रे पृश्निपर्णि त्वं कण्वामा नीनश इत: ।।७।।

४-१४

यस्मिन्नाशी: प्रतिहित इदं तच्छल्यो वेणुर्वेष्टनं तेजनं च ।
सूनुर्जनित्रीं जनयेहि शृण्वन्नयं त आत्मेत इत प्रहित: ।।१।।
अस्थि भित्त्वा यदि मज्ज्ञ: प्रपाथ यदि वासि रत: पुरुषन्तिकामे ।
उर्वीं गव्यूतिमभ्येह्यर्वाङ् पश्चा रश्मीनुद्यत: सूर्यस्य ।।२।।
मातरिश्वा पवमानस्त्वायं सूर्य आभ्राजन् तन्वा दृशे ऽक: ।
अस्नो गन्धात् पुवस: प्र च्यवस्व वि मुच्यस्व योन्या या ते अत्र।।३।।
प्र च्यवस्वातो अध्येह्यर्वाङ् अर्थास्ते विद्म बहुधा बहिर्ये ।
इमा: स्वसारो अयमित् पिता त इयं ते मातेममेहि बन्धुम् ।।४।।
अमित्रैरस्ता यदि वासि मित्रैर्देवैर्वा देवि प्रहितावसृष्टा ।
विद्वान् शृङ्गं पुरुषे जहाथ वाण: शृङ्ग: शिखर: सं सतामित:।।५।।
सिखासु सक्तो यदि वास्यग्रे यदि वासि सक्त: पुरुषस्य मांसे ।
दधिर्न पाशाङ् अपवृह्य मुक्त्वाक्षिशल्य: कृणुतामायनाय।।६।।
हस्ताद्धस्तं समयो भ्रियमाणो बहिष्ट्वा पश्यां वीरुधां बलेन ।
अद्भि: प्रणिक्त: शयासा अभ्यक्त: कोशे जामीनां निहितो अहिंस:।।७।।
षष्टिरात्रे षष्टिकस्य शल्यस्य परिधिष्कृत: ।
इतस्तमद्य ते वयमास्थानाच्च्यावयामसि ।।८।।

४-१५

सं मज्जा मज्ज्ञा भवतु समु ते पुरुषा परुः ।
सं ते राष्ट्रस्य विस्रस्तं सं स्नाव समु पर्व ते ।।१।।
मज्जा मज्ज्ञा सं धीयतामस्थ्नास्थ्यपि रोहतु ।
स्नाव ते सं दध्मः स्नाव्ना चर्मणा चर्म रोहतु ।।२।।
लोम लोम्ना सं धीयतां त्वचा सं कल्पया त्वचम् ।
असृक्ते अस्ना रोहतु मांसं मांसेन रोहतु ।।३।।
रोहिणी संरोहिण्यस्थ्नः शीर्णस्य रोहिणी ।
रोहिण्यामह्नि जातासि रोहिण्यस्योषधे ।।४।।
यदि शीर्णं यदि द्युत्तमस्ति पेष्ट्रं त आत्मनः ।
धाता तत् सर्वं कल्पयात् सं दधत् परुषा परुः ।।५।।
यदि वज्रो विसृष्टस्त्वार काटात् पतित्वा यदि वा विरिष्टम्।
वृक्षाद् वा यदवसद्दशशीर्ष ऋभू रथस्येव सं दधामि ते परुः।।६।।
उत्तिष्ठ प्रेहि समिधाय ते परुः सं ते धाता दधातु तन्वो विरिष्टम् ।
रथः सुचक्रः सुपविर्यथैति सुखः सुनाभिः प्रति तिष्ठ एवम् ।।७।।

*(इति सप्तर्चोनाम चतुर्थकाण्डे तृतीयो ऽनुवाकः)*

४-१६

उद्यन्नादित्यो घुणान् हन्तु सूर्यो निम्रोचन्रश्मिभिर्हन्तु ।
तावन्नो अधि संहितम् ।।१।।
अप्सरा मूलमखनद् गन्धर्वः पर्यब्रवीत् ।
तेन वो वृत्रहां सूर्यो नि जम्भ्यां अम्रुचद् घुणान् ।।२।।
घुणान् हन्त्वायती घुणान् हन्तु परायती ।
घुणानवघ्नती हन्तु घुणान् पिनष्टु पिंषती ।।३।।

घुणा न किञ्चनेह व: प्रतिबुद्धा अभूतन ।
प्रदोषं तस्करा इव ।।४।।
घुणानामद्यतो ज्येष्ठ: कनिष्ठ उत मध्यम: ।
हता व: सर्वे ज्ञातयो हता माता हत: पिता ।।५।।
यथा फेन उदकेन ददृशानो निजस्यति ।
एवा वयं घुणान् सर्वान् साकं वाचा नि जासयामसि ।।६।।
नि गावो गोष्ठे असदन्नि मृगासो अविक्षत ।
नित्यमादित्य रश्मिभिर्घुणान् सर्वानजीजस: ।।७।।
उद्यन् रश्मीना तनुष्व वाणवद्भि: समर्पय ।
घुणांस्त्वं सर्वानादित्य घोरया तन्वा तप ।।८।।

४-१७

य आनत: पराणतो दारोरिवापतक्षणम् ।
शर्कोटो नाम वा असि कुतस्त्वं विषवानस: ।।१।।
य उभयेन प्रहरसि पुच्छेन चास्येन च ।
आस्ये च न ते विषं कुतस्ते पुच्छधावसत् ।।२।।
विदुत्सुरस्य दानवस्य तस्य त्वं नपादसि ।
तस्याग्रेरसं विषं ततस्तुवारसं विषम् ।।३।।
अरसारसं त्वाकरं वध्रे वध्रिं त्वाकरम् ।
वध्रिं त्वा चक्रुर्देवा अमृतास आसुरम् ।।४।।
इयत्तक: कुसुम्भकस्तकं भिनद्मि शम्यया ।
ततो विषं परासिचमपाचीमनु संवतम् ।।५।।
इमा: पञ्चा मयूर्य: सप्त स्वसारो अग्रुव: ।
तास्ते विषं वि जह्रिर उदकं कुम्भिनीरिव
कूपात् कुलजनीरिव ।।६।।

नवानां नवतीनां विषस्य रोपुषीणाम् ।
सर्वासामग्रभं नाम वीतापेतारसं विषम् ।।७।।

४-१८

व्रातमहमपक्ष्णानां व्रातं मुण्डीयसामुत ।
व्रातं मुण्डिव्लानामहं प्र ध्वाङ्क्षाङ् इव चातये ।।१।।
प्रवक्ता प्रमादैता निद्रातन्द्रीस्तृतीयकः ।
तान् जङ्गिड़स्याग्निना सर्वान् प्रति दहामसि ।।२।।
अशुद्धान्नः परि पाहि रक्षोभ्य उत जङ्गिड़ ।
यातुधानात् किमीदिनस्तस्मान्नः पाहि जङ्गिड़ ।।३।।
अप्सराभ्यो गन्धर्वेभ्यो देवेभ्यो असुरेभ्यः ।
अथो सर्वस्मात् पाप्मनस्तस्मान्नः पाहि जङ्गिड़ ।।४।।
नि ते शत्रून् दहति देवो अग्निर्निररातिममतिं यातुधानान् ।
आ याहि शत्रून् दुरितापघ्नञ्छतान्नो
यक्ष्मेभ्यः परि पाहि जङ्गिड़।।५।।
अकर्माग्निमधिपामस्य देवमन्वा रप्सि सहसा दैव्येन ।
सहस्वान्नः सहसा पातु जङ्गिड़ो यथा जयेम पृतनाज्येषु ।।६।।
सत्यो अग्निः सत्या आपः सत्येमे द्यावापृथिवी विश्वसंभुवौ।
सत्यमिदं ब्रह्मास्माकं कृतमस्तु यमबध्नादुशनेन्द्राय
तं ते बध्नामि जङ्गिड़म् ।।७।।

४-१९

इयत्तिका शकुन्तिका सका जघास ते विषम् ।
माहं मृषि मो असौ पुरुषो मृत ।
स च न मरति मा वयं मराम ।
आरे अस्य योजनं हरिष्ठा मधु त्वा मधुला करत् ।।१।।

सूर्ये विषमा सृजामि दृतिं सुरावतो गृहे ।
माहं मृषि मो असौ पुरुषो मृत ।
स च न मरति मा वयं मराम ।
आरे अस्य योजनं हरिष्ठा मधु त्वा मधुला करत् ।।२।।
त्रिषप्ता विस्फुलिङ्गका विषस्य पुष्पकमक्षन् ।
माहं मृषि मो असौ पुरुषो मृत ।
स च न मरति मा वयं मराम ।
आरे अस्य योजनं हरिष्ठा मधु त्वा मधुला करत् ।।३।।
आल्वन्तरुटं विषं विदारी करम्भो अरसं विषम् ।
माहं मृषि मो असौ पुरुषो मृत ।
स च न मरति मा वयं मराम ।
आरे अस्य योजनं हरिष्ठा मधु त्वा मधुला करत् ।।४।।
वारुग्रमरसं विषमग्निश्च विषचर्षणिम् ।
माहं मृषि मो असौ पुरुषो मृत ।
स च न मरति मा वयं मराम ।
आरे अस्य योजनं हरिष्ठा मधु त्वा मधुला करत् ।।५।।
शकुन्तिका मे अब्रवीद् विषपुष्पं धयन्तिका ।
माहं मृषि मो असौ पुरुषो मृत ।
स च न मरति मा वयं मराम ।
आरे अस्य योजनं हरिष्ठा मधु त्वा मधुला करत् ।।६।।
न रोपयति न मादयति न विषं हन्ति पुरुषम् ।
माहं मृषि मो असौ पुरुषो मृत ।
स च न मरति मा वयं मराम ।
आरे अस्य योजनं हरिष्ठा मधु त्वा मधुला करत् ।।७।।

नवानां नवतीनां विषस्य रोपुषीणाम् ।
सर्वासामग्रभं नाम वीतापेतारसं विषम् ।।८।।

४-२०

मधुमती पत्ये अस्मि जाराय मधुमत्तरा ।
अथो मधव्यं मे भंसो मधु निपदने अहम् ।।१।।
मधुना मा सं सृजामि मासरेण सुरा इव ।
वाङ्म इयं मधुना संसृष्टाक्षौ मे मधुसंदृशी ।।२।।
मधु द्यौर्मधु पृथिवी मध्विन्द्रो मधु सूर्यः ।
स्त्रियो या जज्ञिरे मधु ताभ्योहं मधुमत्तरा ।।३।।
मधुमतीरोषधय आपो मधुमतीरुत ।
गावो या जज्ञिरे मधु ताभ्योहं मधुमत्तरा ।।४।।
मधोर्जातो मधुघो वीरुधां बलवत्तमः ।
तेनाहं सर्वस्मै पुंसे कृण्वे निकरणं हृदि ।।५।।
यथाश्व बन्धनेष्ठो वड़वामभिधावति ।
एवा त्वमुग्र ओषधेमुं कनिक्रदतमा नय ।।६।।
अङ्गो नु मोदिव श्वसो अङ्गो नु मोदिव स्तनः ।
अन्या विवित्स मा नो अन्याः परा जिघांसन् ।
मामनु प्र ते मनश्छाया यन्तुमिवान्वयत् ।।७।।

*(इति सप्तर्चोनामचतुर्थकाण्डे चतुर्थो ऽनुवाकः)*

४-२१

खनन्ति त्वा तैमाता दासा अरसबाहवः ।
दास्यसि प्रक्रीरस्युत्खातमरसं विषम् ।।१।।
अदन्ति त्वा कक्कटासः कुरुङ्गा अधि सानुषु ।
पापी जग्धप्रसूरस्यभ्रिखाते न रुरुपः ।।२।।

अव ज्यामिव धन्वन: शुष्मं तिरामि ते विष ।
प्र रोपीरस्य पातय सूर्य: पूर्वा इवोषस: ।।३।।
सिन्धु: पश्चात् परिहित: सूर्यस्योदयनं पुर: ।
ततो यदन्तरा वनं तत् सर्वं विषदूषणम् ।।४।।
मधु त्वा मधुकृत् कृणोतु पितुं त्वा पितुकृत् कृणोतु ।
उतो निषद्य पातवे अथो ऊर्ध्वाय तिष्ठते ।।५।।
जघास त्वा लोमकर्णस्तन्यासपरुरुष्णियाम् ।
तद्धैमीश्चक्रिरे स्रज: सर्वं महिषदो विषम् ।।६।।
उर्व्या उरुक्षितस्तुराया आतुरस्य च ।
भूम्या हि जग्रभं नाम विषं वारयतामिति
विषं दूषयतादिति ।।७।।

४-२२

अहं वा इन्द्रमातरमिन्द्रौजामिन्द्रभ्रातरम् ।
इन्द्राधिवक्त्रां वीरुधमाहार्षं विषदूषणीम् ।।१।।
यत् किञ्च पद्रुच्छफवद् यत् काण्डि यच्च पुष्पवत् ।
यदेजति प्रजापति: सर्वं तद्विषदूषणम् ।।२।।
सिन्धु: पश्चाद्वरुण: सूर्यस्योदयनं पुर: ।
ततो यदन्तरा विषं तद् वाचा दूषयामसि ।।३।।
यावत् सूर्यो वितपति यवच्चाभि विपश्यति ।
तावद् विषस्य दूषणं वचो निर्मन्त्रयामहे ।।४।।
जिह्वा मे मधुसंस्रावा जिह्वा मे मदुवादिनी ।
जिह्वे वर्चस्वती भव माप ते पुरुषो रिषत् ।।५।।
हा है कल्याणि सुभगे पृश्निपर्ण्यनातुरे ।
इमं मे अद्य पूरुषं दीर्घायुत्वायोन्नय ।।६।।

याभ्यो बर्षन्ति वृष्टयो याभिर्जीवन्त्यघ्न्या: ।
ता मे विषस्य दूषणी: सविता व्यकाशयत् ।।७।।

४-२३

प्रजापतिष्ट्वा बध्नात् प्रथममस्तृतं वीर्याय कम् ।
तं ते बध्नाम्यायुषे वर्चस ओजसे च बलाय
चास्तृतस्त्वाभि रक्षतु।।१।।
ऊर्ध्वस्तिष्ठ रक्षन्नप्रमादमस्तृतेमं मा त्वा
दभन् पणयो यातुधाना:।
इन्द्र इव दस्यूनव धूनुष्व पृतन्यत: सर्वाञ्छत्रून्
वि षहस्वास्तृतस्त्वाभि रक्षतु ।।२।।
शतं च न: प्रहरन्तो ऽभिघ्नन्तो न तस्तिरे ।
तस्मिन्निन्द्र: पर्यधत्त चक्षु: प्राणमथो
बलमस्तृतस्त्वाभि रक्षतु ।।३।।
इन्द्रस्य त्वा वर्मणा परि धापयामो
यो देवानामधिराजो बभूव ।
पुरस्त्वा देवा: प्र णयन्तु सर्वे ऽस्तृतस्त्वाभि रक्षतु ।।४।।
अस्मिन्मणावेकशतं वीर्याणि सहस्रं प्राणा अस्मिन्नस्तृते ।
व्याघ्र: शत्रूनधि तिष्ठ सर्वान् यस्त्वा
पृतन्यादधर: सोऽस्त्वस्तृतस्त्वाभि रक्षतु ।।५।।
घृतादुलप्तो मधुमान् पयस्वान् सहस्रं प्राण: शतयोनिर्वयोधा:।
शम्भूश्च मयोभूश्चोर्जस्वांश्च पयस्वांश्चास्तृतस्त्वाभि रक्षतु ।।६।।
यथा त्वमुत्तरो असो असपत्न: सपत्नहा ।
सजातानामसो वशी तथा त्वा सविता
करदस्तृतस्त्वाभि रक्षतु ।।७।।

४-२४

अपश्च रपश्चोष्मा च बाष्पश्च ।
शोकश्चाभीशोकश्च तृतीयेकश्च परेपरश्च
ते तक्मान इतो नश्यत ।।१।।
वेद वै ते तक्मन्नामाग्निष्टं नामासि ।
तं त्वेतोप नयामः शनि तक्मा ।।२।।
वृत्रस्य हरोसि नभसो नपात् ।
द्यौश्चास्मत् पृथिवी च तक्मानं नाशयतामितः ।।३।।
पञ्चप्सिनिर्नाम ते माता स उ एकप्सिनिरुच्यसे ।
तस्याहं वेद ते नाम स तक्मन् निरतो द्रव ।।४।।
औदुम्बलश्च नामासि प्रियातिथिश्च ।
तं त्वेतो नाशयामसि ब्रह्मणा वीर्यावता ।।५।।
यो ऽसि जल्पश्च लपंश्चावां च तपश्च ।
तृतीयेकश्च मौञ्जिगलश्च ते तक्मान इतो नश्यत ।।६।।
विकिलीत विलोहित विकाशक्रंदरज्जन ।
गिरिं गच्छ धूमकेतो हृषे नमांसि सन्तु ते ।।७।।
बृहत् त्वमग्ने रक्षो अधमं जहि मध्यमं न्युत्तमं शृणीहि ।
शं नो अग्निर्ज्योतिरनीको अस्तु शं द्यावापृथिवी अनेहसा।।८।।
मातेव पितेवाभि रक्षतैनं मुञ्चतैनं पर्यंहसः ।।९।।

४-२५

वाताज्जातो अन्तरिक्षाद् विद्युतो ज्योतिषस्परि ।
स नो हिरण्यजाः शङ्खः कृशनः पात्वंहसः ।।१।।
हिरण्यानामेकोसि सोमादधि जज्ञिषे ।
रथेसि दार्शत इषुधौ रोचनस्त्वम् ।।२।।

यो अग्रतो रोचनावान् समुद्रादधि जज्ञिषे ।
शङ्खेन हत्वा रक्षांस्यत्रिणो वि षहामहे ।।३।।
ये अत्रिणो यातुधाना रक्षसो ये किमीदिनः ।
सर्वां छङ्ख त्वया वयं विषूचो वि षहामहे ।।४।।
शङ्खेनामीवाममतिं शङ्खेनोत सदान्वाः ।
शङ्खो नो विश्वभेषजः कृशनः पात्वंहसः ।।५।।
दिवि जातः समुद्रतः सिन्धुतस्पर्याभृतः ।
स नो हिरण्यजाः शङ्ख आयुष्प्रतरणो मणिः ।।६।।
देवानामस्थि कृशनं बभूव तदात्मन्वच्चरत्यप्स्वन्तः ।
तं ते बध्नाम्यायुषे वर्चस
ओजसे च बलाय च कार्शनस्त्वाभि रक्षतु ।।७।।

*(इति सप्तर्चोनामचतुर्थकाण्डे पञ्चमो ऽनुवाकः)*

## ४-२६

कन्या वारवायती सोममपि श्रुताविदत् ।
अस्तं भरन्त्यब्रवीदिन्द्राय सुनोमि त्वा शक्राय सुनोमि त्वा।।१।।
असौ य एषि वीरको गृहंगृहं विचाकशत् ।
इमं जम्भसुतं पिब धानावन्तं करम्भिणमपूपवन्तमुक्थिनम्।।२।।
कुविच्छकत् कुवित् करत् कुविन्नो वस्यसस्करत् ।
कुवित् पतिद्विषो यतीरिन्द्रेण सङ्गमामहै ।।३।।
आ चन त्वा चिकित्सामोधि चन त्वा नेमसि ।
शनैरिव शनकैरिवेन्द्रायेन्द्रो परि स्रव ।।४।।
इमानि त्रीणि विष्टपा तानीन्द्र वि रोहय ।
शिरस्ततस्योर्वरामादिदं म उपोदरे ।।५।।

असौ च या न उर्वरादिमां तन्वं मम ।
अथो ततस्य यच्छिर: सर्वा ता रोमशा कृधि ।।६।।
खे रथस्य खे ऽनस: खे युगस्य शतक्रतो ।
अपालामिन्द्र त्रिष्पूत्व्यकृणो: सूर्यत्वचम् ।।७।।

४-२७

दिवस्पृष्ठे मधुपृच: सुपर्णा: पञ्चाशत्ते भुवनस्य गोपा:।
आनुजावरमनुरक्षन्त उग्रा येषामिन्द्रं वीर्यायैरयन्त।।१।।
पुरोहित: परमेष्ठी स्वराड् ज्यायाभीवर्धमस्मा अकृणोद् बृहस्पति:।
तेन सपत्नानधरान् कृणुष्व क्षेमे पशून् बहुलान् वर्धयित्वा
जैत्रायोद्यातु रथवाहनं ते ।।२।।
गोभाजमंसं तव ये समाना: सर्वे समग्रा दधृगा भरन्त ।
अभि वर्धस्व भ्रातृव्यानभि ये त्वा पृतन्यत:।।३।।
नि पिण्ढि सर्वान् धूर्वतो ऽभीवर्धो यथाससि ।
अभीवर्धमभीभवमभीषेणं महागणम् ।
विशस्त्वा सर्वा आयन्त्वापो दिव्या: पयस्वती:।।४।।
अभि वर्धस्व प्रजया वावृधानो ऽभ्यनीकै: पशुभिर्भवाति ।
ब्रह्म राजन्यैर्विश्वैर्वावृधान: शूद्रैरतीहि सभया पृतन्यत:।।५।।
वर्धस्व क्षेत्रै: प्रथस्व प्रजया वर्धस्व वीरै: पशुभिर्बहुर्भव ।
श्रिया शुक्लैर्यतमस्त्वा पृतन्यादाप्तस्तुभ्यं
स बलिहृत्याय तिष्ठतु ।।६।।

४-२८

इन्द्रं मित्रं वरुणमग्निमूतये मारुतं शर्धो अदितिं हवामहे ।
रथं न दुर्गाद् वसव: सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन।।१।।

त आदित्या आ गता सर्वतातये भूत देवा वृत्रतूर्येषु संभुव: ।
रथं न दुर्गाद् वसव: सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन।।२।।
अवन्तु न: पितर: सुप्रवाचना उत देवी देवपुत्रे ऋतावृधा ।
रथं न दुर्गाद् वसव: सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन।।३।।
नराशंसं वाजिनं वाजयन्तं क्षयद्वीरं पूषणं सुम्नैरीमहे ।
रथं न दुर्गाद् वसव: सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन।।४।।
बृहस्पते सदमिन्न: सुगं कृधि शं योर्यत्ते मनुर्हितं तदीमहे ।
रथं न दुर्गाद् वसव: सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ।।५।।
इन्द्रं कुत्सो वृत्रहणं शचीपतिं काटे निवाढ़ ऋषिरह्वदूतये ।
रथं न दुर्गाद् वसव: सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ।।६।।
देवैर्नो देव्यदितिर्नि पातु देवस्त्राता त्रायतामप्रयुच्छन् ।
तन्नो मित्रो वरुणो मामहन्तामदिति: सिन्धु: पृथिवी उत द्यौ:।।७।।

### ४-२९

अप न: शोशुचदघम् । अग्ने शुशुग्ध्या रयिम् ।।१।।
अप न: शोशुचदघम् ।
सुक्षेत्रिया सुगातुया वसूया च यजामहे ।।२।।
अप न: शोशुचदघम् ।
प्र यद् भन्दिष्ठ एषां प्रास्माकासश्च सूरय: ।।३।।
अप न: शोशुचदघम् ।
प्र यत्ते अग्ने सूरयो जायेमहि प्र ते वयम् ।।४।।
अप न: शोशुचदघम् ।
प्र यदग्ने: सहस्वतो विश्वतो यन्ति भानव: ।।५।।
अप न: शोशुचदघम् ।
त्वं हि विश्वतोमुख विश्वत: परिभूरसि ।।६।।

अप नः शोशुचदघम् ।
द्विषो नो विश्वतोमुखाति नावेव पारय ।।७।।

४-३०

देवाः शरणकृतः शरणा मे भवत प्राच्या दिशोऽग्निना राज्ञाध्यक्षेण ।
यशा भूयासं यशसं मा कृणुत चारुमन्नादं परा द्विषन्तं शृणीत ।।१।।
देवाः शरणकृतः शरणा मे भवत दक्षिणाया दिश इन्द्रेण राज्ञाध्यक्षेण।
यशा भूयासं यशसं मा कृणुत चारुमन्नादं परा द्विषन्तं शृणीत ।।२।।
देवाः शरणकृतः शरणा मे भवत प्रतीच्या दिशो वरुणेन राज्ञाध्यक्षेण ।
यशा भूयासं यशसं मा कृणुत चारुमन्नादं परा द्विषन्तं शृणीत ।।३।।
देवाः शरणकृतः शरणा मे भवतोदीच्या दिशः सोमेन राज्ञाध्यक्षेण।
यशा भूयासं यशसं मा कृणुत चारुमन्नादं परा द्विषन्तं शृणीत ।।४।।
देवाः शरणकृतः शरणा मे भवत ध्रुवाया दिशो विष्णुना राज्ञाध्यक्षेण ।
यशा भूयासं यशसं मा कृणुत चारुमन्नादं परा द्विषन्तं शृणीत ।।५।।
देवाः शरणकृतः शरणा मे भवतोर्ध्वाया दिशो बृहस्पतिना राज्ञाध्यक्षेण ।
यशा भूयासं यशसं मा कृणुत चारुमन्नादं परा द्विषन्तं शृणीत ।।६।।
देवाः शरणकृतः शरणा मे भवतोत्तमाया दिशः प्रजापतिना राज्ञाध्यक्षेण।
यशा भूयासं यशसं मा कृणुत चारुमन्नादं परा द्विषन्तं शृणीत ।।७।।
देवाः शरणकृतः शरणा मे भवत परमाया दिशः परमेष्ठिना राज्ञाध्यक्षेण।
यशा भूयासं यशसं मा कृणुत चारुमन्नादं परा द्विषन्तं शृणीत ।।८।।
देवाः शरणकृतः शरणा मे भवत सर्वाभ्यो दिग्भ्य ईशानेन राज्ञाध्यक्षेण।
यशा भूयासं यशसं मा कृणुत चारुमन्नादं परा द्विषन्तं शृणीत ।।९।।

*(इति सप्तर्चोनामचतुर्थकाण्डे षष्ठो ऽनुवाकः)*

४-३१

प्रातरग्निं प्रातरिन्द्रं हवामहे प्रातर्मित्रावरुणा प्रातरश्विना ।
प्रातर्भगं पूषणं ब्रह्मणस्पतिं प्रातः सोममुत रुद्रं हुवेम ।।१।।

प्रातर्जितं भगमुग्रं हुवेम वयं पुत्रमदितेर्यो विधर्ता ।
आध्रश्चिद् यं मन्यमानस्तुरश्चिद् राजा चिद् यं भगं भक्षीत्याह।।२।।
भग प्रणेतर्भग सत्यराधो भगेमां धियमुदवा ददन्न:।
भग प्र णो जनय गोभिरश्वैर्भग प्र नृभिर्नृवन्त: स्याम ।।३।।
उतेदानीं भगवन्त: स्यामोत प्रपित्व उत मध्ये अह्नाम् ।
उतोदिते मघवन् सूर्ये वयं देवानां सुमतौ स्याम ।।४।।
भग एव भगवाङ् अस्तु देवास्तेन वयं भगवन्त: स्याम ।
तं त्वा भग सर्व इज्जोहवीति स नो भग पुरएता भवेह।।५।।
समध्वरायोषसो नमन्त दधिक्रावेव शुचये पदाय ।
अर्वाचीनं वसुविदं भगं नो रथमिवाश्वा वाजिन आ वहन्तु।।६।।
अश्वावतीर्गोमतीर्न उषासो वीरवती: सदमुच्छन्तु भद्रा: ।
घृतं दुहाना विश्वत: प्रपीता यूयं पात स्वस्तिभि: सदा न:।।७।।

४-३२

यस्ते मन्यो ऽविधद्वज्र सायक सह ओज: पुष्यति विश्वमानुषक् ।
साह्याम दासमार्यं त्वया युजा वयं सहस्कृतेन सहसा सहीयसा।।१।।
मन्युरिन्द्रो मन्युरेवास देवो मन्युर्होता वरुणो जातवेदा: ।
मन्युर्विश ईड़ते मानुषीर्या: पाहि नो मन्यो तपसा सजोषा:।।२।।
अभीहि मन्यो तपसस्तवीयान् तपसा युजा वि जहि शत्रून् ।
अमित्रहा वृत्रहा दस्युहा च विश्वा वसून्या भरा त्वं न:।।३।।
त्वं हि मन्यो अभिभूत्यजा: स्वयम्भूर्भामो अभीमातिषाह:।
विश्वचर्षणि: सहुरि: सहीयाङ् अस्मास्वोज: पृतनासु धेहि ।।४।।
अभाग: सन्नप परेतो अस्मि तव क्रत्वा तविषस्य प्रचेत:।
तं त्वा मन्यो अक्रतुर्जिहीड़ाहं स्वा तनूर्बलदावा न एहि।।५।।
अयं ते अस्म्युप न एह्यर्वाङ् प्रतीचीन: सहुरे विश्वदावन् ।
मन्यो वज्रिन्नुप न आ ववृत्स्व हनाव दस्यूँरुत बोध्यापे ।।६।।

अभि प्रेहि दक्षिणतो भवा नो अधा वृत्राणि जङ्घनाव भूरि ।
जुहोमि ते धरुणो मध्वो अग्रमुभा उपांशु प्रथमा पिबेव ।।७।।

४-३३

अग्नेर्मन्वे प्रथमस्य प्रचेतसः पाञ्चजन्यस्य वहुधा यमिन्धते ।
विशोविशः प्रविशिवांसमीमहे स नो मुञ्चत्वंहसः।।१।।
सुजातं जातवेदसमग्निं वैश्वानरं विभुम् ।
हव्यवाहं हवामहे स नो मुञ्चत्वंहसः।।२।।
यथा हव्यं वहसि जातवेदो यथा यज्ञं कल्पयसि प्रजानन्।
एवा देवेभ्यः सुमतिं ह्यावह स नो मुञ्चत्वंहसः।।३।।
यामन्यामन्नुपयुक्तं वहिष्ठं कर्मन् कर्मन्नाभगम् ।
अग्निमीडे रक्षोहणं यज्ञवृधं घृताहुतं स नो मुञ्चत्वंहसः।।४।।
येन ऋषयो बलमद्योतयन् युजा येनासुराणामयुवन्त मायाः।
येनाग्निना पणीनिन्द्रो जिगाय स नो मुञ्चत्वंहसः।।५।।
येन देवा अमृतमन्वविन्दन् येनौषधीर्मधुमतीरकृण्वन् ।
येनेदं स्वराभरन् स नो मुञ्चत्वंहसः।।६।।
यस्येदं प्रदिशि यद्विरोचते यज्जातं जनितव्यञ्च केवलम् ।
स्तौम्यग्निं नाथितो जोहवीमि स नो मुञ्चत्वंहसः।।७।।

४-३४

वायोः सवितुर्विदथानि मन्महे यावात्मन्वद्विदथो यौ च रक्षथः।
यौ विश्वस्य परिभू बभूवथुस्तौ नो मुञ्चतमंहसः।।१।।
ययोः संख्याता वरिमाणि पार्थिवा याभ्यां रजो गुपितमन्तरिक्षम् ।
ययोः प्रयां नानु कश्चनानशे तौ नो मुञ्चतमंहसः।।२।।
तव व्रते नि विशन्ते जनासस्त्वय्युदिते प्रेरते चित्रभानो ।
युवं वायुः सविता च भुवनानि रक्षथस्तौ नो मुञ्चतमंहसः।।३।।

प्र सुमतिं सवितर्वाय ऊतये महस्वन्तं मत्सरं मादयेथाम् ।
अर्वाग्वामस्य प्रवता नि यच्छथस्तौ नो मुञ्चतमंहस:।।४।।
रयिं मे पोषं सवितोत वायुस्तनू दक्षमा सुवतां सुशेवम् ।
अयक्ष्मतां महो अस्मासु धत्तं तौ नो मुञ्चतमंहस:।।५।।
अपेतो वायु: सविता च दुष्कृतमप यक्ष्मं शिमिदां सेधतं पर:।
सं ह्यूर्जा: सृजथ: सं बलेन तौ नो मुञ्चतमंहस:।।६।।
उप श्रेष्ठा न आशिषो देवयोर्धामन्नस्थिरन् ।
स्तौमि देवं सवितारं च वायुं तौ नो मुञ्चतमंहस:।।७।।

४-३५

मरुतां मन्वे अधि मे ब्रुवन्तु प्रेमं वाजं वाजसाता अवन्तु ।
आशूनिव सुयमां ह्व ऊतये ते नो मुञ्चन्त्वंहस:।।१।।
उत्समक्षितं व्यचन्ति ये सदा ये वा सिञ्चन्तु रसमोषधीषु ।
पुरो दधे मरुत: पृश्निमातृंस्ते नो मुञ्चन्त्वंहस:।।२।।
पयो धेनूनां रसमोषधीनां जवमर्वतां कवयो य इन्वथ ।
शग्मा भवन्तु मरुत: स्योनास्ते नो मुञ्चन्त्वंहस:।।३।।
अप: समुद्राद्दिवमुद्वहन्ति दिवस्पृथिवीमभि ये सृजन्ति ।
ये ऽद्भिरीशाना मरुतश्चरन्ति ते नो मुञ्चन्त्वंहस:।।४।।
ये कीलालैस्तर्पयन्ति ये घृतेन ये वा वयो मेदसा संसृजन्ति ।
य ईशाना मरुतो वर्षयन्ति ते नो मुञ्चन्त्वंहस:।।५।।
यदीदिदं मरुतो मारुतेन यदि देवा दैव्येनेदृगार ।
युयमीशिध्वे वसवस्तस्य निष्कृतेस्ते नो मुञ्चन्त्वंहस:।।६।।
तिग्ममनीकं विदितं सहस्वन्मारुतं शर्ध: पृतनासूग्रम् ।
स्तौमि मरुतो नाथितो जोहवीमि ते नो मुञ्चन्त्वंहस:।।७।।

*(इति सप्तर्चोनामचतुर्थकाण्डे सप्तमो ऽनुवाक:)*

## ४-३६

मन्वे वां द्यावापृथिवी सुभोजसौ ये अप्रथेथाममिता योजनानि ।
प्रतिष्ठे ह्यभवतं वसूनां ते नो मुञ्चतमंहस: ।।१।।
प्रतिष्ठे हि बभूवथुर्वसूनां प्रवृद्धे देवी सुभगे उरूची ।
द्यावापृथिवी भवतं मे स्योने ते नो मुञ्चतमंहस:।।२।।
ये स्रोत्या बिभृथो ये मनुष्यां ये अमृतं बिभृथो ये हवींषि ।
द्यावापृथिवी भवतं मे स्योने ते नो मुञ्चतमंहस:।।३।।
ये उस्त्रिया बिभृथो ये वनस्पतीन् ययोर्वां विश्वा भुवनान्यन्त:।
द्यावापृथिवी भवतं मे स्योने ते नो मुञ्चतमंहस: ।।४।।
ये कीलालैस्तर्पयथो ये घृतेन याभ्यां नर्ते किञ्चन शक्नुवन्ति।
द्यावापृथिवी भवतं मे स्योने ते नो मुञ्चतमंहस:।।५।।
असन्तापे सुतपसा हुवे वामुर्वी गभीरे कविभिर्नमस्ये ।
द्यावापृथिवी भवतं मे स्योने ते नो मुञ्चतमंहस:।।६।।
यन्मेदमभिशोचति येन वा येन वा कृतं पौरुषेयं न दैव्यम् ।
स्तौमि द्यावापृथिवी नाथितो जोहवीमि ते नो मुञ्चतमंहस:।।७।।

## ४-३७

भवाशर्वौ मन्वे वां तस्य वित्तं ययोर्वां विश्वं यदिदं वितिष्ठते ।
यावीशाते अस्य द्विपदो यश्चतुष्पदस्तौ नो मुञ्चतमंहस:।।१।
ययोरभ्यध्व उत यद् दूरे चिद् यौ विदिताविषुभृतामसिष्ठौ ।
भवाशर्वौ भवतं मे स्योनौ तौ नो मुञ्चतमंहस: ।।२।।
ययोर्वधान्नापपद्यते किञ्चनान्तर्देवेषूत मानुषेषु ।
भवाशर्वौ भवतं मे स्योनौ तौ नो मुञ्चतमंहस: ।।३।।
यावारेभाते वहु साकमुग्रौ प्र चेदस्त्राष्ट्रमभिभां जनेषु ।
भवाशर्वौ भवतं मे स्योनौ तौ नो मुञ्चतमंहस: ।।४।।

सहस्राक्षौ वृत्रहणा हुवे वां दूरेहेती स्वनेमी उग्रौ ।
भवाशर्वौ भवतं मे स्योनौ तौ नो मुञ्चतमंहस: ।।५।।
य: कृत्याकृद्यातुधानो महालो नि तस्मिन् हतमधि वज्रमुग्रौ ।
भवाशर्वौ भवतं मे स्योनौ तौ नो मुञ्चतमंहस: ।।६।।
अधि मे ब्रूतं पृतनासूग्रौ सं वज्रेण सृजतं यत् किमीदि ।
स्तौमि भवाशर्वौ नाथितो जोहवीमि तौ नो मुञ्चतमंहस: ।।७।।

४-३८

मन्वे वां मित्रावरुणावृतावृधौ सत्यौजसौ द्रुह्वाणं यौ नुदेथे ।
यौ सत्यावानमवथो हवेषु तौ नो मुञ्चतमंहस: ।।१।।
सत्यौजसौ द्रुह्वाणं यौ नुदेथे प्र सत्यावानमवथो हवेषु ।
यौ गच्छथो नृचक्षसा बभ्रुणा सुतं तौ नो मुञ्चतमंहस: ।।२।।
यावङ्गिरसोऽवथो यावगस्तिं मित्रावरुणा जमदग्निमत्रिम् ।
यौ कश्यपमवथो यौ वसिष्ठं तौ नो मुञ्चतमंहस: ।।३।।
यौ भरद्वाजमवथो वध्र्यश्वं विश्वामित्रं वरुण मित्र कुत्सम् ।
यौ कक्षीवन्तमवथ: प्रोत कण्वं तौ नो मुञ्चतमंहस: ।।४।।
यौ श्यावाश्वमवथो यौ गविष्ठिरं मित्रावरुणा पुरुमीढमत्रिम्।
यौ विमदमवथ: सप्तवध्रिं तौ नो मुञ्चतमंहस: ।।५।।
यौ मेधातिथिमवथो यौ त्रिशोकं मित्रावरुणा उशनं काव्यं यौ।
यौ मुद्गलमवथो गोतमं च तौ नो मुञ्चतमंहस: ।।६।।
ययो रथ: सत्यवर्त्मर्जुरश्मिर्मिथुया चरन्तमभियाति दूषयन् ।
स्तौमि मित्रावरुणा नाथितो जोहवीमि तौ नो मुञ्चतमंहस: ।।७।।

४-३९

इन्द्रस्य मन्वे शश्वद्यस्य मन्विरे वृत्रघ्न स्तोमा उप मेममागु: ।
यो दाशुष: सुकृतो हवमेता स नो मुञ्चत्वंहस: ।।१।।

यश्चर्षणिप्रो वृषभः स्वर्विद् यस्य ग्रावाणः प्रवदन्ति नृम्णे ।
यस्याध्वरः सप्तहोता मदच्युत् स नो मुञ्चत्वंहसः ।।२।।
य उग्राणामुग्रबाहुर्ययुर्यो दानवानां बलमाससाद ।
येन जिताः सिन्धवो येन गावः स नो मुञ्चत्वंहसः ।।३।।
यस्य वशास ऋषभास उक्षणो यस्मै मीयन्ते स्वरवः स्वर्विदे।
यस्मै शुक्रः पवते ब्रह्मशुम्भितः स नो मुञ्चत्वंहसः ।।४।।
यस्य जुष्टिं सोमिनः कामयन्ते यं हवन्त इषुवन्तं गविष्टौ ।
यस्मिन्नर्कः शिश्रिये यस्मिन्नोजः स नो मुञ्चत्वंहसः ।।५।।
य उत्तमः कर्मकृत्याय जज्ञे यस्य वीर्यं प्रथमस्यानुबद्धम् ।
येनोद्यतो वज्रोभ्यायताहिं स नो मुञ्चत्वंहसः ।।६।।
यः संग्रामान्नयति सं युधे वशी यः पुष्टानि संसृजति द्वयानि।
स्तौमीन्द्रं नाथितो जोहवीमि स नो मुञ्चत्वंहसः ।।७।।

४-४०

शुनं वत्सानपा करोमि शुनं बध्नामि तन्त्याम् ।
आग्रयणं ब्रह्मणां हविस्तस्मिन् जागार कश्यपः ।।१।।
बाहुं वत्समुपनयन् पात्रे गां दुहन्नब्रवीत् ।
अरिष्टं ब्रह्मभ्यो हविः शिवं कृणोतु कश्यपः ।।२।।
त्रयस्तिष्ठन्ति सुकृतस्य लोके
त्रयो ऽतीकाशास्त्रीणि शीर्षाण्येषाम् ।
त्रयस्तिष्ठन्ति परिगृह्य कुम्भीं यथा हविः
कश्यप न व्यथातै ।।३।।
सत्यात् सम्भूतो वदति तण्डुलान् क्षीर आवपन् ।
ऋषिर्ब्रह्मभ्य आग्रयणं नि वेदयतु कश्यपः ।।४।।

ऋतुमुखे चन्द्रभाग: पात्र ओदनमुद्धरात् ।
प्राश्नन्तु ब्रह्माणो हविर्यथा वेदेन कश्यप: ।।५।।
ये भूतान्यसृजन्त ये भूतान्यकल्पयन् ।
सर्वस्य विद्वानध्वर्यु: षण्णां भवतु कश्यप: ।।६।।
शिवा आपो वत्सेभ्य: शिवा भवन्त्वोषधी: ।
वातो वत्सेभ्य: कश्यप: शिव: शिवं तपतु सूर्य: ।।७।।

*(इति सप्तर्चोनामचतुर्थकाण्डेऽष्टमो ऽनुवाक:)*

*इत्यथर्ववेदे पैप्पलादसंहितायां सप्तर्चोनाम चतुर्थ: काण्ड: समाप्त: ।*

# अथ अष्टर्चोनाम पञ्चमकाण्ड:

५-१

नम: पिशङ्गबाह्वै सिन्धौ जाताया उग्रायै ।
यो अस्यै नम इत् करदपेदस्य गृहादय ।।१।।
अपेहि नो गृहेभ्यो ऽपेहि वत्सतन्त्या: ।
आत्मानमत्र रोत्स्यस्यव रोह महानसात् ।।२।।
हा अम्ब सुहूतले अथो है षामनन्तमे ।
पुत्रो यस्ते पृश्निबाहुस्तमु त्वं सामनं कृधि ।
अथो दुहितरं नप्त्रीमथो त्वं सामना भव ।।३।।
भूतपतिर्निरजत्विन्द्रश्चेत: सदान्वा: ।
गृहस्य बुध्न आसीनास्ता वज्रेणाधि तिष्ठतु ।।४।।
अपेतेत: सदान्वा अहिंसन्तीरिमं गृहम् ।
धेनुर्वा अत्र य स्थास्यत्यनड्वान् वेरया सह ।।५।।
या सहमाना चरसि सासहान इव ऋषभ: ।
सदान्वाघ्नीं त्वा वयं जैत्रायाच्छा वदामसि ।।६।।
सहस्व नो अभिमातिं सहस्व पृतनायत: ।
सहस्व सर्वा रक्षांसि सहमानास्योषधे ।।७।।
त्वं व्याघ्रान् सहसे त्वं सिंहाँ उभयादत: ।
मक्षाश्चित् कृण्वाना मधु त्वं सहस ओषधे ।।८।।

५-२

इयं पित्रे राष्ट्र्येत्यग्रे प्रथमाय जनुषे भूमिनष्ठौ ।
तस्मा एतं सुरुचं ह्वारमह्यं धर्मं श्रीणन्तु प्रथमस्य धास्यो:।।१।।

ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विषीमतः सुरुचो वेन आवः ।
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च वि वः ।।२।।
प्र यो जज्ञे विद्वाङ अस्य बन्धुं विश्वानि देवो जनिमा विवक्ति ।
ब्रह्म ब्रह्मण उज्जभार मध्यान् नीचादुच्चा स्वधा अभि प्र तस्थौ ।।३।
महान् मही अस्कभायद्विजातो द्यां द्वितः पार्थिवं च रजः ।
स बुध्न्यादाष्ट्र जनुषाभ्यग्रं बृहस्पतिर्देवता तस्य सम्राट् ।।४।।
नूनं तदस्य गव्यं हिनोत महो देवस्य पूर्व्यस्य महि ।
एष जज्ञे बहुभिः साकमित्था पूर्वादर्द्धादविथुरश्च सन्नु ।।५।।
स हि दिवः स पृथिव्या ऋतेष्ठा महि क्षामन् रजसी वि ष्कभायति।
अहर्यच्छुक्रं ज्योतिषो जनिष्टाधा द्युमन्तो वि वसन्त्वरिप्राः ।।६।।
एवाथर्वा पितरं विश्वदेवं बृहस्पतिर्नमसा वोचदच्छ ।
त्वं विश्वस्य जनिता धास्यग्रे कविर्देवान्न दभाय स्वधावः ।।७।।
मूर्ध्ना यो अग्रमभ्यर्त्योजसा बृहस्पतिर्मा विवासन्तु देवाः ।
भिनद् बलं वि मृधो दर्दरीति कनिक्रदद् गाः स्वरपो जिगाय ।।८।।

५-३

उदपप्तदसौ सूर्यः पुरुदृष्टो अदृष्टहा ।
उदायन् रश्मिभिर्हन्तूदायन्नरसाङ अकः ।।१।।
न्यम्रुचदसौ सूर्यो विश्वदृष्टो अदृष्टहा ।
निम्रोचन् रश्मिभिर्हन्तु निम्रोचन्नरसाङ अकः ।।२।।
ये च दृष्टा ये चादृष्टा उभयेहविष्यवः ।
तेषां वो अग्रभं नाम सर्वे साकं नि जस्यत ।।३।।
अदृष्टहननी वीरुदमितौजा विषासहि ।
चुकाकणि त्वं जज्ञिषे सादृष्टां जातशो जहि ।।४।।
जहि ज्येष्ठमदृष्टानां सर्पाणां मोघचारिणाम् ।
क्रिमीणां सर्वा जातानि पौञ्जष्ट इव यवं मृण ।।५।।

यश्च तोदो यश्च सर्प एकादृष्टश्च यो वृषा ।
चुकाकणि त्वं तान् वृश्च वृक्षं परशुमानिव ।।६।।
सं वृश्चैनांश्चुकाकणि वृक्षं परशुमानिव ।
क्रिमीणां सर्वा जातानि सं दहाग्निरिवोलपम् ।।७।।
मेथिष्ठाग्निरघलस्त्विषीमान् क्रिमीणां जातानि प्र दुनोत्त सर्वा ।
बृहस्पतेर्मेदिने जातवेदा अदृष्टान् हन्तु दृषदेव माषान् ।।८।।

५-४

ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तन्वं पुषेम ।
मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाध्यक्षेण पृतना जयेम ।।१।।
अग्ने मन्युं प्रतिनुदन् परेषां त्वं नो गोपा: परि पाहि विश्वत: ।
अपाञ्चो यन्तु प्रबुधा दुरस्यवोऽमैषां चित्तं बहुधा वि नश्यतु ।।२।।
मम देवा विहवे सन्तु सर्व इन्द्रवन्तो मरुतो विष्णुरग्नि: ।
ममान्तरिक्षमुरुलोकमस्तु मह्यं वात: पवतां कामे अस्मिन् ।।३।।
मह्यं यजन्तां मम यानिष्टाकूति: सत्या मनसो मे अस्तु ।
एनो मा नि गां कतमच्चनाहं विश्वे देवा अभि रक्षन्तु मामिह।।४।।
मह्यं देवा द्रविणमा यजन्तां ममाशीरस्तु मम देवहूति: ।
दैवा होतार: सनिषं न एतदरिष्टा: स्याम तन्वा सुवीरा:।।५।।
देवी: षडुर्वीररुणस्कराथ विश्वे देवास इह मादयध्वम् ।
मा हास्महि प्रजया मा धनेन मा रधाम द्विषते सोम राजन् ।।६।।
उरुव्यचा नो महिष: शर्म यच्छादस्मिन् वाजे पुरुहूत: पुरुक्षु: ।
स न: प्रजायै हर्यश्व मृडेन्द्र मा नो रीरिषो मा परा दा: ।।७।।
धाता विधर्ता भुवनस्य यस्पति: सविता देवो अभिमातिषाह: ।
बृहस्पतिरिन्द्राग्नी अश्विनोभा देवा: पान्तु यजमानं निर्ऋथात् ।।८।।
इहार्वाञ्चमति ह्वय इन्द्रं जैत्राय जेतवे ।
अस्माकमस्तु केवल इत: कृणोतु वीर्यम् ।।९।।

अर्वाञ्चमिन्द्रममुतो हवामहे यो गोजिद्धनजिदश्वजिद्य:।
इमं नो यज्ञं विहवे जुषस्वास्माकं कृण्मो हरिवो मेदिनं त्वा।।१०।।
त्रातारमिन्द्रमवितारमिन्द्रं हवेहवे सुहवं शूरमिन्द्रम्।
हुवेम शक्रं पुरुहूतमिन्द्रं स्वस्ति नो मघवान् पात्विन्द्र:।।११।।
तिस्रो देवीर्महि मे शर्म यच्छन् प्रजायै मे तन्वे यच्च पुष्टम्।
मां विश: संमनसो जुषन्तां पित्र्यं क्षेत्रं प्रति जानात्वस्मान्।।१२।।
यो न: शक्राभिमन्युनेन्द्रामित्रो जिघांसति।
त्वं तं वृत्रहञ्जहि वस्वस्मभ्यमा भर।।१३।।
ये न: शपन्त्यप ते भवन्त्विन्द्राग्निभ्यामप बाधामहे तान्।
आदित्या रुद्रा उपरिस्पृशो मामुग्रं चेत्तारमधिराजमक्रन्।।१४।।

५-५

पृथिवी वशा साग्निं गर्भं दधे सेमं पाहि
तस्यै ते विधेयं तस्यै ते नमस्तस्मै ते स्वाहा।।१।।
अन्तरिक्षं वशा सा वायुं गर्भं दधे सेमं पाहि
तस्यै ते विधेयं तस्यै ते नमस्तस्मै ते स्वाहा।।२।।
द्यौर्वशा सा सूर्यं गर्भं दधे सेमं पाहि
तस्यै ते विधेयं तस्यै ते नमस्तस्मै ते स्वाहा।।३।।
ऋग्वशा सा साम गर्भं दधे सेमं पाहि
तस्यै ते विधेयं तस्यै ते नमस्तस्मै ते स्वाहा।।४।।
दक्षिणा वशा सा यज्ञं गर्भं दधे सेमं पाहि
तस्यै ते विधेयं तस्यै ते नमस्तस्मै ते स्वाहा।।५।।
विड् वशा सा क्षत्रियं गर्भं दधे सेमं पाहि
तस्यै ते विधेयं तस्यै ते नमस्तस्मै ते स्वाहा।।६।।
वाग् वशा सा परमेष्ठिनं गर्भं दधे सेमं पाहि
तस्यै ते विधेयं तस्यै ते नमस्तस्मै ते स्वाहा।।७।।

वशा वशा सा राजन्यं गर्भं दधे सेमं पाहि
तस्यै ते विधेयं तस्यै ते नमस्तस्मै ते स्वाहा ।।८।।
समा वशा सा संवत्सरं गर्भं दधे सेमं पाहि
तस्यै ते विधेयं तस्यै ते नमस्तस्मै ते स्वाहा ।।९।।

*(इति अष्टर्चोनामपञ्चमकाण्डे प्रथमो ऽनुवाक:)*

५-६

सप्त सूर्या दिवमनुप्रविष्टास्तान् पथा वान्वेतु दक्षिणावान् ।
ते ऽस्मै सर्वे घृतमा तपन्त्यूर्यं दुहाना अनपस्फुरन्त: ।।१।।
आतपन् क्षयति नीच्यादा सव्या अधि निष्टपन् ।
अधा यत् पत्त्र: सूर्य उदेति बृहतीरनु ।।२।।
आतप्ता पितृन् विद्म दस्यू निष्टप्ता वयम् ।
गुहा ये ऽन्ये सूर्या: स्वधामनु चरन्ति ते ।।३।।
द्यौ: सचते ऽपराञ्जनास: पञ्चान्ये परो दिव आ क्षियन्ति ।
तां ब्रह्म वेदं बृहदा विवेश यस्तान् प्रवेद प्रथरमतर्यत: ।।४।।
यो ददाति यो ददते यो वा निधीत्र् श्रद्दधानो निधत्ते ।
यमो वैवस्वतान् राजा सर्वान् रक्षत शेवधीन् ।।५।।
मा विदन् पर्यायिणो ये दक्षिणा: परिमुष्णन्ति दत्तम् ।
सुगेन तान् पथा सर्वान् यमो राजाति नेषत ।।६।।
येन पथा वैवस्वतो यमो राजेतो ययु: ।
अग्निर्नस्तेन नयतु प्रजानन् वैश्वानर: पथिकृत् विश्वगृष्टि: ।।७।।
महि ज्योतिर्निहितं मर्त्येषु येन देवासो अतरन्नराती।
तेनेमं सेतुमति गेष्म सर्वे वैश्वानरं ज्योतिरसीव देवा: ।।८।।
उद् वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ।।९।।

आरोको भ्राजः पटरः पतङ्गः स्वर्णरो ज्योतिषीमान् विभासः।
तेऽस्मै सर्वे घृतमातपन्त्यूर्जं दुहाना अनपस्फुरन्तः।।१०।।

५-७

समुत् पतन्तु प्रदिशो नभस्वतीः समभ्राणि वातजूतानि यन्तु ।
महर्षभस्य नदतो नभस्वतो वाश्रा आपः पृथिवीं तर्पयन्तु ।।१।।
समीक्षयति विश्वग्वातो नभांस्यपां वेगासः पृथगुत् पतन्तु ।
वर्षस्य सर्गामभि यन्तु भूमिं पृथग् जायन्तामोषधयो विश्वरूपाः।।२।।
अभि क्रन्द स्तनयार्दयोदधिं भूमिं पर्यन्य पयसा समङ्धि ।
त्वया वर्षं बहुलमेतु सृष्टमाशारैषी कृशगुरेत्वस्तम् ।।३।।
उदीरयत मरुतः समुद्रतस्त्वेषार्को नभ उत् पातयन्तु ।
प्र वर्षन्ति तमिषाः सुदानवोऽपां रसैरोषधयः सचन्ताम्।।४।।
गणास्त्वोप गायन्तु मारुताः पर्यन्य घोषिणः पृथक् ।
सर्गा वर्षस्य वर्षतः सृजन्तु पृथिवीमभि ।।५।।
समवन्तु सुदानव उत्सा अजगरा उत ।
वाता वर्षस्य वर्षतः प्र वान्तु पृथिवीमनु ।।६।।
वातो विद्युदभ्रं वर्षं समवन्तु सुदानवः।
प्र प्यायस्व प्र पिन्वस्व सं भूमिं पयसा सृज ।।७।।
अपामग्निस्तनूभिः संविदानो य ओषधीनामधिपा बभूव ।
स नो वर्षं वनुतां जातवेदाः प्राणं प्रजाभ्यो अमृतं दिवस्परि।।८।।
आशामाशां वि द्योततां वाता वान्तु दिशो दिशः ।
मरुद्भिः प्रच्युता मेघा वर्षन्तु पृथिवीमभि ।।९।।
प्रजापतिः सलिलादा समुद्रादाप ईरयन्नुदधिमर्दयाति।
प्र प्यायतां विष्णो अश्वस्य रेतोऽर्वाङ् एतेन
स्तनयित्नुनेह्यपो निषिञ्चन्नसुरः पिता नः।।१०।।

स्वसन्तु गर्गरा अपामव नीचीरप: सृज ।
वदन्तु पृश्निबाहवो मण्डूका इरिणानु ।।११।।
संवत्सरं शशयाना ब्राह्मणा व्रतचारिण: ।
वातं पर्यन्य जिन्वतां प्र मण्डूका अवादिषु:।।१२।।
उपप्रवद मण्डूकि वर्षमा वद तादुरि ।
मध्ये ह्रदस्य प्लवस्व विगृह्य चतुर: पद:।।१३।।
महान्तं कोशमुतचाभि षिञ्च सविद्युतं भवतु वातु वात:।
तन्वतां यज्ञं बहुधा विसृष्टमानन्दिनीरोषधयो भवन्तु।।१४।।

५-८

यावती द्यावापृथिवी वरिम्णा यावद्वा सप्त सिन्धवो वितष्ठु:।
वाचं विषस्य दूषणीं तामितो निरवादिषम् ।।१।।
सुपर्णस्त्वा गरुत्मान् विष प्रथममावयत् ।
नारोपयो नमादय उतास्मा अभवत् पितु: ।।२।।
यां त्वास्थत् पञ्चाङ्गुलिर्वक्रा चिदधि धन्वन: ।
अपस्कम्भस्य बाह्वोर्निरवोचमहं विषम् ।।३।।
शल्याद्विषं निरवोचमञ्जनात् पर्णधेरुत ।
अपाष्ठाच्छृङ्गात् कुर्मलान्निरवोचमहं विषम् ।।४।।
अरसस्त इषो शल्यो ऽथो ते ऽरसं विषम् ।
उतारसस्य वृक्षस्य धनुष्टे अरसारसम् ।।५।।
ये ऽपिशं ये ऽदिहं य आस्यं ये अवासृजन् ।
सर्वे ते वध्रय: सन्तु वध्रिर्विषगिरिष्कृत: ।।६।।
वध्रयस्ते खनितारो वध्रिस्त्वमस्योषधे ।
वध्रि: स पर्वतो गिरिर्यतो जातमिदं विषम् ।।७।।
वारिदं वारयातै वरुणावत्त आभृतम् ।
तन्नामृतस्यासिक्तं तच्चकारारसं विषम् ।।८।।

## ५-९

खादिरेण शललेनाथो कङ्कतदन्त्या ।
अथो विषस्य यद्विषं तेन पापीरनीनशम् ।।१।।
कित्या शतपर्वणा सहस्राक्षेण चर्मणा ।
तीक्ष्णाभिरभ्रिभिर्वयं निरजाम: सदान्वा: ।।२।।
सह: सह: सत्यसीत: कण्वा: परो ऽनुदत् ।
इमा या अधुना गता याश्चेह ग्रहणी: पुरा ।।३।।
नता इत्था नता इहावमासतोखेव शृङ्गवच्छिर: ।
सदान्वा ब्रह्मणस्पते तीक्ष्णशृङ्गोदृषन्निहि ।।४।।
वितेरुपन्था श्वश्रे बिभिदे ते ऽगदोहनी ।
दधौ ते अद्य गौ: कण्वे परेह्यवरं मृणे ।।५।।
यास्तेङ्के तिष्ठन्ति या वलीके या: प्रेङ्खे प्रेङ्खयत
उत या नु घोरा:।
या गर्भान् प्रमृशन्ति सर्वा: पापीरनीनशम् ।।६।।
याश्चेलं वसत उत या नु दूरशं नीलं पिशङ्गमुत लोहितं या:।
या गर्भान् प्रमृशन्ति सर्वा: पापीरनीनशम् ।।७।।
आखिदन्तीर्विखिदन्ती: प्राणमस्यापि नह्यत ।
दुर्णाम्नी: सर्वा: संगत्य ममुष्योच्छिषदकिं चन ।।८।।

## ५-१०

इयं या मुशलाहता दृषत्पिष्टा विषासुता ।
तपुरग्निस्तपुर्द्यौस्तपुत्त्वं सुरे भव ।।१।।
विषं ते तोक्म रोहयन्तो ऽब्रुवन् विषं कुम्भे ऽव स्रव ।
विषं त आमनसुरे विषं त्वं हस्त आहिता
विषं प्रतिहिता भव।।२।।

सिंहस्ते अस्तु तण्डुलो व्याघ्र: पर्योदनम् ।
पृदाकूरस्तु नग्नहुर्वृकस्य हृदि सं स्रव ।।३।।
इयं या पात्र आसुता शस्य: स्रक्वा विघस्वती ।
वराहमन्युरजन्युत्तानपादमर्दय ।।४।।
उदर्दनी प्रच्यवनी पांसुपिङ्गा विघस्वरी ।
उत्खातमन्युरजनि यत् पश्चात्तत् पुरस्कृधि ।।५।।
विषं ते पवने सुरे रुधिरं स्थाने अस्तु ते ।
मथ्नं त्वन्यो अन्यस्मा इषुधींस्तद् धनुस्त्वत् ।।६।।
विषपावानो रुधिराश्चरन्ति पातारो मर्तास्तवसे सुर इमे।
हतासो अन्ये योधयन्त्यन्यास्तमिच्छंस महिमानं सुराया:।।७।।
तान् वीरुधो विस्रवो बलेनोत् पातय मादय योधनायै ।
भिन्नारत्निर्भिन्नशीर्ष्णा समृच्छतामार्तचेलो विस्रवं ते सुराप:।।८।।
विषासुतां पिबत जहृषाणा अस्ना संसृष्टां रुधिरेण मिश्राम् ।
छिन्नहस्तश्चरति ग्रामे अन्तर्वैरहत्यानि बहुधा पणायन्।।९।।
असिमतीमिषुमतीमुन्नयामि सतादधि ।
मादयाभि मादया हि रवैनां प्र रोपयान्योऽन्यस्य मोच्छिषम्।।१०।।

*(इति अष्टर्चोनामपञ्चमकाण्डे द्वितीयोऽनुवाक:)*

५-११

अनु ते मन्यतामग्निर्वरुणस्तेऽनु मन्यताम् ।
ततस्ते पुत्रो जायतां स वर्मी गोषु युध्यताम् ।।१।।
इदं वायोऽनु जानीहीदमिन्द्र बृहस्पते ।
आञ्जनं पुत्रवेदनं कृण्व: पुंसवनं वयम् ।।२।।
येनैतत् परिष्टभितं यस्मात् पुत्रं न विन्दसे ।
इन्द्राग्नी तस्मात्त्वैनस: परिपातामहर्दिवि ।।३।।

अथर्वाणो अङ्गिरसो विश्वे देवा ऋतावृध: ।
शृण्वन्त्वद्य मे हवमस्मै पुत्राय वेत्तवे ।।४।।
इन्द्राणी वरुणानी सिनीवाल्युतादिति: ।
वरुत्र्युग्रा पत्नीनां पुत्रमद्य दिदेष्टु ते ।।५।।
पुत्रं ते मित्रावरुणा पुत्रं देवी सरस्वती ।
पुत्रं ते अश्विनोभा धत्तां पुष्करस्रजा ।।६।।
येषां च नाम जग्रभ येषां च नोपसस्मर ।
देवास्ते सर्वे संगत्य पुत्रं जैवातृकं ददन् ।।७।।
आत्मन एनं निर्ममीष्व स त्वत् परि जायताम् ।
त्वं बीजमुर्वरेव त्वं भिभिर्हि योन्याम् ।।८।।
पृथिवी सह यज्ञैर्नक्षत्रै: सह सूर्य: ।
वात पतत्रिभि: सह पुत्रमद्य दिदेष्टु ते ।।९।।

५-१२

वृषा जज्ञे मघवानोऽयं मधुमतीभ्य: ।
स उ ते योनिमा शयां वङ्‌यक्ष: पुरुषो भवन् ।।१।।
योनिं गच्छ मघवान योन्यां पुरुषो भव ।
तत: पुनर्निरायसि शीर्ष्णा श्रोणी वि नोनुदत् ।।२।।
वाणवाङ् इषुधेरिव कृण्वं पित्रोर्यथा प्रियम् ।
श्रोणी अहिंसन्यन्तरा दशमे मास्यायसि ।।३।।
स प्रत्यङ् प्रत्यावर्त्ये सा एते संवत्सरे पुन: ।
यथा जीवासि भद्रया विभरत्वामहाभवे ।।४।।
शं ते योनिमचीक्लृपं सुप्रजास्त्वाय भद्रया ।
तत्रा सिञ्चस्व वृष्ण्यं दशमास्यमविह्रुतम् ।।५।।
गर्भस्ते योनिमा शयां गर्भो जरायुवा शयाम् ।
कुमार उल्बमा शयां त्वष्टा क्लृप्तो यथापरु ।।६।।

यथा राजन् मधवान त्वं बीजं विरोहसि ।
एवा त्वमस्या निर्भिन्धि कुमारं योन्या अधि ।।७।।
गर्भमधान् मधवानो गर्भं देवो बृहस्पति: ।
गर्भं त इन्द्रश्चाग्निश्च गर्भं धाता दधातु ते ।।८।।

५-१३

शिव: शिवाभिर्वयस्वन् सं गच्छस्व तन्वा जातवेद:।
रत्नं दधान: सुमना: पुरस्ताद् गृहेभ्यस्त्वा वर्चसे निर्वपामि।।१।।
पृथिव्यां घर्म स्तभितोऽन्तरिक्षे दिवि श्रित:।
द्यौरेनं सर्वत: पातु यस्त्वा पचत्योदन ।।२।।
ये समुद्रमैरयं ये च सिन्धुं ये अन्तरिक्षं पृथिवीमुत द्याम्।
ये वातेन सरथं यान्ति देवास्तानाप्नोत्योदन पाको अत्र ।।३।।
ऋचा कुम्भ्यदिहिता साम्ना पच्यत ओदन:।
अंशुं सोमस्यैतं मन्ये वैश्वदेवमिदं हवि:।।४।।
उलूखले मुसले ये च शूर्पे भूम्यामुखायां यदि वासुसक्ष।
या विप्रुषो यानि निर्णेजनानि सर्वं तत्ते ब्रह्मणा पूरयामि।।५।।
ऊर्ध्व: प्रेहि मा सं विक्था व्यस्य रजो अन्तरम्।
रक्षांसि सर्वा तीर्त्वाथा रोह दिवं त्वम् ।।६।।
तुरो नो अतुरो भव सं धीभिर्धीयतामयम् ।
सं पृथिव्या समग्निना सं सूर्यस्य रश्मिभि: सं देवानामयिस्व।।७।।
आजद्विष: सुकृतस्य लोके तृतीये नाके अधि रोचने दिव:।
मृत्यो: पदं योपयन्तोऽन्येतु पश्चा निकृत्य मृत्युं पदयोपनेन।।८।।

५-१४

भूत्या मुखमसि सत्यस्य रश्मिरुच्चै:श्लोको दिवं गच्छ।
उच्छ्रयेथां हविष्कृतौ साधु देवान् सपर्यतमृजीषमप लम्पतम्।।१।।

आपो देवीर्यज्ञकृतश्चित्रा देवीर्हविष्कृत:।
एकपात्र ओदनोऽग्निष्टोमेन सम्मित:।।२।।
गायत्री हव्यवाडसि देवताग्नि: समिध्यते।
सहस्रधारं सुकृतस्य लोके घृतपृष्ठममर्त्यौ।।३।।
तपश्च सत्यं चौदनं प्राश्नीतां परमेष्ठिनौ।
ताभ्यां वै स्वराभृतं तेनाधिपतिरुच्यसे।।४।।
उरुगायो शिवायो: प्राणेन सम्मित:।
अप मृध्राणि मज्जहि मुक्षीव दुरिता दहन्।।५।।
अप रक्षांसि तेजसा देवेभ्यो हव्यमर्चतम्।
व्यचस्वान् सप्रथायसि।।६।।
उच्चै: सुपर्णो दिवमुत् पतामुं प्रियं देवेभ्यो मा कृणु
ऋषिभ्य: परि देहि माम्।
शुक्रं शुक्रेण भक्षया पिबन्तु सुकृतो मधु ।।७।।
द्वया देवा उप नो यज्ञमागुर्यानोदनो जुषते यासुपृष्ट:।
आदित्याङ्गिरस: स्वर्गमिमं प्राश्नन्त्वृतुभिर्निषद्य।।८।।

५-१५

पीयूषस्य क्षीरस्य सर्पिषो ऽन्नस्याग्रं सं भराम एतत् ।
एतं भागमहुताभ्य: प्रहिण्मस्तन्नो हवि: प्रति गृह्णन्तु देवा दैवा:।।१।।
हुतादो ऽन्येहुतादो ऽन्ये वैश्वदेवं हविरुभये सं चरन्ति ।
ते सम्यञ्च इह मादयन्तामिषमूर्जं यजमानाय मत्स्व ।।२।।
मेमा भवो मा शर्वो वधीद् गा मा वत्सां क्लोमश्च यो विदन् न:।
ये जाता ये च गर्भेष्वन्तररिष्टाग्नेस्तनुमा रभन्ताम् ।।३।।
इमा गावो विजावती: प्रजावतीस्त्रिष्वसंमनसो भवन्तु ।
आसु भूमा नय पिपृञ्चन्तु देवा आसां वत्सानायुषा
मेदसा सं सृजामि ।।४।।

प्र वीयन्तां स्त्रियो गावो विष्णुर्योनिमनु कल्पयाति ।
प्रतिगृह्णतीर्ऋषभस्य रेत उक्षानड्वांश्चरति वासितामनु ।।५।।
प्रयतमग्रं न हिनस्ति किं चन यथाकामं कृणुत सोम्यं मधु ।
साधु यज्ञमहुतादो नयन्तु रायस्पोषा यजमानं सचन्ताम् ।।६।।
नि ते पदां पृथिवी यन्तु सिन्धवो उदोषधयो जिहतां प्रेरतामिरा:।
पर्जन्यस्य मरुत उदधिं सान्वा हत भद्रं सत्यं पच्यतां मोदतां जगत्।।७।।
सप्त ऋषय: सप्त पदास्येषां सप्त क्षियो अश्विनो: पञ्च वाजा:।
प्राणो व्यानो मन आकूतिर्वाग्देवी देवेभ्यो हव्यं वहतु प्रजानती ।।८।।
ये च दृष्टा ये चादृष्टा: क्रिमय: ककृशाश्च ये ।
तेषां शिरांस्यसिना छिनद्म्यथासां वत्सानायुषा मेदसा सं सृजामि ।।९।।

*(इति अष्टर्चोनामपञ्चमकाण्डे तृतीयो ऽनुवाक:)*

### ५-१६

द्यौश्चेमं यज्ञं पृथिवी च सं दुहातां मातरिश्वा पवमान: पुरस्तात्।
त्वष्टा वायु: सह सोमेन वात इमं सं दुह्रामनपस्फुरन्त:।।१।।
धर्मं तपाम्यमृतस्य धारया देवेभ्यो हव्यं परिधे सवित्रे।
शुक्रं देवा: शृतमदन्तु हव्यमासंजुह्वानाममृतस्य योनौ ।।२।।
उद्वासयाग्ने शृतमकर्म हव्यमा रोह पृष्ठममृतस्य धाम।
वनस्पतय उप बर्हि स्तृणीत मध्वा समन्तं घृतवत् कराथ ।।३।।
यो ऽप्सु यक्ष्म: शमयामि तं व ऊर्जा गव्यूतिं समनज्म्येताम्।
स्तन्यं क्षीरमविषं व: कृणोम्यशुन्धयन्तो ऽपि यूथमेत।।४।।
इडानां पुत्रा उत मित्रियाणां पयो धयन्त्यहृणीयमाना:।
ऋतुभि: सस्यमुत क्लृप्तमस्त्विर्यो गोपा रक्षतु वायुरेना: ।।५।।
पिबत घृतं यतिधा व एतद् गुहा हितं निहितं मानवेषु।
विश्वे देवा वैश्वदेवश्चाग्नौ यथाभागं हविषो मादयध्वम्।।६।।

यो देवानामसि श्रेष्ठो रुद्रस्तन्तिचरो वृषा।
अरिष्टा अस्माकं वीरा एतदस्तु हुतं तव ।।७।।
पूर्णमहं करीषिणं शतवन्तं सहस्त्रिणम् ।
विश्वेभिरग्ने देवैरिमं गोष्ठं सहारुहम् ।।८।।

५-१७

देवैनसादुन्मदितं क्षेत्रियाच्छपथादुत।
मुञ्चन्तु तस्मात् त्वा देवा उन्मत्तं रक्षसस्परि ।।१।।
मुनिं भवन्तं परि यानि वावृतू रक्षांस्यग्न उलुला करिक्रतु।
अतस्त्वं नो अधि पाहि वाजिन्निन्द्रेण मेदी बृहते रणाय ।।२।।
यथाग्रे देवा ऋभवो मनीषिणो मुनिमुन्मत्तमसृजन्निरेनस:।
एवा ते शक्रो अभयं कृणोतु मुच्यस्वैनसोऽभि नयामि रक्ष:।।३।।
यथा गावश्च भूम्यां पुरुषश्च न्योकस:।
एवोन्मत्तस्य ते मुने गृह्णातु पृथिवी मन:।।४।।
मुनिं दाधार पृथिवी मुनिं द्यौरभि रक्षति।
मुनिं हि विश्वा भूतानि मुनिमिन्द्रो अदीधरत्
परा रक्ष: सुवामि ते ।।५।।
इमं मे अग्ने पुरुषं मुमुग्धि य आवित्तो ग्रह्या लालपीति।
अतोदि ते कृणवद् भागधेयमुमुन्मदितो अगदो यथासत्।।६।।
अग्निष्टे नि शमयतु यत्त एतन् मन उह्यते।
जुहोमि विद्वांस्ते हविर्यथानुन्मदितो भुव: ।।७।।
पुनस्त्वा दुरप्सरस: पुनर्वात: पुनर्दिश:।
पुनर्यम: पुनर्यमस्य दूतास्ते त्वा मुञ्चन्त्वंहस:।
जीवातवे न मर्तवे ऽथो अरिष्टतातये ।।८।।

## ५-१८

उत देवा अवहितं देवा उद्धरथा पुनः।
उतो मरिष्यन्तं देवा दैवा कृणुथ जीवसे ।।१।।
आ त्वागमं शन्तातिभिरथो अरिष्टतातिभिः।
दक्षं ते भद्रमाहार्षं परा सुवाम्यामयत् ।।२।।
द्वाविमौ वातौ वात आ सिन्धोरा परावतः।
दक्षं ते अन्य आ वातु परान्यो वातु यद्रपः ।।३।।
आ वात वाहि भेषजं वि वात वाहि यद्रपः।
त्वं हि विश्वभेषजो देवानां दूत ईयसे ।।४।।
त्रायन्तामिमं देवास्त्रायन्तां मरुतो गणैः।
त्रायन्तां विश्वा भूतानि यथायमगदो ऽसति ।।५।।
घृतेन द्यावापृथिवी घृतेनापः समुक्षत।
घृतेन मुच्यस्वैनसो यदात्मकृतमारिथ ।।६।।
अयं मे हस्तो भगवानयं मे भगवत्तरः।
अयं मे विश्वभेषजोऽयं शिवाभिमर्शनः ।।७।।
हस्ताभ्यां दशशाखाभ्यां जिह्वा वाचः पुरोगवी।
अनामयित्नुभ्यां शंभुभ्यां ताभ्यां त्वाभि मृशामसि ।।८।।
आप इद्वा उ भेषजीरापो अमिवचातनीः।
अपो विश्वस्य भेषजीस्तास्ते कृण्वन्तु भेषजम् ।।९।।

## ५-१९

सहृदयं सामनस्यमविद्वेषं कृणोमि वः।
अन्यो अन्यमविहृण्यत वत्सं जातमिवाघ्न्या ।।१।।
अनुव्रतः पितुः पुत्रो मात्रा भवतु सर्वतः।
जाया पत्ये मधुमतीं वाचं वदतु शान्तिवाम् ।।२।।

मा भ्राता भ्रातरं द्विक्षन् मा स्वसारमुत स्वसा।
सम्यञ्च: सव्रता भूत्वा वाचं वदतु भद्रया ।।३।।
येन देवा न वियन्ति नो च विद्विषते मिथ:।
तत् कृण्मो ब्रह्म वो गृहे संज्ञानं पुरुषेभ्य: ।।४।।
ज्यायस्वन्तश्चित्तिनो मा वि यौष्ट संराधयन्त: सधुराश्चरन्त:।
अन्यो अन्यस्मै वल्गु वदन्त एत समग्रा स्थ सध्रीचीना: ।।५।।
समानी प्रपा सहवो ऽन्नभाग: समाने योक्त्रे सह वो युनज्मि ।
सम्यञ्चो ऽग्निं सपर्यतारा नाभिमिवाभित: ।।६।।
येन देवा हविषा यजत्राप मा त्वा न प्मानमघ्नत।
क्रोधं मन्युममृतं भामं दुरुक्तमभिशोचनमारे यक्ष्मं नि दध्मसि।।७।।
सध्रीचीनान् व: संमनस: कृणोम्येकश्नुष्टीन् संवननेन संहृद:।
देवा इवेदमृतं रक्षमाणा: सायंप्रात: सुसमितिर्वो अस्तु।।८।।

५-२०

परो ऽपेहि परश्चर परस्तर्द परस्तरम्।
अग्नेर्वातस्य ध्राज्या अप बाधे अहं त्वाम्।।१।।
उदकस्येदमयनं वातस्येदं निभञ्जनम्।
अग्नेर्धूमस्यायं पन्था नेह तर्दायनं तव।।२।।
परि त्वा कृष्णवर्तनिरग्निर्धूमेनार्चिषा।
स त्वं तर्द परश्चरान्यतर्द्धि तृणं यवात् ।।३।।
ये तर्दा असुरेषिता देवेभिरिषिताश्च ये।
सर्वास्तान् ब्रह्मणा वयं शलभाञ्जम्भयामसि ।।४।।
शलभस्य शलभ्यास्तर्दस्योत्पतत्त्रिण:।
अग्नेर्वातस्य ध्राज्यापि नह्याम आस्यम् ।।५।।
इदं यद् गवि भेषजं विश्वाद् रूपात् समाभृतम्।
आखोर्धुणस्य तर्दस्य तेषां स्नाव्नापि नह्यत ।।६।।

दृष्टा त्वमसि गन्धेनौषधिर्घुणजम्भनी।
आखोर्घुणस्य जातानि तानि जम्भय तेजसा ।।७।।
तूलं तर्दस्तृणस्यात्तु मूलमाखुर्धियेषित:।
अथो वृक्षस्य फल्गु यद् घुणा अदन्तु मा यवम् ।।८।।

*(इति अष्टर्चोनामपञ्चमकाण्डे चतुर्थो ऽनुवाक:)*

५-२१

द्यौश्च न: पिता पृथिवी च मातागिनिश्च नृचक्षा जातवेदा:।
ते तक्मानमधराञ्चं न्यञ्चं दशाह्वमस्यन्त्वधि दूरमस्मत् ।।१।।
तक्मन् यं ते क्षेत्रभागमघाभजं पृथिव्या: पूर्वे अर्धे।
अति हाय तमथ नो हिनस्मि ग्राहि: किल त्वा
ग्रहीष्यति किलासशीर्ष:।।२।।
तक्मन् पर्वता इमे हिमवन्त: सोमपृष्ठा:।
वातं दूतं भिषजं नो अक्रन् नश्येतो मरटाङ् अभि।।३।।
न त्वा स्त्रिय: कामयन्तश्रे न पुमांस: कतमे चन।
नेह तक्मन् काम्या अल्पो रोदिति नो महान् ।।४।।
मा नो हिंसीर्महतो मा हिंसीर्मह्यस्त्वम् ।
कुमारान् बभ्रो मा हिंसीर्मा नो हिंसी: कुमार्य: ।।५।।
य: साकमुत्पातयसि बलासं काममुद्रजम् ।
भीमास्ते तक्मन् हेतयस्ताभि ष्म परिवृङ्धि न: ।।६।।
अन्यक्षेत्रे च रमति सहस्राक्षो ऽमर्त्य:।
अभूदु प्रार्थस्तक्मा स उ नो मृडयिष्यति ।।७।।
तक्मन् न त इहाश्वा न गावो नेह ते गृहा:।
शकम्भरस्य मुष्टिहा पुनर्गच्छ महावृषान् ।।८।।

## ५-२२

यौ हेमन्तं स्वापयथो बलेनार्वाग्देवेभ्य उत यौ परो दिवः।
भवारुद्रयोः सुमतिं प्र णीमहेऽन्यत्रास्मदघविषा व्येतु ।।१।।
यो द्यामातनोति योऽन्तरिक्षं स्तभ्नात्योजसो जायमानः।
तस्मै रुद्राय हविषा विधेमान्यत्रास्मदघविषा व्येतु ।।२।।
ययोर्वधान्नापपद्यते किं चनान्तर्देवेषूत मानुषेषु।
ताभ्यां रुद्राभ्यां हविषा विधेमान्यत्रास्मदघविषा व्येतु ।।३।।
यावीशाते पशूनां पार्थिवानां चतुष्पदामुत वा ये द्विपादः।
ताभ्यां रुद्राभ्यां हविषा विधेमान्यत्रास्मदघविषा व्येतु ।।४।।
यस्य प्रतिहिता याः संविशन्त आरण्याः पशव उत ग्राम्यासः।
तस्मै रुद्राय हविषा विधेमान्यत्रास्मदघविषा व्येतु ।।५।।
यस्मादोषधयो भर्भर्यमाणा यन्ति
यस्माद् वृक्षासो न वियन्ति विश्वे।
वयांसि यस्मात् प्रचरन्ति भीषा
तस्मै रुद्राय हविषा विधेमान्यत्रास्मदघविषा व्येतु ।।६।।
यः पर्वतान् विदधेऽति विद्वान् यो भूतानि कल्पयति प्रजानन्।
तस्मै रुद्राय हविषा विधेमान्यत्रास्मदघविषा व्येतु ।।७।।
यावीशानौ चरतो द्विपदोऽस्य चतुष्पदः।
या उग्रौ क्षिप्रधन्वानौ
ताभ्यां रुद्राभ्यां हविषा विधेमान्यत्रास्मदघविषा व्येतु ।।८।।
पुनश्चक्षुः पुनः प्राणं पुनरायुर्धेहि नो जातवेदः।
रुद्र जलासभेषज विद्वांसस्त
एना हविषा विधेमान्यत्रास्मादघविषा व्येतु ।।९।।

## ५-२३

ईशानं त्वा भेषजानां विजेषाय वृणीमहे ।
चक्रे सहस्रवीर्यं सरस्वानोषधे त्वा ।।१।।
सत्यजितं शपथयावनीं सहमानां पुन:सराम्।
सर्वा: समह्व्योषधीरितो मा पारयानिति ।।२।।
या शशाप शपनेन या वा घ मूरमादधे।
या वा रसस्य प्रा सारेहे तोकमत्तु सा ।।३।।
प्रतीचीन फल हि त्वमपामार्ग बभुविथ।
सर्वान् मच्छपथाङ् अधि वरीयो यावया त्वम् ।।४।।
यच्च भ्रातृव्य: शपति यच्च जामि: शपाति न:।
ब्रह्मा यन् मन्युत: शपात् सर्वं तन्नो अधस्पदम्।।५।।
यां ते चक्रुरामे पात्रे यां सूत्रे नीललोहिते।
आमे मांसे कृत्यां यां चक्रुस्तया कृत्याकृतो जहि।।६।।
दु:स्वप्न्यं दुर्जीवितं रक्षो अद्भमराय्य:।
दुर्वाच: सर्वं दुर्भूतं तदितो नाशयामसि ।।७।।
क्षुधामारं तृष्णामारमगोतामनपत्यताम्।
अपामार्ग त्वया वयं सर्वं तदप मृज्महे ।।८।।

## ५-२४

समा भूमि: सूर्येणाह्ना रात्री समावती।
कृणोमि सत्यमूतये अरसा: सन्तु कृत्वरी: ।।१।।
यो देवा: कृत्यां कृत्वा हरादविदुषो गृहम्।
वत्सो धारिव मातरं तं प्रत्यगुप पद्यताम् ।।२।।
अमा कृत्वा पाप्मानं यस्त्वयान्यं जिघांसति।
अश्मानस्तस्यां दग्धायां बहुला: फट् करिक्रतु ।।३।।

सहस्रधामं विशिखान् विग्रीवाञ्छावया त्वम्।
प्रति स्म चकृषे कृत्यां प्रियां प्रियावतो हर ।।४।।
यां चकार न शशाक चक्रे पादमङ्गुलिम्।
चकार भद्रमस्मभ्यमभगा भगवद्भ्य: ।।५।।
अनयाहमोषध्या सर्वा: कृत्या अदूषयन्।
यां क्षेत्रे चकुर्यां गोभ्यो यां वा ते पुरुषेभ्य: ।।६।।
अपामार्गोऽप मार्ष्टु क्षेत्रियं शपथांश्च मत्।
अपाहि यातुधान्योऽप सर्वा अराय्य: ।।७।।
अपमृज्य यातुधानानुप सर्वा अराय्य:।
अपामार्ग प्रजया त्वं रय्या सचस्व न: ।।८।।

५-२५

उतेवास्यबन्धुकृदुतास्यनुजामिक:।
उतो कृत्याकृत: प्रजां नडमिवा च्छिन्धि वार्षिकम् ।।१।।
ब्राह्मणेन पर्युक्तोऽसि कण्वेन नार्षदेन।
सेनेवैषि त्विषीमती न तत्र भयमस्ति यत्र प्राप्नोस्योषधे ।।२।।
अग्रेस्योषधीनां ज्योतिषेवाभिधीपयन्।
उत पाकस्य त्रातास्युत हन्तासि रक्षस: ।।३।।
यददो देवा असुरांस्त्वयाग्रे निरकृण्वत।
तस्मादधि त्वमोषधे अपामार्गो अजायथा: ।।४।।
विभिन्दती शतशाखा विभिन्दन्नाम ते पिता।
प्रत्यग्वि भिन्धि तं त्वं यो अस्माङ् अभिदासति ।।५।।
असद् भूम्या: समभवत्तद्यामेति बृहद्व्च:।
तदित्तदो विधूमयत् प्रत्यक् कर्तारमृच्छतु ।।६।।
प्रत्यङ् हिंसं बभूविथ प्रतीचीनफलस्त्वम्।
प्रतीची: कृत्या आकृत्यामुं कृत्याकृतं जहि ।।७।।

शतेन मा परि पाहि सहस्रेणाभि रक्ष मा।
इन्द्रस्ते वीरुधां पत उग्र ओज्मानमा दधौ ।।८।।

*(इति अष्टर्चोनामपञ्चमकाण्डे पञ्चमो ऽनुवाक:)*

५-२६

अरात्या द्यावापृथिवी छिन्तं मूलमथो शिर:।
विच्छिद्य मध्यत: पृष्टीस्तां कृण्वाथामधस्पदम् ।।१।।
इदं शृणु जातवेदो यदमुष्या वचो मम।
अरात्या: सर्वमिच्छिर: प्रश्नं वृहतमश्विना ।।२।।
या स्वप्नया चरति गौर्भूत्वा जनाङ् अनु।
अरातिमिन्द्र त्वं जहि तामग्निरिव सा दहात् ।।३।।
श्रेष्ठो मे राजा वरुणो हवं सत्येन गच्छतु।
अरातिं हत्वा सन्तोकामुग्रो देवो ऽभि दासतु ।।४।।
देष्ट्री च या सिनीवाली सप्त च स्रोत्या या:।
अरातिं विश्वा भूतानि घ्नन्तु दासीमिवागसी ।।५।।
सोमो राजौषधीभि: सूर्याचन्द्रमसा उभा।
अरातिं सर्वे गन्धर्वा घ्नन्त्वप्सरसश्च या: ।।६।।
भवो राजा भवाशर्वाविन्द्रो वायुर्बृहस्पति:।
त्वष्टा मे अध्यक्ष: पूषा ते ऽरातिं घ्नन्तु सर्वदा ।।७।।
ये च देवा भूमिचरा ये चामी दिव्यासते।
ये अन्तरिक्षस्येशते ते ऽरातिं घ्नन्तु सव्रता ।।८।।
या चेषिता असुरैर्देवेभिरिषिता च या।
अथो या मन्योर्जायते ऽरातिं हन्मि ब्रह्मणा ।।९।।

५-२७

तदिन्नु मे अचच्छदन् महद् यक्ष्मं बृहद् वपु:।
विश्वं यद् देवी निर्ऋतिस्तना युजा मं मृत्योरिह जायते।।१।।

अमग्निश्चित् साप्रथोवददहिमहिराजन्तमोजसा।
आयं चित्रकुत्समर्तितिग्ममर्दयविनिकिल्बिन्दमोजसा ।।२।।
यावती द्यावापृथिवी वरिम्णा यावद् वा सप्त सिन्धवो महित्वा।
तावती निर्ऋतिर्विश्ववारा विश्वस्य या जायमानस्य देव ।।३।।
विश्वस्य हि जायमानस्य देवि पुष्टस्य वा पुष्टिपतिर्बभूविथ।
नमस्तु ते निर्ऋते मा त्वमस्मान् परा भुजो नापरं हातयासि।।४।।
देवीमहं निर्ऋतिं मन्यमान: पितेव पुत्रं न सचे वचोभि:।
विश्वस्य या जायमानस्य देव शिर: शिर: प्रति सूरो नु तस्थे।।५।।
असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यां तस्करस्यानु शिक्ष।
स्वपन्तमिच्छ सा त इत्था नमस्तु ते निर्ऋते ऽहं कृणोमि।।६।।
असुन्वका निर्ऋति: संजिघत्सुर्नास्या: पिता विद्यते नोत माता।
मध्यात् सस्त्रामनु जिघान सर्वे न देवानामसूर्ये समाप।।७।।
यदस्य पारे तमस: शुक्रं ज्योतिरजायत।
तन्न: पर्षदति द्विषोऽग्ने वैश्वानर द्युमत् ।।८।।

५-२८

प्रमुच्यमानो भुवनस्य गोपा पशुं नो अत्र प्रति भागमेतु ।
अग्निर्यज्ञं त्रिवृतं सप्ततन्तुं देवो देवेभ्यो हव्यं वहतु प्रजानन् ।।१।।
यौ ते दंष्ट्रौ सुदिहौ रोपयिष्णू निरुह्ययेते दक्षिणा: सं च पश्यत:।
अनाष्ट्रं न: पितरस्तत् कृणोतु यूपे बद्धं प्रमुमुच्यमायदन्नम् ।।२।।
अग्निस्तस्त्वमविदुष्ट: परेहीन्द्रस्य गोष्ठमपि धाव विद्वान् ।
धीरासस्त्वा कवय: सं मृजन्त्विषमूर्जं यजमानायमस्त्वत् ।।३।।
ऋषिभ्यस्त्वा सप्तभिरत्रिणाहं प्रति गृह्णामि हव मे स्योनम् ।
जमदग्नि: कश्यप: स्वाद्वेतद् भरद्वाजो मध्वन्नं कृणोतु ।
प्रतिग्रहीत्रे गोतमो वसिष्ठो विश्वामित्रो ददुषे शर्म यच्छात् ।।४।।

यन्नो अग्रं हविष आजगामान्नस्य पुत्रमुत सर्पिषो वा ।
यद्वा धनं वहतोराजगामाग्निष्टद्धोता सुहुतं कृणोतु ।।५।।
यदाज्यं प्रतिजग्रभ यांश्च व्रीहीनजं चन्द्रेण सह सज्जघास।
बृहस्पतिर्हविषो नो विधर्ता मा नो हिंसीच्छागो अश्वो वशा च।।६।।
अग्निर्न एतत् प्रति गृह्णातु विद्वान् बृहस्पतिः प्रत्येतु प्रजानन् ।
इन्द्रो मरुत्वान् सुहुतं कृणोत्वयक्ष्ममनमीवं ते अस्तु ।।७।।
यन्नो ददुर्वराहमक्षितं वसु यद्वा तल्पमुपधानेन नः सह।
यद्वाभियूथं सह वृष्ण्या नो अग्निष्टद्धोता सुहुतं कृणोतु।।८।।
यन्नः शालां विश्वभोगामिमां ददुर्गृहं वा युक्तं सह कृत्योत।
यद्वाहर उपनाहेन देवा अग्निष्टद्धोता सुहुतं कृणोतु।।९।।

५-२९

सूर्ये वर्च इति यच्छुश्रवाहं येन प्रजा ज्योतिरग्राश्चरन्ति।
सोमे वर्चो यद् गोषु वर्चो मयि देवा राष्ट्रभृतस्तदक्रन्।।१।।
यज्ञे वर्चो मरुतो यददूहन् वायुः पशून् सृजत् सं भगेन।
गन्धर्वाणामप्सरसां यदप्सु मयि देवा राष्ट्रभृतस्तदक्रन्।।२।।
यज्ञे वर्चो यजमाने च वर्च उदाभिषिक्ते रजनि यच्च वर्चः।
दक्षिणायां वर्चो अधि यन् मयि देवा राष्ट्रभृतस्तदक्रन्।।३।।
रथे वर्चो रथवाहने च वर्च इषुधौ वर्चः कवचे च वर्चः।
अश्वेषु वर्चो अधि यन् मयि देवा राष्ट्रभृतस्तदक्रन्।।४।।
सभायां वर्चः समित्यां च वर्चो वध्वां वर्च उत वर्चो वरेषु।
सुरायां वर्चो अधि यन् मयि देवा राष्ट्रभृतस्तदक्रन्।।५।।
सिंहे वर्च उत वर्चो व्याघ्रे वृके वर्चो मधुहारे च वर्चः।
श्येने वर्चः पत्त्वनां यद्बभूव मयि देवा राष्ट्रभृतस्तदक्रन्।।६।।
हिरण्यवर्चसमुत हस्तिवर्चसं संग्रामं यज्जज्ञिषां वर्च आहुः।
कृष्यां क्षेत्रर्षयो जन्यानजुर्मयि देवा राष्ट्रभृतस्तदक्रन्।।७।।

मयि वर्चो मयि श्रवो मयि द्युम्नं मयि त्विषि:।
अधस्पदं पृतन्यवोऽहं भूयासमुत्तम:।।८।।

५-३०

पयस्वतीरोषधय: पयस्वन् मामकं वच:।
अथो पयस्वतां पय आ हरामि सहस्रश:।।१।।
अहं वेद यथा पयश्चकार धान्यं बहु ।
संभृत्या नाम यो देवस्तं वयं यजामहे
सर्वस्यायज्वनो गृहे ।।२।।
यथा द्यौश्च पृथिवी च तस्थतुर्धरुणाय कम्।
एवा स्फातिं नि तनोमि मयारेषु खलेषु च।।३।।
यथा कूप: शतधार: सहस्रधारो अक्षित:।
एवा मे अस्तु धान्यं सहस्रधारमक्षितम्।।४।।
शतहस्त समाहर सहस्रहस्त सं किर।
यथेह स्फातिरायति कृतस्य कार्यस्य च।।५।।
इमा या: पञ्च प्रदिशो मानवी: पञ्च कृष्टय:।
सर्वा: शंभूर्मयोभुवो वृष्टे शापं
नदीरिवेह स्फातिं समावहान्।।६।।
इह स्फातिरोषधीनां देवानामुत संगम:।
इहैवाश्विनोरस्तु द्वापराश्वो रुहत्।।७।।
तिस्रो मात्रा गन्धर्वाणां चतस्रो गृहपत्नय:।
तासां या स्फातिमुत्तमा तया त्वाभि मृशामसि।।८।।
ज्येष्ठस्य त्वाङ्गिरसस्य हस्ताभ्यामा रभामहे ।
यथासद् बहुधान्यमयक्ष्मं बहुपूरुषम्।।९।।

*(इति अष्टर्चोनामपञ्चमकाण्डे षष्ठोऽनुवाक:)*

## ५-३१

अत्यासरत् प्रथमा धोक्षमाणा सर्वान् यज्ञान् बिभ्रती वैश्वदेवी।
उप वत्सं सृजत वाश्यते गौर्व्यसृष्ट: सुमना हिं कृणोमि।।१।।
बधान वत्समभि धेहि भुञ्जन्तीं निह्य गोधुगुप सीद दुग्धि।
इडामस्मा ओदनं पिन्वमाना कीलालं घृतं मदमन्नभागम्।।२।।
सा धावतु यमराज्ञ: सवत्सा सुकृतां पथा प्रथमेह दत्ता।
अतुर्ष्टदत्ता प्रथमेदमागन् वत्सेन गां सं सृज विश्वरूपाम्।।३।।
प्रथमेदमागन् प्रथमा दत्तेताह्यस्मिल्लोंके सय्य उ त्वा ददाति।
सैनं धेनो: प्रथमा पारयासि श्रद्धया दत्ता परमे व्योमन्।।४।।
जानीहि स्म संस्कृते धेनो गोपतिं यस्त्वा ददाति प्रथमा स्वधानाम्।
पूर्वा हि तत्र सुकृत: परेह्यथैष एता जरस: परस्तात्।।५।।
अति धेनुरनड्वाहमत्यन्यद्वयो अक्रमीत्।
अति वत्सानां पितरमृषभं प्रति मा सरत्।।६।।
ज्योतिष्मती सुकृतो याहि सूरे स्योनास्ते धेनो पतयो भवन्तु।
सप्त त्वा सूर्या अन्वा तपन्तु यमं धाव माति सर: पराची:।।७।।
दात्रे मूत्रे मह्यं दुहानभौ लोकौ भुञ्जती वि क्रमस्व।
इषमूर्जं दक्षिणा: संवसाना भगस्य धारामवसे प्रतीम:।।८।।
सहस्राङ्गा शतं ज्योतींष्यस्या यज्ञस्य पप्रिरमृता स्वर्गा।
सा न ऐतु दक्षिणा विश्वरूपाहिंसन्तीं प्रति गृह्णीम एनाम्।।९।।

## ५-३२

ये ते पाशा वरुण सप्तसप्ततीस्त्रेधा तिष्ठन्ति विसिता रुशन्त:।
छिनन्ति सर्वे अनृतं वदन्तं य: सत्यवाद्यति तं सृजन्ति ।।१।।
इह स्पश: प्र चरन्तीमे अस्य सहस्राक्षा अति पश्यन्ति भुमिम्।
योऽस्य वृत्रं प्रमिनाति कश्चन स मुच्यते वरुणस्य पाशात् ।।२।।

उतेयमस्य पृथिवी समीच्युतासौ द्यौर्बृहती दूरे अन्ता।
उतो समुद्रो वरुणस्य कुक्षा उतास्मिन्नल्प उदकेन मुक्त: ।।३।।
यस्तिष्ठति मनसा यश्च वञ्चति यो निलायं चरति य: प्रलायम्।
द्वौ यद्वदत: सन्निषद्य राजा तद्वेद वरुणस्तृतीय: ।।४।।
सर्वं तद्राजा वरुणो वि चष्टे यदन्तरा रोदसी यत् परस्तात्।
संख्याता अस्य निमिषो जनानामक्षान्न श्वघ्नी भुवना मिमीते ।।५।।
त्वमेव राजन् वरुण धर्ता देवानामसि विश्वरूप:।
दुश्चर्मास्त्वधम: पिशङ्गो य: सत्यां वाचमनृतेन हन्ति ।।६।।
य: समाम्यो वरुणो यो व्याम्यो य: सन्देश्यो वरुणो यो विदेश्य:।
यो दैव्यो वरुणो यश्च मानुष: सर्वांस्त्वेतान् प्रति मुञ्चाम्यत्र ।।७।।
शतेन पाशैर्वरुणाभि धेहि मा ते मोच्यनृतवाङ् नृचक्ष:।
आस्तां जाल्म उदरं श्रंसयित्वा केश इवावध्र: परिकृत्यमान:।।८।।
उतो त्वतत् प्र पातयत्वतो त्वदपि नह्यसि ।
उतो तदस्वकं कृत्वा राजा वरुण ईयते ।।९।।
ऐनं छिनत्ति वरुणो नड़ं कशिपुने यथा ।
मूलं तस्य वृश्चति य एनं प्रमिमीषति ।।१०।।

५-३३

य इमां देवो मेखलामाबबन्ध य: संननाह य उ मा युयोज।
यस्य देवस्य प्रशिषा चरामि स पारमिच्छात् स उ मा वि मुञ्चात्।।१।।
आहुतास्यविहुतर्षीणामस्यायुधम् ।
पूर्वा व्रतस्य प्राश्नाति वीरघ्नी भव मेखले ।।२।।
मृत्योरहं ब्रह्मचारी यदस्मि भूतां निर्याचं पुरुषं यमाय ।
तमहं ब्रह्मणा तपसा श्रमेणानैनं मेखलया सिनामि ।।३।।
अयं वज्रस्तर्पयतां व्रतेनावास्य राष्ट्रमभि हन्तु जीवम्।
भिनत्तु स्कन्धान् प्र शृणातूष्णिहा:।।४।।

अधरोत्तरमधरोत्तरेण गूढ: पृथिव्या मोत् सृपत्।
वज्रेणावहत: शयान् ।।५।।
यो जिनाति तमन्विच्छ यो जिनाति तमिज्जहि ।
जिनतो वज्र सायक सीमन्तमन्वञ्चमनु पातय ।।६।।
यदश्नामि बलं कुर्वे वज्रमा ददा इति ।
स्कन्धानमुष्य शातयन् वृत्रस्येव शचीपति:।।७।।
यत् पिबामि सं पिबामि समुद्र इव संपिब:।
प्राणानमुष्य संपिबन् सं पिबाम्यहं पिबम् ।।८।।
यद् गिरामि सं गिरामि समुद्र इव संगिर:।
प्राणानमुष्य संगिरन् सं गिराम्यहं गिरम् ।।९।।
श्रद्धाया दुहिता तपसोऽधि जाता स्वसर्षीणां भूतकृतां बभूव।
सा नो मेखले मतिमा धेहि मेधामथो नो धेहि तप इन्द्रियं च।।१०।।
यां त्वा पूर्वे भूतकृत ऋषय: परिबेधिरे ।
सा त्वं परि ष्वजस्व मा दीर्घायुत्वाय मेखले ।।११।।

५-३४

अशन्ते श्वश्रूर्वदतु श्वशुरस्ते अशन्तरम् ।
देवा ते अभिशोचनं ब्रह्म विद्वेषणं कृतम् ।।१।।
आ क्रन्दयोलुला कुरु वाचमा धेह्यप्रियाम् ।
शिरो लिप्सस्व हस्ताभ्यां केशास्ते अभिशोचनम् ।।२।।
ये केशा यौ प्रतिधी यत् कुरीरं य ओपश:।
अथो ये ते स्वा: सन्ति सर्वे ते तेऽभिशोचनम् ।।३।।
अप त्रस परिधाना उन्मादनं कृणोमि ते ।
अथो यत्ते स्वं वास: सर्वं तत्ते ऽभिशोचनम् ।।४।।
अर्कमद्धि प्र पतातो मुनिचक्षुं कृणोमि ते ।
अथो श्वभ्यो रायद्भ्य: प्रति स्म गङ्गणं कुरु ।।५।।

उत्तिष्ठारे पलायस्व मरीचीनां पदं भव ।
अथो यत् कार्यं कुर्वासां समृष मुष्कयो: ।।६।।
उप क्ष्वेदाभि चालय वातस्तूलमिवैजय ।
दद्भि: संदह्य बाह्वोरुदद्भि मुरवस्थिये ।।७।।
अधि गाय शावलेयं शौणेयं साधुवाहिनम् ।
काल्माषे यस्य चक्रुर्ध्यायत: प्रति चालय ।।८।।
रिश्यपुच्छं शुन:पुच्छं वातरंहं मनोजवम् ।
तं ते रथं सं भरन्तु देवास्तेना चरामि पतिमिच्छमाना।।९।।

५-३५

अग्नये समनमन् तस्मै पृथिव्या समनमन् ।
यथाग्नये पृथिव्या समनमन्नेवा मह्यं संनम: सं नमन्तु ।
वित्तिं भूतिं पुष्टिं पशून् ब्रह्म ब्राह्मणवर्चसम् ।
सं नतय स्थ सं मे नमत स्वाहा ।।१।।
वायवे समनमन् तस्मा अन्तरिक्षेण समनमन् ।
यथा वायवे अन्तरिक्षेण समनमन्नेवा मह्यं संनम: सं नमन्तु ।
वित्तिं भूतिं पुष्टिं पशून् ब्रह्म ब्राह्मणवर्चसम् ।
सं नतय स्थ सं मे नमत स्वाहा ।।२।।
सूर्याय समनमन् तस्मै दिवा समनमन् ।
यथा सूर्याय दिवा समनमन्नेवा मह्यं संनम: सं नमन्तु।
वित्तिं भूतिं पुष्टिं पशून् ब्रह्म ब्राह्मणवर्चसम् ।
सं नतय स्थ सं मे नमत स्वाहा ।।३।।
चन्द्राय समनमन् तस्मै नक्षत्रै: समनमन् ।
यथा चन्द्राय नक्षत्रै: समनमन्नेवा मह्यं संनम: सं नमन्तु।
वित्तिं भूतिं पुष्टिं पशून् ब्रह्म ब्राह्मणवर्चसम् ।
सं नतय स्थ सं मे नमत स्वाहा ।।४।।

सोमाय समनमन् तस्मा ओषधीभि: समनमन् ।
यथा सोमायौषधीभि: समनमन्नेवा मह्यं संनम: सं नमन्तु ।
वित्तिं भूतिं पुष्टिं पशून् ब्रह्म ब्राह्मणवर्चसम् ।
सं नतय स्थ सं मे नमत स्वाहा ।।५।।
यज्ञाय समनमन् तस्मै दक्षिणाभि: समनमन् ।
यथा यज्ञाय दक्षिणाभि: समनमन्नेवा मह्यं संनम: सं नमन्तु।
वित्तिं भूतिं पुष्टिं पशून् ब्रह्म ब्राह्मणवर्चसम् ।
सं नतय स्थ सं मे नमत स्वाहा ।।६।।
समुद्राय समनमन् तस्मै नदीभि: समनमन् ।
यथा समुद्रय नदीभि: समनमन्नेवा मह्यं संनम: सं नमन्तु ।
वित्तिं भूतिं पुष्टिं पशून् ब्रह्म ब्राह्मणवर्चसम् ।
सं नतय स्थ सं मे नमत स्वाहा ।।७।।
ब्रह्मणे समनमन् तस्मै ब्रह्मचारिभि: समनमन् ।
यथा ब्रह्मणे ब्रह्मचारिभि: समनमन्नेवा मह्यं संनम: सं नमन्तु ।
वित्तिं भूतिं पुष्टिं पशून् ब्रह्म ब्राह्मणवर्चसम् ।
सं नतय स्थ सं मे नमत स्वाहा ।।८।।
इन्द्राय समनमन् तस्मै वीर्येण समनमन् ।
यथेन्द्राय वीर्येण समनमन्नेवा मह्यं संनम: सं नमन्तु ।
वित्तिं भूतिं पुष्टिं पशून् ब्रह्म ब्राह्मणवर्चसम् ।
सं नतय स्थ सं मे नमत स्वाहा ।।९।।
देवेभ्य: समनमन् तेभ्यो ऽमृतेन समनमन् ।
यथा देवेभ्यो ऽमृतेन समनमन्नेवा मह्यं संनम: सं नमन्तु ।
वित्तिं भूतिं पुष्टिं पशून् ब्रह्म ब्राह्मणवर्चसम् ।
सं नतय स्थ सं मे नमत स्वाहा ।।१०।।

प्रजापतये समनमत् तस्मै प्रजाभि: समनमन् ।
यथा प्रजापतये प्रजाभि: समनमन्नेवा मह्यं संनम: सं नमन्तु।
वित्तिं भूतिं पुष्टिं पशून् ब्रह्म ब्राह्मणवर्चसम् ।
सं नतय स्थ सं मे नमत स्वाहा ।।११।।
सप्त संनमोऽष्टमी धीतिसाधनी ।
सं कामानध्वन: कृणु सं ज्ञानमस्तु वो धने ।।१२।।

*(इति अष्टर्चोनामपञ्चमकाण्डे सप्तमो ऽनुवाकं:)*

## ५-३६

ये वारुणा उत नैर्ऋता वनस्पतीनां वीरुधां च पाशा:।
ये भौमा भूम्या अधि संबभूवुस्ते त्वा न हिंसाञ्छिवतातिरस्तु ते ।।१।।
ये अन्तरिक्षे दिवि ये च पाशा अन्ने विचृता बहुधा सिनन्ति ।
ये पशुभ्यो अधि संबभूवुस्ते त्वा न हिंसाञ्छिवतातिरस्तु ते ।।२।।
यन्मानुषं मनुष्या: शपन्ते यां वां होत्रां पित्र्यामारभन्ते ।
समाम्यो वरुणो यं जघान स त्वा न हिंसाञ्छिवतातिरस्तु ते ।।३।।
अप: प्रगाद्यदि वा समामिषे अग्निमारेमिषे यदि वा समिद्धम् ।
विद्वानविद्वाननृतं यदुवक्थ तत् त्वा न हिंसाञ्छिवतातिरस्तु ते ।।४।।
यत् प्रतीच्यां दृषदपिष्टाङ् आमपेषाङ् आमपात्रे पपाथ।
हीन: सत्येनानृतं यदुवक्थ तत् त्वा न हिंसाञ्छिवतातिरस्तु ते ।।५।।
यं बाणवन्तं सुदिहं संभरन्ति यं वा हस्तं ब्राह्मणस्यारभन्ते ।
समाम्यो वरुणो य आजगाम तस्य
श्मशानादधि लोष्ट्र आमृत: स त्वा न हिंसाञ्छिवतातिरस्तु ते ।।६।।
यं ग्रावाणमारभन्ते येनासूनभिषुण्वन्ति सोमम् ।
यद्वा धनं धनकामो निरेमिषे क्षेत्रं गामश्वं पुरुषं वोभयादत्
तत् त्वा न हिंसाञ्छिवतातिरस्तु ते ।।७।।

अप: प्रगाद्यदि वा व्यामिषे अग्निमारेमिषे यदि वा समिद्धम् ।
जाम्या हस्तं कृतमारेमिषे धनुर्वोत्ततमिति चक्रमिथ ।
मन्युर्वो राज्ञो वरुणस्यासिसक्त स त्वा न हिंसाञ्छिवतातिरस्तु ते।।८।।

५-३७

या ते प्रजापिहिता पुराभूद् योनिर्वा मुग्धा निहिता पिशाचैः।
आस्नानं वा यदभितिष्ठाथ घोरं सर्वं तत्ते ब्रह्मणा सूदयामि ।।१।।
यद्वास्याः प्रजा वरुणेन गुष्पिता दुर्णामानो वार्त्विथमस्याहरन्ति ।
द्वेषात् सपत्न्याद् यदि चक्रुरस्या अयं ता नाष्ट्रा अप हन्त्वग्निः ।।२।।
अस्याः स्त्रिया यदि लक्ष्मीरपुत्र्या गर्भो वास्या यातुधानैः पराभृतः ।
दुष्वप्न्यं वा यत् स्वपती ददर्शेन्द्राग्नी तत् कृणुतां भद्रया पुनः ।।३।।
देवैनसाद् यदि पुत्रं न विन्दसे मनुष्याणां वा त्वा शपथो रराध ।
पितृभिर्वा ते यदि सूतः परिष्ठित इदं तं निष्कृण्मो जनयासि पुत्रम् ।।४।।
वैश्वानरो जन्मना जातवेदाः प्रजापतिः सिञ्चन्तु रेतो अस्याम् ।
बाधतां द्वेषो निर्ऋतिं पराचैः पुत्रिणीमिमां प्रस्वं कृणोतु ।।५।।
इह प्रजामग्निरस्यै दधात्वादित्येभिर्वसुभिः संविदानः ।
विश्वे देवा हवमा यन्तु म इमं पुत्रो अस्यां जायतां वीर्यावान् ।।६।।
येन देव्यदितिर्गर्भमादधे येन प्रजा असृजत प्रजापतिः ।
तेनाहमस्यै हविषा जुहोमि यथा पुमांसं जनयाति पुत्रम् ।।७।।
वन्वे ते पुत्रं परि देवताभ्यो अनु मन्यन्तां मरुतः पृश्निमातरः।
गर्भस्त्वा दशमास्यः प्र विशतु कुमारं जातं पिपृतामुपस्थे ।।८।।

५-३८

केश्यग्निं केशी विषं केशी बिभर्ति रोदसि ।
केशी विश्वं स्वदृशे केशीदं ज्योतिरुच्यते ।।१।।
मुनयो वातरशनाः पिशङ्गा वसते मलाः।
वातस्यानु ध्राजिं यन्ति यद् देवासो अयुक्षत ।।२।।

उनमदिता मौनेयेन वातां आ तस्थिमा वयम् ।
शरीरेदस्माकं यूयं मर्तासो अभि पश्यथ ।।३।।
अन्तरिक्षेण पतति स्वर्भूतावचाकशत् ।
मुनिर्देवस्यदेवस्य सौकृत्याय सखा हित:।।४।।
इन्द्रस्याश्वो वायो: सखाथो देवेषितो मुनि:।
उभा समुद्रावा क्षयति सद्य: पूर्वमुतापरम् ।।५।।
गन्धर्वाणामप्सरसां देवानां चरणे चरन् ।
मुनि: केतस्य संविद्वान् सखा स्वादुर्मदिन्तम:।।६।।
वायुरस्मा उपामन्थत् पिनष्टि स्मा कुनंनमा ।
मुनिर्विषस्य पात्रेण यद्रुद्रेणापिबत् सह ।।७।।
संयुक्ते द्यावापृथिवी तिष्ठन्ती अविचर्त्ये ।
केशेनैकस्य देवस्य व्यष्टभ्नाच्छचीपति: ।।८।।

५-३९

न तमंहो न दुरितं देवासो अष्ट मर्त्यम् ।
सजोषसो यमर्यमा मित्रो नयन्ति वरुणो अति द्विष:।।१।।
तद्धि वयं वृणीमहे वरुण मित्रार्यमन् ।
यन्नो निरंहसो यूयं पाथ नेथा च मर्त्यमति द्विष:।।२।।
ते नूनं नो यूयमूतये वरुण मित्रार्यमन् ।
नयिष्ठा नो नेषिण स्थ पर्षिष्ठा: पर्षिणो अति द्विष:।।३।।
शुनमस्मभ्यमूतये वरुण मित्रार्यमन् ।
शर्म यच्छाथ सप्रथ आदित्यासो यदीमहे अति द्विष:।।४।।
आदित्यासो अति सृधो वरुणो मित्रो अर्यमा ।
रुद्रं मरुद्भिरुग्रं हुवेमेन्द्रमग्निं स्वस्तये अति द्विष:।।५।।
नेतार ऊ षु णस्तिरो वरुणो मित्रो अर्यमा ।
अति विश्वानि दुरिता राजानश्चर्षणीनामति द्विष:।।६।।

यूयं विश्वं परि पाथ वरुण मित्रार्यमन् ।
युष्माकं शर्मणि प्रिया स्याम सुप्रणीतयोऽति द्विष: ।।७।।
यथा ह त्यद्वसवो गौर्यं चित्यद्विषताममुञ्चता यजत्रा: ।
एवोष्वस्मन् मुञ्चता व्यंह: प्र तार्यग्ने प्रतरं न आयु: ।।८।।

५-४०

देवस्य त्वा सवितु: प्रसवेऽश्विनोर्बाहुभ्यां
पूष्णो हस्ताभ्यां प्रसूतो ब्राह्मणेभ्यो निर्वपामि ।
स मे मा क्षेष्ट सदमस्यमान: पितृणां लोके ।।१।।
अनुमतं पृथिव्येमं पचाम्यनु मे द्यौर्मन्वतामन्वन्तरिक्षम् ।
अनुमन्यतामदितिर्देवपुत्रा इमे स्वर्गे लोके अस्तु ।।२।।
ब्रह्मणोखामधि दधाम्यग्नौ भूम्यां त्वा भूमिमधि धरयामि ।
अग्नि: पचन् रक्षत्वोदनमिमं
रक्ष: पिशाचान् नुदतां जातवेदा: ।।३।।
अच्युतमक्षितं विश्वदानीमुत्सिमिव सदमक्षीयमाणम् ।
पिता पितामह उत यस्तृतीयस्त एनं भागमुप जीवन्त्वत्र ।।४।।
प्रपीनमक्षितं विश्वदानीं सोममिव पुनराप्यायमानम् ।
पुत्र: पौत्र उत य: प्रपौत्रस्तेषामस्तु निहितो भाग एष: ।।५।।
मा ते जारीन् निहितो भाग एष मानुषन्मानुषद् गुप्तो अस्तु ।
वैवस्वते नि दधे शेवधिमेतं तस्मोत् सृजतु मह्यमेव ।।६।।
पुन: पूर्यतां यदहंत्वस्यौदनोऽयं तिष्ठत्वक्षित: सदा ।
वैवस्वतेन गुप्तो अस्तु राज्ञा ममैतोरूप जीवन्त मे स्वा: ।।७।।
शतधारं सहस्रधारमुत्समक्षितं व्यचमानं सलिलस्य पृष्ठे ।
ऊर्जं दुहानमनपस्फुरन्तमुपासीय सुकृतां यत्र लोक: ।।८।।

*(इति अष्टर्चोनामपञ्चमकाण्डे अष्टमो ऽनुवाक:)*

*इत्यथर्ववेद पैप्पलाद संहितायां अष्टर्चोनामपञ्चमकाण्ड:समाप्त:*

# अथ नवर्चोनाम षष्ठकाण्ड:

६-१

तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्ण: ।
सद्यो जज्ञानो नि रिणाति शत्रूननु यं विश्वे मदन्त्यूमा: ।।१।।
वावृधान: शवसा भूर्योजा: शत्रुर्दासाय भियसं दधाति ।
अव्यनच्च व्यनच्च सस्नि सं ते नवन्त प्रभृता मदेषु ।।२।।
त्वे क्रतुमपि पृञ्चन्ति विश्वे द्विर्यदेते त्रिर्भवन्त्यूमा: ।
स्वादो: स्वादीय: स्वादुना सृजा समद: सु मधु मधुनाभि योधी: ।।३।।
इति चिद्धि त्वा धना जयन्तं रणेरणे अनुमदन्ति विप्रा: ।
ओजीयो धृष्णो स्थिरमा तनुष्व मा त्वा दभन्दुरेवा यातुधाना: ।।४।।
त्वया वयं शाशद्महे रणेषु प्रपश्यन्तो युधेन्यानि भूरि ।
चोदयामि त आयुधा वचोभि: सं ते श्यामि ब्रह्मणा वयांसि ।।५।।
स्तुषेय्यं पुरुवर्पसमृभ्वमिनतममाप्त्यमाप्त्यानाम् ।
आ दर्शति शवसा सप्त दानून् प्र साक्षते प्रतिमानानि भूरि ।।६।।
नि तद्दधिषेऽवरं परं च यस्मिन्नाविथावसा दुरोणे ।
आ मातरा स्थापयसे जिगत्नू अत इनोषि कर्वरा पुरूणि ।।७।।
इमा ब्रह्म बृहद्दिवो विवक्तीन्द्राय शूषमग्रिय: स्वर्षा: ।
महो गोत्रस्य क्षयति स्वराजो दुरश्च विश्वा अवृणोदप स्वा: ।।८।।
एवा महान्बृहद्दिवो अथर्वावोचत्स्वां तन्वमिन्द्रमेव ।
स्वसारो मातरिभ्वरीररिप्रा हिन्वन्ति च शवसा वर्धयन्ति च ।।९।।

६-२

ऋधङ्मन्द्रयोनिनोविभावा अमृतासु: सुजन्मा वर्धमान: ।
अदब्धासुर्भ्राजमानो ऽहेव त्रितो दाधार त्रीणि ।।१।।

नि यो धर्मणि प्रथम: ससादातो वपूंषि कृणुते पुरूणि ।
धास्युर्योनिं प्रथम आ विवेशा यो वाचमनुदितां चिकाय ।।२।।
यस्ते शोकस्तन्व आरिरेच क्षरद्धिरण्यं शुचयो ऽनु स्वा: ।
अत्रा दधिषे अमृतानि नामास्मे वस्त्राणीष एरयन्त ।।३।।
प्र यदेते प्रतरं पूर्व्यं गु: सद:सद आतिष्ठन्तो अजुर्यम् ।
कवि: शुषस्य मातरा रिहाणे जामिर्वधुर्यु: प्रतिमानिमीत ।।४।।
तदू षु ते महा पृथुर्यमन्नम: कवि: काव्येनाकृणोत् ।
यत्सम्यञ्चो ऽभियन्तो ऽभि क्षामधा मही रोधचक्रा ववर्ध ।।५।।
सप्त मर्यादा: कवयस्ततक्षुस्तासामिदेकामभ्यंहुरो गात् ।
उतामृतासुर्व्रत एषि कृण्वन्नसुर आप्त: स्वधया समद् गु: ।।६।।
उतायुर्ज्येष्ठो रत्ना दधात्यूर्जा वा यं सचते कविर्दा: ।
पुत्रो वा यत्पितरा क्षत्रमीर्ते ज्येष्ठं मर्यादमह्वयन् स्वस्ति ।।७।।
दर्शन्नु तान्वरुण ये त इष्टावावर्वृतत: कृणवो वपूंषि ।
अर्धमर्धेन शवसा पृणक्ष्यर्धेन शुष्मं वर्धसे ऽमूर ।।८।।
अवीवृधाम शग्मयं सखायं वरुणं पुत्रमदितेरिषिरम् ।
कविशस्तान्यस्मै वचांस्यवोचाम रोदसी सत्यवाचौ ।।९।।

६-३

को व: पश्चात् प्राविच्छायत्क: पुर: प्राखनत्पथ: ।
यदैत त्वरमाणा वरुणप्रसूता आप: ।।१।।
प्रजापतिरसृजत स पुर: प्राखनत्पथ: ।
स उ नो अन्ववासृजत् तेन सृष्टा: क्षरामसि ।।२।।
पुनाना आपो बहुधा श्रवन्तीमांश्च लोकान् प्रदिशश्च सर्वा: ।
पुनन्त्वस्मान्दुरितादवद्यान् मुञ्चन्तु मृत्योर्निर्ऋतेरुपस्थात् ।।३।।

आपो अस्मान्मातर: सूदयन्तु घृतेन नो घृतपुव: पुनन्तु ।
विश्वं हि रिप्रं प्रवहन्ति देवीरुदिदाभ्य: शुचिरा पूत एमि ।।४।।
आपो देवीर्मातर: सूदयिष्णवो घृतच्युतो मधुना सं पपृचे ।
ता अस्मभ्यं सूरयो विश्वमायु: क्षप उस्रा वरिवस्यन्तु शुभ्रा:।।५।।
उदकस्योदकतमा रेवत्तमा रेवतीनाम् ।
शुन्धन्तामाप: शुन्धन्त्वस्मान् ।।६।।
यूयमापो वीरश्रियो यूयं सूदयथा शुचीन् ।
युष्माकमिद्दिशो महीरीयन्ते प्रदिश: पृथक् ।।७।।
यूयं मित्रस्य वरुणस्य योनिर्यूयं सोमस्य धेनवो मधिष्ठा:।
युष्मान्देवीर्देव आ क्षियतीन्दुर्यूयं जिन्वत ब्रह्मक्षत्रमाप: ।।८।।
शश्वदाभि: शाशदाना: शमनान्वयामसि ।
आपो विश्वस्य सूदनीर्या देवा मनवे दधु: ।।९।।
यद्धावन्ति पुनते तदापो यत्तिष्ठन्ति शुद्धा इत्तद्भवन्ति ।
नासामवद्यमविदं न रिप्रं सनादेव मधुना सं प्रपृचे ।।१०।।
हिरण्यवर्णा: शुचय: पावका: प्र चक्रमुर्हित्वावद्यमाप: ।
शतं च व: प्रस्रवणेषु देवी: सहस्रं च पवितार: पुनन्ति ।।११।।
तास्तादृशीर्ब्रह्माणं सूदयन्त्यङ्गोष्ठ्या स्तोत्र्या जीवधन्या:।
या विश्वस्य शुचिकृतो अयातोर्गाव इव पयसा स्था सुजाता:।।१२।।
विश्वाद्रिप्रान्मुञ्चत सिन्धवो नो यान्येनांसि चकृमा तनूभि:।
इन्द्रप्रशिष्टा वरुणप्रसूता आ सिञ्चतापो मध्वा समुद्रे ।।१३।।

## ६-४

रात्री माता नभ: पितार्यमा ते पितामह: ।
शिलाची नाम वा असि सा देवानामसि स्वसा ।।१।।
यस्त्वा पिबति जीवति त्रायसे पुरुषं त्वम् ।
धर्त्री च शश्वतामसि शश्वतां च न्यञ्जनी ।।२।।

यद् दण्डेन यदिष्वा यदरुर्हरसा कृतम् ।
तस्य त्वमसि भेषजी निष्कृतिर्नाम वा असि ।।३।।
भद्रा प्लक्षे नि तिष्ठस्यश्वत्थे खदिरे धवे ।
भद्रा न्यग्रोधे पर्णे सा न एह्यरुन्धति ।।४।।
वृक्षंवृक्षमा रोहसि वृषण्यन्तीव कन्यला ।
जयन्ती प्रत्यातिष्ठन्ती संजया नाम वा असि ।।५।।
हिरण्यवर्णे युवते शुष्मे लोमशवक्षणे ।
अपामसि स्वसा लाक्षे वातो हात्मा बभूव ते ।।६।।
हिरण्यवाहो सुभगे सूर्यवर्णे वपुष्टमे ।
रुतं गच्छति निष्कृतिः सेमं निष्कृधि पूरुषं ।।७।।
घृताची नाम कानीनो ऽजवभ्रु पिता तव ।
अश्वो यमस्य यः श्यावस्तस्य हास्नास्युक्षिता ।।८।।
अश्वस्यास्नः संपतिता सा पर्णमभि षिष्यदः ।
सरा पतत्रिण्यसि सा न एह्यरुन्धति ।।९।।
घृताचिके वातरथे विद्युत्पर्णे अरुन्धति ।
आतुरं गमिष्ठासि त्वमङ्ग निष्करीयसी ।।१०।।
यत्ते जग्धं पिशाचैस्तत्त आ प्यायतां पुनः ।
लाक्षा त्वा विश्वभेषजी देवेभिस्त्रायतां सह ।।११।।

६-५

यथा द्यौश्च पृथिवी च न विभीतो न रिष्यतः ।
एवा मे प्राण मा विभेरेवा मे ऽपान मा रिषः ।।१।।
यथा वायुश्चान्तरिक्षं च न विभीतो न रिष्यतः ।
एवा मे प्राण मा विभेरेवा मे ऽपान मा रिषः ।।२।।

यथा सूर्यश्च चन्द्रमाश्च न विभीतो न रिष्यत: ।
एवा मे प्राण मा विभेरेवा मे ऽपान मा रिष: ।।३।।
यथाहश्च रात्री च न विभीतो न रिष्यत: ।
एवा मे प्राण मा विभेरेवा मे ऽपान मा रिष: ।।४।।
यथा धेनुश्चानड्वांश्च न विभीतो न रिष्यत: ।
एवा मे प्राण मा विभेरेवा मे ऽपान मा रिष: ।।५।।
यथा मित्रश्च वरुणश्च न विभीतो न रिष्यत: ।
एवा मे प्राण मा विभेरेवा मे ऽपान मा रिष: ।।६।।
यथा ब्रह्म च क्षत्रं च न विभीतो न रिष्यत: ।
एवा मे प्राण मा विभेरेवा मे ऽपान मा रिष: ।।७।।
यथेन्द्रश्चेन्द्रियं च न विभीतो न रिष्यत: ।
एवा मे प्राण मा विभेरेवा मे ऽपान मा रिष: ।।८।।
यथा वीरश्च वीर्यं च न विभीतो न रिष्यत: ।
एवा मे प्राण मा विभेरेवा मे ऽपान मा रिष: ।।९।।
यथा प्राणश्चापानश्च न विभीतो न रिष्यत: ।
एवा मे प्राण मा विभेरेवा मे ऽपान मा रिष: ।।१०।।
यथा मृत्युश्चामृतं च न विभीतो न रिष्यत: ।
एवा मे प्राण मा विभेरेवा मे ऽपान मा रिष: ।।११।।
यथा सत्यं चानृतं च न विभीतो न रिष्यत: ।
एवा मे प्राण मा विभेरेवा मे ऽपान मा रिष: ।।१२।।
यथा भूतं च भव्यं च न विभीतो न रिष्यत: ।
एवा मे प्राण मा विभेरेवा मे ऽपान मा रिष: ।।१३।।

*(इति नवर्चोनामषष्ठकाण्डे प्रथमो ऽनुवाक:)*

६-६

मधुमन्मे निक्रमणं मधुमन्मे परायणम्।
वाचा मधुमदुद्यासमक्ष्यौ मे मधुसन्दृशी ।।१।।
मामनु प्रसारयन्मम पत्तो निपेदिवान् ।
अथो मे पुनरायतो अक्ष्यौ कामेन शुष्यताम् ।।२।।
वशा मधुघ ते मातोक्षा भ्रातर्षभः पिता ।
धेन्वा अधि प्रजातो ऽसि राजा सन्मधुमत्तमः ।।३।
वृषाणं वृष्ण्यावन्तं सोमपृष्ठं दिवि श्रितम् ।
इन्द्राण्यग्र आभरन् मधुघ भगाय कम् ।।४।।
पितुभोजनो मधुघः शौष्कास्यो हृदयाय कम् ।
स मा मधुनानक्तु यथाहं कामये तथा ।।५।।
सिन्धुप्रजानो मधुघो अश्व इव नीयते जनाङ् अनु ।
स मा मधुनानक्तु यथाहं कामये तथा ।।६।।
मधुमती सिनीवाली मधुना मा समुक्षतु ।
सा मा मधुनानक्तु यथाहं कामये तथा ।।७।।
यथा मधु मधुकृतो न्यञ्जन्ति मधावधि ।
एवा न्यनज्मि ते मनो अध्यस्यां मामकी तनू ।।८।।
यत्ते मनः परागतं यद् वद्धमिह वेह वा ।
तत्त आ वर्तयामसि मयि बध्नामि ते मनः ।।९।।

६-७

कश्यपश्च सुपर्णश्च यन् मरीच्यामतिष्ठताम् ।
सुपर्णः पर्यवापश्यत्समुद्रे भूमिमावृताम् ।।१।।
यां सुपर्णः पर्यपश्यदन्तर्महत्यर्णवे ।
तां सूकर त्वं मायया त्रिः समुद्रादुदाभरः ।।२।।

यं समुद्रादुदभरो भूमिं सूकर मायया ।
सैषा विषस्य दूषण्यस्मै भवतु भेषजी ।।३।।
अच्युता हिरण्येन या सत्ये अधितिष्ठति ।
तस्यास्ते विश्वधायसो विषदूषणमुद्धरे ।।४।।
यस्या: कुलायं सलिले अन्तर्महत्यर्णवे ।
तस्यास्ते विश्वधायसो विषदूषणमुद्धरे ।।५।।
यस्या भूम्या उपजीका गृहं कृण्वत आत्मने ।
तस्यास्ते विश्वधायसो विषदूषणमुद्धरे ।।६।।
यस्त्वा भूमे ऽन्वविन्दद्यस्त्वा भूम उदाभरत् ।
तयो: सहस्रधामन्नहं नामानि जग्रभ ।।७।।
यानि त इन्द्रो अकृणोद्भूमे नामानि वृत्रहा ।
तानि ते वभ्रो: सं विद्म सेहैधि विषदूषणी ।।८।।
यानि ते मरुतश्चक्रुर्यानि सप्तर्षयो विदु: ।
विश्व आदित्या यां विदु: सा भूमिर्विषदूषणी ।।९।।

६-८

सहस्व यातुधानान् सहस्व यातुधान्य: ।
सहस्व सर्वा रक्षांसि सहमानास्योषधे ।।१।।
सहमाने सहस्वति सहन्त्यहमुत्तरे ।
उताहमस्मि सासहि: सासहे व: सदान्वा: ।।२।।
या सहमाना चरसि सासहान इवर्षभ: ।
सदान्वाघ्नी रक्षोघ्नी सा त्वमुग्रास्योषधे ।।३।।
खेले है लम्वनस्तनि नश्येत: प्रामुत: पत ।
न त्वामविव्यचदिहोक्षेव शृङ्गवच्छिर: ।।४।।
असुवाने वहुपुत्रे अनन्तर्वे महोदरि ।
पथास्मत्सत्वरे त्वं शर्करा वस्यती चर ।।५।।

ये ऽरायाश्चरथ पाकस्येच्छन्त आसुतिम् ।
तानग्ने कृष्णवर्तने तीक्ष्णशृङ्गोदृशन्निहि ।।६।।
अदो यद् दारु प्लवते सिन्धोर्मध्ये अपूरुषम् ।
तदा रभस्व दुर्हणो तेन याहि परस्तरम् ।।७।।
यस्या जनित्रमिष्टर्गा अदृष्टाः क्रिमयः प्लुषयः ।
तस्यै वलासपत्न्यै नमस्कृणोमि कुष्ठ्यै ।।८।।
शर्वपुत्रे भवपत्नि यातुभ्रात्रि सदान्वे ।
तस्याद्धि पुत्रान् भ्रातृंश्च यत्र त्वापनयामसि ।।९।।

६-९

वृषायमंशुर्वृषभाय गृह्यते वृषायमुग्रो नृचक्षसे ।
दिव्यो नर्यो ऽचिक्रदन्महन्नामर्षभस्य यत्ककुत् ।।१।।
विषुवान्विष्णो भव त्वं यो नृपतिर्मम ।
अथो इन्द्र इव देवेभ्यो वि ब्रवीतु जनेभ्यः ।।२।।
मनुष्येभ्यो वि ब्रवीतु सजूरिन्द्रेण मेदिना ।
अग्निश्च तुभ्यं साहन्त्यो राष्ट्रं वैश्वानरो दधत् ।।३।।
यस्यायं भागर्षभ इन्द्राय परिणीयते ।
स हन्तु शत्रूनायतो अथो हन्तु परायतः ।।४।।
स हन्ता शत्रोर्भवतु हन्ता भवतु दोधताम् ।
विशामह प्रणीरयदग्रमुद्धिन्दतामसत् ।।५।।
आयुष्मन्तं वर्चस्वन्तमथो अधिपतिं विशाम् ।
अस्याः पृथिव्याश्चेत्तारमिममिन्द्रर्षभं कृणु ।।६।।
यः सुशृङ्गः सुककुदः कल्याणो वर्हिरासदत् ।
कार्षीवणप्रजानेनर्षभेण यजामहे ।।७।।
ऋषभेण यजमाना अक्रूरेणेव सर्पिषा ।
मृधश्च सर्वा इन्द्रेण पृतनाश्च सहामहे ।।८।।

यं तुभ्यं भागमृषभं देवा: केवल्यं ददु: ।
तेन वृत्राणि जङ्घ्नः शत्रूंश्च जह्याहवे ।।९।।
जहि शत्रून्वि मृधो नुदस्व कृष्या: संभूतो असि वीर्यावान् ।
इन्द्राय भागं परि त्वा नयाम उरुर्नो लोको
अपृतन्यो अस्तु ।।१०।।
घृतवृद्ध घृताहुत सहस्रशृङ्ग सुष्टुत ।
घृताहवन दीदिहि ।।११।।
यो घृतेनाभिघारित उग्रो जैत्राय तिष्ठसि ।
स न: सङ्कासु पारय पृतनासाह्येषु च ।।१२।।

६-१०

कर्की सुभागर्षभस्य पत्नी प्रजाकामा वशिनी वाशिता गौ: ।
तां सहस्रमेकमुखा ददाति गर्भं दधानामृतुना चरन्तीम् ।।१।।
गर्भं दधाना पय इहुहाना अग्निहोत्रं वैश्वदेवी दुहाना ।
गौर्णो मा हिंसीद्वरुणस्य पत्नी ।।२।।
कर्क्या योनिं संमनसो ऽभि गाव: प्रजां धित्सन्तो वृषणश्चरन्ति ।
सा न ऐत्वदितिर्विश्वरूपाभि क्रन्दन्ति भुवनान्येनाम् ।।३।।
प्रजापतिनेषितामृत्वियावतीमैनां प्रजाया ऋषभा: श्रयन्ते ।
वृषण्यन्तीं वृषण: सप्तनाम्नीं हिंकृण्वन्तो अभि नुदन्तु वाशिताम् ।।४।।
सा प्रत्यदर्श्युषसा सुवर्णा शुक्रां वसाना वरुणस्य निर्णिजम् ।
वैश्वदेवी स्वधामाभरन्ती प्रजां दाता पुष्यतु गोपतिष्टे ।।५।।
स्वयंस्थावर्यृषभाय तिष्ठसि प्रतीची सोमं प्रति सूर्यमग्निम् ।
अहिंसन्ती वाशिते मामुपेहि पशून्दाता पुष्यतु गोपतिष्टे ।।६।।
वशी दाता भवतु वाशिताया अग्नेर्भागमुस्त्रियां यो ददाति ।
प्रियं धाम हृदयं सोम्यं मधु वाजिनीं त्वा वाजिनो वाजयन्तु ।।७।।

यो वाशितायां गव्यन्तरग्निर्यदस्यां नृम्णं महिमा बभूव ।
नमस्तस्मै प्रतिगृह्णन् कृणोमि स्योना मे अस्तु तन्वे सुशेवा ।।८।।
एयमगन्वाशिता तां प्रतीम: पुंसां व्रातेन सह पुष्ट्या गौः ।
ऊर्जं दधाना घृतमिदुहाना सहस्रपोषाय मे अस्तु दात्रे ।।९।।

६-११

ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि षीमत: सुरुचो वेन आव: ।
स बुध्न्या उपमा अस्य विष्ठा: सतश्च योनिमसतश्च वि व:।।१।।
अनाप्ता ये व: प्रथमा यानि कर्माणि चक्रिरे ।
वीरान्नो अत्र मा दभन्तद्व एतत्पुरो दधे ।।२।।
प्रत्नान्मानात्परि ये संबभूवु: श्लोकवन्त: सौमनसस्य वन्तव: ।
अपानक्षासो वधिरा अहासतर्तस्य पन्थां न तरन्ति दुष्कृत:।।३।।
सहस्रधारमभि ते समस्वरन्दिवो नाके मधुज्विहा असश्चत: ।
तस्य स्पशो न नि मिषन्ति भूर्णय: पदेपदे पाशिन: सन्तु सेतवे।।४।।
पर्यू षु प्र धन्वा वाजसातये परि वृत्राणि सक्षणि: ।
दिवस्तदर्णवाङ् अन्वीयसे सनिस्रसो नामासि त्रयोदशो मास:।।५।।
इन्द्रस्य गृहो ऽसीन्द्रस्य शर्मासीन्द्रस्य वर्मासीन्द्रस्य वरूथमसि ।
व्येतेनावैतेनापैतेनारात्सीरसौ स्वाहा ।।६।।
तिग्मायुधौ तिग्महेती सुशेवावग्नीषोमाविह सु मृडतं न:।
मुमुक्तमस्मान् गृभीतानवद्याज्जुषेथां यज्ञममृतमस्मासु धत्तं स्वाहा ।।७।।
चक्षुषो हेते मनसो हेते ब्रह्मणो हेते मेन्यामेनिरसि ।
अमेनयस्ते सन्तु ये ऽस्मानभ्यघायन्ति स्वाहा ।।८।।
यो ऽस्मान् चक्षुषा मनसा यश्च वाचाकूत्या चित्त्या -
ब्रह्मणाघायुरभिदासात् ।

तमग्ने त्वं मेन्यामेनिं कृणु स्वाहा ।।९।।
उदायुरुत्कृतमुद्बलमुन्मनीषोदिन्द्रियं नृम्णमस्मासु धेहि स्वाहा ।।१०।।

६-१२

आयुष्कृतायुष्मती स्वधावन्तौ गोपा मे स्थो गोपायतं मा ।
आत्मसदौ मे स्तं तन्वे सुशेवौ मा मा हिंसिष्टं स्वाहा ।।१।।
इन्द्रस्य गृहो ऽसीन्द्रस्य शर्मासीन्द्रस्य वर्मासीन्द्रस्य वरूथमसि ।
तं त्वा प्र विशामि सर्वाङ्गः सर्वात्मा सर्वगुः सर्वपूरुषः
सह यन् मे ऽस्ति तेन।।२।।
अस्तृतो नामाहमयमस्मि स आत्मानं परि दधे द्यावापृथिवीभ्याम् ।
गोपीथाय प्र हूयसे ।।३।।
अस्तृतो नाम प्राजापत्यो देवो मासस्त्रयोदशः ।
सर्वगुः सर्वपूरुषः प्रागां देवपुरा अहं ।।४।।
अन्तः प्रागां देवपुराः सहग्रामः स्वस्तये ।
संवत्सरस्य मध्यतः सर्वैः सोदर्यैः सह ।।५।।
प्राहमगां देवपुरा य एवास्मि स एव सन् ।
यो मा कश्चाभिदासति स प्रजापतिमृच्छतु ।।६।।
अश्मासि प्रतिस्पशः पाहि रिषः पाहि द्विषः ।
पाहि दैव्याभिशस्त्याः स म इह तन्वं पाहि ।।७।।
यो ऽस्मान् प्राच्या दिशो ऽघायुरभिदासात् ।
एतत्सच्छादश्मवर्म नो ऽस्तु ।।८।।
यो ऽस्मान्दक्षिणाया दिशो ऽघायुरभिदासात् ।
एतत्सच्छादश्मवर्म नो ऽस्तु ।।९।।
यो ऽस्मान् प्रतीच्या दिशो ऽघायुरभिदासात् ।
एतत्सच्छादश्मवर्म नो ऽस्तु ।।१०।।

६-१३

यो ऽस्मानुदीच्या दिशो ऽघायुरभिदासात् ।
एतत्सर्च्छादश्मवर्म नो ऽस्तु ।।१।।
यो ऽस्मान्ध्रुवाया दिशो ऽघायुरभिदासात् ।
एतत्सर्च्छादश्मवर्म नो ऽस्तु ।।२।।
यो ऽस्मानूर्ध्वाया दिशो ऽघायुरभिदासात् ।
एतत्सर्च्छादश्मवर्म नो ऽस्तु ।।३।।
प्राच्यै दिशे स्वाहा ।।४।।
दक्षिणायै दिशे स्वाहा ।।५।।
प्रतीच्यै दिशे स्वाहा ।।६।।
उदीच्यै दिशे स्वाहा ।।७।।
ध्रुवायै दिशे स्वाहा ।।८।।
ऊर्ध्वायै दिशे स्वाहा ।।९।।
दिवे स्वाहा ।।१०।।
अन्तरिक्षाय स्वाहा ।।११।।
पृथिव्यै स्वाहा ।।१२।।
पृथिव्यै स्वाहा ।।१३।।
अन्तरिक्षाय स्वाहा ।।१४।।
दिवे स्वाहा ।।१५।।

६-१४

महाकण्ठं करीषजमूवध्यादमनाहुतिम् ।
ओष्ठ: कोकमुखश्च यस्तानितो नाशयामसि ।।१।।
रामदन्तमवदलं प्रहालमहिनासिकम् ।
उपवर्तं बलाहकं खेलं गर्दभनादिनं गृध्रं
हस्त्यायनं तानितो नाशयामसि ।।२।।

प्रमृश्यादिनमभ्यमं भीमहस्तं मरीमृशं ।
त्रस्ताक्षं मृद्वङ्गुलिं नखोग्रं दन्तवीर्यं तानितो नाशयामसि ।।३।।
पर्यन्यमभिपापदं जिगीषमाणं रूपकम् ।
अथो शलल्यं शेवलं तानितो नाशयामसि ।।४।।
तण्डमग्रेतुण्डिकमलिंशमुत वत्सपं ।
दामग्रन्थिं संनिस्त्रसमरण्येयं चार्म्येयं तानित नाशयामसि।।५।।
इदं यज्जानुकेशवं रक्षश्चरत्यासुरं वहि: प्रयुतमिच्छति ।
अंसून् पांस्यूंश्च केश्यानरायाञ्छ्वकिष्किणस्तानितो
नाशयामसि ।।६।।
य: कुमाराञ्जनस्यात्ति तरुणान्दास आसुर: ।
अराय: केश्यखलो यो जनान् हन्त्यत्ति च
तमितो नाशयामसि ।।७।।
हिराक्षो नाम गेह्यो ऽरायानामसूर्तहा ।
तमितो नाशयामसि ।।८।।
वितूलं भस्वमाखिदं वनक्रोशं च रोरुहं ।
आमादं प्रयुतैषणं पर्यून्दानं परिद्रवं
वृकस्य न्यंचं गङ्गणं तानितो नाशयामसि ।।९।।

६-१५

यश्च भूमा या च स्फातिर्योर्जा यो रसश्च ते ।
हरामि शक्र ताङ् अहं त्वया प्रत्तां शचीपते ।।१।।
क्षेत्रात्क्षेत्रादा हरामि स्फातिं सर्वां शचीपते ।
त्वयाहं वृत्रहन् प्रत्तमा हरामि गृहाङ् उप ।।२।।
यस्ते सीताभग: क्षेत्रे या राद्धिर्यच्च शीयते ।
अथो या निष्ठा ते क्षेत्रे तां त आदिषि ब्रह्मणा ।।३।।

यत्खले यन्मयारे यद्गोष्ठे यच्च शेवधौ ।
अथो यत्कुम्भ्यां शये तस्य ते रसमा ददे ।।४।।
ऊर्जा या ते निरुप्तस्योर्जा यावहतस्य ते ।
ऊर्जा ते पिष्यमाणस्योर्जा पिष्टात्त आ ददे ।।५।।
ऊर्जा या ते निरुप्तस्योर्जा यावहतस्य ते ।
ऊर्जा ते पच्यमानस्योर्जा पक्वात्ते आ ददे ।।६।।
ऊर्जा या ते प्रणद्धस्योर्जा या मथितस्य ते ।
ऊर्जा ते दुह्यमानस्योर्जा दुग्धात्त आ ददे ।।७।।
आ ते ददे गवामूर्जामूर्जामविभ्य आ ददे ।
अजाभ्य ऊर्जामादाया त एकशफाद्ददे ।।८।।
ऊर्जा या ते पुरुषेषूर्जा वित्ते च वेद्ये ।
ऊर्जा ते सर्वेषामहं गृहाणां ब्रह्मणा ददे ।।९।।

६-१६

पितुं नु स्तोषं महो धर्माणं तविषीं ।
यस्य त्रितो व्योजसा वृत्रं विपर्वमर्दयत् ।।१।।
स्वादो पितो मधो पितो वयं त्वा ववृमहे ।
अस्माकमविता भव ।।२।।
उप नः पितवा गहि शिवः शिवाभिरूतिभिः ।
मयोभूरद्विषेण्यः सखा सुशेव एधि नः ।।३।।
तव त्ये पितो रसा रजांस्यनु विष्ठिताः ।
दिवि वाता इव श्रिताः ।।४।।
तव त्ये पितो ददतस्तव स्वादिष्ठ ते पितो ।
प्र स्वाद्मानो रसानां तुविग्रीवा इवेरते ।।५।।
त्वे पितो महानां देवानां मनो हितं ।
अकारि चारु केतुना तवाहिमवसावधीत् ।।६।।

यददः पितो अजगन्विवस्व पर्वतानां ।
अत्रा चिन्नो मधो पितो ऽरं भक्षाय गम्याः ।।७।।
यत्ते सोम गवाशिरो यवाशिरो भजामहे ।
वातापे पीव इद्भव ।।८।।
यदपामोषधीनां परिंशमारिशामहे ।
वातापे पीव इद्भव ।।९।।
करम्भ ओषधे भव पीवो वृक्क उदारथिः ।
वातापे पीव इद्भव ।।१०।।
तं त्वा वयं पितो वचोभिर्गावो न हव्या सुषूदिम ।
अस्मभ्यं त्वा सधमादं देवेभ्यस्त्वा सधमादं ।।११।।

६-१७

प्रति त्यं चारुमध्वरं गोपीथाय प्र हूयसे ।
मरुद्भिरग्न आ गहि ।।१।।
नहि देवो न मर्त्यो महस्तव क्रतुं परः ।
मरुद्भिरग्न आ गहि ।।२।।
ये महो रजसो विदुर्विश्वे देवासो अद्रुहः ।
मरुद्भिरग्न आ गहि ।।३।।
ये शुभ्रा घोरवर्पसः सुक्षत्रासो रिशादसः ।
मरुद्भिरग्न आ गहि ।।४।।
य उग्रा अर्कमानृचुरनाधृष्टास ओजसा ।
मरुद्भिरग्न आ गहि ।।५।।
ये नाकस्याधि रोचने दिवि देवास आसते ।
मरुद्भिरग्न आ गहि ।।६।।

य ईङ्खयन्ति पर्वतान्तिर: समुद्रमोजसा ।
मरुद्भिरग्न आ गहि ।।७।।
आ ये तन्वन्ति रश्मिभिस्तिर: समुद्रमर्णवं ।
मरुद्भिरग्न आ गहि ।।८।।
अभि त्वा पूर्वपीतये सृजामि सोम्यं मधु ।
मरुद्भिरग्न आ गहि ।।९।।
आ यन्तु मरुतो गणै स्तुता दधतु नो रयिं ।
मरुद्भिरग्न आ गहि ।।१०।।
आ त्वा कण्वा अहूषत गृणन्ति विप्र ते धिय: ।
मरुद्भिरग्न आ गहि ।।११।।

*(इति नवर्चोनामषष्ठकाण्डे तृतीयो ऽनुवाक:)*

६-१८

सं मा सिञ्चन्तु मरुत: सं पूषा सं बृहस्पति: ।
सं मायमग्नि: सिञ्चतु प्रजया च धनेन च
दीर्घमायुष्कृणोतु मे ।।१।।
सं मा सिञ्चन्त्वादित्या: सं मा सिञ्चन्त्वग्नय: ।
इन्द्र: समस्मान् सिञ्चतु प्रजया च धनेन च
दीर्घमायुष्कृणोतु मे ।।२।।
सं मा सिञ्चन्त्वरुषा: समर्का ऋषयश्च ये ।
पूषा समस्मान् सिञ्चतु प्रजया च धनेन च
दीर्घमायुष्कृणोतु मे ।।३।।
सं मा सिञ्चिन्तु गन्धर्वाप्सरस: सं मा सिञ्चन्तु देवता:
भग: समस्मान् सिञ्चतु प्रजया च धनेन च
दीर्घमायुष्कृणोतु मे ।।४।।

सं मा सिञ्चन्तु पृथिवी: सं मा सिञ्चन्तु या दिव: ।
अन्तरिक्षं समस्मान् सिञ्चतु प्रजया च धनेन च
दीर्घमायुष्कृणोतु मे।।५।।
सं मा सिञ्चन्तु प्रदिश: सं मा सिञ्चन्तु या दिश: ।
आशा समस्मान् सिञ्चतु प्रजया च धनेन च
दीर्घमायुष्कृणोतु मे।।६।।
सं मा सिञ्चन्तु नद्य: सं मा सिञ्चन्तु सिन्धव: ।
समुद्र: समस्मान् सिञ्चतु प्रजया च धनेन च
दीर्घमायुष्कृणोतु मे।।७।।
सं मा सिञ्चन्तु कृषय: सं मा सिञ्चन्त्वोषधी: ।
सोम: समस्मान् सिञ्चतु प्रजया च धनेन च
दीर्घमायुष्कृणोतु मे ।।८।।
सं मा सिञ्चन्तु या आप: सं मा सिञ्चन्तु बृष्टय: ।
सरस्वती समस्मान् सिञ्चतु प्रजया च धनेन च
दीर्घमायुष्कृणोतु मे ।।९।।

६-१९

सं भगो वर्चसा माग्ने सं विष्णु: पुष्ट्या सिचत् ।
क्षत्रं समस्मान् सिञ्चतु प्रजया च धनेन
चायुष्मन्तं कृणोतु मा ।।१।।
सं विराड्वर्चसा माग्ने सं देष्ट्री पुष्ट्या सिचत् ।
इडा समस्मान् सिञ्चतु प्रजया च धनेन
चायुष्मन्तं कृणोतु मा ।।२।।
सं धाता वर्चसा माग्ने सं सिक्ति: पुष्ट्या सिचत् ।
सं देवो अस्मानर्यमा प्रजया च धनेन
चायुष्मन्तं कृणोतु मा ।।३।।

समंशो वर्चसा माग्ने सं वायु: पुष्ट्या सिचत्।
वात: समस्मान् सिञ्चतु प्रजया च धनेन
चायुष्मन्तं कृणोतु मा ।।४।।
सं सभा वर्चसा माग्ने सं सुरा पुष्ट्या सिचत्।
सूर्या समस्मान् सिञ्चतु प्रजया च धनेन
चायुष्मन्तं कृणोतु मा ।।५।।
सं सविता वर्चसा माग्ने सं सूर्य: पुष्ट्या सिचत्।
चन्द्र: समस्मान् सिञ्चतु प्रजया च धनेन
चायुष्मन्तं कृणोतु मा ।।६।।
सं पशवो वर्चसा माग्ने सं यज्ञ: पुष्ट्या सिचत्।
दक्षिणा समस्मान् सिञ्चतु प्रजया च धनेन
चायुष्मन्तं कृणोतु मा ।।७।।
सं मा सिञ्चतु द्रविणं सं मा सिञ्चत्विन्द्रियम्।
तेज: समस्मान् सिञ्चतु प्रजया च धनेन
चायुष्मन्तं कृणोतु मा ।।८।।
सं मा सिञ्चन्तु वर्चांसि सं मा सिञ्चन्तु भूतय: ।
सत्यं समस्मान् सिञ्चतु प्रजया च धनेन
चायुष्मन्तं कृणोतु मा ।।९।।

६-२०

आ रात्रि पार्थिवं रज: पितुरप्रायि धामभि:।
दिव सदांसि वृहती वि तिष्ठस आ त्वेषं वर्तते तम:।।१।।
न यस्या: पारं ददृशे न योयुवद्विश्वमस्यां नि विशते यदेजति।
अरिष्टासस्त उर्वि तमस्वति
रात्रि पारमशीमहि भद्रे पारमशीमहि।।२।।

ये ते रात्रि नृचक्षसो द्रष्टारो नवतिर्नव ।
अशीति: सन्त्यष्टा उतो ते सप्त सप्तति: ।।३।।
षष्टिश्च षट् च रेवति पञ्चाशत्पञ्च सुम्नयि ।
चत्वारश्चत्वारिंशच्च त्रयस्त्रिंशच्च वाजिनि ।।४।।
द्वा च विंशतिश्च ते रात्र्येकादशावमा: ।
तेभिर्नो ऽद्य पायुभिर्नि पाहि दुहितर्दिव: ।।५।।
रक्षा माकिर्णो अघशंस ईशत मा नो दु:शंस ईशत ।।६।।
मा नो अद्य गवां स्तेनो मावीनां वृक ईशत ।
माश्वानां भद्रे तस्करो मा नृणां यातुधान्य: ।।७।।
परमेभि: पथिभि स्तेनो धावतु तस्कर: ।
परेण दत्वती रज्जु: परेणाघायुरर्षतु ।।८।।
अन्धं रात्रि तिष्ठधूममशीर्षाणमहिं कृणु ।
हनू बृकस्य जम्भया स्तेनं द्रुपदे जहि ।।९।।
त्वयि रात्रि वसामसि स्वपिष्यामसि जागृहि ।
गोभ्यो न: शर्म यच्छाश्वेभ्य: पुरुषेभ्य: ।।१०।।

६-२१

अथो यानि च वस्महे यानि चान्त: परीणहि ।
तानि ते परि दद्मसि ।।१।।
रात्रि मातरुषसे न: परि देहि ।
उषा नो अह्ने परि ददात्वहस्तुभ्यं विभावरि ।।२।।
यत्किं चेदं पतयति यत्किं चेदं सरीसृपम् ।
यात्किं च पद्वदासन्वत्तस्मात्त्वं रात्रि पाहि न: ।।३।।
सा पश्चात्पाहि सा पुर: सोत्तरादधरादुत ।
गोपाय नो विभावरि स्तोतारस्त इह स्मसि ।।४।।

ये रात्रिमनुतिष्ठन्ति ये च भूतेषु जाग्रति ।
पशून् ये सर्वान्रक्षन्ति -
ते न आत्मसु जाग्रतु ते न: पशुषु जाग्रतु ।।५।।
वेद वै रात्रि ते नाम घृताची नाम वा असि ।
तां त्वा भरद्वाजो वेद सा नो वित्ते ऽधि जागृहि ।।६।।

६-२२

ब्रह्मास्य शिरो बृहदस्य पृष्ठं वामदेव्यमुदरमोदनस्य ।
छन्दांसि पक्षौ मुखमस्य सत्यं विष्टारी यज्ञस्तपसो ऽधि जात:।।१।।
अनस्था: शुद्धा: पवनेन पूता: शुचय: शुचीनपि यन्ति लोकान् ।
विष्टारिणमोदनं ये पचन्ति नैषां शिश्नं प्र दहति जातवेदा:।।२।।
नैषां शिश्नं प्र दहति जातवेदा: स्वर्गे लोके बहु स्त्रैणमेषाम् ।
नैनान् यम: परि मुष्णाति रेत: ।।३।।
आस्ते यम उप याति देवान् सं गन्धर्वैर्मदति सोम्यै: ।
विष्टारिणमोदनं ये पचन्ति नैनानवर्ति: सचते कुतश्चन ।।४।।
रथी ह भूत्वा रथयान ईयते पक्षी ह भूत्वापि दिवं समेति ।
एष यज्ञो विततो वंहिष्ठो विष्टारी पक्वो दिवमा ससाद ।।५।।
चतुर: कुम्भांश्चतुर्धा ददाति क्षीरेण पूर्णानुदकेन दध्ना ।
एतास्त्वा कुल्या उप यन्तु विश्वत: स्वर्गे लोके
स्वधया पिन्वमाना: ।।६।।
घृतह्रदा मधुकूला: सुरोदका क्षीरेण पूर्णा उदकेन दध्ना ।
एतास्त्वा कुल्या उप यन्तु विश्वहा स्वर्गे लोके
स्वधया मादयन्ती: ।।७।।
पुण्डरीकं कुमुदं सं तनोति विसं शालूकं शफको मुलाली ।
स्वर्गे लोके स्वधया पिन्वमाना उप मा तिष्ठन्तु
पुष्करिणी: समक्ता: ।।८।।

यमोदनं पचामि श्रद्दधानो, विष्टारिणं लोकजितं स्वर्गम् ।
स मे मा क्षेष्ट सदमश्यमानो विश्वरूपा कामदुघा धेनुरस्तु मे।।९।।
वृषभं सन्तं सह सूनृतया स्वर्गे लोके अमृतं दुहानम् ।
ये मे पुत्रा: पितरश्च सन्ति ते त्वा विष्टारिन्नुप सर्वे सदेयु:।।१०।।
य इमान् यज्ञानभि वितष्टार यस्येमे लोका: स्वधया समक्ता:।
ये मे पौत्रा उत ये पितामहास्तेभ्यो विष्टारिन्नमृतानि धुक्ष्व ।।११।।
यदि पृथिवीं यद्यन्तरिक्षं यदि दिवं देवता वा जगन्थ ।
ये मे प्रपौत्रा: प्रपितामहाश्च ते त्वा विष्टारिन्ननु प्र ज्ञेषुरत्र ।।१२।।
स्वर्गे लोके अप्सरस एनाञ्जाया भूत्वोप शेरते ।
विष्टारिणमोदनं ये पचन्त्यस्मिंल्लोके दक्षिणया परिष्कृतम् ।।१३।।

६-२३

निर्णुदैनां प्र णुदैनां स्वात्त्रिपदनादधि ।
विभ्रंशमस्यै कृण्मो वि गृहैर्भ्रंशतामसौ ।।१।।
अपाञ्चं पतिमा कुर्वधराचीं स्त्रियं नय ।
अतीमान्दश पर्वतानतीमा नाव्या दश ।।२।।
अधराचीमवाचीमथो अकुशलां दिशम् ।
विभ्रंशमस्यै कृण्मस्तेनैनां प्र दहामसि ।।३।।
आज निरज बिलं विलादरण्यमा कुर्वरण्यादरणं जनम् ।
मृगाङ् अनु प्र पातय वातस्यैनां शिखां कुरु ।।४।।
वाताग्रे अस्या हृदयं मनो रेष्मणि दध्मसि ।
विभ्रंशमस्यै कृण्मो विध्वंशमासक्तं दमे ।।५।।
सर्वमनु परि प्लवतामन्तरा द्यावापृथिवी उभे ।
यथानवधृता चराद् वृषतूलमिवोपरि ।।६।।

अशमस्यै वातो वात्वशं तपतु सूर्यः ।
अथो यदन्नमश्नाति तदस्यै विषवत्तरम् ।।७।।
सिंहस्ते अस्तु चक्षुष व्याघ्रः परिष्वङ्गने ।
अग्निर्वामस्त्वन्तरा यथा वां न सहासति ।।८।।
एष वामग्निरन्तरा स विष्वञ्चौ व्यस्यतु ।
यथा वां न सहासत्युत्तरस्मिंश्चनायुषि ।।९।।
उत्पातय शिमिदावति प्र पातय शिमिदावति ।
इमौ व्यस्य दम्पती पक्वं मांसमिवासिना ।।१०।।
मेयमस्मिन् पतौ रंस्त मोस्मिं शयने स्वे ।
जहातु वसनं स्वमहिर्जीर्णामिव त्वचम् ।।११।।
यथा मृताश्च जीवाश्चास्मिंल्लोके व्योकसः ।
एवेमौ दम्पती स्तामस्मिंल्लोके व्योकसौ ।।१२।।

*(इति नवर्चोनामषष्ठकाण्डे चतुर्थो ऽनुवाकः)*

*इत्यथर्ववेद पैप्पलाद संहितायां नवर्चोनामषष्ठकाण्ड:समाप्त:*

# अथ दशर्चोनाम सप्तमकाण्ड:

## ७-१

सुपर्णस्त्वान्वविन्दत्सूकरस्त्वाखनन्नसा ।
दिप्सौषधे त्वं दिप्सन्तं प्रति कृत्याकृतो दह ॥१॥
प्रति दह यातुधानान् प्रति कृत्याकृतो दह ।
अथो यो अस्मान्दिप्सति तमु त्वं जह्योषधे ॥२॥
अग्ने पृतनाषाट्पृतना: सहस्व ।
प्रति कृत्यां कृत्याकृते प्रतिहरणेन हरामसि ॥३॥
इष्वा ऋजीय: पततु द्यावापृथिवी तत्सुतात् ।
तत्तं मृग इव विध्यतु कृत्या कृत्याकृतं कृता ॥४॥
अधमस्त्वघकृते शपथा: शपथीव्ने ।
प्रत्यक् प्रति प्र हिण्मसि यश्चकार तमृच्छतु ॥५॥
यस्त्वा कृत्ये प्रतिघाय विद्वाङ् अविदुषो गृहम् ।
पुनस्त्वा तस्मा आ दध्मो यथा कृत्याकृतं हनत् ॥६॥
पुन: कृत्यां कृत्याकृते हस्तगृह्य परा णय ।
समक्षमस्मा आ दध्मो यथा कृत्याकृतं हनत् ॥७॥
पुत्र इव पितरं गच्छ स्वज इवाभिष्ठितो दश ।
तन्तुरिवावव्ययन्निहि कृत्ये कृत्याकृतं कृता ॥८॥
उदेणीव वारिण्यभिस्कन्दं मृगीव ।
कृत्या कर्तारमृच्छतु ॥९॥
ऋश्यस्येव परीशासं परिमाय परि त्वच: ।
दुर्हार्दे चक्रुषे कृत्यां ग्रीवासु प्रति मुञ्चत ॥१०॥

या कृत्ये देवकृता या वा मनुष्यजा असि ।
तां त्वा प्रति प्र हिण्मसि प्रतीचीनेन ब्रह्मणा ।।११।।
यदि स्त्री यदि वा पुमान् कृत्यां चकार पाप्मने ।
तामु तस्मै नयामस्यश्वमिवाश्वाभिधान्या ।।१२।।

७-२

ओक्ते मे द्यावापृथिवी ओक्ता देवी सरस्वती ।
ओक्तौ म इन्द्रश्चाग्निश्च क्रिमिं जम्भयतामिमम् ।।१।।
अस्येन्द्र कुमारस्य क्रिमिं धनपते जहि ।
हता विश्वा अरातयो ऽनेन वचसा मम ।।२।।
यो ऽक्ष्यौ परिसर्पति यो नासे परिसर्पति ।
दतां यो मध्यं गच्छति तं क्रिमिं जम्भयामसि ।।३।।
विरूपौ द्वौ सरूपौ द्वौ कृष्णौ द्वौ रोहितौ द्वौ ।
वभ्रुश्च वभ्रुकर्णश्च गृध्रा: कोकाश्च ते हता: ।।४।।
ये क्रिमय: शितिकक्षा ये कृष्णा: शितिबाहव: ।
ये के च विश्वरूपास्तान् क्रिमीञ्जम्भयामसि ।।५।।
यो द्विशीर्षा चतुरक्ष: क्रिमि: सारङ्गो अर्जुन: ।
शृणाम्यस्य पृष्टीरपि वृश्चामि यच्छिर: ।।६।।
उदसौ सूर्यो अगाद् विश्वदृष्टो अदृष्टहा ।
दृष्टांश्च घ्नन्नदृष्टांश्च सर्वांश्च प्रमृणन् क्रिमीन् ।।७।।
येवाषास: कष्कषासो शूष्णास: शिपवित्नव: ।
दृष्टश्च हन्यतां क्रिमिरदृष्टश्चोत हन्यताम् ।।८।।
हतो येवाषो हत: शिपविर्हतो गङ्गणिवाङ् उत ।
हता विश्वा अरातय उग्रेण वचसा मम ।।९।।
सर्वेषां च क्रिमीणां सर्वासां च क्रिमीणाम् ।
भिनद्म्यश्मना शिरो दहाम्यग्निना मुखम् ।।१०।।

७-३

तिग्मेभिरग्ने अर्चिभि: शुक्रेण देव शोचिषा ।
आमादो नि वह त्वमन्यमासनि कृण्वताम् ।।१।।
शोचिषाग्ने अर्चिषा च निर्दहेतो अघायत: ।
सख्यमावं कृण्महे त्वं चामाद उप शं भुवन् ।।२।।
निरामादो नयामसि निष्क्रव्यादो गृहेभ्य: ।
सस्यादो नाम ये देव ते अग्ने मा दभन्त्वाम् ।।३।।
आमादश्च क्रव्यादश्च सस्यादश्चोभयान् सह ।
प्रजां ये चक्रिरे भागं तानितो निर्णयामसि ।।४।।
य आमेष्वरमन्त न पक्वमुपदाधृषु: ।
ते यन्तु सर्वे संभूयान्यत्रेतो ऽघायव: ।।५।।
य एनस्वी दुष्कृतकृत्किल्विषकृतसाधी य: ।
पुनस्तान् यज्ञिया देवा नयन्तु यत आगता: ।।६।।
अव रेणुमव रजो नेनिजे हस्त्यं मलम् ।
धाता नो भद्रया नेषत्स नो गोपायतु प्रजाम् ।।७।।
कृण्वे ऽहं रोदसी वर्म स्याम सवितु: सवे ।
माता नो भद्रया भूमिर्द्यौश्चास्मान् पात्वंहस: ।।८।।
यदसुराणामहन्यस्मान् पापा उपेथन ।
देवानां पयश्च दैव्यमाप: शुन्धन्तु मामिमा: ।।९।।
आ ते पितर्मरुतां सुम्नमेमि मा न: सूर्यस्य संदृशो युवथा: ।
अभि नो वीरो ऽर्वती: क्षमेत प्र जायामहै रुद्र प्रजया ।।१०।।
यो ऽवृद्धं हन्ति यो गर्भे अन्तर्यो जातं जनितव्यं च पूरुषम् ।
तस्मा ऋध्यासं हविषाहमद्य स न: प्रजां जरदष्टिं कृणोतु ।।११।।

७-४

इन्द्रस्य बाहू स्थविरौ वृषाणौ चित्रा इमा वृषभौ पारयिष्णू ।
तौ योक्ष्ये प्रथमौ योग आगते याभ्यां जितमसुराणां स्वर्यत् ॥१॥
आशु: शिशानो वृषभो न भीमो घनाघन: क्षोभणश्चर्षणीनाम् ।
संक्रन्दनो ऽनिमिष एकवीर: शतं सेना जयतु साकमिन्द्र: ॥२॥
संक्रन्दनेनानिमिषेण जिष्णुनायोध्येन दुश्च्यवनेन धृष्णुना ।
तदिन्द्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा ॥३॥
स इषुहस्तै: स निषङ्गिभिर्वशी संस्रष्टा युध इन्द्रो गणेन ।
संसृष्टजित्सोमपा बाहुशर्ध्यूर्ध्वधन्वा प्रतिहिताभिरस्तात् ॥४॥
बलविज्ञाय: स्थविर: प्रवीर: सहस्वान्वाजी सहमान उग्र: ।
अभिवीरो अभिषत्वा सहोजिज्जैत्रायेन्द्र रथमा तिष्ठ गोविदम् ॥५॥
इमं वीरमनु हर्षध्वमुग्रमिन्द्रं सत्वानो अनु सं रभध्वम् ।
ग्रामजितं गोजितं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा ॥६॥
अभि गोत्राणि सहसा गाहमानो अदाय उग्र: शतमन्युरिन्द्र: ।
दुश्च्यवन: पृतनाषाडयोध्यो अस्माकं सेना अवतु प्र युत्सु ॥७॥
बृहस्पते परि दीया रथेन रक्षोहामित्राङ् अपबाधमान: ।
प्रभञ्जञ्छत्रून् प्रमृणन्नमित्रानस्माकमेध्यविता तनूनाम् ॥८॥
इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञ: पुर एतु सोम: ।
देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्तु मध्ये ॥९॥
इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुतां शर्ध उग्रम् ।
महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ॥१०॥
अस्माकमिन्द्र: समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु ।
अस्माकं वीरा उत्तरे भवन्त्वस्मान्देवासो ऽवता हवेषु ॥११॥

७-५

वैश्वानरादरोचत जातो हिरण्ययो मणि: ।
तमाभरद्बृहस्पति: कश्यपो वीर्याय कम् ।।१।।
बृहस्पतिस्तमकृणोन् मणिं वैश्वानरं सहः ।
सप्तर्षयो बलाय कं सं दधुष्ट्वा वयोधस: ।।२।।
विश्वे देवास्त इन्द्रियं सप्तर्षयश्च सं दधु: ।
जातो हिरण्ययो मणिरग्नेर्वैश्वानरादधि ।।३।।
अश्वत्थो जात: प्रथमो ऽग्ने: प्रियतमा तनू: ।
वैश्वानरस्य सृष्ट्या कृत्यादूषि: कृतो मणि: ।।४।।
कृत्यादूषिं त्वाविदं कृत्यादूषिं भरामि त्वा ।
कृत्यादूषिं कृणोमि त्वा कृत्यादूषिं वयोधसम् ।।५।।
पतत्री पक्षी बलवान् कृत्यादूषि: सपत्नहा ।
नितत्निर्विश्वभेषज उग्र आपतिको मणि: ।।६।।
पतत्री ते बलाय कं नितत्निर्भेषजाय ते ।
जातो हिरण्ययो मणिरप रक्षांसि सेधतु ।।७।।
देवो मणि: सपत्नहा रक्षोहामीवचातन: ।
हिरण्ययोनिरंशुमान् कश्यपेनाभृतं सहः ।।८।।
वैश्वानरं तेजनमेकमाहुरग्नेर्योनि: सह चन्द्रेण जातम् ।
गयस्फान: प्रतरणो वयोधा: कृत्यादूषिर्बलगहास्युग्र: ।।९।।
यस्येदं भूम्यामधि निक्रान्तं पांसुरे पदम् ।
मृजानस्तन्वो यद्रपस्तस्य स्नाहि तनू अधि ।।१०।।
दूष्यास्त्वा वधं वयं देवस्य सवितु: सवे ।
जीवातवे भरामसि मह्या अरिष्टतातये ।।११।।

आच्छेदन: प्रच्छेदनो द्विषतस्तपनो मणि:।
शत्रूञ्जय: सपत्नहा द्विषन्तमप बाधताम् ।।१२।।

*(इति दशर्चोनामसप्तमकाण्डे प्रथमो ऽनुवाक:)*

७-६

सत्यस्य स्थूणा पृथिवीं दाधारर्तेन देवा अमृतमन्वविन्दन् ।
ध्रुवेण त्वा हविषा धारयाम्यभि तद्द्यावापृथिवी गृणीताम् ।।१।।
येभिर्होमैर्विश्वकर्मा दाधारेमां पृथिवीं मातरं नः ।
तेभिष्ट्वा होमैरिह धारयाम्यृतं सत्यमनु चरन्तु होमा: ।।२।।
इह ध्रियध्वं धरुणे पृथिव्या उशत्या मातु: सुभगाया उपस्थे ।
अपराणुत्ता महसा मोदमाना अस्मिन्वास्तौ सुप्रजसो भवाथ ।।३।।
सुप्रजसो महसा मोदमाना वर्ष्मन् पृथिव्या उपरि श्रयध्वम् ।
अस्यै शालायै शर्म यच्छन्तु देवा धाराभिरेनां पृथिवी पिपर्तु ।।४।।
इमां शालां श्रेष्ठतमां वसूनामरिष्टवीरा अभि सं चरेम ।
दृढ़ा अस्या उपमितो भवन्तु स्थिरा वीरा उपसदो भवन्तु ।।५।।
इमां शालां सविता वायुरिन्द्रो बृहस्पतिर्नि मिनोतु प्रजानन् ।
उक्षन्तूद्ना मरुतो घृतेन भगो नो राजा नि कृषिं दधातु ।।६।।
मानस्य पत्नि हविषो जुषस्व तीव्रान्तस्य बहुलमध्यमस्य ।
आ त्वा शिशुर्वाश्यतामा कुमार आ वाश्यन्तां धेनवो नित्यवत्सा:।।७।।
दृढास्ते स्थूणा भवन्तु भूम्यामधि दृढा: पक्षासस्तव देवि शाले ।
स्थिरवीरानमित्रा न एधि शर्म नो यच्छ द्विपदे चतुष्पदे ।।८।।
शाला देवी गार्हपत्याय चाक्लृपे तृणं वसाना जगते सुशेवा ।
स्थिराङ्गां त्वा स्थिरपूरुषां मानस्य पत्नि स्थिरां त्वा वीरा
अभि सं चरेम ।।९।।
वास्तोष्पते प्रति जानीह्यस्मान् स्वावेशो अनमीवो न एधि ।
यत्त्वेमहे प्रति नस्तज्जुषस्व चतुष्पदो द्विपद आ वेशयेह ।।१०।।

७-७

दर्भो अग्र ओषधीनां शतकाण्डो अजायत ।
स सहस्रवीर्य: परि ण: पातु विश्वत: ।।१।।
यथा दर्भो जायमानस्त्वचं भिनत्ति भूम्या: ।
एवा स भिद्यतां जनो यो न: पापं चिकित्सति ।।२।।
अप नाडमप कृत्यामप रक्ष: सदान्वा: ।
अमीवाश्चातयामसि सर्वाश्च यातुधान्य: ।।३।।
अस्ति वै निवत उद्वनं न वै सर्वमनुप्लवम् ।
असि त्वं तस्य दूषणो यो न: पापं चिकित्सति ।।४।।
परि सायं परि प्रात: परि मध्यंदिनं परि ।
दर्भो हिरण्यहस्तघ्न: परि ण: पातु विश्वत ।।५।।
गिरौ जात: स्वरहासि साकं सोमेन बभ्रुणा ।
मा पापकृत्वन: शिषो मा पाक: पुरुषो रिषत् ।।६।।
दिवो मूलमवततं पृथिव्यामोत आहित: ।
दर्भ: सहस्रवीर्य: परि ण: पातु विश्वत: ।।७।।
सहस्रकाण्डस्तविषस्तीक्ष्णवल्शो विषासहि: ।
दर्भेण सर्वा रक्षांस्यमीवाश्चाप दहामसि ।।८।।
अपदग्धं दु:ष्वप्न्यमपदग्धा अरातय: ।
सर्वाश्च यातुधान्य: ।।९।।
मा त्वा दभन् यातुधाना मा ब्रध्न: शकुनि: पतन् ।
दर्भो राजा समुद्रिय: परि ण: पातु विश्वत: ।।१०।।

७-८

यो न: पापेन वचसाघोषतो दुरुक्तं ब्रुवत् ।
आराच्छप्तमप्राप्यास्मानप तद्यातु सर्वत: ।।१।।

यन्न: शपादरणो यत्सपत्न: श्वश्रूर्वा यच्छ्वशुरो वा शपाति।
ज्यायस: शपथान्वयं यवेन यावयामसि ।।२।।
यान् समस्यन्ते शपथान्वाकृक्षम्यानृत्वियामधि ।
यवं त्वं बिभ्रद्वाह्वो: पूर्व: प्रति शृणीहि तान् ।।३।।
ऋजुकेशो यवो बभ्रुर्मघवा नो ऽनुमाद्य: ।
हिरण्यधन्वा शपथानुपेजतु ।।४।।
त्वां पीत्वेन्द्रो वृत्रं शक्रो जघान वासव: ।
स विषाही यथर्षभ: सहस्व शपथान् यव ।।५।।
आराच्चरन्तु शपथा युता इतो जिह्वा उ दिता अरसा: सन्तु सर्वे।
नामग्राहाद्वाचो हेडादीक्षितादृघोरचक्षस: शर्म ते वर्म कृण्मसि ।।६।।
अपाञ्चो यन्तु शपथा जनेनास्ता अघायुना ।
यो नो दुरस्याज्जीवते स्वेनानागसे सते ।।७।।
परि मा पातु शपथादनृताद्दुरितादुत ।
परि मा ज्यायस: शंसाद्यवो रक्षतु मा रिषं ।।८।।
अनास्तिघ्यं शपथैरनतिव्याध्यं कृतं ।
बृहद् वर्म प्रति मुञ्चामि ते यवं ।।९।।
तं वयांसीव पक्षिण आ विशन्तु पतत्रिण: ।
शप्तारं शपथा: पुन: ।।१०।।

७-९

आ नो दिश मा परि ष्ठा अराते मा नो
रक्षीर्दक्षिणां याचमानाम् ।
प्र ण: प्रदाता सविता च यच्छतां नमो वीर्त्साया
असमृद्ध्यै च कृण्म: ।।१।।
यमराते पुरोधत्से पुरुषं परिरापिणम् ।
नमस्ते तस्मै कृण्मो मा वनिं मम विव्यथ: ।।२।।

यमद्याभिप्रयुञ्ज्महे मनसा हृदयेन च ।
अराते तं नो मा वीर्त्सीर्दित्सन्तं परिरापिणि ।।३।।
प्र णो वनिर्देवकृता दिवा नक्तं च सिध्यतु ।
अरातिमनुप्रेमो वयं नमो ऽस्त्वरातये ।।४।।
उत नग्ना बोभुवती स्वप्नया सचसे जनम् ।
अराते चित्तं वीर्त्सन्त्याकूतिं पुरुषस्य च ।।५।।
परो ऽपेह्यसमृद्धे वि ते हेतिं नयामसि ।
यं द्विष्मस्तं सचस्व कन्या भूत्वा स्रग्विणी रुक्मिणी दृशे ।।६।।
नमस्ते ऽस्त्वसमृद्धे मा मां पुरोधिं कृणुथा: ।
वेद त्वाहं निमीवन्तीं नितुदन्तीमराते
मर्त्यान्मर्त्येभ्यो अधि निर्वदन्तीम् ।।७।।
मा नो वनिं मा वाचं मा वीर्त्सीरुग्राविन्द्राग्नी
न आ भजतां वसूनि ।
सर्वे नो ऽद्य दित्सन्तो अरातिं प्रति हर्यत ।।८।।
सवितारमनुमतिं भगं यन्तो हवामहे ।
वाचं जुष्टां मधुमतीं वदानि देवानां देवहूतिषु ।।९।।
यं याचामि नकुल्या जिह्वयोष्ठापिधानया ।
श्रद्धा तमद्य विन्दतु दत्ता सोमेन बभ्रुणा ।।१०।।

७-१०

ऐतु देवस्त्रायमाण: कुष्ठो हिमवतस्परि ।
तक्मानं सर्वं नाशयन् सर्वाश्च यातुधान्य: ।।१।।
त्रीणी ते कुष्ठ नामानि नघमारो नघारिषो नघायुषो
न घायं पुरुषो रिषत् ।
यस्मै परिब्रवीमि त्वा सायंप्रातरथो दिवा ।।२।।

जीवला नाम ते मात जीवन्तो नाम ते पिता
मारिषा नाम ते स्वसा न घायं पुरुषो रिषत् ।
यस्मै परिब्रवीमि त्वा सायंप्रातरथो दिवा ।।३।।
उत्तमो ऽस्योषधीनामनड्वाञ्जगतामिव
व्याघ्र: श्वपदामिव न घायं पुरुषो रिषत् ।
यस्मै परिब्रवीमि त्वा सायंप्रातरथो दिवा ।।४।।
त्रि: शाम्बुभ्यो गिरेयेभ्यस्त्रिरादित्येभ्यस्परि ।
त्रिर्जातो विश्वदेवेभ्य: स कुष्ठो विश्वभेषज:
साकं सोमेन तिष्ठति।
तक्मानं सर्वं नाशयन् सर्वाश्च यातुधान्य: ।।५।।
अश्वत्थो देवसदनस्तृतीयस्यामितो दिवि ।
तत्रामृतस्य चक्षणं तत: कुष्ठो ऽजायत ।
स कुष्ठो विश्वभेषज: साकं सोमेन तिष्ठति ।
तक्मानं सर्वं नाशयन् सर्वाश्च यातुधान्य: ।।६।।
हिरण्ययी नौरचरद्धिरण्यबन्धना दिवि ।
तत्रामृतस्य चक्षणं तत: कुष्ठो ऽजायत ।
स कुष्ठो विश्वभेषज: साकं सोमेन तिष्ठति ।
तक्मानं सर्वं नाशयन् सर्वाश्च यातुधान्य: ।।७।।
यत्र नाव: प्रभ्रंशनं यत्र हिमवत: शिर: ।
तत्रामृतस्य चक्षणं तत: कुष्ठो अजायत ।
स कुष्ठो विश्वभेषज: साकं सोमेन तिष्ठति ।
तक्मानं सर्वं नाशयन् सर्वाश्च यातुधान्य: ।।८।।
यं त्वा वेद पूर्व ऐक्ष्वाको यं वा त्वा कुष्ठ काश्य: ।
यं शावसो यं मात्स्यस्तेनासि विश्वभेषज: ।।९।।

शीर्षालाकं तृतीयकं सदन्दिर्यश्च हायनः ।
तक्मानं विश्वधावीर्याधराञ्चं परा सुव ।।१०।।

*(इति दशर्चोनामसप्तमकाण्डे द्वितीयो ऽनुवाकः)*

७-११

ये पर्वताः सोमपृष्ठा आप उत्तानशीवरीः ।
वातः पर्जन्य आदग्निस्ते क्रव्यादमशीशमन् ।।१।।
यस्ते हन्ति चराचरमुत्थास्यन्तं सरीसृपम् ।
गर्भं यो दशमास्यं तमितो नाशयामसि ।।२।।
यदि घ्नन्त्यप्सरसो गन्धर्वा गेह्या उत ।
क्रव्यादो मूरदेविनस्तानितो नाशयामसि ।।३।।
यस्त ऊरू आरोहत्यसृक् ते रेहणाय कम् ।
आमादः क्रव्यादो रिपूंस्तानितो नाशयामसि ।।४।।
यस्ते श्रोणी च्यावयत्यन्तरा दम्पती शये ।
योनिं यो अन्तरारेढि तमितो नाशयामसि ।।५।।
यस्त्वा स्वप्नेन तमसा मोहयित्वा निपद्यते ।
प्रजां यस्ते जिघत्सति तमितो नाशयामसि ।।६।।
यस्त्वा पत्युः प्रतिरूपो जारो भूत्वा निपद्यते ।
अरायं कण्वं पाप्मानं तमितो नाशयामसि ।।७।।
हा है खर्व खलते नैगूरकर्ण तुण्डिल ।
इन्द्रस्य तिग्ममायुधं तेन त्वा नाशयामसि ।।८।।
नमस्तण्डाय नमः कुसुमाय नमः प्रतिपाळे नमः कःस्वधेये ।
नमस्तुभ्यं निर्ऋते विश्ववारे जरेमं धापयतां विश्वरूपा ।।९।।
यावद्द्यौर्यावत्पृथिवी यावत्पर्येति सूर्यः ।
तावत्त्वमुग्र गुल्गुलो परीमां पाहि विश्वतः ।।१०।।

## ७-१२

एकराज्ञीमेकव्रतामेकस्थामेकलामिकाम् ।
पाटां सपत्नचातनीं जैत्रायाच्छा वदामसि ।।१।।
एकराज्ञ्येकव्रत एकस्थ एकलामिके ।
न त्वा सपत्नी सासाह गैरेयी च न वाह्या ।।२।।
उत्तराहमुत्तराभ्य उत्तरेदधराभ्य: ।
अध: सपत्नी मामक्यधरेदधराभ्य: ।।३।।
न सैन्धवस्य पुष्पस्य सूर्यो म्लापयति त्वचं ।
पाटे ऽम्लातया त्वया सपत्न्या वर्च आ ददे ।।४।।
न वै पाटे पाटेवासि सुभगांकरणीदसि ।
पाटे भगस्य नो धेह्यथो मा महिषीं कृणु ।।५।।
यत् पाटे अधि वृक्षे वातप्लवा महीयसे ।
जयन्ती प्रत्यातिष्ठन्ती संजया नाम वा असि ।।६।।
उत्तानपर्णा सुभगां सहमानां सहस्वतीम् ।
अच्छा बृहद्वदां वद पाटां सपत्नचातनीम् ।।७।।
पाटामिन्द्रो व्याश्नाद्धन्तवा असुरेभ्य: ।
तयाहं सपत्नीं साक्षीय महेन्द्रो दानवानिव ।।८।।
पाटा बिभर्त्यङ्कुशं हिरण्यवन्तमङ्किनम् ।
तेन सपत्न्या वर्च आ लुम्पामि ममेदसत् ।।९।।
इमां खनाम्योषधिं वीरुधां बलवत्तमाम् ।
यया सपत्नीं बाधते कृणुते केवलं पतिम् ।।१०।।

## ७-१३

यासामारादाघोषामो वातस्येव पृथग्यत: ।
तासां श्वन्वतीनामिन्द्रो अपि कृतच्छिर: ।।१।।

या: पुरस्तादाचरन्ति साकं सूर्यस्य रश्मिभि: ।
तासां श्वन्वतीनामिन्द्रो अपि कृतच्छिर: ।।२।।
या वातमनुसंयन्त्यन्तरिक्षे अथो दिव: ।
तासां श्वन्वतीनामिन्द्रो अपि कृतच्छिर: ।।३।।
यासां प्रेङ्खो दिवि बद्धो अन्तरिक्षे हिरण्यय: ।
तासां श्वन्वतीनामिन्द्रो अपि कृतच्छिर: ।।४।।
यास्तल्पाननुनृत्यन्त्यन्तरिक्षे हिरण्ययान् ।
तासां श्वन्वतीनामिन्द्रो अपि कृतच्छिर: ।।५।।
या: पतन्ति वातरथा उत्ताना: पादघातिनी: ।
तासां श्वन्वतीनामिन्द्रो अपि कृतच्छिर: ।।६।।
या वृक्षं परिसर्पन्ति साच्यक्षी करिक्रती: ।
तासां श्वन्वतीनामिन्द्रो अपि कृतच्छिर: ।।७।।
याश्चत्वरे संगच्छन्ते विकुम्भाश्चेलवासिनी: ।
तासां श्वन्वतीनामिन्द्रो अपि कृतच्छिर: ।।८।।
यासां सिकतवापिषु गृहो मितो हिरण्यय: ।
तासां श्वन्वतीनामिन्द्रो अपि कृतच्छिर: ।।९।।
या आरोकै: प्रपद्यन्ते पुष्करैरिव जामय: ।
तासां श्वन्वतीनामिन्द्रो अपि कृतच्छिर: ।।१०।।
या नदी: प्रतिगाहन्ते संरभ्य कन्या इव ।
तासां श्वन्वतीनामिन्द्रो अपि कृतच्छिर: ।।११।।
यास्तीर्थानि विगाहन्ते ऽघ्नया: श्वसतीरिव ।
तासां श्वन्वतीनामिन्द्रो अपि कृतच्छिर: ।।१२।।
या: समुद्रादुच्चरन्त्युच्चैर्घोषान् करिक्रती: ।
तासां श्वन्वतीनामिन्द्रो अपि कृतच्छिर: ।।१३।।

या गच्छन्ति जनंजनमिच्छन्तीः प्रयुतं वहु ।
तासां श्वन्वतीनामिन्द्रो अपि कृतच्छिरः ।।१४।।

७-१४

अग्निरायुष्मान् स वनस्पतिभिरायुष्मान् ।
स मायुष्मानायुष्मन्तं कृणोतु ।।१।।
वायुरायुष्मान् सो ऽन्तरिक्षेणायुष्मान् ।
स मायुष्मानायुष्मन्तं कृणोतु ।।२।।
सूर्य आयुष्मान् स दिवायुष्मान् ।
स मायुष्मानायुष्मन्तं कृणोतु ।।३।।
चन्द्र आयुष्मान् स नक्षत्रैरायुष्मान् ।
स मायुष्मानायुष्मन्तं कृणोतु ।।४।।
सोम आयुष्मान् स ओषधीभिरायुष्मान् ।
स मायुष्मानायुष्मन्तं कृणोतु ।।५।।
यज्ञ आयुष्मान् स दक्षिणाभिरायुष्मान् ।
स मायुष्मानायुष्मन्तं कृणोतु ।।६।।
समुद्र आयुष्मान् स नदीभिरायुष्मान् ।
स मायुष्मानायुष्मन्तं कृणोतु ।।७।।
ब्रह्मायुष्मत्तद् ब्रह्मचारिभिरायुष्मत् ।
तन्मायुष्मदायुष्मन्तं कृणोतु ।।८।।
इन्द्र आयुष्मान् स वीर्येणायुष्मान् ।
स मायुष्मानायुष्मन्तं कृणोतु ।।९।।
देवा आयुष्मन्तस्ते ऽमृतेनायुष्मन्तः ।
ते मायुष्मन्त आयुष्मन्तं कृणवन्तु ।।१०।।

प्रजापतिरायुष्मान् स प्रजाभिरायुष्मान् ।
स मायुष्मानायुष्मन्तं कृणोतु ।।११।।

७-१५

दक्षिणा मा दक्षिणतो दक्षिणा पातु सव्यत: ।
पश्चादनुव्याधात्पातु सर्वस्या भवहेत्या: ।।१।।
पशुना त्वं पशुपते द्विपाद् दत्त्वा चतुष्पदा ।
आत्मन्वतीं दक्षिणां प्राणं दत्त्वा प्राणिहि ।।२।।
यां ददासि श्रद्दधानो दक्षिणां ब्राह्मणकृते ।
सा त्वा यक्ष्मात् पारयत्वग्ने: सन्तापाद्
दिव्यस्य शोकात् ।।३।।
ददासीमां दक्षिणां मा त आममच्छल्यान्
यक्ष्मान् वि वृहामो वयं ते ।
कर्णशूलमुपहत्याराति: सर्वे यक्ष्मा अप तिष्ठन्तु साकम्।।४।।
अन्नेन प्राणं वनुते तिरो धत्ते परिधानेन यक्ष्मम् ।
हिरण्यमश्वं गां ददत् कृणुते वर्म दक्षिणाम् ।।५।।
उष्णीषं त्वा शीर्षक्त्या वासस्त्वा तन्वामयात् ।
चन्द्रं हिरण्यमन्ध्यात् कर्णाद्दत्तं शुक्रं
भ्राजद् वाधिर्यात् पातु दक्षिणा ।।६।।
उपबर्हणं त्वा ग्रीवामयान्मणयो यक्ष्माज्जत्रव्यात् ।
अङ्गरोगादभ्यञ्जनमन्नं त्वान्तष्ट्यामयात् ।।७।।
अधस्पदादामयत: पदो रोगादुपानहौ ।
दण्डस्त्वा दत्त: परि पातु सर्पाद्दक्षिणत: प्रयतो दक्षिणेन ।।८।।
सौमनसं दक्षिणां दक्षमाणा इषमूर्जं दक्षिणां संवसाना: ।
भगस्य धारामवसे प्रतीम: ।।९।।

सहस्राङ्गा शतं ज्योतींष्यस्या यज्ञस्य पप्रिरमृता स्वर्गा ।
आ नो एतु दक्षिणा विश्वरूपाहिंसन्तीं
प्रति गृह्णीम एनाम् ।।१०।।

*(इति दशर्चोनामसप्तमकाण्डे तृतीयो ऽनुवाक:)*

७-१६

अग्निर्मा पातु वसुभि: पुरस्तात्तस्मिन् क्रमे तस्मिं श्रये तां पुरं प्रैमि ।
स मा रक्षतु स मा गोपायतु तस्मा आत्मानं परि ददे स्वाहा ।।१।।
वायुर्मान्तरिक्षेणैतस्या दिश: पातु तस्मिन् क्रमे तस्मिं श्रये तां पुरं प्रैमि ।
स मा रक्षतु स मा गोपायतु तस्मा आत्मानं परि ददे स्वाहा ।।२।।
सोमो मा रुद्रैर्दक्षिणाया दिश: पातु तस्मिन् क्रमे तस्मिं श्रये तां पुरं प्रैमि।
स मा रक्षतु स मा गोपायतु तस्मा आत्मानं परि ददे स्वाहा ।।३।।
वरुणो मादित्यैरेतस्या दिश: पातु तस्मिन् क्रमे तस्मिं श्रये तां पुरं प्रैमि ।
स मा रक्षतु स मा गोपायतु तस्मा आत्मानं परि ददे स्वाहा ।।४।।
सूर्यो मा द्यावापृथिवीभ्यां प्रतीच्या दिश: पातु
तस्मिन् क्रमे तस्मिं श्रये तां पुरं प्रैमि ।
स मा रक्षतु स मा गोपायतु तस्मा आत्मानं परि ददे स्वाहा ।।५।।
अपो मौषधीमतीरेतस्या दिश: पान्तु तासु क्रमे तासु श्रये तां पुरं प्रैमि ।
ता मा रक्षन्तु ता मा गोपायन्तु ताभ्य आत्मानं परि ददे स्वाहा ।।६।।
विश्वकर्मा मा सप्तर्षिभिरुदिच्या दिश: पातु
तस्मिन् क्रमे तस्मिं श्रये तां पुरं प्रैमि ।
स मा रक्षतु स मा गोपायतु तस्मा आत्मानं परि ददे स्वाहा ।।७।।
इन्द्रो मा मरुत्वानेतस्या दिश: पातु तस्मिन् क्रमे तस्मिं श्रये तां पुरं प्रैमि।
स मा रक्षतु स मा गोपायतु तस्मा आत्मानं परि ददे स्वाहा ।।८।।

प्रजापतिर्मा प्रजननवान् सह प्रतिष्ठाया धृवाया दिश: पातु
तस्मिन् क्रमे तस्मिं श्रये तां पुरं प्रैमि ।
स मा रक्षतु स मा गोपायतु तस्मा आत्मानं परि ददे स्वाहा ।।९।।
बृहस्पतिर्मा विश्वैर्देवैरूर्ध्वाया दिश: पातु
तस्मिन् क्रमे तस्मिं श्रये तां पुरं प्रैमि ।
स मा रक्षतु स मा गोपायतु तस्मा आत्मानं परि ददे स्वाहा ।।१०।।

७-१७

आग्निं ते वसुमन्तमृच्छन्तु ये माघायव:
प्राच्या दिशो ऽभिदासान् ।।१।।
वायुं ते ऽन्तरिक्षवन्तमृच्छन्तु ये माघायव
एतस्या दिशो ऽभिदासान् ।।२।।
सोमं ते रुद्रवन्तमृच्छन्तु ये माघायवो
दक्षिणाया दिशो ऽभिदासान् ।।३।।
वरुणं ते आदित्यवन्तमृच्छन्तु ये माघायव
एतस्या दिशो ऽभिदासान् ।।४।।
सूर्यं ते द्यावापृथिवीवन्तमृच्छन्तु ये माघायव:
प्रतीच्या दिशो ऽभिदासान् ।।५।।
अपस्त ओषधीमतीर्ऋच्छन्तु ये माघायव
एतस्या दिशो ऽभिदासान् ।।६।।
विश्वकर्माणं ते सप्तर्षिवन्तमृच्छन्तु ये माघायव
उदीच्या दिशो ऽभिदासान् ।।७।।
इन्द्रं ते मरुत्वन्तमृच्छन्तु ये माघायव
एतस्या दिशो ऽभिदासान् ।।८।।
प्रजापतिं ते प्रजननवन्तमृच्छन्तु ये माघायवो
ध्रुवाया दिशो ऽभिदासान् ।।९।।

बृहस्पतिं ते विश्वदेववन्तमृच्छन्तु ये माघायव
ऊर्ध्वाया दिशोऽभिदासान् ।।१०।।

७-१८

वैकङ्कतेनेध्मेन देवेभ्य आज्यं वह ।
अग्ने तानिह मादय सर्व आ यन्तु मे हवम् ।।१।।
इन्द्र आ याहि मे हवमिदं करिष्यामि तच्छृणु ।
इम ऐन्द्रा अतिसरा आकूती: सं नमन्तु मे ।
तेभि: शकेम वीर्यं जातवेदस्तनूवशिन् ।।२।।
यदसावमुतो देवा अदेव: संश्चिकीर्षति ।
मा तस्याग्निर्हव्यं वाक्षीद्धवं देवाश्च मोप गुर्ममैव हवमेतन।।३।।
अति धावतातिसरा विश्वस्येशाना ओजस:।
वृश्चतामुष्य जीवितमिन्द्रेण सह मेदिना ।।४।।
अतिसृत्यातिसरा इन्द्रस्यौजसा हत ।
अविं वृक इव मथ्नीत ततो वो जीवन्मा मोचि
प्राणमस्यापि नह्यत।।५।।
यानसौ प्रतिसरानकश्चकार कृणवच्च यान् ।
त्वं तानिन्द्र वृत्रहन् प्रतीच: पुनरा कृधि
यथामुं तृणहञ्जनम् ।।६।।
यममी पुरोदधिरे ब्रह्माणमुपभूतये ।
इन्द्रस्य ते अधस्पदं तं प्र यच्छामि मृत्यवे
क्रव्यादेनं शमयतु ।।७।।
यदि प्रेयुर्देवपुरा ब्रह्म वर्माणि चक्रिरे ।
तनूपानं परिपाणानि चक्रिरे सर्वं तदरसं कृधि ।।८।।

अत्रैनमिन्द्र वृत्रहन्नुग्रो मर्माणि विध्य ।
अत्रैवैनमभि तिष्ठ शक्र मेद्यहं तव ।
अनु त्वेन्द्रा रभामहे स्याम सुमतौ तव ।।९।।
यथेन्द्र उद्वाचनं लब्ध्वा चक्रे अधस्पदम् ।
कृण्वे ऽमुमधरं तथा शश्वतीभ्य: समाभ्य: ।।१०।।

७-१९

आङ्गिरसो जन्मनासि तमु त्वाहुर्वनस्पते ।
स पीलो रक्षो बाधस्व साकमिन्द्रेण मेदिना ।।१।।
अप रक्षांसि बाधस्व बाधस्व परिरापिण: ।
पिशाचान् पीलो क्रव्यादो बाधस्व मूरदेविन: ।।२।।
यथाहुस्तृष्टं कटुकमपगूढं फले कुलम् ।
तस्यै हिरण्यकेश्यै नम: कृण्मो अरातये ।।३।।
या महती महोन्माना सर्वा आशा व्यानशे ।
तस्यै हिरण्यकेश्यै नम: कृण्मो अरातये ।।४।।
यस्ते योनिं प्रतिरेढ्याण्डादो गर्भदूषण: ।
अरायं पुत्रं प्रापी यस्तं पीलु: सहतामित: ।।५।।
यदा पीलवाङ्गिरस पक्वो ऽतिष्ठो वनस्पते ।
अथाहुरिन्द्रं जज्ञानं शक्रं बर्जह्यो प्रति ।।६।।
यथा सेदिमबाधथा: पच्यमानो वनस्पते ।
एवा पीलो रक्षो बाधस्व साकमिन्द्रेण मेदिना ।।७।।
यत्पिशाचै: पुरुषस्य जग्धं भवत्यात्मन: ।
आ पीलो प्यायते पुनस्तव चाश्नाति पिप्पलम् ।।८।।
पीलुं त्वाहु: पीवं त्वाहुरथो त्वाहुर्वनस्पतिम् ।
सर्वा ते भद्रा नामानि तेभिर्न: पाह्यंहस: ।।९।।

रक्षोहणं वृत्रहणं पिलुं पिशाचजम्भनम् ।
जज्ञानमग्रे वृक्षाणां तं ते बध्नाम्यायुषे ।।१०।।

७-२०

सगराय शत्रुहणे स्वाहा ।।१।।
शर्णीलाय शत्रुहणे स्वाहा ।।२।।
समुद्राय शत्रुहणे स्वाहा ।।३।।
सन्धसाय शत्रुहणे स्वाहा ।।४।।
इषिराय शत्रुहणे स्वाहा ।।५।।
अवस्यवे शत्रुहणे स्वाहा ।।६।।
वायवे शत्रुहणे स्वाहा ।।७।।
वाताय शत्रुहणे स्वाहा ।।८।।
मातरिश्वने शत्रुहणे स्वाहा ।।९।।
पवमानाय शत्रुहणे स्वाहा ।।१०।।

*(इति दशर्चोनामसप्तमकाण्डे चतुर्थो ऽनुवाक:)*

*इत्यथर्ववेद पैप्पलाद संहितायां दशर्चोनामसप्तमकाण्ड:समाप्त:*

# अथ एकादशर्चोनाम अष्टमकाण्ड:

८-१

कथा दिवे असुराय ब्रवाम कथा पित्रे हरये त्वेषनृम्ण:।
पृश्निं वरुण दक्षिणां ददावान् पुनर्मघत्वं मनसाचिकित्सी:।।१।।
न कामेन पुनर्मघो भवामि संपृच्य कं पृश्निमेतामुपाजे।
केन मत् त्वमथर्वन् काव्येन केन जातेनासि जातवेदा:।।२।।
सत्यमहं गभीर: काव्येन सत्यं जातेनास्मि जातवेदा:।
न मे दासो नार्यो महित्वं व्रतं मीमाय यदहं धरिष्ये ।।३।।
न त्वदन्य: कवितरो न वेधा न धीरतरो वरुण स्वधाव:।
त्वमङ्ग विश्वा जनिमानि वेत्थ स चिन्नु त्वज्जनो मायी बिभाय।।४।।
त्वं ह्यङ्ग वरुण स्वधावो विश्वानि वेत्थ जनिमा शर्धनीते।
किमेना रजस: परो ऽस्ति किमवरेणावरममुर ।।५।।
एकमेना रजस: परो ऽस्ति पर एकेन दुर्दाशं चिदन्यत्।
तत् ते विद्वान् वरुण प्र ब्रवीम्यधोवचस: पणयो भवन्तु
नीचैर्दासा उप सर्पन्तु रिप्रा: ।।६।।
त्वं ह्यङ्ग वरुण प्र ब्रवीषि पुनर्मघेष्ववद्यानि भूरि।
मो षु पण्यभ्येतावता भूर्मा त्वा वोचन्नराधसं जनास:।।७।।
मा मा वोचन्नराधसं जनास: पुनस्ते पृश्निं जरितर्ददामि।
स्तोत्रं मे विश्वमा याहि जनेष्वन्तर्देवेषु मानुषेषु विप्र ।।८।।
आ ते स्तोत्राणि वर्धनानि यामि देहि तन्मह्यं यददत्तमस्ति ।
युज्यो न: सप्तपद: सखासि समा नौ बन्धुर्वरुण: समा जा ।।९।।
वेद वै तद्यन्नौ समा जा ददामि तुभ्यं यददत्तमस्ति ।
देवो देवाय गृणते वयोधा विप्र विप्राय स्तुवते सुमेधा:।।१०।।

अजीजनो हि वरुण स्वधावन्नथर्वाणं पितरं विश्वदेवम्।
तस्मा उर्वायु: कृणुहि प्रशस्तं सखा नोऽसि परमश्च बन्धु:।।११।।

८-२

वृषा मे रवो नभसा न तन्यतुरुग्रेण तं वचसा वाध इदु ते।
अहं तमस्य ग्रभिरग्रभं रसं ज्योतिषेव तमस उदेति सूर्य: ।।१।।
यत् ते ऽपोदकं विषं तत् त आत्ताभिरग्रभम्।
गृह्णामि मध्यमुत्तममुताचमं भियसा नेशदादु ते।।२।।
बलेन ते बलं हन्मि तन्वा हन्मि ते तनुम्।
विषेण हन्मि ते विषमहे मुरिष्टा मा जीवीत्
प्रत्यगभ्येतु त्वा विषम् ।।३।।
असितस्य तैमातस्य बभ्रोरपोदकस्य च ।
सात्रासाहस्य मन्योर्ज्यामुग्रस्येव धन्वनो वि मुञ्चामि रथां इव।।४।।
कैलात पृश्न उपतृण्य बभ्रवा मे शृणुतासिता अलीका:।
मा न: सख्यु: काममपि ष्ठादा श्रावयाद्धो वीर्षे रभध्वम्।।५।।
आलिकि च विलि पिता यस्ते माता च।
विद्म ते विश्वतो बन्धुमरस किं करिष्यसि ।।६।।
उरुगूलाया दुहिता जाता दास्यसिक्न्या: ।
प्रतङ्कं दद्रुषी नु साहीनरसाङ् अक: ।।७।।
कर्णा श्वाविदब्रवीद् गिरेरवचरन्तिका ।
या: काश्चेमा: खनित्रिमास्तासामरसतमं विषम् ।।८।।
ताबुवं न ताबुवं न घेदसि त्वं ताबुवम्।
ताबुवेनारसं विषम् ।।९।।
तस्तुवं न तस्तुवं न घेदसि त्वं तस्तुवम् ।
तस्तुवेनारसं विषम् ।।१०।।

अरसं ते ऽहे विषमियं कृणोत्वोषधि:।
त्रायमाणा सहमाना सहस्वती सहाता इद्
गोरश्वात् पुरुषाद् विषम् ।।११।।

८-३

यदाञ्जनं त्रैककुदं जातं हिमवतस्परि ।
यातूंश्च सर्वान् जम्भया सर्वांश्च यातुधान्य: ।।१।।
उतेवासि परिपाणं यातुजम्भनमाञ्जन ।
उतामृतत्वस्येशिष उतासि पितुभोजनम् ।।२।।
परिपाणं पुरुषाणां परिपाणं गवामसि ।
अश्वानामर्वतामित् परिपाणाय तस्थिषे ।।३।।
परि मां परि ण: प्रियं परि ण: पाहि यद्धनम् ।
अरातिरित्रो मा तारीन्मा च न: किं चनाममत् ।।४।।
न तं प्राप्नोति शपथो न कृत्या नाभिशोचनम् ।
नैनं विष्कन्धमश्नुते यस्त्वा बिभर्त्याञ्जन ।।५।।
असन्मन्त्र्याद् दुष्वप्न्यात् क्षेत्रियाच्छपथादुत ।
दुर्हार्दश्चक्षुषो घोरात्तस्मान् न: पाह्याञ्जन ।।६।।
त्रयो दासा आञ्जनस्य तक्मा बलास आदहि:।
वर्षिष्ठ: पर्वतानां त्रिककुन्नाम ते पिता ।।७।।
वृत्रस्यासि कनीनिका पर्वतस्यास्यक्ष्यौ ।
देवेभि: सर्वै: प्रोक्तं परिधिर्नाम वा असि ।।८।।
वैद ह वेद ते नाम गन्धर्व: परिवाचनम् ।
यत आञ्जन प्रजायसे तत एह्यरिष्टतातये ।।९।।
यदि वासि त्रैककुदं यदि यामुनमुच्यसे ।
उभे ते भद्रे नाम्नी ताभ्यां न: पाह्याञ्जन ।।१०।।

यस्याञ्जन प्रसर्पस्यङ्गमङ्गं परुष्परुः।
तस्माद्यक्ष्मं वि बाधोस्यग्रो मध्यमशीरिव ॥११॥
नैनं घ्नन्ति पर्यायिणो न सन्नाड् अव गच्छति ।
जने स न प्र मीयते यस्त्वा बिभर्त्याञ्जन ॥१२॥
इदं विद्वानाञ्जन सत्यं वक्ष्यामि नानृतम् ।
सनेयमश्वं गां वास आत्मानं तव पूरुष ॥१३॥

८-४

य एकवृषो ऽसि सृजारसो ऽसि ॥१॥
यो द्विवृषो ऽसि सृजारसो ऽसि ॥२॥
यस्त्रिवृषो ऽसि सृजारसो ऽसि ॥३॥
यश्चतुर्वृषो ऽसि सृजारसो ऽसि ॥४॥
यः पञ्चवृषो ऽसि सृजारसो ऽसि ॥५॥
यः षड्वृषो ऽसि सृजारसो ऽसि ॥६॥
यः सप्तवृषो ऽसि सृजारसो ऽसि ॥७॥
यो ऽष्टवृषो ऽसि सृजारसो ऽसि ॥८॥
यो नववृषो ऽसि सृजारसो ऽसि ॥९॥
यो दशवृषो ऽसि सृजारसो ऽसि ॥१०॥
यो ऽपोदको ऽसि सृजारसो ऽसि ॥११॥

८-५

एका च मे दश चापवक्तार ओषधे ।
ऋतजात ऋतावरि मधु त्वा मधुला करत् ॥१॥
द्वे च मे विंशतिश्चापवक्तार ओषधे ।
ऋतजात ऋतावरि मधु त्वा मधुला करत् ॥२॥
तिस्रश्च मे त्रिंशच्चापवक्तार ओषधे ।
ऋतजात ऋतावरि मधु त्वा मधुला करत् ॥३॥

चतस्रश्च मे चत्वारिंशच्चापवक्तार ओषधे ।
ऋतजात ऋतावरि मधु त्वा मधुला करत् ।।४।।
पञ्च च मे पञ्चाशच्चापवक्तार ओषधे ।
ऋतजात ऋतावरि मधु त्वा मधुला करत् ।।५।।
षट् च मे षष्टिश्चापवक्तार ओषधे ।
ऋतजात ऋतावरि मधु त्वा मधुला करत् ।।६।।
सप्त च मे सप्ततिश्चापवक्तार ओषधे ।
ऋतजात ऋतावरि मधु त्वा मधुला करत् ।।७।।
अष्ट च मे ऽशीतिश्चापवक्तार ओषधे ।
ऋतजात ऋतावरि मधु त्वा मधुला करत् ।।८।।
नव च मे नवतिश्चापवक्तार ओषधे ।
ऋतजात ऋतावरि मधु त्वा मधुला करत् ।।९।।
दश च मे शतं चापवक्तार ओषधे ।
ऋतजात ऋतावरि मधु त्वा मधुला करत् ।।१०।।
शतं च मे सहस्रं चापवक्तार ओषधे ।
ऋतजात ऋतावरि मधु त्वा मधुला करत् ।।११।।

*(इति एकादशर्चोनामअष्टमकाण्डे प्रथमो ऽनुवाक:)*

## ८-६

आ पश्यसि प्रति पश्यसि परा पश्यसि पश्यसि ।
द्यामन्तरिक्षमाद्भूमिं तत् सर्वं देवि पश्यसि ।।१।।
तिस्रो दिवस्तिस्र: पृथिवी: षट् चेमा: प्रदिशो मही: ।
तयाहं सर्वान् यातून् पश्यानि देव्योषधे ।।२।।
सुपर्णस्य दिव्यस्य तस्य हासि कनीनिका ।
सा भूमिमा रुरोहिथ वह्यं श्रान्ता वधूरिव ।।३।।

तां मे सहस्राक्षो देवो दक्षिणे हस्त आ दधत् ।
तयाहं सर्वं पश्यानि यद्भूतं यच्च भाव्यम् ।।४।।
यथा श्वा चतुरक्षो यथाश्वः स्यावोर्वताम् ।
यथाग्निर्विश्वतः प्रत्यङ् एवा त्वमस्योषधे ।।५।।
कश्यपस्य चक्षुरसि शुन्याश्चतुरक्ष्याः।
वीध्रे सूर्यमिव सर्पन्तं मा पिशाचं तिरस्करः ।।६।।
दर्शय मा यातुधानान् दर्शय यातुधान्यः।
आपस्पृत इव तिष्ठन्तं दर्शय मा किमीदिनम् ।।७।।
उदग्रभं परिपाणं यातुधानात् किमीदिनः।
तेनाहं सर्वं पश्यान्युत शूद्रमुतार्यम् ।।८।।
यथा सूर्यश्चन्द्रमाश्च विश्वा भूता विपश्यतः।
एवा वि पश्य तान् त्वमघायुर्मोप गादिह ।।९।।
यो अन्तरिक्षेण पतति भूमिं यश्चोपसर्पति ।
दिवं यो मन्यते नाथं तं पिशाचं दृशे कुरु ।।१०।।
आविष्कृणुष्व रूपाणि मात्मानमप गूहथाः।
अधा सहस्रचक्षो त्वं प्रति पश्यास्यायतः ।।११।।

८-७

मोक्षेजांस्तोदांस्तुमलान् पथिष्ठाङ् उत पार्षतान् ।
अहीनां सर्वेषां विषमरसं कृण्वोषधे ।।१।।
अश्वक्रन्दस्य वण्डस्य पृदाकोर्गोनसेरुत ।
श्वित्राणां सर्वेषां विषमरसं कृण्वषोधे ।।२।।
द्यांपातस्य गवकस्य गोधापृष्ठेरहेरुत ।
असितानामेतज्जातमरिष्टे ऽरसं कृधि ।।३।।
एतज्जातं स्वजानां तद् बभ्रो अरसं कृधि ।
सर्वस्य बभ्रोर्भेषज्यसीहि विषदूषणी ।।४।।

त्रायमाणा प्र ब्रवीतु सर्वाङ् राज्ञो अहीनाम् ।
तिरश्चिराजीनसितानथो उपशयाश्च ये ।।५।।
सहसाहं यातुधानान् सहसा यातुधान्य: ।
सहो व: सर्वान् सासाह तस्याहं नाम जग्रभ ।।६।।
सह: साकं पैद्वेनोग्रेण वचसा मम ।
अन्धाहींश्च सृजयाश्च शफकांश्च रथव्रय: ।
सहसा सह उत्पत्य तान् सर्वाङ् अरसाङ् अक: ।।७।।
असितस्य विद्रधस्य हरितो यश्च विद्रध: ।
निमङ्क्षी विद्रधानां यो मृजन्ती ताङ् अजीजनत् ।।८।।
या: स्वजानां नीलग्रीवो या: स्वजानां हरिरुत ।
कल्माषपुच्छमोषधे जम्भयास्यरुन्धति ।।९।।
मायं मरदहिदष्ट: पितुरस्मा असद् विषम् ।
इमा ह्यस्मा ओषधिमा हराम्यरुन्धतीम् ।।१०।।
एतज्जातं पृदाकूनामरसं जीवले कृधि ।
इन्द्रस्य भद्रिका वीरुदसीहि विषदूषणी ।।११।।

८-८

शतमर्वाक् प्र स्यन्दन्ते प्र स्यन्दन्ते शतं पर: ।
शतं वृत्रस्य काण्डानि तेभ्य आपो वि धावथ ।।१।।
अन्तरिक्षे पतयिष्णावो नभसस्परि जज्ञिरे ।
आपो हिरण्यवर्णास्तास्ते भवन्तु शं हृदे ।।२।।
शं ते सन्तु हृदयाय शं ते हृदयाभ्य: ।
शं ते यकक्लोमभ्य: शमु ते यन्तष्टेभ्य: ।।३।।
यदङ्गैरपसिस्मिषे यच्छीर्ष्णा यच्च पृष्टिभि: ।
आपस्तत् सर्वं निष्करन् तष्टा रिष्टमिवानस: ।।४।।

सं हृदयेन हृदयमोपशेन समोपश: ।
अद्भिर्मुञ्चापस्मितं पार्ष्णिद्योत: समेतु मे ।।५।।
आचरन्ती: पर्वतेभ्यो देवीर्देवेभ्यस्परि ।
आपो यमद्य प्रापन् न स रिष्याति पूरुष: ।।६।।
शं त आपो हैमवती: शमु ते सन्तूत्स्या: ।
शं ते सनिष्यदा आप: शमु ते सन्तु वर्ष्या: ।।७।।
शं त आपो धन्वन्या: शमु ते सन्त्वनूप्या: ।
शं ते खनित्रिमा आप: शं या: कुम्भेभिराभृता: ।।८।।
अनभ्रय: खनमाना विप्रा गम्भीरे ऽपस: ।
भिषग्भ्यो भिषक्तरा आपो अच्छा वदामसि ।।९।।
अपामह दिव्यानामपां स्रोतस्यानाम् ।
अपामह प्रणेजनेऽश्वा भवथ वाजिन: ।।१०।।
ता आप: शिवा आपो ऽयक्ष्मंकरणीरप: ।
यथैव तृष्यते मयस्तास्त आद्युत्तभेषजी ।।११।।

८-९

ब्रह्मज्येष्ठा संभृता वीर्याणि ब्रह्माग्रे ज्येष्ठं दिवमा ततान ।
भूतानां ब्रह्म प्रथमोत यज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं क:।।१।।
ब्रह्मेमे द्यावापृथिवी ब्रह्मेमे सप्त सिन्धव: ।
ब्रह्मेमे सर्व आदित्या ब्रह्म देवा उपासते ।।२।।
ब्रह्म ब्राह्मणो वदति ब्रह्म रात्री नि विशते ।
सावित्रं ब्रह्मणो जातं ब्रह्मणाग्निर्वि रोचते ।।३।।
ब्रह्मौषधयो नि तिष्ठन्ति ब्रह्म वर्षन्ति वृष्टय: ।
ब्रह्मेदं सर्वमात्मन्वद यावत् सूर्यो विपश्यति ।।४।।
ब्रह्म होता ब्रह्म यज्ञो ब्रह्मणा स्वरवो मिता: ।
अध्वर्युब्रह्मणो जातो ब्रह्मणोत्तिरते हवि: ।।५।।

ब्रह्म स्रुचो घृतवतीर्ब्रह्मणा वेदिरुद्धता ।
ब्रह्म यज्ञस्य तन्तव ऋत्वियो ये हविष्कृत: ।।६।।
ब्रह्म ऋषभो भद्ररेता ब्रह्म गावो हविष्कृत: ।
ब्रह्म रथस्य देवस्य यज्जयाति स्वरङ्कृत: ।।७।।
ब्रह्मणा शीरं वहति ब्रह्मणा युज्यते रथ: ।
ब्रह्मणा पुरुषो द्विपान्न व्यथते चरन् ।।८।।
ब्रह्मणो जाता ऋषयो ब्रह्मणो राजन्या उत ।
ब्रह्मेदं ब्रह्मणो जातं ब्रह्मणो ऽविष्या अन्नम् ।।९।।
ब्रह्म शूद्रा राजन्यानां ब्रह्मैषामुत विक्षद: ।
ब्रह्मैषां भद्रं सादनं ब्रह्मणैषां सभासद: ।।१०।।
ब्रह्म दाशा ब्रह्म दासा ब्रह्मेमे कितवा उत ।
स्त्रीपुंसौ ब्रह्मणो जातौ स्त्रियो ब्रह्म उत वावन ।।११।।
ब्रह्मोद्वतो निवतो ब्रह्म संवतो वानस्पत्या: पर्वता ब्रह्म वीरुध: ।
ब्रह्मेदं सर्वमन्वा ततानान्तरा द्यावापृथिवी उभे ।।१२।।
ब्रह्मैवाभूदुत्तरं जातवेदोरद्रुग्रो यातुधानं महालम् ।
भवाशर्वौ तपुषीं हेतिमस्मै मयेषितौ वि सृजतां वधाय ।।१३।।

८-१०

यदश्विना ओषधीष्वासिक्तं पुष्करस्रजा वीरुधो मधु बिभ्रति।
तेनाहमस्या मूर्धानमभि षिञ्चामि नार्या: ।।१।।
यदश्विना पुष्पादधि माक्षिकं मधु संभृतम् ।
अन्ने लवणे यन्मधु तेनाहमस्या मूर्धानमभि षिञ्चामि नार्या:।।२।।
यदश्विना गुल्गुन्याञ्जने मधु संभृतं यदस्मिन् मधुघे मधु ।
तेनाहमस्या मूर्धानमभि षिञ्चामि नार्या: ।।३।।

यदश्विनाक्ष मधु गोष्वश्वेषु यन् मधु ।
सुरायां सिच्यमानायां कीलाले ऽधि यन् मधु
तेनाहमस्या मूर्धानमभि षिञ्चामि नार्या: ।।४।।
यदश्विना गोवर्चसं हिरण्यवर्चसं हस्तिवर्चसमश्विना ।
तेनाहमस्या मूर्धानमभि षिञ्चामि नार्या: ।।५।।
अभि नन्दमभि मोदमभि दर्पं कृणोमि ते ।
आ ते भगं वर्तयतामश्विना पुष्करस्रजा ।।६।।
दत्सु ते वर्च: सुभगे जिह्वायां ते मधूलकम् ।
अक्ष्यौ निकरणी तव प्रतीकं मधुमत्तरम् ।।७।।
आ सचस्व तलाशेव वृक्ष इवापतिक: पतिम् ।
त्वं समग्रभी: पुंस: श्येन इवान्यान् पतत्रिण: ।।८।।
आ हि ते हार्षमुदकमपो भगाभिषेचनी: ।
यत्ते वर्चो ऽपक्रान्तं मुखस्य प्रतिचक्षणात् ।
पुनस्तदश्विना त्वय्या धत्तां पुष्करस्रजा ।।९।।
अभि त्वा वर्चसासिचं दिव्येन पयसा सह ।
यथा पतिवत्न्यसो देवृभ्यो मधुमत्तरा ।।१०।।
भगं ते मित्रावरुणा भगं देवी सरस्वती ।
भगं ते अश्विनोभा धत्तां पुष्करस्रजा ।।११।।
पतिं ते राजा वरुण: पतिं देवो वृहस्पति: ।
पतिं त इन्द्रश्चाग्निश्च पतिं धाता दधातु ते ।।१२।।

*(इति एकादशर्चोनामअष्टमकाण्डे द्वितीयो ऽनुवाक:)*

८-११

चतस्रस्ते खल स्रक्तीरथो मध्यमहं खल ।
धाराश्चतस्रस्तोष्यामि वेदिं मनुष्यवर्धनीम् ।।१।।

ऊर्जस्वन्तमा रभध्वं स्फातिमन्तं पुनीतन ।
इन्द्रो बीजस्याभ्यावोढा भग ऐतु पुरोगव: ।।२।।
भगस्य ह्यनड्वाहौ युञ्जाथां राशिवाहनौ ।
अधा पृथिव्या: कीलालमिहा वहतमश्विना ।।३।।
अभिवृत: परिहितो धान्येन विभु: प्रभु: ।
भर्ता मनुष्याणां जज्ञे देवानामाज्यं खल: ।।४।।
स्रुच आसन् पवनी: सृणीका: परिधिष्कृत: ।
कीनाशा आसन् होतारो बीजदा आसीद्धविष्पति: ।।५।।
इहेन्द्र मुष्टी वि सृजस्व पूर्णाविह सौमनस: समृध्यताम् ।
हुतादो ये च गन्धर्वास्त इह स्फातिं समा वहान् ।।६।।
अतिपश्यो निचायक इडुक: पक्वमा भर ।
ईशाना गन्धर्वा भुवनस्य सर्व आ वहन्तु खले
स्फातिमिह सूनृतां च ।।७।।
आ पश्चादा पुरस्तादोत्तरादधरादुत ।
इन्द्रेह वसोरीशान: खले स्फातिं समा वह ।।८।।
स्फातिमिन्द्र: खले बह्वीमिहत्प्राण उत्पृणत् ।
स्फातिं मे विश्वे देवा: स्फातिं सोमो अथो भग: ।।९।।
स्फातिर्मे अस्तु हस्तयो: स्फातिर्यत्र परारभे ।
शतहस्तेदमुत्पृण समुद्रस्येव मध्यत: ।।१०।।
इह मे भूय आ भर यथाहं कामये तथा ।
यथेदमुदिव स्फायातै त्रय इव हस्तिन: सह ।।११।।

८-१२

स्वाद्वीं त्वा मित्रावरुणा स्वाद्वीं देवी सरस्वती ।
स्वाद्वीं त्वा अश्विन सुरे कृणुतां पुष्करस्रजा ।।१।।

यामसिञ्चन् सौधन्वना विश्वे देवा मरुद्गणाः ।
यामश्विनासिञ्चतां सा सुरा बहुधावतु ।।२।।
स्वादोः स्वादीयसी भव मधोर्मधुतरा भव ।
यथश्र्यस्येयमारिश्येवा त्वं सुभगे भव ।।३।।
अभ्राज्जातं वर्षाज्जातमथो जातं दिवस्परि ।
अथो समुद्राज्जातं तत् सुरादरणं भव ।।४।।
नाडी नामासि जनुषा सा सुरादरणी भव ।
सखा हि भद्रस्त आसीद् वृक्षः स्वादुविकङ्कतः ।।५।।
असुरस्त्वौर्ध्वनभसश्चकार प्रथमः सुरे ।
सुरे दासस्य त्वा गृहे शिरश्चान्धश्च चक्रतुः ।।६।।
निष्पुष्पकं कशीकाया निर्धाराया: सुरामुत ।
उदेहि वाजिनीवति किमङ्कतिष्विच्छसि ।।७।।
इमे ते जन्या आसते गम्भीरा अभिधृष्णवः ।
सुरे देवि परि प्रेहि मादयन्ती जनंजनम् ।।८।।
यस्या गृह्णन्ति स्थालेन गामश्वं धान्यं वसु ।
सा सुरा बहुधावतु ।।९।।
आचरन्तीः पर्वतेभ्यः खनमाना अनभ्रयः ।
यासां समुद्रे संस्थानं यासां नास्ति निवेशनं
तास्ते ददतु बुद्बुदम् ।।१०।।
उदंकोदचेमां सुरां यां हृदा कामयामहे ।
तां मे भगस्तामश्विना तां मा बट् सरस्वती ।।११।।
अयं देवो मयूलशः सा सुरादरणं ददत् ।
संस्त्रवणात् प्रस्त्रवणाद् गिरिभ्यस्पर्याभृतः ।
मध्ये शतस्य मष्टिकोऽनड्वानिव मेहतु ।।१२।।

## ८-१३

समुद्रादूर्मिर्मधुमाङ् उदारदुपांशुना सममृतत्वमानट् ।
घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभि:।।१।।
वयं नाम प्र ब्रवामा घृतस्यास्मिन्यज्ञे धारयामा नमोभि: ।
उप ब्रह्मा शृणवच्छस्यमानं चतु:शृङ्गो ऽवमीद् गौर एतत् ।।२।।
चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याङ् आ विवेश ।।३।।
त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविन्दन् ।
इन्द एकं सूर्य एकं जजान वेनादेकं स्वधया निष्टतक्षु: ।।४।।
एता अर्षन्ति हृद्यात्समुद्राच्छतव्रजा रिपुणा नावचक्षे ।
घृतस्य धारा अभि चाकशीमि हिरण्ययो वेतसो मध्य आसाम्।।५।।
सम्यक् स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमाना: ।
एते अर्षन्त्यूर्मयो घृतस्य मृगा इव क्षिपणोरीषमाणा: ।।६।।
सिन्धोरिव प्राध्वने शूघनासो वात: प्रमीय: पतयन्ति यह्वा: ।
घृतस्य धारा अरुषो न वाजी काष्ठा भिन्दन्नूर्मिभि: पिन्वमान:।।७।।
अभि प्रवन्त समनेव योषा: कल्याण्य: स्मयमानासो अग्निम् ।
घृतस्य धारा: समिधो नसन्त ता जुषाणो हर्यति जातवेदा:।।८।।
कन्या इव वहतुमेतवा उ अञ्ज्यञ्जाना अभि चाकशीमि ।
यत्र सोम: सूयते यत्र यज्ञो घृतस्य धारा अभि तत् पवन्ते ।।९।।
अभ्यर्षत सुष्टुतिं गव्यमाजीमस्मासु भद्रा द्रविणानि धत्त ।
इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत् पवन्ते ।।१०।।
धामन्ते विश्वं भुवनमधि श्रितमन्त: समुद्रे हृद्यन्तरायुषि ।
अपामनीकात् समिथाद्य आभृतस्तमश्याम मधुमन्तं त ऊर्मिम्।।११।।

## ८-१४

द्वे विरूपे चरत: स्वर्थे अन्यान्या वत्समुप धापयेते ।
हरिरन्यस्यां भवति स्वधावाञ् शुक्रो अन्यस्यां ददृशे सुवर्चा: ।।१।।
दशेमं त्वष्टुर्जनयन्त गर्भमतन्द्रासो युवतयो विभृत्रम् ।
तिग्मानीकं स्वयशसं जनेषु विरोचमानं परि षीं नयन्ति।।२।।
त्रीणि जानात् प्रति भूषन्त्यस्य समुद्र एकं दिव्येकमप्सु ।
पूर्वामनु प्रदिशं पार्थिवानामृतून् प्रशासद् वि दधावनुष्ठु ।।३।।
क इमं वो निण्यमा चिकेत वत्सो मातृर्जनयत स्वधाभि: ।
वह्वीनां गर्भो अपसामुपस्थान् महान् कविर्निश्चरति स्वधावान्।।४।।
आविष्ट्यो वर्धते चारुरासु जिह्मानामूर्ध्व: स्वयसामुपस्थे ।
उभे त्वष्टुर्बिभ्यतुर्जायमानात् प्रतीची सिंहं प्रति जोषयेते ।।५।।
उभे भद्रे जोषयेते न मेने गावो न वाश्रा उप तस्थुरेवै:।
स दक्षाणां दक्षपतिर्बभूवाञ्जन्ति यं दक्षिणतो हविर्भि:।।६।।
उद् ययंमीति सवितेव बाहू उभे सिचौ यतते भीमरुञ्जन् ।
उच्छुक्रमत्कमजते सिमस्मान् नवा मातृभ्यो वसना जहाति।।७।।
त्वेषं रूपं कृणुत उत्तरं यत् संपृञ्चान: सदनं गोभिरद्भि:।
कविर्बुध्नं परि मर्मृज्यते धी: सा देवताता समितिर्बभूव ।।८।।
उरु ते ज्रय: पर्येति बुध्नं विरोचमानं महिषस्य धाम ।
विश्वेभिरग्ने स्वयशोभिरिद्धो ऽदब्धेभि: पायुभि: पाह्यस्मान् ।।९।।
धन्वं स्रोत: कृणुते गातुमूर्मिं शुक्रैरूर्मिभिरभि नक्षति क्षाम् ।
विश्वा सनानि जठरेषु धत्ते ऽन्तर्नवासु चरति प्रसूषु ।।१०।।
एवा नो अग्ने समिधा वृधानो रेवत् पावक श्रवसा वि भाहि।
तन्नो मित्रो वरुणो मामहन्तामदिति: सिन्धु: पृथिवी उत द्यौ:।।११।।

## ८-१५

योे जामदग्न्य इह कौशिको य आत्रेय उत काश्यपो य:।
भरद्वाजा गोतमा ये वसिष्ठास्तेभ्य: प्र ब्रूम इह किल्बिषाणि।।१।।
अगस्तय: कण्वा: कुत्सा: प्रस्रवणा विरूपा गर्गा मुद्गला यस्का: शौनका:।
संकृतयो ब्राह्मणा ये न दुग्धास्तेभ्य: प्र ब्रूम इह किल्बिषाणि।।२।।
यो नोत्तिष्ठाद् ब्राह्मणे नाधमाने मान्द्येन दृप्त उत धैर्येण ।
विश्वे देवा उपद्रष्टारो ऽस्य तस्मिन्विषं सं नयान् किल्बिष्यम् ।।३।।
या रोपय: किल्बिषे ब्राह्मणस्य यानि चैनांसि बहुधा दुष्कृतानि।
अनुत्तिष्ठन् प्रोक्त आत्मनि तान् नि धत्ते तथा तद्देवा उत वेशयन्ति।।४।।
ना ऽश्नीयान्न पिवेन्न शयीत न निंसीत जायां नोत पुत्रम् ।
ब्रह्मकिल्बिषे प्रोक्त उदेव तिष्ठेत् स ऋतस्य पन्था: ।।५।।
शतर्चिनो माध्यमा ये महर्षय: क्षुद्रसूक्तानामुत या प्रजेह ।
ऋषीणां यानि जनिमानि विद्मस्तेभ्य: प्र ब्रूम इह किल्बिषाणि।।६।।
सोदर्याणां पञ्चदशानां शतानां त्रयस्त्रिंशदुदशिष्यन्त देवा:।
एकस्मिन्विद्धे सर्वे ऽरुप्यन् तद् ब्राह्मणे किल्बिषमन्वविन्दन् ।।७।।
तस्मै स द्रुह्याद्य इदं नायद्यो नोत्तिष्ठाद्यो न वदाता अस्मिन् ।
ब्राह्मणस्य किल्बिषे नाथितस्य सोदर्यतामिच्छतो ब्राह्मणेषु।।८।।
उत्तिष्ठता ब्राह्मणा: सं वदध्वं जीतं याचामि पुनरैतु सर्वम् ।
इन्द्राग्नी विश्वे देवास्ते मे जीतं पुनरा वर्तयन्तु ।।९।।
स दीर्घमायुष्कृणुते स प्रजायै चिकित्सति ।
यो ब्राह्मणस्य ब्राह्मणो हूतो अन्वेति किल्बिषे ।।१०।।
नास्य प्रजां शर्वो हन्ति न रुद्रो हन्ति नाशनि: ।
यो ब्राह्मणस्य ब्राह्मण: सत्यं वदति किल्बिषे ।।११।।

तं सोमपीथो जुषते नृचक्षा ग्रावभि: सह ।
यो ब्राह्मणस्यास्तां हृद: सूर्य इवापालुपत्तम:।।१२।।
य उत्थाय किल्बिषे ब्राह्मणस्यान्नमीच्छन्नवायति ।
उभे एनं द्यावापृथिवी सं तपतामथैत्वगतस्य पन्थाम्।।१३।।

*(इति एकादशर्चोनामअष्टमकाण्डे तृतीयो ऽनुवाक:)*

८-१६

नव च या नवतिश्चारूढा वक्षणा अनु ।
इतस्ता: सर्वा नश्यन्तु नुत्ता: पुत्थज्ञो मया ।।१।।
सप्त च या: सप्ततिश्चारूढा वक्षणा अनु ।
इतस्ता: सर्वा नश्यन्तु नुत्ता: पुत्थज्ञो मया ।।२।।
पञ्च च या: पञ्चाशच्चारूढा वक्षणा अनु ।
इतस्ता: सर्वा नश्यन्तु नुत्ता: पुत्थज्ञो मया ।।३।।
ऊरूभ्यां तेऽष्ठीवद्भ्यां पार्ष्णिभ्यां भंसस: ।
स्त्रिया जार इव पुत्थज्ञीं प्र मृणीमसि ।।४।।
अनुसृप्तां गहनेषु धूक्ष्णां पापीं शिमिद्वतीम् ।
तामेतां दस्यूनां दासीं प्र दहातश्चुकाकणि ।।५।।
या स्त्रीणां पुत्रसदनं केवटानुपसर्पति ।
तामेतां दस्यूनां दासीं प्र दहातश्चुकाकणि ।।६।।
प्र पतात: सुकटनाळि सुषे: कुषीतको यथा ।
स्रक्वे ते तिप्रं धक्ष्यामि सा नशिष्यसि पुत्थगि ।।७।।
यदास्या: स्रक्वे दहेद्यदा मूर्धानमग्निना ।
अथैषा दस्यूनां दासी पुत्थगि नि लयिष्यते ।।८।।
संवत्सरमचरो असुरेभ्य: प्रतङ्किनी ।
यत्र क्षेत्रस्य दुर्गन्धि तत् त एतन् न्यञ्जनम् ।।९।।

नैतत्तव मातरंस्था न त एतन् न्यञ्जनम् ।
अस्माकमेतद्वीरेभ्यो देवै: प्रजननं कृतम् ।।१०।।
गिरौ तेऽश्मपुत्रमुदकं हिमवत्सु ।
तत्रोपप्रस्कद्य नृत्य जामियूथेषु पुत्थगि ।।११।।
स त्वं गोभिरश्वै: प्रजया प्रतरं भव ।
यो मा तत्र प्राहैषीर्यत्र जीवन्ति भद्रया ।।१२।।

८-१७

मित्र: पृथिव्योदक्रामत्तां पुरं प्र णयामि व: ।
तामा विशत तां प्र विशत सा व: शर्म च वर्म च यच्छतु।।१।।
वायुरन्तरिक्षेणोदक्रामत्तां पुरं प्र णयामि व: ।
तामा विशत तां प्र विशत सा व: शर्म च वर्म च यच्छतु।।२।।
सूर्यो दिवोदक्रामत्तां पुरं प्र णयामि व: ।
तामा विशत तां प्र विशत सा व: शर्म च वर्म च यच्छतु।।३।।
चन्द्रमा नक्षत्रैरुदक्रामत्तां पुरं प्र णयामि व: ।
तामा विशत तां प्र विशत सा व: शर्म च वर्म च यच्छतु।।४।।
सोम ओषधीभिरुदक्रामत्तां पुरं प्र णयामि व: ।
तामा विशत तां प्र विशत सा व: शर्म च वर्म च यच्छतु।।५।।
यज्ञो दक्षिणाभिरुदक्रामत्तां पुरं प्र णयामि व: ।
तामा विशत तां प्र विशत सा व: शर्म च वर्म च यच्छतु।।६।।
समुद्रो नदीभिरुदक्रामत्तां पुरं प्र णयामि व: ।
तामा विशत तां प्र विशत सा व: शर्म च वर्म च यच्छतु।।७।।
ब्रह्म ब्रह्मचारिभिरुदक्रामत्तां पुरं प्र णयामि व: ।
तामा विशत तां प्र विशत सा व: शर्म च वर्म च यच्छतु।।८।।
इन्द्रो वीर्येणोदक्रामत्तां पुरं प्र णयामि व: ।
तामा विशत तां प्र विशत सा व: शर्म च वर्म च यच्छतु।।९।।

देवा अमृतेनोदक्रामत्तां पुरं प्र णयामि व: ।
तामा विशत तां प्र विशत सा व: शर्म च वर्म च यच्छतु ।।१०।।
प्रजापति: प्रजाभिरुदक्रामत्तां पुरं प्र णयामि व: ।
तामा विशत तां प्र विशत सा व: शर्म च वर्म च यच्छतु ।।११।

८-१८

संयुज्यन्त: प्रकृषन्तो यद् वो देवा उपोचिरे ।
तामेभ्य: सत्यामाशिषमिन्द्र खल्वां समर्धय ।।१।।
अनड्वाह: सत्यावान: सीरं कृणोतु मे वच: ।
यत्राहैतद्धिताय ते तत् पर्जन्योऽभि वो वृषत् ।।२।।
दिव्या आपो व: शक्वरीरनु वि यन्तु गह्वरे ।
ऊर्जस्वतीघृतवती: पयस्वतीदृशे भवत मा गुहा ।।३।।
उदेहि वाजिनीवती पूर्णपात्रा त्विषीमती ।
दुहाना पूषरक्षिता काममेषां समा पृण ।।४।।
इयं सीता फलवती शतवल्शा वि रोहतु ।
इयं सहस्रभोगा अस्या इन्द्र उपावतु ।।५।।
अश्विना फालं कल्पयतामुपावतु बृहस्पति: ।
यथासद्बहुधान्यमयक्ष्मं बहुपूरुषम् ।।६।।
यद् वो देवा उपोचिर इह भूय: स्यादिति ।
इह तामुत्पृणां वयं देवीमुप ह्वयामहे ।।७।।
इदं म उत्पृणादिति स्फातिं म उत्पृणादिति ।
राशिं मे वर्धयादिति ।।८।।
स्फातिकारो बहुकार: स्फिरस्फोष्टायमक्षित: ।
खलो ज्येष्ठो विभु: प्रभु: ।।९।।
तस्मिन्धान्यं न्युप्यते यवो व्रीहिरथो तिल: ।
तस्य गृह्णीत यत्कृतं परिक्षाय चतु:शतम् ।।१०।।

शर्कारिवन्मयारव चक्रीवत्किं च यद्वृषे ।
तद्वै स्फातिरुपायती सर्वमेवाति रुच्यते ।।११।
महाञ्जने परा जहि सहस्रापोषमर्दय ।
बह्वी न ओषधे भव समुद्रस्येव संस्रव: ।।१२।।

८-१९

आज्यादज: समभवद् देशेभ्य ओदना इमे ।
तानपश्यद्बृहस्पति: स वै पञ्चौदनोऽभवत् ।।१।।
चतुर्धैतां समभर ओदनांस्त्वं बृहस्पते ।
अज आज्याज्जात: स एषां पञ्चमो ऽभवत् ।।२।।
धूमेन दिवमाप्नोत्यन्तरिक्षमुतष्मणा ।
दिश आप्नोति चक्षुषा अज: पञ्चौदन: सव: ।।३।।
या ते माता यस्ते पिता भ्रातरो ये च ते स्वा: ।
अजं पञ्चौदनं पक्त्वा सर्वे तमुप जीवत ।।४।।
ये ते पूर्वे परागता अपरे पितरश्च ये ।
तेभ्यो घृतस्य कुल्यैतु शतधारा व्युन्दती ।।५।।
ये सर्वदा ददति ये वा पचन्त्योदनम् ।
ते वै यमस्य राज्यादुत्तरे लोक आसते ।।६।।
नातिरात्र आप्नोति नैनमाप्नोत्युक्थ्य: ।
नाग्निष्टोम आप्नोत्यजं पञ्चौदनं सवम् ।।७।।
दशरात्रेण सम्मितो द्वादशाहेन कल्पते ।
दीर्घसत्रेण सम्मितो ऽज: पञ्चौदन: सव: ।।८।।
तेषां बर्हिष्यं सर्वं यन्नष्टं यच्च म्रियते ।
यच्च स्तेनो ऽपाजति येषां पञ्चौदन: सव: ।।९।।

या पूर्वपतिं वित्त्वाथान्यं विन्दतेऽपरम् ।
पञ्चौदनं च तावजं पचतो न वि योषत: ।।१०।।
समानलोको भवति पुनर्भुवापर: पति: ।
अजं पञ्चौदनं दक्षिणाज्योतिषं ददत् ।।११।।

८-२०

सूर्यो मा वर्चसोक्षतूक्षतामश्विनोभा ।
आदित्य ऊर्ध्व उच्चरन् स उ मा वर्चसोक्षतु ।।१।।
वर्चसा मां पितुरग्निर्वर्चसा मा बृहस्पति: ।
सुराया: सिच्यमानाया: कीलालवर्चसेन मा ।
तेन मामश्विनोभा उक्षतां पुष्करस्त्रजा ।।२।।
वर्चस्वन् मे मुखमस्तु रोचमानं विषासहि ।
तन्मा हिरण्यवर्चसं कृणोमि पश्यतां प्रियम् ।।३।।
मधोरहं मधुतरो मधुघान् मधुमत्तर:।
मामनु प्र विशतु वर्च ऋषभो वाशितामिव ।।४।।
इदमाञ्जनमानजे वर्चस्यमा कनिक्रदम् ।
यथा क्रनिक्रदच्चराणि वर्चसा च भगेन च ।।५।।
वर्चसाग्निमा दधति वर्चसोदेति सूर्य: ।
यावद् वर्चो गोहिरणयस्य तावन्मे वर्चो भूयात् ।।६।।
यावत् त्वं देव सूर्य उद्यन्नभि विपश्यसि ।
तावन् मा वर्चसाभि वि पश्य ।।७।।
पूर्णो भगस्याहं भूत्वारुक्षं वर्चसो रथम् ।
स मा वहतु सर्वदायुष्मन्तं सुवर्चसम् ।।८।।
भगेनाहं परिहितो वर्चसा द्रविणेन च ।
यथा चराणि सर्वदा रोचमानं विभावसु ।।९।।

एवा मा भग आगमदेवा मा वर्च आगमत् ।
एवा मा तेज आगमदेवा मा यश आगमत् ।।१०।।
हिरण्ययेन चक्रेण भगस्यापिहितो गृहः ।
तं व्युब्जामि ब्रह्मणातस्य मे दत्तमश्विना
दत्तं मे पुष्करस्रजा ।।११।।

*(इति एकादशर्चोनामअष्टमकाण्डे चतुर्थो ऽनुवाकः)*

***इत्यथर्ववेद पैप्पलाद संहितायां एकादशर्चोनाम अष्टमकाण्डः समाप्तः***

# अथ द्वादशर्चोनाम नवमकाण्ड:

९-१

ऊर्ध्वा अस्य समिधो भवन्त्यूर्ध्वा शुक्रा शोचींष्योग्ने:।
द्युमत्तमा सुप्रतीकस्य सूनस्तनूनपादसुरो विश्ववेदा:।।१।।
देवो देवेषु देव: पथो अनक्ति मध्वा घृतेन।
मध्वा यज्ञं नक्षति प्रोणानो नराशंस: सुकृद्देव:
सविता विश्ववार:।।२।।
अच्छायमेति शवसा घृतेनेडे वह्निं नमसाग्निम्।
स्रुचो अध्वरेषु प्रयत्सु।।३।।
स अक्षदस्य महिमानमग्ने: स इन्मन्द्रासु प्रयत्सु।
वसोश्चेतिष्ठो वसुधातमश्च।।४।।
द्वारो देवीरन्नस्य विश्वे व्रता ददन्ते अग्ने:।
उरुव्यचसो धाम्ना पत्यमाना:।।५।।
ते अस्य वृषणो दिव्या नु योना।
उषासानक्तेमं यज्ञमवतामध्वरं न:।।६।।
दैवा होतार इममध्वरं नो अग्नेर्जिह्वेमभि गृणीत।
कृणुता न: स्विष्टिम्।।७।।
तिस्रो देवीर्बर्हिरेदं सदन्त्विडा सरस्वती मही।
भारती गृणाना।।८।।
तन्नस्तुरीपमद्भुतं पुरुक्षु।
त्वष्टा सुवीर्यं रायस्पोषं वि स्यर्त नाभिमस्मे।।९।।
वनस्पते अव सृजा रराण: त्मना देवेभ्य:।
अग्निर्हव्यं शमिता सूदयाति।।१०।।

अग्ने स्वाहा कृणु जातवेद इन्द्राय भागम् ।
विश्वे देवा हविरिदं जुषन्ताम् ।।११।।

९-२

यजूंषि यज्ञे समिधः स्वाहाग्निः प्रविद्वानिह वो युनक्तु ।
युनक्तु देवः सविता प्रजानन्नस्मिन् यज्ञे सुयुजः स्वाहा ।।१।।
इन्द्र उक्थामदानि यज्ञे अस्मिन् प्रविद्वान् युनक्तु सुयुजः स्वाहा ।
छन्दांसि यज्ञं मरुतः स्वाहा मातेव पुत्रं पिपृतेह युक्ताः ।।२।।
प्रैषा निविद आप्रियो यजूंषि शिष्टाः पत्नीभिर्वहतेह युक्ताः ।
एयमगन् बर्हिषां प्रोक्षणीभिर्यज्ञं तन्वाना अदितिः स्वाहा ।।३।।
विष्णुर्युनक्तु बहुधा तपांस्यस्मिन् यज्ञे सुयुजः स्वाहा ।।४।।
त्वष्टा युनक्तु बहुधा नु रूपाण्यस्मिन् यज्ञे सुयुजः स्वाहा ।।५।।
इन्द्रो युनक्तु बहुधा वीर्याण्यस्मिन् यज्ञे सुयुजः स्वाहा ।।६।।
सोमो युनक्तु बहुधा पयांस्यस्मिन् यज्ञे सुयुजः स्वाहा ।।७।।
भगो युनक्त्वाशिषो न्यस्मां अस्मिन् यज्ञे सुयुजः स्वाहा ।।८।।
अश्विना ब्रह्मणेतमर्वाग् वषट्कारेण यज्ञं वर्धयन्तौ स्वाहा ।।९।।
बृहस्पते ब्रह्मणेह्यर्वाङ् यज्ञोयं स्वरितं यजमानाय धेहि स्वाहा।।१०।।

९-३

आपः पुनन्तु वरुणः पुनात्वयं च यः पवते विश्वदानीम् ।
यज्ञो भगो अधिवक्ता विधर्ताग्निश्च नः पावयेतां सूर्यश्च।।१।।
दशशीर्षो दशजिह्व आ रभे वीरको भिषक् ।
मा ते रिषं खनिता यस्मै च त्वा खनामसि ।।२।।
दशरात्रे किलासस्य वीरुधा वेद भेषजम् ।
इतस्तदभ्रियाखनं किलासं नाशयामि ते ।।३।।

अप्स्वन्या वि होहति धन्वन्यन्याधि तिष्ठति ।
किलासमन्या नीनशद् वर्चसान्या समुक्षतु ।।४।।
आज्येन घृतेन जुहोमि किलासभेषजम् ।
वीरुधामग्ने: सङ्काशे किलासं नानु विद्यते ।।५।।
पिशङ्गरूपो भवति कल्माषमुत संदृशि ।
किलास नश्येत: पर: प्र त्वा धक्ष्यामि वीरुधा ।।६।।
यानि पृथगुत्पतन्ति नक्षत्राणीव संदृशि ।
किलासं सर्वं नाशयन्नोघ इवाभ्येमि वीरुधा ।।७।।
यदि वा पुरुषेषितात् किलास पर्याजगन् ।
नमो नमस्यामो देवान् प्रत्यक्कर्तारमृच्छतु ।।८।।
शीर्ष्णस्ते स्कन्धेभ्यो ललाटात् परि कर्णयो: ।
ओषध्या वर्षजूतया किलासं नाशयामि ते ।
स्वस्त्वा वर्ण आयत्यनराति: सहौषधि: ।।९।।
ग्रीवाभ्यस्त उष्णिहाभ्य: कीकसाभ्यो अनूक्यात् ।
ओषध्या वर्षजूतया किलासं नाशयामि ते ।
स्वस्त्वा वर्ण आयत्यनराति: सहौषधि: ।।१०।।
अंसाभ्यां ते दोर्भ्यां बाहुभ्यां परि हस्तयो: ।
ओषध्या वर्षजूतया किलासं नाशयामि ते ।
स्वस्त्वा वर्ण आयत्यनराति: सहौषधि: ।।११।।
पृष्टिभ्यस्ते पार्श्वाभ्यां श्रोणिभ्यां परि भंसस: ।
ओषध्या वर्षजूतया किलासं नाशयामि ते ।
स्वस्त्वा वर्ण आयत्यनराति: सहौषधि: ।।१२।।
ऊरूभ्यां ते ऽष्ठीवद्भ्यां पार्ष्णिभ्यां प्रपदाभ्याम् ।

ओषध्या वर्षजूतया किलासं नाशयामि ते ।
स्वस्त्वा वर्ण आयत्यनरातिः सहौषधिः ।।१३।।

९-४

सहैव वो हृदयानि सह विज्ञानमस्तु वः ।
सहेन्द्रो वृत्रहा करत् सह देवो बृहस्पतिः ।।१।।
समानमस्तु वो हृदयं समानमुतो वो मनः ।
समानो अग्निर्वो देवः सह राष्ट्रमुपाध्वम् ।।२।।
सं जानीध्वं सहृदयाः सर्वे संमनस स्थ ।
नष्टो वो मन्युर्जीर्णेर्ष्या सह जीवाथ भद्रया ।।३।।
यथा पुत्रः प्रवावदः पितृभ्यां वदति प्रियम् ।
एवा यूयमन्योऽन्यस्मै जिह्वया वदत प्रियम् ।।४।
सहैव वो धान्यानि समानाः पशवश्च वः ।
सह पृथिव्यां वीरुधः सह वः सन्त्वोषधीः ।।५।।
सह दीक्षा सह यज्ञो विवाहो वो सहासति ।
सह प्रफर्वा नृत्यन्तु सह व स्त्रिय आसताम् ।।६।।
सहैव वो वीर्याणि सहान्यान् रन्धयाध्वै ।
सह पतत्रिणीमिषुमन्यस्मै हेतिमस्यत ।।७।।
सं वस्यामि समितिं मधुना वाचमाञ्जिषम् ।
युस्माकमन्ये शृण्वन्तूदितं सङ्गते जने ।।८।।
युष्मान् मित्रा वृणतां युष्मान् प्रतिजना उत ।
युष्मात् ज्ञातित्वं प्रेप्सन्त्यमृतं मर्त्या इव ।।९।।
सं समिद्यः समाकरं सह यूथा गवामिव ।
समानमस्तु वो मनो ज्येष्ठं विज्ञानमन्वित ।।१०।।
इदं यदेषां हृदयं तदेषां हृदये भवत् ।

अथो यदेषां हृदयं तद्वेषां हृदि श्रितम् ।
समानमस्तु वो मन: श्रेष्ठं विज्ञानमन्वित ।।११।।
इदं यदेषां मन एषां यानि मनांसि च ।
सध्र्यगिन्द्र तत् कृणु रथे पादाविवाहितौ ।।१२।।

९-५

सहस्रबाहु: पुरुष: सहस्राक्ष: सहस्रपात् ।
स भूमिं विश्वतो वृत्वात्यतिष्ठद् दशाङ्गुलम् ।।१।।
त्रिभि: पद्भिर्द्यामरोहत् पादस्येहाभवत् पुन: ।
तथा व्यक्रामद्विष्वङ् अशनानशने अनु ।।२।।
तावन्तो अस्य महिमानस्ततो ज्यायांश्च पुरुष: ।
पादस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ।।३।।
पुरुष एवेदं सर्वं यद् भूतं यच्च भाव्यम् ।
उतामृतत्वस्येश्वरो यदन्नेनाभवत् सह ।।४।।
यत् पुरुषं व्यदधु: कतिधा व्यकल्पयन् ।
मुखं किमस्य किं बाहू किमूरू पादा उच्येते ।।५।।
ब्राह्मणो ऽस्य मुखमासीद् बाहू राजन्योभवत् ।
मध्यं तदस्य यद् वैश्य: पद्भ्यां शूद्रो अजायत ।।६।।
विराडग्रे सममभवत् विराजो अधि पूरुष: ।
स जातो अत्यरिच्यत पश्चाद् भूमिमथो पुर: ।।७।।
यत् पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तो अस्यासीदाज्यं ग्रीष्म इध्म: शरद्धवि: ।।८।।
तं यज्ञं प्रावृषा प्रौक्षन् पुरुषं जातमग्रश: ।
तेन देवा अजयन्त साध्या वसवश्च ये ।।९।।
तस्मादश्वा अजायन्त ये च के चोभयादत: ।
गाव ह जज्ञिरे तस्मात् तस्माज्जाता अजावय: ।।१०।।

तस्माद् यज्ञात् सर्वहुत ऋच: सामानि जज्ञिरे ।
छन्दो ह जज्ञिरे तस्माद् यजुस्तस्मादजायत ।।११।।
तस्माद् यज्ञात् सर्वहुत: संभृतं पृषदाज्यम् ।
पशून् तांश्चक्रे वायव्यानारण्यान् ग्राम्याश्च ये ।।१२।।
सप्तास्यासन् परिधयस्त्रि: सप्त समिध: कृता: ।
देवा यद् यज्ञं तन्वाना अवध्नन् पुरुषं पशुम् ।।१३।।
मूर्ध्नो देवस्य बृहतो ऽशव: सप्त सप्तती: ।
राज्ञ: सोमस्याजायन्त जातस्य पुरुषादधि ।।१४।।
चन्द्रमा मनसो जातश्चक्षु: सूर्योऽजायत ।
श्रोत्राद् वायुश्च प्राणश्च मुखादग्निरजायत ।।१५।।
नाभ्यां आसीदन्तरिक्षं शीर्ष्णो द्यौ: समवर्तत ।
पद्भ्यां भूमिर्दिश: श्रोत्राङ् तथा लोकाङ् अकल्पयन् ।।१६।।

*(इति द्वादशर्चोनामनवमकाण्डे प्रथमो ऽनुवाक:)*

### ९-६

इमां खनाम्योषधिमदृष्टहननीमहम् ।
अश्वस्यावो ददाति त्वा वैरूपो वाजिनीवति ।।१।।
नादृष्टा वो जिह्वा: सन्ति न दन्ता हन्वोरधि ।
नापि मध्यं नो शिरस्ते यूयं किं करिष्यथ ।।२।।
इन्द्रामित्रा इन्द्रहता न व इहास्ति न्यञ्जनम् ।
इन्द्रो व: सर्वासां साकं शक्रस्तृणेढु वृत्रहा ।।३।।
अश्वतराङ् अय:शफान् यानिन्द्रो अधितिष्ठति ।
तैर्वोपि नह्येय ते मुखान्युदरसर्पिण: ।।४।।
अपिनह्यमदृष्टानां मुखं पादा दृतेरिव ।
उतैषां जिह्वा निष्कर्ता निर्दन्ता हन्वोरधि ।।५।।

अवधिषमसृगादां नि क्रोडादा अलिप्सत ।
अभैत्सं सर्वेषामाण्डानि ये अदृष्टाः पृथिवीक्षितः ॥६॥
रिष्यासः पौरुषासो दर्भासो वैरिणा उत ।
मौञ्जा अदृष्टाः सौर्याः सर्वे साकं नि जस्यत ॥७॥
अदृष्टानां सप्त जाता पृथिवी न शिशे मही ।
तानिन्द्रो बाहुभ्यां सर्वाञ्छक्रो अपावयत् ॥८॥
ये वः सन्ति सप्त जाता अदृष्टाः पुरुषादिनः ।
ग्राव्णांशूनिव सोमस्य तान् सर्वान् प्र मृणीमसि ॥९॥
य आत्मजा ये वस्तिजा य ऋषा य उ तोदिनः।
तेभ्यः खनाम्योषधिं येभ्यो बिम्बीवधः कृतः ॥१०॥
अदृष्टेभ्यस्तरुणेभ्यो युवद्भ्य स्थविरेभ्यः ।
आहार्षमुग्रामोषधिं येभ्यो बिम्भीवधः कृतः ॥११॥
ये च दृष्टा ये चादृष्टास्तितीलाः शलुनाश्च ये ।
तानग्ने सर्वान् सं दह क्रिमीननेजतो जहि ॥१२॥

९-७

शीतिजला इलि शीता वाता उपा वन्तु ।
हिमेनाग्निरावृतो हिमेनाग्निः परीवृतः ॥१॥
यत्त्वा देवा अपारुन्धन्ना समुद्रमधावयः ।
हिमो जघान गोअजं हिमो अक्षं हिमश्छदिः ॥२॥
हिमादधि प्र यामसि हिमे अद्य विमोचनम् ।
यमवटं शतदरमवैन्ध सप्तवध्रये ॥३॥
अवका तत्र रोहतु खदे परि बिलं तव ।
अर्चिष्टे अग्ने प्रथममङ्गाराङ् अपराङ् उत ॥४॥

गृभ्णामि ब्रह्मणा नाम धामधाम परुष्परु: ।
शीतिका नाम ते माता जलाषो नाम ते पिता ।।५।।
इह त्वमन्तरा भव बाहीकमस्तु यद्रप: ।
हिमे जातोदके वृद्धा सिन्धुतस्पर्याभृता ।
तया ते अग्रभं नामाश्वमिवाश्वाभिधान्या ।।६।।
आमा नामास्योषधे तस्यास्ते नाम जग्रभ ।
अगस्त्यस्य पुत्रासो मा वि धाक् पुरुषान् मम ।।७।।
मा नो अग्ने तन्वं मा वायांसि रीरिष: ।
यं त्वा समुद्रज वयमारोहाम स्वस्तये ।।८।।
दिवस्तारा अवापद्रन् धारात् समुद्रिया अप: ।
हिरण्यकुम्भो हरितो ऽवकाभि:
परिवृतस्तेनाग्निं शमयामसि ।।९।।
शमयाम्यर्चिरग्ने: शिवस्तपतु मा वि धाक् ।
गृभीते द्यावापृथिवी गृभीतं पार्थिवं रज: ।।१०।।
नि मुञ्जेषु यदुदकं नि नड़ेषु यदन्तरम् ।
यत् समुद्रे यत् सिन्धौ तेनााग्निं शमयामसि ।।११।।
वेतसस्यावकाया नड़स्य वीरणस्य च ।
रोहितकस्य वृक्षस्याग्निं शमनमुद्धरे ।।१२।।
आयतीरुदहार्यो वि ते हरन्तु यद्रप: ।
परायती: परावत: परा हरन्तु यद्रप: ।।१३।।
हिमस्य त्वा जरायुणाग्ने परि व्ययामसि ।
शीतिके शीतमित् करो हिमिके हिममित् कर: ।।१४।।

९-८

अक्षण्वता लाङ्गलेन पद्वता पतयिष्णुना ।
लाङ्गूलगृह्य चर्कृषुर्वृकेण यवमश्विना ।।१।।

देवा एतं मधुना संयुतं यवं सरस्वत्यामधि मणावचर्कृषु:।
इन्द्र आसीत् सीरपति: शतक्रतु:
कीनाशा आसन् मरुत: सुदानव:।।२।।
हिरण्ययं कलशं सुदानवो दिव्यया सरघया कृतम् ।
अव भृतमश्विना यवं तद् युवं मधु चक्रथु: ।।३।।
क्रिशावेतदजयतमश्विना सारघं मधु ।
ततो यवो व्यरोहत्सोऽभवद् विषदूषण: ।।४।।
युवार्वान् सारघया: प्रखिद्य मध्वाभरत् ।
ततो यवो व्यरोहत्सो ऽभवद् विषदूषण: ।।५।।
यद् वृकं मधुपावानमवामयतमश्विना ।
ततो यवो व्यरोहत्सो ऽभवद् विषदूषण: ।।६।।
कैरण्डा नाम सरसो वृकस्य वम्या अधि ।
ततो यवो व्यरोहत्सो ऽभवद् विषदूषण: ।।७।।
यदस्य भरथो मधु सरघा सथ्वच्छिनत् ।
सद्यस्तदर्वतो युवं पुनरा दत्तमश्विना ।।८।।
यो यवं दिग्धविद्धो अहिदष्ट उपासरत् ।
तीर्थे रध्रमिव मज्जन्तं उत्तं भरतमश्विना ।।९।।
यं वहन्त्यष्टायोगा: षड्योगा यं चतुर्गवा: ।
स ते विषं वि बाधतामुग्रो मध्यमशीरिव ।।१०।।

९-९

यस्य यव प्रसर्पस्यङ्गमङ्गं परुष्परु: ।
तस्माद् यक्ष्मं वि बाधस्योग्रो मध्यमशीरिव ।।१।।
शकलं च न ते यवान्या रुहन्त्योषधी: ।
यव इद् यावयाद्घोरश्चात् पुरुषाद् विषम् ।।२।।

यवो राजा यवो भिषक् यवस्य महिमा महान् ।
यवस्य मन्थं पपिवानिन्द्रश्चकार वीर्यम् ।।३।।
आ भरामृतं घृतस्य पुष्पमा भर ।
अनभ्रिखात ओषध इदं दूषय यद् विषम् ।।४।।
य आयन्ति दिग्धविद्धा: शूद्रा राजन्या उत ।
चक्षुर्मे सर्व आदृश्य ते यन्त्यगदा: पुन: ।।५।।

९-१०

जीवातवे न मर्तवे शिरस्त आ रभामहे ।
रसं विषस्य नाविदमुद्न: फेनमदन्निव ।।१।।
भूम्या मध्याद्दिवो मध्याद् भूम्या अन्तादथो दिव: ।
मध्ये पृथिव्या यद् विषं तद् वाचा दूषयामसि ।।२।।
अश्वत्थे निहितं विषं कपाले निहितं विषम् ।
शिलाया जज्ञे तैमात: प्रथमो विषदूषणी ।।३।।
विषस्याहं वैन्दकस्य विषस्य दार्व्यस्य च ।
अथो विषस्य स्वैलस्य समानीं वाचमग्रभम् ।।४।।
तदिद् वदन्त्यर्थिन उत शूद्रा उतार्या: ।
विषाणां विष्वगर्थानां सर्वथैवारसं विषम् ।।५।।
परुषस्त्वामृतकर्णो विष प्रथममावयत् ।
यथा ह तं नारोपयस्तथास्यरसं विषम् ।।६।।
यद् वो देवा उपजीका उद्देहं शुषिरं ददु: ।
तत्रामृतस्यासिक्तं तच्चकारारसं विषम् ।।७।।
शकुन्तिका मे अब्रवीद् विषपुष्पं धयन्तिका ।
न रोपयति न मादयत्यरसं शार्वीयं विषम् ।।८।।
अत्यपप्ताम दुर्गाणि शारी: शकुनयो यथा ।

इहेन्द्राणीं वरुणानीं सिनीवालीं ऋकोढ्याम् ।
ग्राह्यं शूरपुत्रां देवीं याचामो विषदूषणम् ।।९।।
आलकं व्यालकं व्यावं जाल्म जिगीमहे ।
जरद्विषं युवाभिषक् वयमित् सासहामहै ।।१०।।
अस्थाद् द्यौरस्थात् पृथिव्यस्थाद् विश्वमिदं जगत् ।
अस्थुर्विषस्यारोपयोऽनड्वाहः क्रिशा इव ।।११।।
यावत् सूर्यो वितपति यावच्चाभिविपश्यति ।
तेनाहमिन्द्रदत्तेन कृणोम्यरसं विषम् ।
तद्विषमरसं विषमधोभागरसं विषम् ।।१२।।

९-११

मातरिश्वा समभरद्धाता समदधात् परुः ।
इन्द्राग्नी अभ्यरक्षतां त्वष्टा नाभिमकल्पयत् ।।१।।
भवस्त्वा अभ्यरक्षद् रुद्रस्ते अंसुमाभरत् ।
रात्री त्वाभ्यगोपायत् सा त्वं भूते अजायथाः ।।२।।
द्यौष्ट आयुर्गोपायदन्तरिक्षमसुं तव ।
माता भूतस्य भव्यस्य पृथिवी त्वाभि रक्षतु ।।३।।
यां त्वा देवाः समदधुः सहस्रपुरुषं सतीम् ।
सा देवी त्वमस्येदमपाज व्यजा विषम् ।।४।।
याः पुरस्तात् प्रस्यन्दन्ते दिवा नक्तं च योषितः।
आपः पुरु स्रवन्तीस्ता उ ते विषदूषणीः ।।५।।
आतपस्ते वर्षमासीदग्निश्छायाभवत्तपः ।
उल्बं ते अभ्रमासीत् सा त्वं भूते अजायथाः ।।६।।
गन्धर्वस्ते मूलमासीच्छाखा अप्सरसस्तव ।
मरीचीरासन् पर्णानि सिनीवाली कुलं तव ।।७।।

अजरा देवा अदधुरमृतं मर्त्येष्वा ।
तस्यैतदग्रमा ददे तदु ते विषदूषणम् ।।८।।
अनभ्रौ खनमानं विप्रं गम्भीरे अपसम् ।
भिषक् चक्षुर्भिषक् खने तदु ते विषदूषणम् ।।९।।
या: पुरस्ताद् वितिष्ठन्ते गाव: प्रव्राजिनीरिव ।
अमृतस्येव वा अस्यथो हास्यरुन्धती ।।१०।।
यो मय: सरघाया: प्रखाय मध्वाभरत् ।
ततो यव: प्राजायत्सोभवद् विषदूषण: ।।११।।
यवस्यैतत् पलालिनो गोधूमस्य तिलस्य च ।
व्रीहेर्यवस्य दैव्येन कृणोम्यरसं विषम् ।।१२।।
महीं योनिं समुद्रस्यान्वविन्दन् ऋतायव: ।
तां देवा गुह्यामासीनां समुद्राच्चिदुदाभरन् ।।१३।।
समुद्राच्चिदुदाभृत्य तामु पुष्कर आ दधु: ।
अस्या: पृथिव्या देव्याश्चक्षुराकाश्यमसि विषदूषणम्।।१४।।

*(इति द्वादशर्चोनामनवमकाण्डे द्वितीयो ऽनुवाक:)*

## ९-१२

समानमर्थं पर्यन्ति देवा रूपंरूपं तपसा वर्धमाना: ।
यदादित्यमभिसंविशन्ति तदेकं रूपममृतत्वमेषाम् ।।१।।
देवो देवेभिरा गमन् महान् नो अतिथिष्पिता ।
स प्रैति जातवेदसमेकरूपो गुहा भवन् ।।२।।
आतिथ्यमग्निं निरपप्तदेव उभयेभि: पितृभि: संविदान:।
महान् नु मर्त्य उप भक्षं नागन् संगृभ्यादित्यान्
न्यविष्ट वह्नि:।।३।।
त आ विशन्ति पुरुषं शयानं प्राणा निविष्टा न ससन्त्येनम्।
ते नो राज्या सुमनस्यमाना अह्ना रक्षन्त्यहृणीयमाना: ।।४।।

पशुभ्यो नः पशुपते मृड सर्व सं वृह आयताम् ।
मा नः प्राणेषु रीरिषः ।।५।।
वायुः सत्ये अधि श्रितः प्राणापानावभिरक्षन् ।
सं प्रजा ऐरयदिमाः ।।६।।
देवा यत्ताः प्रजापतावादित्याश्च येमिरे ।
पूषा रश्मिष्वायत आदित्यो विष्णुराक्रमे स
रोहं दिवि रोहति ।।७।।
प्रजाद्देवाः सवितुः सवे त्वष्टा रूपाणि पिंशतु ।
अञ्जन्तौ मधुना पयो ऽतन्द्रं यातमश्विना ।।८।।
विश्वे देवाः प्र यातनादित्यासः सजोषसः ।
पुरः पश्चात् स्वस्तये ।।९।।
ब्रह्म वर्म बृहस्पतिः संगवो नोऽभि रक्षतु ।
देवो देवैः पुरोहितः ।।१०।।
मरुतो वृष्ट्या न आ गत सत्यधर्माण ऊतये ।
अपराह्णेषु जिन्वत ।।११।।
इन्द्रो राजा दिवस्पतिरहर्विमाय तिष्ठति ।
स न इमाः कल्पयाद् दिशः ।।१२।।

९-१३

आवतस्ते परावतः परावतस्त आवतः ।
इहैव भव मा नु गा मा पूर्वाननु गा गतानसुं
बध्नामि ते दृढम् ।।१।।
यत्त्वाभिचेरुः पुरुषः सो यदरुणो जनः ।
उन्मोचनप्रमोचने उभे वाचा वदामि ते ।।२।।
यद् दुद्रोहिथ शेपिषे स्त्रियै पुंसे अचित्त्या ।
उन्मोचनप्रमोचने उभे वाचा वदामि ते ।।३।।

यदेनसो मातृकृताच्छेषे पितृकृतादुत ।
उन्मोचनप्रमोचने उभे वाचा वदामि ते ।।४।।
यत्ते माता यत्ते पिता जामिर्भ्राता च सर्जत: ।
प्रत्यक् सेवस्य भेषजं जरदष्टिं कृणोमि त्वा ।।५।।
एह्येहि पुनरेहि सर्वेण मनसा सह ।
दूतौ यमस्य मानु गा अधि जीवपुरा इहि ।।६।।
अनुहूत: पुनरेहि विद्वानुदयनं पथ: ।
आरोहणमाक्रमणं जीवतोजीवतोऽयनम् ।।७।।
मा बिभेर्न मरिष्यसि जरदष्टिर्भविष्यसि ।
निरवोचमहं यक्ष्ममङ्गेभ्यो अङ्गज्वरं तव ।।८।।
शीर्षरोगो अङ्गरोगो यश्च ते हृदयामय: ।
यक्ष्म: श्येन इव प्रापप्तद्वाचा नुत्त: परस्तरम् ।।९।।
ऋषी बोधप्रतीबोधात्स्वप्नो यश्च यागृवि: ।
ते ते प्राणस्य गोप्तारो दिवा नक्तं च जाग्रतु ।।१०।।

९-१४

अयमग्निरुपसद्य इह सूर्य उदेतु ते ।
उदेहि मृत्योर्गम्भीरात् कृच्छाच्चित्तमसस्परि ।।१।।
नमो यमाय नमोऽस्तु मृत्यवे नम: पितृभ्य उत ये नयन्ते ।
उत्पारणस्य यो वेद तमग्निं तत् पुरो दधे ।।२।।
ऐतु प्राण ऐतु मन ऐतु चक्षुरथो बलम् ।
शरीरमस्य सं विदां तत् पद्भ्यां प्रति तिष्ठतु ।।३।।
प्राणेनाग्ने चक्षुषा सं सृजेमं समीरय तन्वा सं बलेन ।
वेत्थामृतस्य मा मृत मो षु भूमिगृहो भुवत् ।।४।।
मा ते प्राण उप दसन् मापानो अपि धायि ते ।
सूर्यस्त्वाधिपतिर्मृत्योरुदायच्छाति रश्मिभि: ।।५।।

इयमन्तर्वदत्युग्रा जिह्वा पनिष्पदा ।
तया रोगान्वि नयामः शतं रोपीश्च तक्मनः ।।६।।
अयं लोकः प्रियतमो देवानामपराजितः ।
यस्मै त्वमिह जज्ञिषे दिष्टः पुरुष मृत्यवे ।
तस्मै त्वानु ह्वयामसि मा पुरा जरसो मृथाः ।।७।।

९-१५

ते ऽवदन् प्रथमा ब्रह्मकिल्बिषे ऽकुपारः सलिलो मातरिश्वा।
वीडुहरास्तप उग्रं मयोभूव आपो देवीः प्रथमजा ऋतस्य ।।१।।
सोमो राजा प्रथमो ब्रह्मजायां पुनः प्रायच्छदहृणीयमानः।
अन्वर्तिता वरुणो मित्र आसीदग्निर्होता हस्तगृह्या निनाय ।।२।।
हस्तेनेव ग्राह्य आधिरस्या ब्रह्मजायेति चेदवोचत् ।
न दूताय प्रह्ये तस्थ एषा तथा राष्ट्रं गुपितं क्षत्रियस्य ।।३।।
यामाहुस्तारकां विकेशीं दुच्छुनां ग्राममवपद्यमानाम् ।
सा ब्रह्मजाया प्र दुनोति राष्ट्रं यत्र प्रापादि शशः कल्कुषीमान्।।४।।
ब्रह्मचारी चरति वेविषद्विषः स देवानां भवत्येकमङ्गम् ।
तेन जायामन्वविन्दद्बृहस्पतिः सोमेन नीतां जुह्वं न देवाः ।।५।।
देवा एतस्यामवदन्त पूर्वे सप्तर्षयस्तपसे ये निषेदुः ।
भीमा जाया ब्राह्मणस्यापनीता दुर्धां दधाति परमे व्योमन् ।।६।।
ये गर्भा अवपद्यन्ते जगत् यच्चापलुप्यते ।
वीरा ये हन्यन्ते मिथो ब्रह्मजाया हिनस्ति तान् ।।७।।
सर्वे गर्भाः प्रव्यथन्ते कुमारा दशमास्याः ।
यस्मिन् राष्ट्रे निरुध्यते ब्रह्मजाया अचित्त्या ।।८।।
पुनर्वै देवा अददुः पुनर्मनुष्या उत ।
राजानः सत्यं कृण्वन्तो ब्रह्मजायां पुनर्ददुः ।।९।।

यो पुनर्दाय ब्रह्मजायां कृत्वी देवैर्निकिल्विषम् ।
ऊर्जं पृथिव्या भक्त्वोरुगायमुपासते ।।१०।।

९-१६

न तत्र धेनुर्दुहे नानड्वान् सहते धुरम् ।
विजानिर्यत्र ब्राह्मणो रात्रिं वसति पापया ।।१।।
न वर्षं मैत्रावरुणं ब्रह्मज्यमभि वर्षति ।
नास्मै समिति: कल्पते न मित्रं नयते वशम् ।।२।।
असृङ्मती चरति ब्रह्मजाया आशा लिम्पन्ती प्रदिशश्चतस्र:।
य: क्षत्रिय: पुनरेनां ददाति स दिवो धारां धयति प्रपीनाम्।।३।।
यो ऽपुनर्दाय ब्रह्मजायां राजा तल्पे निपद्यते ।
दुर्योणा अस्मा ओषधीर्या: काश्चाभिविपश्यति।।४।।
विषमश्नात्यपां विषमश्नाति वीरुधाम् ।
यो ब्रह्मजायां न पुनर्ददाति तस्मै देवा: सुदिहं दिग्धमस्याम्।।५।।
उद्यत् पतयो दश स्त्रिया: पूर्वे अब्राह्मणा: ।
ब्रह्मा चेद्धस्तमग्रहीत् स एव पतिरेकधा ।।६।।
ब्राह्मण एव पतिर्न राजा नोत वैश्य: ।
तत् सूर्य: प्रब्रुवन्नेति पञ्चभ्यो मानवेभ्य: ।।७।।

९-१७

नैतां ते देवा अददुस्तुभ्यं नृपते अत्तवे ।
मा ब्राह्मणस्य राजन्य गां जिघत्सो अनाद्याम् ।।१।।
अक्षद्रुग्धो राजन्य: पाप आत्मपराजित: ।
स ब्राह्मणस्य गामद्यादद्य जीवानि मा श्व: ।।२।।
निर्वै क्षत्रं नयति हन्ति वर्चो ऽग्निरिवारब्ध: प्र दुनोति राष्ट्रम् ।
यो ब्रह्मणं देवबन्धुं हिनस्ति न स पितॄणामप्येति लोकम् ।।३।।

देवपीयुश्चरति मर्त्येषु गरगीर्णो भवत्यस्थिभूयान् ।
यो ब्राह्मणं मन्यते अन्नमेव स विषस्य पिबति तैमातस्य।।४।।
विषं स पिबति तैमातं पश्यन्नग्निं प्र सीदति ।
यो ब्राह्मणस्य सद्धनमभि नारद मन्यते ।।५।।
शतापाष्ठां नि गिरति तां न शक्नोति निष्खिदम् ।
अन्नं यो ब्रह्मणां मन्यः स्वाद्वद्मीति मन्यते ।।६।।
य एनां हन्ति मृदुमन्यमानो देवपीयुर्धनकामो न चित्तात् ।
सं तस्येन्द्रो हृदये अग्निमिन्धउभे एनं द्युष्टो नभसी चरन्तम्।।७।।
न ब्राह्मणो हिंसितवा अग्नेः प्रियतमा तनूः ।
सोमो ह्यस्य दायाद इन्द्रो अस्याभिशस्तिपाः ।।८।।
अग्निर्वै नः पदवायः सोमो दायाद उच्यते ।
जेता अभिशस्तेन्द्रस्तत् सत्यं देवसंहितम् ।।९।।
आविष्टिताघविषा पृदाकूरिव चर्मणा ।
सा ब्राह्मणस्य राजन्य तृष्टैषा गौरनाद्या ।।१०।।

## ९-१८

इषुरिव दिग्धा नृपते पृदाकूरिव गोपते ।
सा ब्राह्मणस्येषुर्दिग्धा तया विध्यति पीयकः ।।१।।
तीक्ष्णेषवो ब्राह्मणा हेतिमन्तो यामस्यन्ति शरव्यां न सा मृषा ।
अनुहाय तपसा मन्युना चोत दूरादव भिन्दन्ति ते तया ।।२।।
जिह्वा ज्या भवति कुल्मलं वाङ् नाडीका दन्तास्तपसा सुदिग्धाः।
तेभिर्ब्रह्मा विध्यति देवपीयून् हृद्बलैर्धनुर्भिर्देवजूतैः ।।३।।
यो ब्राह्मणं हिंसितारस्तपस्विनं मनीषिणं ब्रह्मचर्येण श्रान्तम्।
अवर्तिमद् भविता राष्ट्रमेषां तमसीव निहितं नानु वेत्ताः।।४।।
ये सहस्रमराजन्नासन् दशशता उत ।
ते ब्राह्मणस्य गां जग्ध्वा वैतहव्याः पराभवन् ।।५।।

गोरेव तान् हन्यमाना वैतहव्याङ् अवातिरत् ।
ये केशरप्राबन्धायाश्चरमाजामपेचिरन् ।।६।।
अतिमात्रा अजायन्त नोदिव दिवमस्पृशन् ।
भृगुं हिंसित्वा माहीना असंभव्यं पराभवन् ।।७।।
ये बृहत्सामानमाङ्गिरसमार्पयन् ब्राह्मणं जना: ।
येत्वस्तेषामुभयादन्नविस्तोकान्यावयत् ।।८।।
ये ब्राह्मणं प्रत्यष्ठीवन् ये चास्मिच्छुक्लमीषिरे ।
अस्नस्ते मध्ये कुल्याया: केशान् खादन्त आसते।।९।।
अष्टापदी चतुरक्षी चतु:श्रोत्रा चतुर्हनु: ।
द्विजिह्वा द्विप्राणा भूत्वा सा राष्ट्रमव धूनुते ।।१०।।

९-१९

ब्रह्मगवी पच्यमाना यावत् साभि विजङ्गहे ।
तेजो राष्ट्रस्य निर्हन्ति न वीरो जायते पुमान् ।।१।।
आक्रमणेन वै देवा द्विषन्तो घ्नन्ति पूरुषम् ।
स्तेयादं ब्रह्मज्यं क्षेत्रे चानृतवादिनम् ।।२।।
विषमेतद् देवकृतं राजा वरुणो अब्रवीत् ।
न ब्राह्मणस्य गां जग्ध्वा राष्ट्रे जागार कश्चन ।।३।।
तद् वै राष्ट्रमा स्त्रवति भिन्नां नावमिवोदकम् ।
ब्राह्मणो यत्र जीयते तद्राष्ट्रं हन्ति दुच्छुना ।।४।।
एकशतं वै जनता भूमिर्या व्यधूनुत ।
प्रजां हिंसित्वा ब्राह्मणीमसंभव्यं पराभवन् ।।५।।
यामुदाजनृषयो मनीषिण: श्रमसातां बृहतीं देवजूताम् ।
सा ब्रह्मज्यं पचति पच्यमाना राष्ट्रमस्य बृहती यच्च वर्च:।।६।।
वाचा ब्राह्मणमृच्छति जामि हन्त्यचित्त्या ।
मित्राय सत्ये द्रुह्यति यं देवा घ्नन्ति पूरुषम् ।।७।।

९-२०

एकपाच्छन्द एककामं च ।
तदाप्नोति चाव च रुन्धे
प्रथमया रात्र्या प्रथमया समिधा ।।१।।
द्विपाच्छन्दो द्विपदश्च पशून् ।
तदाप्नोति चाव च रुन्धे
द्वितीयया रात्र्या द्वितीयया ममिधा ।।२।।
त्रींल्लोकान्स्त्रीं लोकपतीन् ।
तदाप्नोति चाव च रुन्धे
तृतीयया रात्र्या तृतीयया समिधा।।३।।
चतुष्पाच्छन्दश्चतुष्पदश्च पशून् ।
तदाप्नोति चाव च रुन्धे
चतुर्थ्या रात्र्या चतुर्थ्या समिधा।।४।।
पञ्च दिश: पञ्च प्रदिश: ।
तदाप्नोति चाव च रुन्धे
पञ्चम्या रात्र्या पञ्चम्या समिधा।।५।।
त्रैष्टुभं छन्दो विराजं स्वराजं सम्राजम् ।
तदाप्नोति चाव च रुन्धे
षष्ठ्या रात्र्या षष्ठ्या समिधा।।६।।
सप्त प्राणान् सप्तापानान् सप्त ऋषींश्च ।
तदाप्नोति चाव च रुन्धे
सप्तम्या रात्र्या सप्तम्या समिधा।।७।।
ओजश्च तेजश्च सहश्च बलं च ।
तदाप्नोति चाव च रुन्धे
अष्टम्या रात्र्या अष्टम्या समिधा।।८।।

अम्भश्च महश्चान्नं चान्नाद्यं च ।
तदाप्नोति चाव च रुन्धे
नवम्या रात्र्या नवम्या समिधा ।।९।।
ब्रह्म च क्षत्रं चेन्द्रियं च ब्राह्मणवर्चसं च ।
तदाप्नोति चाव च रुन्धे
दशम्या रात्र्या दशम्या समिधा।।१०।।
विश्वावसू च सर्ववसू च ।
तदाप्नोति चाव च रुन्धे
एकादश्या रात्र्या एकादश्या समिधा।।११।।
पाङ्क्तं छन्द: प्रजापतिं संवत्सरम् ।
तदाप्नोति चाव च रुन्धे
द्वादश्या रात्र्या द्वादश्या समिधा।।१२।।

*(इति द्वादशर्चोनामनवमकाण्डे तृतीयो ऽनुवाक:)*

## ९-२१

यो वा एकशरावं निर्वपेदेकर्षिमेवानु निर्वपेत् ।
एष वा एकर्षिर्यदग्नि:। एकर्षि चैव लोकं चाव रुन्धे एकर्षिरिव तपत्येकर्षिरिव दीदायैकर्षिरिवान्नादो भवति य एवं वेद ।
स य एवं विद्वान् प्राश्नीयादेतामेव देवतां मनसा ध्यायेदेकर्षेस्त्वा चक्षुषा पश्याम्येकर्षेस्त्वा हस्ताभ्यामा रभ एकर्षेस्त्वास्येन प्राश्नाम्येकर्षेस्त्वा जठरे सादयामीति । स यथा हुतमिष्टं प्राश्नीयादेवैनं प्राश्नाति ।।१।।
यो वै द्विशरावं निर्वपेत् प्राणापानावेवानु निर्वपेत् ।
एतौ वै प्राणापानौ यन्मातरिश्वा चाग्निश्च । प्राणापानौ चैव लोकं चाव रुन्धे ज्योग् जीवति सर्वमायुरेति न पुरा जरस: प्रमीयते य एवं वेद । स य एवं विद्वान् प्राश्नीयादेते एव देवते मनसा

ध्यायेत् प्राणापानयोस्त्वा चक्षुषा पश्यामि प्राणापानयोस्त्वा
हस्ताभ्यामा रभे प्राणापानयोस्त्वास्येन प्राश्नामि प्राणापानयोस्त्वा
जठरे सादयामीति । स यथा हुतमिष्टं प्राश्नीयादेवैनं प्राश्नाति ।।२।।
यो वै त्रिशरावं निर्वपेत् त्रीण्येव त्रिकद्रुकाण्यनु निर्वपेत् ।
एतानि वै त्रीणि त्रिकद्रुकाणि यदृच: सामानि यजूंषि ब्राह्मणम् ।
ब्रह्म चैव लोकं चाव रुन्धे ब्राह्मणवर्चसी भवति य एवं वेद ।
स य एवं विद्वान् प्राश्नीयादेतामेव देवतां मनसा ध्यायेद्
ब्रह्मणस्त्वा चक्षुषा पश्यामि ब्रह्मणस्त्वा हस्ताभ्यामा रभे
ब्रह्मणस्त्वास्येन प्राश्नामि ब्रह्मणस्त्वा जठरे सादयामीति ।
स यथा हुतमिष्टं प्राश्नीयादेवैनं प्राश्नाति ।।३।।
यो वै चतु:शरावं निर्वपेच्चतस्र एवोर्वीरनु निर्वपेत् ।
एता वै चतस्र उर्वीर्यद् दिश: । दिशश्चैव लोकं चाव रुन्धे
कल्पन्ते अस्मै दिशो दिशां प्रियो भवति य एवं वेद ।
स य एवं विद्वान् प्राश्नीयादेतामेव देवतां मनसा ध्यायेद्दिशां
त्वा चक्षुषा पश्यामि दिशां त्वा हस्ताभ्यामा रभे दिशां
त्वास्येन प्राश्नामि दिशां त्वा जठरे सादयामीति ।
स यथा हुतमिष्टं प्राश्नीयादेवैनं प्राश्नाति ।।४।।
यो वै पञ्चशरावं निर्वपेद् वैश्वानरमेव पञ्चमूर्धानमनु निर्वपेत् ।
एष वै वैश्वानर: पञ्चमूर्धा यद् द्यौश्च पृथिवी च मातरिश्वा
चाग्निश्चादसावातपन् । वैश्वानरं चैव लोकं चाव रुन्धे
वैश्वानर इव तपति वैश्वानर इव दीदाय वैश्वानर इवान्नादो भवति
य एवं वेद । स य एवं विद्वान् प्राश्नीयादेतामेव देवतां मनसा
ध्यायेद् वैश्वानरस्य त्वा चक्षुषा पश्यामि वैश्वानरस्य त्वा
हस्ताभ्यामा रभे वैश्वानरस्य त्वास्येन प्राश्नामि वैश्वानरस्य त्वा

जठरे सादयामीति । स यथा हुतमिष्टं प्रश्नीयादेवैनं प्राश्नाति ।।५।।
यो वै षट्शरावं निर्वपेत् षड्ज्यावन एव देवाननु निर्वपेत् ।
एते वै षड्ज्यावानो देवा यदृतवः । ऋतूंश्चैव लोकं चाव रुन्धे
कल्पन्ते अस्मा ऋतोव न ऋतुष्वावृश्चत ऋतूनां प्रियो भवति
य एवं वेद । स य एवं विद्वान् प्राश्नीयादेता एव देवता मनसा
ध्यायेद् ऋतूनां त्वा चक्षुषा पश्याम्यृतूनां त्वा हस्ताभ्यामा रभ
ऋतूनां त्वास्येन प्राश्नाम्यृतूनां त्वा जठरे सादयामीति ।
स यथा हुतमिष्टं प्राश्नीयादेवैनं प्राश्नाति ।।६।।
यो वै सप्तशरावं निर्वपेत् सप्त ऋषीनेवानु निर्वपेत् ।
एते वै सप्त ऋषयो यत् प्राणापानव्यानाः ।
सप्तर्षींश्चैव लोकं चाव रुन्धे ज्योग् जीवति सर्वमायुरेति
न पुरा जरसः प्रमीयते य एवं वेद । स य एवं विद्वान्
प्राश्नीयादेता एव देवता मनसा ध्यायेत् सप्तर्षीणां त्वा चक्षुषा
पश्यामि सप्तर्षीणां त्वा हस्ताभ्यामा रभे सप्तर्षीणां त्वास्येन
प्राश्नामि सप्तर्षीणां त्वा जठरे सादयामीति ।
स यथा हुतमिष्टं प्राश्नीयादेवैनं प्राश्नाति ।।७।।
यो वा अष्टशरावं निर्वपेद् विराजमेवाष्टापदीमनु निर्वपेद् ।
एषा वै विराडष्टापदी यद् द्यौश्च पृथिवी चापश्चौषधयश्च
वायुश्चान्तरिक्षं च सूर्यश्च चन्द्रमाश्च । विराजं चैव लोकं चाव रुन्धे
विराजत्यस्मिंश्च लोके अमुष्मिंश्च वैराजर्षभ इत्येनमाहुर्य एवं वेद ।
स य एवं विद्वान् प्राश्नीयादेतामेव देवतां मनसा ध्ययेद् विराजस्त्वा
चक्षुषा पश्यामि विराजस्त्वा हस्ताभ्यामा रभे विराजत्त्वास्येन
प्राश्नामि विराजस्त्वा जठरे सादयामीति ।
स यथा हुतमिष्टं प्राश्नीयादेवैनं प्राश्नाति।।८।।

यो वै नवशरावं निर्वपेन्नवयाव्न एव देवाननु निर्वपेत् ।
एते वै नवयावानो देवा यन्मासाः । मासश्चैव लोकं चाव रुन्धे
कल्पन्ते अस्मै मासा मासां प्रियो भवति य एवं वेद ।
स य एवं विद्वान् प्राश्नीयादेता एव देवता मनसा ध्यायेन् मासां
त्वा चक्षुषा पश्यामि मासां त्वा हस्ताभ्यामा रभे मासां त्वास्येन
प्राश्नामि मासां त्वा जठरे सादयामीति ।
स यथा हुतमिष्टं प्राश्नीयादेवैनं प्राश्नाति ।।९।।
यो वै दशशरावं निर्वपेदिडामेव धेनुमनु निर्वपेत् ।
एषा वा इडा धेनुर्यद् यज्ञः पशवः । इडां चैव धेनुं यज्ञं च
लोकं च पशूंश्चाव रुन्धे कल्पन्ते अस्मा इड़ इड़ां प्रियो भवति
य एवं वेद । स य एवं विद्वान् प्राश्नीयादेतामेवदेवतां मनसा
ध्यायेदिड़ायास्त्वा चक्षुषा पश्यामीड़ायास्त्वा हस्ताभ्यामा रभ
इड़ायास्त्वास्येन प्राश्नामीड़ायास्त्वा जठरे सादयामीति ।
स यथा हुतमिष्टं प्राश्नीयादेवैनं प्राश्नाति ।।१०।।
यो वा एकादशशरावं निर्वपेद् रोहितमेवानु निर्वपेत् ।
एष वै रोहितो यदिन्द्रः । इन्द्रं चैव लोकं चाव रुन्धे
इन्द्रियावी प्रिय इन्द्रस्य भवति य एवं वेद ।
स य एवं विद्वान् प्राश्नीयादेतामेव देवता मनसा ध्यायेदिन्द्रस्य
त्वा चक्षुषा पश्यामीन्द्रस्य त्वा हस्ताभ्यामा रभ इन्द्रस्य त्वास्येन
प्राश्नामीन्द्रस्य त्वा जठरे सादयामीति ।
स यथा हुतमिष्टं प्राश्नीयादेवैनं प्राश्नाति ।।११।।
यो वै द्वादशशरावं निर्वपेद् विश्वामेव देवाननु निर्वपेत् ।
एते वै विश्वे देवा यदिदं सर्वम् । विश्वांश्चैव देवाल्लोकं चाव
रुन्धे कल्पन्ते अस्मै विश्वे देवाः प्रियो विश्वेषां देवानां भवति

य एवं वेद । स य एवं विद्वान् प्राश्नीयादेता एव देवता मनसा ध्यायेद् विश्वेषां त्वा देवानां चक्षुषा पश्यामि विश्वेषां त्वा देवानां हस्ताभ्यामा रभे विश्वेषां त्वा देवानांमास्येन प्राश्नामि विश्वेषां त्वा देवानां जठरे सादयामीति ।
स यथा हुतमिष्टं प्राश्नीयादेवैनं प्राश्नाति ।।१२।।

९-२२

इमां मात्रां निर्वप ओदनस्य तस्य पक्ता मुच्यतां किल्बिषेभ्य:।
अभिद्रोहादेनसो दुष्कृताच्च पुनातु मा पवनै: पवित्र:।।१।।
भद्रौ हस्तौ भद्रा जिह्वा भद्रं भवतु मे वच:।
मह्यं पवित्रमोदनं ब्रह्मणा निर्वपामसि हस्ताभ्यां निर्वपामसि।।२।।
यन् मयि गर्भे सति माता चकार दुष्कृतम् ।
अयं मा तस्मादोदन: पवित्र: पात्वंहस: ।।३।
यदर्वाचीनमेकहायनादनृतं किं चोदिम ।
अयं मा तस्मादोदन: पवित्र: पात्वंहस: ।।४।।
यद् दुष्कृतं यच्छमलं यदेनश्चकृमा वयं ।
अयं मा तस्मादोदन: पवित्र: पात्वंहस: ।।५।।
यन् मातरं यत् पितरं यद्वा जामिं जिहिंसिम ।
अयं मा तस्मादोदन: पवित्र: पात्वंहस: ।।६।।
यन् मातृघ्ना यत् पितृघ्ना भ्रूणघ्ना यत् सहासिम ।
अयं मा तस्मादोदन: पवित्र: पात्वंहस: ।।७।।
श्यावदंता कुनखिना स्तेनेन यत् सहासिम ।
अयं मा तस्मादोदन: पवित्र: पात्वंहस: ।।८।।
शिशुन्धानां पूंश्चलानां तक्ष्णां यदन्नमाशिम ।
अयं मा तस्मादोदन: पवित्र: पात्वंहस: ।।९।।

यदपामपजह्मि निमज्य पपिमोदकम् ।
अयं मा तस्मादोदन: पवित्र: पात्वंहस: ।।१०।।

९-२३

यत् क्रुद्धा मन्युतो वयं ब्राह्मणस्य निजग्मिम पदा वा गामुपारिम।
अयं मा तस्मादोदन: पवित्र: पात्वंहस: ।।१।।
यद् ब्रह्मचर्ये यत् स्नातचर्ये अनृतं किं चोदिम ।
अयं मा तस्मादोदन: पवित्र: पात्वंहस: ।।२।।
किलासेन दुश्चर्मणा वण्डेन यत् सहाशिमाधाराभिगतेन वा।
अयं मा तस्मादोदन: पवित्र: पात्वंहस: ।।३।।
यत् क्षेत्रमभितिष्ठाथाश्वं वा यं निरेमिषे ।
अयं मा तस्मादोदन: पवित्र: पात्वंहस: ।।४।।
यदक्षेषु हिरण्ये गोष्वश्वेषु यद्धने अनृतं किं चोदिम ।
अयं मा तस्मादोदन: पवित्र: पात्वंहस: ।।५।।
सख्युर्जायां स्वां दासीं सूतिकां लोहितावतीमशुद्धां यदुपेयिम ।
अयं मा तस्मादोदन: पवित्र: पात्वंहस: ।।६।।
परिवित्तेन परिविविदानेनाभ्यवस्नातेन परिभक्षितेन
दिधिषूपत्या यत् सहाशिम।
अयं मा तस्मादोदन: पवित्र: पात्वंहस: ।।७।।
यत् कुसीदं विभेजिम द्विमेयं धनकाम्या ।
अयं मा तस्मादोदन: पवित्र: पात्वंहस: ।।८।।
यद् द्व्येकं यत् त्र्येकमुपैकमिति यद्ददौ ।
अयं मा तस्मादोदन: पवित्र: पात्वंहस: ।।९।।
यत् त्वरमाणा: शबलमपक्वं मांसमाशिम ।
अयं मा तस्मादोदन: पवित्र: पात्वंहस: ।।१०।।

९-२४

यदन्नमाशिमा वयमनन्नमन्नकाम्योदरस्याभिशाच्या ।
अयं मा तस्मादोदन: पवित्र: पात्वंहस: ।।१।।
यद् विद्वांसो यदविद्वांसो अनृतं किं चोदिम ।
अयं मा तस्मादोदन: पवित्र: पात्वंहस: ।।२।।
यद् देवस्य सवितु: पवित्रं सहस्रधारं विततं हिरण्यम् ।
येनेन्द्रमपुननमार्तमर्त्यास्तेनायं मां सर्वपशुं पुनातु ।।३।।
येनापुनात् सविता रेवतीरपो येनापुनीत वरुण: सवाय ।
येनेमा विश्वा भुवनानि पूतास्तेनायं मां सर्वपशुं पुनातु ।।४।।
अति क्रामामि दुरितं यदेनो जहामि रिप्रं परमे सधस्थे ।
येन यन्ति सुकृतो नापि दुष्कृतस्तमा रुहेम
सुकृतामु लोकम्।।५।।
मा यक्ष्ममिह हासिष्ट मा रिफन्तो वि गातन ।
अमैव पुण्यमस्तु नो अतृनन्वेति किल्बिषम् ।।६।।
इमं पचाम्योदनं पवित्रं पवनाय कम् ।
स मा मुञ्चतु दुष्कृताद् विश्वस्माच्चैनसस्परि ।।७।।

९-२५

सहस्राक्षं शतधारमृषिभि: पवनं कृतम् ।
तेना सहस्रधारेण पवमान: पुनातु मा ।।१।।
येन पूतमन्तरिक्षं यस्मिन् वायुरधि श्रित: ।
तेना सहस्रधारेण पवमान: पुनातु मा ।।२।।
येन पूते द्यावापृथिवी आप: पूता अथो स्व: ।
तेना सहस्रधारेण पवमान: पुनातु मा ।।३।।
येन पूते अहोरात्रे दिश: पूता उत येन प्रदेशा: ।
तेना सहस्रधारेण पवमान: पुनातु मा ।।४।।

येन पूतौ सूर्याचन्द्रमसौ नक्षत्राणि भूतकृत: सह येन पूता:।
तेना सहस्रधारेण पवमान: पुनातु मा ।।५।।
येन पूता वेदिरग्नि: परिधय: सह येन पूता: ।
तेना सहस्रधारेण पवमान: पुनातु मा ।।६।।
येन पूतं बर्हिराज्यमथो हवि: ।
तेना सहस्रधारेण पवमान: पुनातु मा ।।७।।
येन पूतो यज्ञो वषट्कार उताहुति: ।
तेना सहस्रधारेण पवमान: पुनातु मा ।।८।।
येन पूतौ व्रीहियवौ याभ्यां यज्ञो अधिनिर्मित: ।
तेना सहस्रधारेण पवमान: पुनातु मा ।।९।।
येन पूता अश्वा गावो अथो पूता अजावय: ।
तेना सहस्रधारेण पवमान: पुनातु मा ।।१०।।

९-२६

येन पूता ऋच: सामानि यजुर्ब्रह्मणा सह येन पूतम् ।
तेना सहस्रधारेण पवमान: पुनातु मा ।।१।।
येन पूता अथर्वाण आथर्वणा अङ्गिरसो देवता: सह येन पूता:।
तेना सहस्रधारेण पवमान: पुनातु मा ।।२।।
येन पूता ऋतवो येनार्तवा येभ्य: संवत्सरो अधिनिर्मित:।
तेना सहस्रधारेण पवमान: पुनातु मा ।।३।।
येन पूता वनस्पतयो वानस्पत्या ओषधयो
वीरुध: सह येन पूता:।
तेना सहस्रधारेण पवमान: पुनातु मा ।।४।।
येन पूता गन्धर्वाप्सरस: सर्पपुण्यजना: सह येन पूता: ।
तेना सहस्रधारेण पवमान: पुनातु मा ।।५।।

येन पूता नद्यः सिन्धवः समुद्रः सह येन पूतः ।
तेना सहस्रधारेण पवमानः पुनातु मा ।।६।।
येन पूताः पर्वता हिमवन्तो वैश्वानरः परिभूः सह येन पूतः।
तेना सहस्रधारेण पवमानः पुनातु मा ।।७।।
येन पूता विश्वे देवाः परमेष्ठी प्रजापतिः ।
तेना सहस्रधारेण पवमानः पुनातु मा ।।८।।
येन पूत स्तनयित्नुरपां वत्सः प्रजापतिः ।
तेना सहस्रधारेण पवमानः पुनातु मा ।।९।।
येन पूतः प्रजापतिर्ल्लोकान् विश्वं भूतं स्वराजभार ।
तेना सहस्रधारेण पवमानः पुनातु मा ।।१०।।
येन पूतमृतं सत्यं तपो दीक्षा च पूयते ।
तेना सहस्रधारेण पवमानः पुनातु मा ।।११।।
येन पूतमिदं सर्वं यद्भूतं यच्च भाव्यम् ।
तेना सहस्रधारेण पवमानः पुनातु मा ।।१२।।

९-२७

उच्चैर्घोषो दुन्दुभिः सत्वनायं वानस्पत्यः संभृत उस्रियाभिः।
वाचं क्षणुवानो दमयन् सपत्नान् सिंह इव ज्येष्यन्नभि तंस्तनभिः।।१।।
सिंह इवास्तानीद् द्रुवयो विबद्धोऽभिक्रन्दन्नृषभो वाशितामिव ।
वृषा त्वं वध्रयस्ते सपत्ना ऐन्द्रस्ते शुष्मो अभिमातिषाहः ।।२।।
संजयन् पृतना ऊर्ध्वमायुर्गृह्या गृह्णानो बहुधा वि चक्ष्व ।
दैवीं वाचमा हुर गुरस्व वेधाः शत्रूणामुप भरस्व वेदः ।।३।।
वृषेव यूथं सहसो विदानो गव्यन्नभि रुव संधनाजित् ।
शुचा विध्य हृदयं परेषां हित्वा ग्रामान् प्रच्युता यन्तु शत्रवः।।४।।

दुन्दुभेर्वाचं प्रयतां वदन्तीमाशृण्वती नाथिता घोषबुद्धा ।
नारी पुत्रान् धावतु हस्तगृह्यामित्री भीता समरे वधाना ।।५।।
धीभि: कृत: प्र भरस्व वाचमुद्धर्षय सत्वनामायुधानि ।
अमित्रसेनामभिजञ्जभानो द्युमद् वद दुन्दुभे सूनृतावत् ।।६।।
पूर्वो दुन्दुभे वि षहस्व शत्रून् भूम्या: पृष्ठे वद बहु रोचमान: ।
इन्द्रमेदी सत्वन: सं ह्वयस्व मित्रैरमित्रानव जङ्घनीहि ।।७।।
अन्तरेमे नभसी घोषो अस्तु पृथक् ते ध्वनयो यन्तु शीभम् ।
अभि क्रन्द स्तनयोत्पिपानां श्लोककृन् मित्रतूर्याय स्वर्धि ।।८।।
संक्रन्दन: प्रवेदो धृष्णुषेण: प्रवेदकृद् बहुधा ग्रामघोषी ।
श्रेयो वन्वानो वयुनानि विद्वान् कीर्तिं बहुभ्यो वि भज द्विराजे।।९।।
श्रेय:केतो वसुजित् सहीयान् मित्रं दधानस्त्विषितो विपश्चित् ।
अंशूनिव ग्रवाधिषवणे अद्रिर्गव्यं दुन्दुभे अधि नृत्य वेद: ।।१०।।
शत्रूषाण् नीषाड़भिमातिषाहो गवेषण: सहमान उद्भित् ।
वाग्वी मन्त्रं प्र जनयस्व वाजिन् साङ्ग्रामजित्यायेषमुद् वदेह।।११।।
अच्युदच्युत् समदो गमिष्ठो मृधो जेता पृतनाषाडयोध्य: ।
इन्द्रेण क्लृप्तो विदथा निचिक्यद्धृद्द्योतनो द्विषतां याहि शीभम्।।१२।।

९-२८

इमास्तपन्तु त्वौषधीरोषधीनामयं रस: ।
अश्वत्थस्ते ऽयं हृद्यग्निर्भूतो व्योषतु
प्र पतातो ममाध्या ।।१।।
यथा सूत्रं लाक्षारक्तमाज्येनानुषिच्यते ।
एवा ते काम: सर्पत्वन्तरस्थसु मज्ञसु
प्र पतातो ममाध्या ।।२।।

यथा कुष्ठः प्रयस्यति यथा दह्यते अर्चिषा ।
एवा ते दह्यतां मनः प्र पतातो ममाध्या ।।३।।
पुंसः कुष्ठात् प्र क्षरति स्तोक आधिभिराभृतः ।
स ते हृदये वि वर्ततां प्र पतातो ममाध्या ।।४।।
एष ते स्तोको हृदयं दिग्धेवेषुः प्र पद्यताम् ।
अस्त्राखणं यथेष्वा कामो बिध्यतु त्वा मम
प्र पतातो ममाध्या।।५।।
हरित एधि शुष्काक्षः सर्वदा हृदयामयि ।
स्त्रियस्ते अन्या माछाच्छुरथो त्वाशाभि शोचतु
प्र पतातो ममाध्या।।६।।
शोचीमदस्तु ते शयनं शोचिमदुपवेशनम् ।
शोचीमदस्तु ते मनो यथात्र न रमासा अर्वाची न मनास
प्र पतातो ममाध्या।।७।।
न रमासै सङ्गतेषु शयानं त्वाभि शोचतु ।
स्तोकस्त्वोत्तुद उत्तुदात् प्र पतातो ममाध्या ।।८।।
अन्तर्दहति चर्मणो अस्थिमांसेभिराभृतम् ।
सर्वान् यज्ञः प्र याशयादैड़ आधिभिस्तव
प्र पतातो ममाध्या।।९।।
हृदयेऽधि समिध्यतां स्वैर्मांसेभिरेष ते ।
अग्निः कामस्य यो महान् स मह्यं रन्धयन्ति त्वा
प्र पतातो ममाध्या।।१०।।

९-२९

अश्वत्थमग्निमाज्यं दूतान् कृण्वे मनोजवान् ।
अग्निश्चरुमिवार्चिषा कामो विध्यतु त्वा मम
प्र पतातो ममाध्या।।१।।

शयानमग्न आसीनमश्वत्थश्च सवासिनौ ।
चरन्तमुपतिष्ठन्तं ममाधिभिर्वि विध्यतं
प्र पतातो ममाध्या ।।२।।
चरन्तं त्वा तिष्ठन्तमासीनमपि संसदि ।
रेष्मा तृणमिव मथ्नातु दहन् कामरथो मम
प्र पतातो ममाध्या ।।३।।
यथेन्द्रायासुरानरन्धयद् बृहस्पतिः ।
एवा त्वमग्ने अश्वत्थानमून् मह्यमिहानय
प्र पतातो ममाध्या।।४।।
अहं ते मन आ दद ऐडेन सह मेदिना ।
देवा मनुष्या गन्धर्वास्ते मह्यं रन्धयन्तु त्वा
प्र पतातो ममाध्या ।।५।।
यथा अश्वत्थस्य पर्णानि नेलयन्ति कदा चन ।
एवासौ मम कामेन माव स्वाप्सीत् कदा चन
प्र पतातो ममाध्या ।।६।।
कुष्ठं तपन्ति मरुतः स्वाध्यन्दुरआजानं स्वरयन्तो अर्चिषा ।
यथा न स्वपात् कतमच्चनाहरैव गच्छान् ममाध्या ।।७।।

*(इति द्वादशर्चोनामनवमकाणडे चतुर्थो ऽनुवाकः)*

**इत्यथर्ववेद पैप्पलाद संहितायां द्वादशर्चोनामनवमकाण्ड:समाप्त:**

# अथ त्रयोदशर्चोनाम दशमकाण्ड:

## १०-१

हा अम्ब तेजने धेनो लम्बनस्तनि ।
न तद्विदो यदिच्छसि यदु वित्तं न तद् घस: ।।१।।
पुत्रो यस्ते पृश्निबाहुस्तमु त्वं सामनं कृधि ।
अथो दुहितरं नप्त्नीमथो त्वं सामना भव ।।२।।
असामे कुरमे नैगुरस्य स्वस: ।
अराते निर्ऋते अमते स्नुहिते ।।३।।
परेत कस्तुपकं व: पुनर्ददामि ।
यो वो न वेद तं हत तस्यात्तु परि शिश्न्यम् ।।४।।
तस्यात्तु पुत्रान् भ्रातृंश्च तस्य गोष्ठं वितावत ।
यश्च सतो नास्ति वाकी यश्चासावहविर्गृह: ।
दुर्णाम्नीस्तत्र गच्छत तत्र सर्वा: परेतन ।।५।।
परि धामान्यासामाशुर्गाष्ठामिवासरम् ।
अजैषं सर्वानाजीन् वो नश्यतेत: सदान्वा: ।।६।।
अन्तश्चरां कोशेचरामथो गोष्ठावचारिणीम् ।
अथो या: स्वप्ने पश्यामस्ता इतो नाशयामसि ।।७।।
कण्वा या गर्दभीव निभसत् सूकरीव ।
तस्यै प्रति प्र वर्तय तप्तमश्मानमासनि ।।८।।
यो मर्या अभिगच्छात् स्त्रियं कस्तुपस्तोपिनीम् ।
कस्तुपमस्या आच्छिद्याथैनां चातयातै परमां चित्परावतम् ।।९।।
या भद्रा या शिवा योर्जा पयसा सह ।
अग्निष्टा अस्माकं गृहे गार्हपत्यो नि यच्छतु ।।१०।।

इदं वो देवः सवितेदं देवो बृहस्पतिः ।
इदं वो विश्वे देवा अवसानमयुक्षत ।।११।।
परि प्रागात् देवो अग्नीरक्षोहामीवचातनः ।
सेधन् विश्वा अप द्विषो दहन् रक्षांसि विश्वहा ।।१२।।
परिमे गामनेषत पर्यग्निमहृषत ।
देवेष्वक्रत श्रवः क इमां आ दधर्षति ।।१३।।

१०-२

त्वयीन्द्रियं त्वयि वर्चस्त्वं धर्मपतिर्भव ।
त्वमुत्तरो भ्रातृवेभ्यस्तव लक्ष्मीः पयस्वती ।।१।।
तवैतामश्विना हवं तव राष्ट्रं दिवि श्रितम् ।
त्वमायुष्मान् सपत्नहोत्तरो द्विषतो भव ।।२।।
तीक्ष्णशृङ्ग ऋषभः समुद्र इवाक्षितोदकः ।
त्वं सहस्रवीर्यस्तव बाहू गवांपती ।।३।।
भ्रातृव्यश्च सपत्नश्च यस्त्वामित्रो जिघांसति ।
श्रियं त्वं सर्वेषां तेषामादायोग्रो वि धारय ।।४।।
त्वं वशी सत्याकूतः सत्यधर्मा गवेषणः ।
नाष्ट्रास्त्वं सर्वास्तीर्त्वा भ्रातृव्याणां श्रियं वृह ।।५।।
तुभ्यं सं यन्तु बलयस्तुभ्यं शुल्कः प्र वीयताम् ।
तुभ्यं विराट् पयो दुहां त्वां वाञ्छन्तु विशो महीः।।६।
वाञ्छतु त्वा बृहद्राष्ट्रं त्विषिस्ते मुख आहिता ।
त्वं देवानां भव प्रियस्त्वयि गावो अधि श्रिताः।।७।।
त्वयीन्द्रियं त्वयि वर्चस्त्वयि यज्ञो अधि श्रितः ।
तवा यन्तु हवं देवास्त्वं प्रियो बृहस्पतेः ।।८।।

अग्नीषोमा पवमानो विराड् देवी पयस्वती ।
अतन्द्रं सर्वे रक्षन्तु राष्ट्रं तेनपवाद्यम् ।।९।।
अग्निरिव तृणं प्र दहौघ: कूलमिवा रुज ।
श्रियं भ्रातृव्याणामा दत्स्वाण्डीकमिवाधि पुष्करात् ।।१०।।

१०-३

अश्व इव रथमा दत्स्व सिंह इव पुरुषं हर ।
हस्तीव नड्वलान् भङ्धि भ्रातृव्याणां श्रियं वृह ।।१।।
उत्ते कृणोतु कश्यपो ब्रह्म देवैरभिष्टुतम् ।
आप्रीतमविराधुकम् ।।२।।
एतं खदिरमा हराथो तेजनमा हर ।
उतैतं पर्णमा हरा हरानडुहो बलम् ।।३।।
इध्मां देवै: समाभृतांस्तांस्ते प्रादाद् बृहस्पति: ।
ताना धेहि समाहितेऽग्नौ सूर्याभिचक्षणे ।।४।।
तेभिष्ट्वमुत्तरो भव भ्रातृव्याणां श्रियं वृह ।
अथो एषां पयो हर ।।५।।
आदित्या रुद्रा वसव ऋषयो भूतकृतश्च ये ।
श्रियं च क्षत्रमोजश्च तुभ्यं देवा असाविषु: ।।६।।
वसुरसीन्द्रनामायुष्मान्छतशारद:।
स इन्द्र इव देवेषु त्विषीमान् विश आ वद ।।७।।

१०-४

इदं राष्ट्रं प्रथतां गोभिरश्वैरिदं राष्ट्रमन्नेनेरया रसेन ।
अस्मै षड्डुर्वीरुप सं नमन्तु सप्तहोत्रा हत शत्रून् सचित्ता:।।१।।
इमे राजान इषुभिर्घ्नन्तु शत्रूनिमे राजान: समित्यान्यान् वधेयु: ।
इमे राजान: पृतना: सहन्तामहं ब्रह्मा विमृधो हन्मि सर्वा:।।२।।

इदं राष्ट्रं ऋतुमद्वीरवज्जिष्णूग्रमिदं राष्ट्रं गर्द्नुमच्चित्रघोषम् ।
अस्मै राष्ट्राय बलिमन्ये हरन्त्वहं देवेभ्यो हविषा विधेयम् ।।३।।
यदि युद्धं यद्युतितं वो अस्ति देवैनसाद् यदि वा पित्र्येण ।
येनर्त्तीया धेनवो अस्तु तस्मा अहं देवेभ्यो हविषा जुहोमि ।।४।।
यद्व: क्रूरं मनसो यच्च वाचो देवैनसाद् यदि वा पित्र्येण ।
आपो इव दु:स्वप्न्यमप तत् स्वपध्वमथानन्दिन: सुमनस: समेत।।५।।
अपामिव वेग: प्र शृणीत शत्रून् दिशोदिशो रभमाणा: समेत ।
एकव्रता वि धनं भजध्वं पुरोहितेन वो राष्ट्रं प्रथयन्तु देवा:।।६।।
सम्यग्वो राष्ट्रं सह वो मनांसि समीचीना: पशवो विश्वरुपा: ।
समीचीनानां वो अहमस्मि ब्रह्मा सम्यञ्चो देवा हवमा यन्तु म इमम्।।७।।
यथाप: समुद्राय समीचीर्वहथ श्रियम् ।
एवा राष्ट्राय मे देवा: सम्यञ्चो वहत श्रियम् ।।८।।
संसृष्टं वो राष्ट्रं पशुभिर्गोभिरश्वै: संसृष्टमन्नेनेरया रसेन ।
मया ब्रह्मणा प्रथमानाश्चो वशीयांस: सदमुग्रा भवाथ ।।९।।
बहुर्युवा प्रमृणो धृष्णुरस्तु बहु: कुमार: प्रतिरूप: पितृणाम् ।
सत्यं वदन्त: समितिं चरन्तो मित्रं गृह्णाना जनसो यन्तु सख्यम्।।१०।।
इह क्षत्रं द्युम्नमुत राष्ट्रं समैत्विहेन्द्रियं पशुभि: संविदानम् ।
अवधुन्वाना अप्रियान् यांश्च द्विष्म इदं राष्ट्रं प्रथतां सर्वदैव ।।११।।
इदं राष्ट्रमिषुमद्वीरवज्जिष्णूग्रमिदं राष्ट्रं पशुमद् ब्रह्मवृद्धम् ।
इदं राष्ट्रं हतशत्रु जिष्णु ।।१२।।
सपत्नसाहं प्रमृणमिदं राष्ट्रं दृढमुग्रम् ।
साढामित्रमभिमातिषाहं सर्वा जिगाय पृतना अभिष्टि ।।१३।।

१०-५

औदुम्बरेण मणिना पुष्टिकामाय वेधसा ।
पशूनां सर्वेषां स्फातिं गोष्ठे मे सविता करत् ।।१।।

यो नोऽग्निर्गार्हपत्य: पशूनामधिपा असत् ।
औदुम्बरो वृषा मणि: सं मा सृजतु पुष्ट्या ।।२।।
करीषिणीं फलवतीं स्वधामिरां च नो गृहे ।
औदुम्बरस्य तेजसा धाता पुष्टिं दधातु मे ।।३।।
यद् द्विपाच्च चतुष्पाच्च यान्यन्नानि ये रसा: ।
गृह्णे ऽहं तेषां भूमानं बिभ्रदौदुम्बरं मणिम् ।।४।।
पुष्टिं पशूनां परि जग्रभाहं चतुष्पदां द्विपदां यच्च धान्यम् ।
पय: पशूनां रसमोषधीनां बृहस्पति: सविता मे नियच्छात् ।।५।।
अहं पशूनामधिपा असानि मयि पुष्टं पुष्टपतिर्दधातु ।
मह्यमौदुम्बरो मणिर्द्रविणानि नि यच्छतु ।।६।।
उप मौदुम्बरो मणि: प्रजया च धनेन च ।
इन्द्रेण जिन्वतो मणिरा मागन् सह वर्चसा ।।७।।
देवो मणि: सपत्नहा धनसा धनसातये ।
पशोरन्नस्य भूमानं गवां स्फातिं नि यच्छतु ।।८।।
यथाग्रे त्वं वनस्पते पुष्ट्या सह जज्ञिषे ।
एवा धनस्य मे स्फातिमा दधातु सरस्वती ।।९।।
आ मे धनं सरस्वती पयस्फातिं च धान्यम् ।
सिनीवाल्युता वहादयं चौदुम्बरो मणि: ।।१०।।
त्वं मणीनामधिपा वृषासि त्वयि पुष्टं पुष्टपतिर्जजान ।
त्वयीमे वाजा द्रविणानि सर्वौदुम्बर स त्वमस्मत्
सहस्वारादरातिमम‍तिं क्षुधं च ।।११।।
ग्रामणीरसि ग्रामनीथ्यायां अभिषिक्तो अभि मा सिञ्च वर्चसा ।
तेजो ऽसि तेज मयि धारयाधि रयिरसि
रयिं मयि धेहि ।।१२।।

पुष्टिरसि पुष्ट्या मा समङ्ग्धि गृहमेधी गृहपतिं मा कृणु ।
औदुम्बर स त्वमस्मासु रयिं सर्ववीरं नि यच्छ
रायस्पोषाय प्रति मुञ्चे अहं त्वाम् ।।१३।।
अयमौदुम्बरो मणिर्वीरो वीराय बध्यते ।
स नः सनीं मधुमतीं कृणोतु
रयिं च नः सर्ववीरं नियच्छात् ।।१४।।

*(इति त्रयोदशर्चोनामदशमकाण्डे प्रथमो ऽनुवाकः)*

१०-६

भगस्य राज्ञः सुमतिं गमेम यं हवन्ते बहुधा मानुषासः ।
कर्म कृण्वानो भगमा वृणीते स नो जनेषु सुभगां कृणोतु।।१।।
भगं पुरस्तात् प्रतिबुध्यमानाः पश्येम देवीमुषसं विभातीम् ।
प्रतीची शुभ्रा द्रविणेन साकं भगं वहन्त्यदितिर्न ऐतु।।२।।
भगो नो अद्य स्विते दधातु देवानां पन्थामभि नो नयेह ।
अर्वाची भद्रा सुमतिर्न ऐत्वधा भगेन समिधो नो अस्तु ।।३।।
भगेन वाचमिषितां वदानि सरस्वतीं मधुमतिं सुवर्चाः ।
भगेन दत्तमुप मेदमागन् यथा वर्चस्वान् समितिमावदानि।।४।।
भगो मा गोष्ववतु भगो मावतु धान्ये ।
अक्षेषु स्त्रीषु मा भगो भगो मावतु वर्चषा ।।५।
भगो मा सायमवतु भगो मावतु रात्र्या ।
भगो निपद्यमानेषु प्रातर्मा भग आ गमत् ।।६।।
भगो मा प्रातरवतु भगो माध्यन्दिनं परि ।
अपराह्णे वयं भगं वास इव परि दध्महे ।।७।।
भगं देवेभ्यस्परि भगं मनुषेभ्य ।
दिवस्पृथिव्या अहमन्तरिक्षाद् भगं वृणे ।
सो अग्ने रमता मयि स मा प्रावतु वर्चसा ।।८।।

भगं वृणाना वध्वं वहन्ति वनिं प्रयन्तो भगमिद्धवन्ते ।
भगेन दत्तमुप मेदमागन् विश्वं सुभूतं द्रविणानि भद्रा ।।९।।
भगेन देवा: समगन्महि य इमा विश्वा भुवनाभिवस्ते ।
प्रयच्छन्नेति बहुधा वसूनि स नो दधातु यतमद्वसिष्ठम् ।।१०।।
वातो भगो वरुणो वायुरग्नि: क्षेत्रस्य पत्नी सुहवा नो अस्तु ।
हिरण्याक्षो अतिपश्यो नृचक्षा: सर्वै: साकं सचमानो न एहि।।११।।
उदेहि देव सूर्य सह सौभाग्येन ।
सहर्षभस्य वाजेन सहावर्तकरणेन ।।१२।।
हिरण्ययेन चक्रेण भगस्यापिहितो गृह: ।
तं व्युब्जामि ब्रह्मणा तस्य मे दत्तमश्विना दत्तं मे पुष्करस्रजा ।।१३।।

१०-७

गोभिष्ट्वा पात्वृषभो वृषा त्वा पातु वाजिभि: ।
वायुष्ट्वा ब्रह्मणा पात्विन्द्रस्त्वा पात्विन्द्रियै: ।।१।।
सोमस्त्वा पात्वौषधीभिर्नक्षत्रै: पातु सूर्य: ।
माद्भिष्ट्वा चन्द्रो वृत्रहा वात: प्राणेन रक्षतु ।।२।।
तिस्रो दिवस्तिस्र: पृथिवीस्त्रीण्यन्तरिक्षाणि चतुर: समुद्रान् ।
त्रिवृतं स्तोमं त्रिवृत आप आहुस्तास्त्वा रक्षन्तु
त्रिवृता त्रिवृद्भि: ।।३।।
त्रीन्नाकांस्त्रीन् समुद्रांस्त्रीन् ब्रध्नांस्त्रीन् वैष्टपान् ।
त्रीन्मातरिश्वनस्त्रीन् सूर्यान् गोप्तृन् कल्पयामि ते ।।४।।
घृतेन त्वा समुक्षाम्यग्न आज्येन वर्धयन् ।
अग्नेश्चन्द्रस्य सूर्यस्य मा प्राणं मायिनो दभन् ।।५।।
मा व: प्राणं मा वोऽपानं मा हरो मायिनो दभन् ।
भ्राजन्तो विश्ववेदसो देवा दैव्येन मावत ।।६।।

प्राणेनाग्निं सं दधति वात: प्राणेन संहित: ।
प्राणेन विश्वतोमुखं सुर्यं देवा अजनयन् ।।७।।
आयुषायुष्कृतां जीवायुष्मां जीव मा मृथा: ।
प्राणेनात्मन्वतां जीव मा मृत्योरुप गा वशम् ।।८।।
देवानां निहितं निधिं यमिन्द्रान्वविन्दन् पथिभिर्देवयानै: ।
आपो हिरण्यं जुगुपुस्त्रिवृद्भिस्तास्त्वा रक्षन्तु त्रिवृता त्रिवृद्भि: ।।९।।
त्रयस्त्रिंशद् देवतास्त्रीणि च वीर्याणि प्रियायमाणा जुगुपुरप्स्वन्त: ।
अस्मिंश्चन्द्रे अधि यद्धिरण्यं तेनायं कृणवद् वीर्याणि।।१०।।

१०-८

ये देवा दिव्येकादश स्थ ते देवासो हविरिदं जुषध्वम् ।।१।।
ये देवा अन्तरिक्ष एकादश स्थ ते देवासो हविरिदं जुषध्वम्।।२।।
ये देवा पृथिव्यामेकादश स्थ ते देवासो हविरिदं जुषध्वम् ।।३।।
असपत्नं पुरस्तात् पश्चान्नोऽभयं कृतम् ।
सविता मा दक्षिणात उत्तरान्मा शचीपति: ।।४।।
दिवो मादित्या रक्षन्तु भूम्या रक्षन्त्वग्नय: ।
इन्द्राग्नी रक्षतां मा पुरस्तादश्विनावभित: शर्म यच्छताम् ।
तिरश्चीनघ्न्या रक्षतु जातवेदा भूतकृतो मे सर्वत: सन्तु वर्म ।।५।।

१०-९

येऽप्स्वन्तरग्नय: प्रविष्टा म्रोको मनोहा खनो निर्दाह
आत्मदूषिस्तनदूषि: ।
इदं तानति सृजामि निरेनो निरनृतं सृजामि ।।१।।
अभूत्यासत्वाय निर्दु:षप्न्यं सृजामि ।
वसिष्ठारुन्धती मा पातां प्रजापते: प्रस्तरो बृहस्पते: केशा: ।।२।।
अदब्धं चक्षु: सुश्रुतौ कर्णावक्षितौ मे प्राणापानौ ।
हृदया जरसं मा मा हासीर्मध्य मा रिषम् ।।३।।

आपो मा शुन्धन्तु दुष्कृतात् दुरिता यानि चकृम ।
अयाम शुद्धा उदितस्तनूभि: ।।४।।
वैश्वानरो रश्मिभिर्न: पुनातु वात: प्राणेनेषिरो नमोभि: ।
द्यावापृथिवी पयसा पयस्वती ऋतावरी यज्ञिये मा पुनीताम् ।।५।।
पुनन्तु माग्नयो गार्हपत्या: पुनन्तु मा धृष्णिया देवहूता: ।
पुनन्तु मा शक्वरी: सोमपृष्ठा: पवमानासो अज्रिण: ।।६।।
य: पोता स पुनातु मा बृहद्भिर्देव सवित: ।
वर्षिष्ठैर्द्यामिवोपरि ।।७।।
ब्रह्मसवै: पुनातु मा राजसवै: पुनातु मा ।
शतं पवित्रा वितता तिरश्चा तेभिर्मा देव: सविता पुनातु ।।८।।
शतं च मा पवितार: पुनन्तु सहस्रं च प्रस्रवणेष्वाप: ।
आप इव पूतोऽस्यग्निरिव सुवर्चा: सूर्य इव सुचक्षा: ।।९।।
उरूणसावसुतृपा उदुम्बलौ यमस्य दूतौ चरतो जनाङ् अनु ।
तावस्मभ्यं दृशये सूर्याय पुनर्दातामसुमद्येह भद्रम् ।।१०।।

१०-१०

अगन्म देवा: स्व: स्वरगन्मागन्म ज्योतिर्ज्योतिरगन्म ।
महेन्द्रोसि परमेष्ठी सुमित्र विश्वतोमुख
मा ते युयोम संदृश: ।।१।।
उद्यन्नद्य चित्रमह: सपत्नान् मेव जहि ।
दिवैनान् रश्मिभिर्जहि रात्र्यैनांस्तमसा
वधीस्ते यन्त्वधमं तम: ।।२।।
सूर्यस्यावृतमन्वावर्ते दक्षिणामन्वावृतम् ।
अग्नेस्तेजसा तेजस्वी भूयासमिन्द्रस्येन्द्रियेणेन्द्रियावान् भूयासम् ।।३।।

इदमहमग्नेस्तेजसेन्द्रस्येन्द्रियेण सोमस्य द्युम्नेन विश्वेषां देवानां क्रतूनाम् ।
अमुष्यामुष्यायणस्यामुष्याः पुत्रस्य
वर्चस्तेज इन्द्रियं प्राणमायुर्नि वेष्टयामि ।।४।।
इदमहमग्नेस्तेजसेन्द्रस्येन्द्रियेण सोमस्य द्युम्नेन विश्वेषां देवानां क्रतूनाम् ।
अमुष्यामुष्यायणस्यामुष्याः पुत्रस्य
वर्चस्तेज इन्द्रियं प्राणमायुर्नि यच्छेत् ।।५।।
इदमहमग्नेस्तेजसेन्द्रस्येन्द्रियेण सोमस्य द्युम्नेन
विश्वेषां देवानां क्रतूनाम् ।
अमुष्यामुष्यायणस्यामुष्याः पुत्रस्य
वर्चस्तेज इन्द्रियं प्राणमायुरादाय ।।६।।
अभूत्या एनं पाशे सित्वा दुःष्वप्न्येन संसृज्य
मृत्योर्व्यात्त आसन्नपि दधामि।।७।।

१०-११

यो नः स्वो यो अरणो भ्रातृव्यश्च जिघांसति ।
इन्द्रश्च तस्याग्निश्च मर्म स्कन्धेषु विन्दताम् ।।१।।
यो मा शयानं जाग्रतं यश्च सुप्तं जिघांसति ।
इन्द्रश्च तस्याग्निश्च बाहू मर्मणि वृश्चताम् ।।२।।
यो मा चरन्तं तिष्ठन्तमासीनं च जिघांसति ।
इन्द्रश्च तस्मिन्नग्निश्च दुरितं प्रति मुञ्चताम् ।।३।।
यो मा चक्षुषा मनसा यश्च वाचा जिघांसति ।
इन्द्रश्च तस्मा अग्निश्चैनांसि वहतामितः ।।४।।
यः पिशाचो यातुधानः क्रव्याद् यो मा जिघांसति ।
इन्द्रश्च तस्याग्निश्च मूर्धानं प्रति विध्यताम् ।।५।।
यो मा ब्रह्मणा तपसा यश्च यज्ञैर्जिघांसति ।
इन्द्रश्च तस्याग्निश्च हृदयेऽधि नि विध्यताम् ।।६।।

यो मे ब्रह्म यो मे तपो बलं श्रेष्ठं जिघांसति ।
इन्द्रश्च तस्मा अग्निश्च क्रुद्धौ दिग्धाभिरस्यताम् ।।७।।
यो मे अन्नं यो मे रसं वाचं श्रेष्ठां जिघांसति ।
इन्द्रश्च तस्मा अग्निश्चाच्छम्बट्कारमस्यताम् ।।८।।
यो मे तन्तुं यो मे प्रजां चक्षु: श्रोत्रं जिघांसति ।
इन्द्रश्च तस्मा अग्निश्च हेतिं देवेषु विन्दताम् ।।९।।
यो मे गोभ्य इरस्यत्यश्वेभ्य: पुरुषेभ्य: ।
इन्द्रश्च तस्मा अग्निश्च ज्यानिं देवेषु विन्दताम् ।।१०।।

१०-१२

यो मे भूतिमनामयद्वित्तमायुर्जिघांसति ।
इन्द्रश्च तस्मा अग्निश्च दिवो अश्मानमस्यताम् ।।१।।
यो मे वेश्म यो मे सभां श्रियं श्रेष्ठां जिघांसति ।
इन्द्रश्च तस्याग्निश्च कृत्यां वि तनुतां गृहे ।।२।।
यो मे मृत्युमसमृद्धिमह्ना रात्र्या चेच्छति ।
इन्द्रश्च तस्याग्निश्चार्चिषा दहतां स्वम् ।।३।।
यो मे प्राणं यो मे ऽपानं व्यानं श्रेष्ठं जिघांसति ।
इन्द्रश्च तस्याग्निश्च प्राणं प्राणहनौ हताम् ।।४।।
यो मा देवजनै: सर्पैर्विद्युता ब्रह्मणाभ्यमात् ।
अगस्त्येन मेदिनेन्द्रश्चाग्निश्च तं हताम् ।।५।।
तं सत्यौजा: प्र दहत्वग्निर्वैश्वानरो वृषा ।
यो मा दुरस्यन्नीक्षातै यश्च दिप्सति विद्रुल: ।।६।।
यो मा दिप्साददिप्सन्तं यश्च दिप्सति दिप्स तम् ।
वैश्वानरस्य दंष्ट्रयोरग्नेरपि दधामि तम् ।।७।।
अभि तं द्यावापृथिवी सं तपतां तप्ते धर्मे न्युच्यताम् ।
निर्ऋत्या वध्यतां पाशे यो न: पापं चिकित्सति ।।८।।

प्रत्यग्वधेन प्रच्युतान् भ्रातृव्यान् घोरचक्षस: ।
इन्द्राग्नी एनान् वृश्चतां मैषामुच्छेषि कश्चन ।।९।।
प्रत्यग्वध प्रत्यग् जहि भ्रातृव्यान् द्विषतो मम ।
अपानान् प्राणां संछिद्य द्विषतस्पातयाधरान् ।।१०।।
अग्ने ये मा जिघांसन्त्यग्ने ये च द्विषन्ति मा ।
अग्ने ये मपतप्यन्ते तेषां प्रियतमं जहि ।।११।।
एतं द्विषन्तमवधिषमन्धेन तमसावृतम् ।
एतं मृत्यो ऽभि पद्यस्व मा ते मोचि महोदर: ।।१२।।

१०-१३

द्यावापृथिवी सं नह्येथां मम राष्ट्राय जयन्ती
अमित्रेभ्यो हेतिमस्यन्ती ।।१।।
वातापवमानौ सं नह्येथां मम राष्ट्राय
जयन्तावमित्रेभ्यो हेतिमस्यन्तौ ।।२।।
इन्द्राग्नी सं नह्येथां मम राष्ट्राय
जयन्तावमित्रेभ्यो हेतिमस्यन्तौ ।।३।।
मित्रावरुणा सं नह्येथां मम राष्ट्राय
जयन्तावमित्रेभ्यो हेतिमस्यन्तौ ।।४।।
भवाशर्वौ सं नह्येथां मम राष्ट्राय
जयन्तावमित्रेभ्यो हेतिमस्यन्तौ ।।५।।
अश्विना सं नह्येथां मम राष्ट्राय
जयन्तावमित्रेभ्यो हेतिमस्यन्तौ ।।६।।
मरुत: सं नह्यध्वं मम राष्ट्राय
जयन्तो ऽमित्रेभ्यो हेतिमस्यन्त: ।।७।।
पितर: सं नह्यध्वं मम राष्ट्राय
जयन्तो ऽमित्रेभ्यो हेतिमस्यन्त: ।।८।।

सूर्याचन्द्रमसौ सं नह्येथां मम राष्ट्राय
जयन्तावमित्रेभ्यो हेतिमस्यन्तौ ।।९।।
अहोरात्रे सं नह्येथां मम राष्ट्राय जयन्ती
अमित्रेभ्यो हेतिमस्यन्ती ।।१०।।

१०-१४

गन्धर्वाप्सरस: सं नह्यध्वं मम राष्ट्राय
जयन्तो ऽमित्रेभ्यो हेतिमस्यन्त: ।।१।।
सर्पपुण्यजना: सं नह्यध्वं मम राष्ट्राय
जयन्तो ऽमित्रेभ्यो हेतिमस्यन्त: ।।२।।
वनस्पतय: सं नह्यध्वं मम राष्ट्राय
जयन्तो ऽमित्रेभ्यो हेतिमस्यन्त: ।।३।।
वानस्पत्या: सं नह्यध्वं मम राष्ट्राय
जयन्तो ऽमित्रेभ्यो हेतिमस्यन्त: ।।४।।
ओषधय: सं नह्यध्वं मम राष्ट्राय
जयन्त्यो ऽमित्रेभ्यो हेतिमस्यन्त: ।।५।।
वीरुध: सं नह्यध्वं मम राष्ट्राय
जयन्त्यो ऽमित्रेभ्यो हेतिमस्यन्त्य: ।।६।।
बृहस्पते सं नह्यस्व मम राष्ट्राय
जयन्नमित्रेभ्यो हेतिमस्यन् ।।७।।
प्रजापते सं नह्यस्व मम राष्ट्राय
जयन्नमित्रेभ्यो हेतिमस्यन् ।।८।।
परमेष्ठिन् सं नह्यस्व मम राष्ट्राय
जयन्नमित्रेभ्यो हेतिमस्यन् ।।९।।
उदारा उदीर्ध्वं विश्वानि भूतानि सं नह्यध्वं
मम राष्ट्राय जयन्त्यमित्रेभ्यो हेतिमस्यन्ति ।।१०।।

१०-१५

अग्नी रक्षिता स इमां सेनां रक्षतु ।
अनुष्ठातरनु तिष्ठ सर्वे वीरा भवन्तु मे ।।१।।
इन्द्रो रक्षिता स इमां सेनां रक्षतु ।
अनुष्ठातरनु तिष्ठ सर्वे वीरा भवन्तु मे ।।२।।
सोमो रक्षिता स इमां सेनां रक्षतु ।
अनुष्ठातरनु तिष्ठ सर्वे वीरा भवन्तु मे ।।३।।
वरुणो रक्षिता स इमां सेनां रक्षतु ।
अनुष्ठातरनु तिष्ठ सर्वे वीरा भवन्तु मे ।।४।।
वायू रक्षिता स इमां सेनां रक्षतु ।
अनुष्ठातरनु तिष्ठ सर्वे वीरा भवन्तु मे ।।५।।
त्वष्टा रक्षिता स इमां सेनां रक्षतु ।
अनुष्ठातरनु तिष्ठ सर्वे वीरा भवन्तु मे ।।६।।
धाता रक्षिता स इमां सेनां रक्षतु ।
अनुष्ठातरनु तिष्ठ सर्वे वीरा भवन्तु मे ।।७।।
सविता रक्षिता स इमां सेनां रक्षतु ।
अनुष्ठातरनु तिष्ठ सर्वे वीरा भवन्तु मे ।।८।।
सूर्यो रक्षिता स इमां सेनां रक्षतु ।
अनुष्ठातरनु तिष्ठ सर्वे वीरा भवन्तु मे ।।९।।
चन्द्रमा रक्षिता स इमां सेनां रक्षतु ।
अनुष्ठातरनु तिष्ठ सर्वे वीरा भवन्तु मे ।।१०।।

१०-१६

अहा रक्षितृ तदिमां सेनां रक्षतु ।
अनुष्ठातरनु तिष्ठ सर्वे वीरा भवन्तु मे ।।१।।

रात्री रक्षित्री सेमां सेनां रक्षतु ।
अनुष्ठात्र्यनु तिष्ठ सर्वे वीरा भवन्तु मे ।।२।।
इन्द्राणी रक्षित्री सेमां सेनां रक्षतु ।
अनुष्ठातरनु तिष्ठ सर्वे वीरा भवन्तु मे ।।३।।
वरुणानी रक्षित्री सेमां सेनां रक्षतु ।
अनुष्ठातरनु तिष्ठ सर्वे वीरा भवन्तु मे ।।४।।
सिनीवाली रक्षित्री सेमां सेनां रक्षतु ।
अनुष्ठात्र्यनु तिष्ठ सर्वे वीरा भवन्तु मे ।।५।।
समुद्र रक्षिता स इमां सेनां रक्षतु ।
अनुष्ठातरनु तिष्ठ सर्वे वीरा भवन्तु मे ।।६।।
पर्यन्यो रक्षिता स इमां सेनां रक्षतु ।
अनुष्ठातरनु तिष्ठ सर्वे वीरा भवन्तु मे ।।७।।
बृहस्पती रक्षिता स इमां सेनां रक्षतु ।
अनुष्ठातरनु तिष्ठ सर्वे वीरा भवन्तु मे ।।८।।
प्रजापती रक्षिता स इमां सेनां रक्षतु ।
अनुष्ठातरनु तिष्ठ सर्वे वीरा भवन्तु मे ।।९।।
परमेष्ठी रक्षिता स इमां सेनां रक्षतु ।
अनुष्ठातरनु तिष्ठ सर्वे वीरा भवन्तु मे ।।१०।।
विश्वे देवा रक्षितारस्त इमां सेनां रक्षन्तु ।
अनुष्ठातारो अनु तिष्ठत सर्वे वीरा भवन्तु मे।।११।।

*(इति त्रयोदशर्चोनामदशमकाण्डे तृतीयो ऽनुवाक:)*

**इत्यथर्ववेद पैप्पलाद संहितायां त्रयोदशर्चोनामदशमकाण्ड: समाप्त:**

# अथ चतुर्दशर्चोनाम एकादशकाण्ड:

११-१

वृषा ते ऽहं वृषण्यन्त्यै गर्भं दधामि योन्याम् ।
यदि देवपरिष्ठिता प्रजां स्तोकं न विन्दसे ।।१।।
धाता ते तं सिनीवाली वरुणानी प्र यच्छतु ।
पुमांसं पुत्रमिन्द्राणी शतदायं दधातु ते ।।२।।
संवृतस्ते वक्षणासु गर्भः पुंसा पुमान् कृतः ।
सर्वाङ्गस्तन्वोर्जायतामग्निरिवारण्यरधि ।।३।।
धत्स्व वीरं कर्मण्यं प्रस्वं त्वावध्रिमवशां कृणोमि ।
आत्मनस्ते लोहिताद्गर्भः सं वर्ततां वृषा ।।४।।
त्वष्टां पिंशतु ते प्रजां धाता तोकं दधातु ते ।
राका सीव्यतु सूच्या भूतस्येशाना भुवनस्य देवी ।।५।।
सिनीवालीमनुमतिं राकां गुङ्गुं सरस्वतीम् ।
देवानां पत्नीर्या देवीरिन्द्राणीमवसे हुवे ।।६।।
अभिन्नाण्डा वृद्धगर्भारिष्टा वीरसूरियम् ।
वि जायतां प्र जायतां बह्वी भवतु पुत्रिणी ।।७।।
परि सृज गर्भं धेहि माशाः प्र च्योष्ट लोहितम् ।
अनूनः पूर्णो जायतामश्रामोरन्वो अपिशाचधीतः ।।८।।
त्वं दधासि द्विपदे चतुष्पदे गर्भं प्रजामेजते विश्वरूपाम् ।
कनिक्रदद् वृषभो वीडुशेपाः प्रजापते तन्वां धेहि गर्भम् ।।९।।
अभिक्रन्दं स्तनयन् धेहि गर्भं विद्योतमानः पवमानो वीरुद्भिः ।
पर्यन्येमां पृथिवी रेतसावतापां रसैरोषधीनां पशूनाम् ।।१०।।

आ ते नयामि वृषणं य: प्रजानां प्रजापति: ।
स ते दधात्वृत्त्वियं गर्भं योन्यां विजां प्रजाम् ।।११।।
ये वृषाणो गर्भकृत ऋत्वियानां समेनस: ।
तांस्ते ह्वयामि तदु ते समृध्यताम् ।।१२।।
अग्नेष्टे त्वष्टुर्वरुणादिन्द्रात् सोमाद् बृहस्पते: ।
पुत्रं ते पुत्रकामायै देवेभ्यो निर्ममे प्रजाम् ।।१३।।
अङ्गादङ्गात्सं स्रवतु तद् योनौ प्रति तिष्ठतु ।
प्रजा ते वक्षणाशया तत्ते बीजं वि रोहतु ।।१४।।

११-२

अत्ससो यमनंससोऽभूतिर्यक्ष्ममजीजनत् ।
इमं सहस्रभागिन्द्रो विशरं नाशयाति ते ।।१।।
य: कार्यो यश्च कृत: स्वयंजा उत हार्य: ।
देवा इन्द्रज्येष्ठा विशरं नासयन्तु ते ।।२।।
विशरस्य विजृम्भस्येषुर्माता धनुष्पिता ।
अदित्या: पुत्रा आदित्या विशरं नाशयन्तु ते ।।३।।
धन्वनो ज्याया इष्वा अपस्कम्भस्य बाह्वो: ।
अपाष्ठाच्छृङ्गात् कुर्मलाद्विशरं नाशयामि ते ।।४।।
अलवती रुरुशीर्ष्ण्यथो यस्यायो मुखम् ।
देव्यै पर्जन्यरेतस इषवे कृणुता नम: ।।५।।
यामत्रयो अङ्गिरसो गोतमा वीरुधं विदु: ।
तया भरद्वाज: कण्वो विशरं नाशयाति ते ।।६।।
यस्त्वा स्त्रैणादपसरो य: पुंसो अध्यारुहत् ।
आक्लान्तं संक्लान्तं स्नाव तदु ते कल्पयामसि ।।७।।

वात इवाभ्रं च्यावयामि यक्ष्मं ते तन्वस्परि ।
वाचा यच्चक्रुस्ते गुरु तदृचा लघु कृण्मसि ।
तेनाहमृतोद्येन विशरं नाशयामि ते ।।८।।
यथा न सत्यं पुरुष: सदा वदितुमर्हति ।
विष्कन्धं त्वदपशरं विशरं पृष्ट्यामयम् ।
जम्भं हनुग्राभं शङ्कुं तानजेना अजामसि ।।९।।
शुनमिद्व ओषधयो वि दधे भेषजाय कम् ।
धनायुव: सनायुव: पुरुषं पारयिष्णव: ।।१०।।
आत्मत्राणि देवजुता वीरुधायुष्या कृता ।
तयाहमिन्द्रदत्तया विशरं नाशयामि ते ।।११।।
अलस्य व्यञ्जनस्य वेष्टनस्योत पर्णधे ।
ग्रन्थेज्याया इष्वा विशरं नाशयामि ते ।।१२।।
साकं विष्कन्ध प्र पत चाषेण किकिदीव्या ।
साकं वातस्य ध्राज्या सह नश्य निहाकया ।।१३।।

११-३

जङ्गिडो ऽसि जङ्गिडो रक्षितासि जङ्गिड: ।
द्विपाच्चतुष्पादस्माकं सर्वं रक्षतु जङ्गिड: ।।१।।
या गृत्स्यस्त्रिपञ्चाशी: शतं कृत्याकृतश्च ये ।
सर्वान् विनक्ततेजसोऽरसान् जङ्गिडस्करत् ।।२।।
अरसं कृत्रिमं नाडमरसा: सप्त विस्रस: ।
अपेतो जङ्गिडामतिमिषुमस्तेव साधय ।।३।।
कृत्यादूषण एवायमथो अरातिदूषण: ।
अथो सहस्वां जङ्गिड: प्र ण आयूंषि तारिषत् ।।४।।
स जङ्गिडस्य महिमा परि ण: पातु विश्वत: ।
विष्कन्धं येन सासाह संस्कन्धमोज ओजसा ।।५।।

तृष्ट्वा देवा अजनयन्निष्ठितं भूम्यामधि ।
तमु त्वाङ्गिरा इति ब्रह्माण: पूर्व्या विदु: ।।६।।
न त्वा पूर्वा ओषधयो न त्वा तरन्तु या नवा: ।
विबाध उग्रो जङ्गिड: परिपाण: सुमङ्गल: ।।७।।
अश्वोपदान भगवो जङ्गिडामितवीर्य ।
पुरा त उग्राय सत उपेन्द्रो वीर्यं ददौ ।।८।।
उग्र इत्ते वनस्पत इन्द्र ओज्मानमा दधौ ।
अमीवा: सर्वाश्चातयञ्जहि रक्षांस्योषधे ।।९।।
आशरीकं विशरीकं बलासं पृष्ट्यामयम् ।
तक्मानं विश्वशारदमरसं जङ्गिडस्करत् ।।१०।।

११-४

इन्द्रस्य नाम गृह्णन्त ऋषयो जङ्गिडं ददु: ।
देवा यं चक्रुर्भेषजमग्रे विष्कन्धदूषणम् ।।१।।
स न रक्षतु जङ्गिडो धनपालो धनेव ।
देवा यं चक्रुर्ब्राह्मणा: परिपाणमराहितम् ।।२।।
दुर्हार्दसं घोरचक्षुं पापकृत्वानमागतम् ।
तांस्त्वं सहस्रचक्षो प्रतीबोधेन नाशय
परिपाणोऽसि जङ्गिड: ।।३।।
परि मा दिव: परि मा पृथिव्या:
पर्यन्तरिक्षात् परि मा वीरुद्भ्य:।
परि मा भूतात् परि मोत भव्याद्
दिशोदिशो जङ्गिड: पात्वस्मान्।।४।।
य ऋष्णावो देवकृता य उचोबभृतेन्या: ।
सर्वांस्तान्विश्वभेषजो अरसान् जङ्गिडस्करत् ।।५।।

११-५

प्रति गृहाण पृथिवीनीतमेदतदाज्यस्य मथितं शरीरम् ।
इमां धेनुमस्य दातुस्त्वं रक्ष बर्हिष्या यथासत् ।।१।।
उत त्वाहुर्वरुणस्य पत्नीमथो त्वाहुरदितिं विश्वरूपाम् ।
अधिजरायुमाधारे हव्यवाहमग्नावस्या महिमानं जुहोमि ।।२।।
स साहस्रं तन्तुमन्वा ततान सो अग्निष्टोमां दशतं समाप ।
अधिजरायुं सवत्सां यो ददाति तं वै देवा: स्वरा रोहयन्ति।।३।।
अधिजरायु: स्वरा रोहयन्त्यनेन दत्ता सुदुघा वयोधा: ।
सास्मै दुहां शतधारमक्षितं यमस्य लोके परमे व्योमन् ।।४।।
पूर्ववत्सेन सह वत्सिनी गौर्योऽस्या वत्सो अपरो जरायु तत् ।
तृतीयं मांसं परिनिर्मितं यत्तस्माद्देवा अधिजरायुमाहु: ।।५।।
आ धावय शवसा वावृधानोत्तराव श्रव आ धेह्यस्मै ।
इममिन्द्र महतामेन रक्ष सं प्रजया तन्वा सं बलेन ।।६।।
दुर्वेदावस्ताद् बहुधा परस्ताद् विश्वे देवा: प्रति पश्यन्त्वायतीम् ।
या भद्रा या सर्वत: समीची सेदाहुतिर्भवतु मेतराज्या ।।७।।
गृष्टिं धेनुमधिजरायुं स्वधां कृण्वान: प्र ददाति ब्रह्मणे ।
सास्मै दुहां शतधारमक्षितममुष्मिल् लोके युग उत्तरस्मिन् ।।८।।
वत्सं जरायु प्रतिधुक् पीयूषं यो नो ददाति सुदुघामधेनुम् ।
तस्य देवा: प्र तिरन्त्वायु: स आ रोहतु सुकृतामु लोकम्।।९।।
परिवालामधिजरायुं युधाजीवो अददादग्र एताम् ।
स्योना न: शग्मा शिवा विशेह मा नो हिंसीर्हरसा दैव्येन ।।१०।।
भद्रकृतं सुकृतमादु शंभुवमरंभुवं प्रति गृह्णाम्यायतीम् ।
घृतश्रियं नभसी संवसानां देवान् मनुष्याङ्ग असुरानुतर्षीन् ।।११।।
पञ्च देवा: प्र पिबन्त एतामिन्द्रस्त्वष्टा वरुणो मित्रो अग्नि: ।
ते सर्वे समदुर्मह्यमेतां तयेह जीवन् प्र तिरस्वायु: ।।१२।।

कश्यपो ऽयं जमदग्निर्वसिष्ठ ऋषयो नः ससनुरग्र एताम् ।
भरद्वाजो गोतमो अत्रिर्नः स्योनां विश्वामित्रो ददुषः प्र तिरात्यायु।।१३।।
ऊर्जं देवेभ्यः सुभग ऊर्जं मनुषेभ्यः ।
ऊर्जं पितृभ्यो अघ्न्य ऊर्जा ददतमा विश ।।१४।।

११-६

या जाता ओषधयो देवेभ्यस्त्रियुगं पुरा ।
मन्ये नु बभ्रूणामहं शतं धामानि सप्त च ।।१।।
शतं वो अम्ब धामानि सहस्रमुत वो रुहः ।
अधा शतकृत्वो यूयमिमं मे अगदं कृत ।।२।।
पुष्पवतीः प्रसूमतीः फलिनीरफला उत ।
अश्वा इव स्थ जित्वरीर्वीरुधः पारयिष्णवः ।।३।।
ओषधीरिति मातरो यद्वो देवीरुपब्रुवे ।
रपांसि विघ्नतीरित रक्षश्चातयमानाः ।।४।।
निष्कृतिर्नाम वो माता निष्कृतिर्नाम वः पिता ।
सराः पतत्रिणी स्थ यदामयति निष्कृतः ।।५।।
अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता ।
गोभाज इत् किलासथं यत्सनवथ पूरुषम् ।।६।।
यदहं वाजयन्निमा ओषधीर्हस्त आदधे ।
आत्मा यक्ष्मस्य नश्यतु पुरा जीवगृभो यथा ।।७।।
उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते ।
धनं सनिष्यन्तीनामात्मानं तव पूरुषः ।।८।।
यदोषधयः समग्वत राजानः समिताविव ।
विप्र सः उच्यते भिषग् रक्षोहामीवचातनः ।।९।।
अश्वावतीं सोमावतीमूर्जयन्तीमुदोजसम् ।
आवित्सि सर्वा ओषधीरितो मा पारयानिति ।।१०।।

११-७

अति विश्वाः परिष्ठा स्तेन इव व्रजमक्रमीत् ।
ओषधयः प्राचुच्यवुर्यत् किं च तन्वो रपः ।।१।।
यस्यौषधयः प्रसर्पथाङ्गमङ्ग परुष्परुः ।
तस्माद्यक्ष्मं वि बाधध्वमुग्रो मध्यमशीरिव ।।२।।
अन्या वो अन्यामवत्वन्यान्यस्या उपावत ।
ओषधयः संविदाना इदं मे प्रावता वचः ।।३।।
अवपतन्तीरपदं दिव ओषधयस्परि ।
यं जीवमश्नवामहै न स रिष्याति पूरुषः ।।४।।
या ओषधयः सोमराज्ञीर्बह्वीः शतविचक्षणाः ।
बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः ।।५।।
याः फलिनीर्या अफला अकोशा याश्च केशिनीः ।
बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः ।।६।।
जीवलां नघारिषामा ते बध्नाम्योषधिम् ।
या त आयुरुपाहरादप रक्षांसि चातयात् ।।७।।

११-८

कालो अश्वो वहति सप्तरश्मिः सहस्राक्षो अजरो भूरिरेताः ।
तमा रोहन्ति कवयो विपश्चितस्तस्य चक्रा भुवनानि विश्वा ।।१।।
सप्त चक्रान्वहति कालो एष सप्तास्य नाभीरमृतं न्वक्षः ।
स इमा विश्वा भुवनान्यञ्जन् कालः स ईयते प्रथमो नु देवः ।।२।।
पूर्णः कुम्भो अधि काल आहितस्तं वै पश्यामो बहुधा नु सन्तम् ।
स इमा विश्वा भुवनानि प्रत्यङ् कालं तमाहुः परमे व्योमन् ।।३।।
स एव सन् भुवनान्याभरत् स एव सन् भुवनानि पर्यैत् ।
पिता सन्नभवत् पुत्र एषां तस्माद्वै नान्यत् परमस्ति तेजः ।।४।।

कालो ऽमूं दिवमजनयत् काल इमां पृथिवीमुत ।
कालेन भूतं भव्यं चेषितं ह वि तिष्ठते ।।५।।
कालो भूतिमसृजत् काले तपति सूर्य: ।
कालो ह विश्वा भूतानि काले चक्षुर्वि पश्यति ।।६।।
काले मन: काले प्राण: काले नाम समाहितम् ।
कालेन सर्वा नन्दन्त्यागतेन प्रजा इमा: ।।७।।
काले तप: काले ज्येष्ठं काले ब्रह्म समाहितम् ।
कालो ह सर्वस्येश्वरो य: पितासीत् प्रजापते: ।।८।।
तेनेषितं तेन जातं तदु तस्मिन् प्रतिष्ठितम् ।
कालो ह ब्रह्म भूत्वा बिभर्ति परमेष्ठिनम् ।।९।।
काल: प्रजामसृजत कालो अग्रे प्रजापतिम् ।
स्वयम्भू: कश्यप: कालात्तप: कालादजायत ।।१०।।

११-९

कालादाप: समभवन् कालाद् ब्रह्म तपो दिश: ।
कालेनोदेति सूर्य: काले नि विशते पुन: ।।१।।
कालेन वात: पवते कालेन पृथिवी मही
द्यौर्मही काल आहिता ।
कालो ह भूतं भव्यं च पुत्रो अजनयत् पुर: ।।२।।
कालादृच: समभवन् यजुष्कालादजायत ।
कालो यज्ञं समैरयद् देवेभ्यो भागमक्षितम् ।।३।।
काले गन्धर्वाप्सरस: काले लोका: समाहिता: ।
काले ऽयमङ्गिरा देवो अथर्वा चाधि तिष्ठत: ।।४।।
इमं च लोकं परमं च लोकं
पुण्यांश्चलोकान् विधृतीश्च पुण्या:।

सर्वाल्लोकानभिजित्य ब्रह्मणा काल:
स ईयते परमो नु देव:।।५।।

११-१०

सप्तैतं सप्तऋषय: शल्यकर्ता द्वादश ।
आविद्धं शल्यं चाक्रतुरिन्द्रराशिं महोदरम् ।।१।।
इन्द्रराशिं मित्रावरुणावाविद्धं निरकृन्ततम् ।
प्रसूतमिन्द्रेणोग्रेणो ब्राह्मणानामसत् पितु: ।।२।।
नैनमश्नीयादब्राह्मणो न गृहान् प्र हरेत् स्वान् ।
तृष्टं विषमिव तैमातमिन्द्रराशि: खले शये ।।३।।
अयं शये तन्वं रक्षमाणे यो अश्नात्यविचक्षाण एतम् ।
मध्ये खलस्य निर्मित इन्द्रराशिर्महोदर: ।।४।।
उतैष यक्ष्मं भवतीन्द्रराशिर्महोदर: ।
भीमो अन्नस्य संकाशे अश्व इवात्ति सिनी नडम् ।।५।।
य इन्द्रराशिं निर्वपादुर्धयात् खलमान्या: ।
स्फातिं च खल्यां गृह्णातु गवां च बहु पुष्यतु ।।६।।
यमुवाह शुन:शेपो यमिन्द्रो ब्रह्मणस्पति: ।
तं चक्रु: शिवमस्मभ्यमृषयो जीवनाय कम् ।।७।।
तृढं शाकं तमशयद् दत्तमासीच्छ्वापदम् ।
पन्द्रा स्म रुप्यन्त: शेरे य आदन्वहुतं हवि: ।।८।।
अनडुहां पृश्निशफानां वहतां वहरापिणाम् ।
कीनाशस्य श्रमात् स्वेदादिन्द्रशिरजायत ।।९।।
यत् कीनाशस्य स्वेद एति संतप्तस्तन्वस्परि ।
अपां गाव इव तृष्यन्तीरिन्द्रराशिं सो अश्नुते ।।१०।।

## ११-११

यत् कीनाशं सीरपतिर्दण्डेन हन्ति मन्युत: ।
यत् किंच खल्यं सादान्ववमिन्द्रराशौ तदाहितम् ।।१।।
उलूखलमुसलं तानि चोदय सूर्पं नार्यपविचे कृणुष्व ।
वाहाय पुत्राय गोतम इन्द्रराशिं मधुमन्तं कृणोतु ।।२।।
एतत् सूर्पं जरितराहरोलूखलमुसलं कुम्भ्या गहि ।
पुत्रा नो अद्य सुदिनत्वे अह्नि पित्तमश्नन्त मधुमन्तमंशुम् ।।३।।
अग्निर्नो दूत: प्रहितो ऽयमागन् स न: सर्वमन्नमविषं कृणोतु ।
निराविद्धमकृतं ब्रह्मणेतो ऽदोमधं पित्तमत्त प्रसूता: ।।४।।
स्वादो पितो मधो पितो उप न: पितवा गहि ।
शिव: शिवाभिरूतिभि: ।।५।।
सिंहो भूत्वा गामृणात्यग्निर्भूत्वा धान्यम् ।
इन्द्रराशिरनिर्मितो मयारं चाव गच्छति ।।६।।

## ११-१२

शतकाण्डो द्युश्चवन: सहस्रपर्ण उत्तिर: ।
दर्भो य उग्र ओषधिस्तं ते बध्नाम्यायुषे ।।१।।
नास्य केशान् प्र वपन्ति नोरसि ताडमा घ्नते ।
यस्मा अच्छिन्नपर्णेन दर्भेण शर्म यच्छति ।।२।।
दिवि ते तूलमोषधे पृथिव्यामसि निष्ठित: ।
त्वया सहस्रकाण्डेनायुष्प्र वर्धयामहे ।।३।।
तिस्रो दिवो अत्यतृणस्तिस्र इमा: पृथिवीरुत ।
तयाहं सर्वान् दुर्हार्दो जिह्वां नि तृणद्मि वचांसि च ।।४।।
त्वमसि सहमानो अहमस्मि सहस्वान् ।
उभौ सहस्वन्तौ भूत्वा सपत्नान् सहिषीवहि ।।५।।

सहस्व नो अभिमातिं सहस्व पृतनायत: ।
सहस्व सर्वा दुर्हार्दो सुहार्दो मे बहून् कृधि ।।६।।
दर्भेण देवजातेन दिवि ष्टम्भेन शश्वदित् ।
तेनाहं सस्वतो जनाङ असनं सनवानि च ।।७।।
प्रियं मा दर्भ कृणु ब्रह्मराजन्याभ्यां शूद्राय चार्याय च ।
यस्मै च कामयामहे सर्वस्मै च विपश्यते ।।८।।
यो जायमान: पृथिवीमदृंहद् यो
अस्तभ्नादन्तरिक्षं दिवं च ।
यं बिभ्रतं ननु पाप्मा विवेद स नो ऽयं दर्भो
धरुणो दिवा क:।।९।।
सपत्नहा शतकाण्ड: सहस्वानोषधीनां
प्रथम: सं वभूव ।
स नो ऽयं दर्भ: परि पातु विश्वतस्तेन
साक्षीय पृतना: पृतन्यत:।।१०।।

११-१३

सहस्रार्ध: शतकाण्ड: पयस्वानपामग्निर्वीरुधां राजसूयम् ।
स नो ऽयं दर्भ: परि पातु विश्वतो
दैवो मणिरायुषा सं सृजाति न: ।।१।।
घृतादुल्लुप्तो मधुमान् पयस्वान् भूमिदृंहो अच्युतश्च्यावयिष्णु: ।
नुदन् सपत्नानधरांश्च कृण्वन् दर्भारोह महतामहेन्द्रियेण ।।२।।
त्वं भूमिमत्येष्योजसा त्वं वेद्यां सीदसि चारुरध्वरे ।
त्वां पवित्रमृषयो ऽभरन्त त्वं पुनीहि दुरितान्यस्मत् ।।३।।
तीक्ष्णो राजा विषासही रक्षोहा विश्वचर्षणि: ।
ओजो देवानां बलमुग्रमेतत्तं ते बध्नामि जरसे स्वस्तये ।।४।।

दर्भेण त्वं कृणु वीर्याणि दर्भं बिभ्रदात्मना मा व्यथिष्ठा: ।
अतिष्ठायो वर्चसैध्वन्यान् सूर्येवाभाहि प्रदिशश्चतस्र: ।।५।।

११-१४

उदीरतां पृथिवी जीरदानु: शीत एनामन्तर्वाननु वातु वात:।
ऋत्वियावती पृथिवी प्रति गृह्णातु
बीजं सहस्रवल्लिशं सुरुहा रोहयन्ती।।१।।
इन्द्र एनां हर्यश्वो अग्निर्वा रोहिताश्व: ।
अश्विना रासभाश्वा कृषिं देवीमयूयुजन् ।।२।।
शुनं वरत्रामा यच्छ शुनमष्ट्रामुदिङ्गय ।
शुनं तोतप्यतां फाल: शुनं वहतु लाङ्गलम् ।।३।।
युनक्त वाहान् वि युगा तनोत कृते क्षेत्रे वपतेह बीजम् ।
तथा धाता तथा भगस्तथा कृणुतामश्विना
तथा देवी सरस्वती ।।४।।
सुपिप्पला ओषधयो नाहीना अपक्षत ।
तदिन्द्रो वरुणो वायुरश्विनेदं मे प्र तिरता वच: ।।५।।
धाता पूषा बृहस्पतिर्भूत्या: समजीगमन् ।
कृषिं देवा: स्वर्विद: ।।६।।
कल्याणी सुभगेव या संस्थायां वपुषेण्या ।
सा नस्तिराति मधुमन्तमंशुम् ।।७।।
अन्नस्य भूमा पुरुषस्य भूमा भूमा पशूनां त इह श्रयन्ताम् ।
तीव्रा वर्षन्तु वृष्टयो भूतये महसे वृधे ।।८।।
पिन्वान: पर्यन्यस्तिष्ठतु सह पृष्ठयोदेति सूर्य: ।
आनन्दं जनयन् यव: सर्वा अरातीरपबाधमान:।।९।।
वि जिहीष्व पृथिवीमह्युर्विपक्षमृद्वी भव ।
भद्रं रोहतु धान्यम् ।।१०।।

११-१५

उत्सेध सेध गा अजन् विन्देहेरां महस्कृधि ।
मा वो रिषात् कूटग्राहो मा व आ शारि लाङ्गलम् ।।१।।
मोऽस्माकमुग्रा: संरब्धास्तन्व: किं चनाममत् ।
रायस्पोषं शुनासीरा अथो सीताभगश्च य: ।।२।।
देष्ट्री समुद्र: सिनीवाली कृषिं नो अभि हिन्वत ।
इमा या: पञ्च प्रदिशोस्ता वातो अभि हिन्वत ।
वलीके सत्वतामिव तीव्रा वर्षन्तु वृष्टय: ।।३।।
शुनं कीनाशो अन्वेतु वाहाञ्छुनं फालो विनुदन्नेतु भूमिम् ।
शुनासीरा हविषा वावृधाना शुनं धान्यानि कृणुतं युवं न: ।।४।।
या न: पीपरदश्विना ज्योतिष्मती तमस्तिर: ।
तामस्मे रासेतामिषम् ।।५।।

११-१६

ऊर्ध्वश्रितो वै नामैता आपो यदोषधयश्च वनस्पतयश्च
तासामग्निरधिपति: । यो वा एता ऊर्ध्वश्रित आपो
वेदाग्निमधीपतिम् । यथैतमेता ऊर्ध्वा उपतिष्ठन्त्ये वैनमूर्ध्वा
उपतिष्ठन्त्यधिपतिर्भवति स्वानां चान्येषां च य एवं वेद ।।१।।
प्रस्कद्वरीर्वै नामैता आपो यत्पृष्वास्तासामादित्योऽधिपति: ।
यो वा एता: प्रस्कद्वरीरापो वेदादित्यमधिपतिम् । यथैता
एतस्मिन्नुद्यति प्रस्कन्दन्त्येवास्मिन्नायति प्रस्कन्दन्त्यधिपति
र्भवति स्वानां चान्येषां च य एवं वेद ।।२।।
तक्वरीर्वै नामैता आपो या: सूदय तासां पृथिव्यधिपत्नी ।
यो वा एतास्तक्वरीरापो वेद पृथिवीमधिपत्नीम् । यथैता
एतस्यां प्रणुतास्तकन्तीर्यन्त्येवैनेन द्विषन्त: प्रणुता यन्त्यधिपति
र्भवति स्वानां चान्येषां च य एवं वेद ।।३।।

वशिनीर्वै नामैता आपो या: स्यन्दन्ते तासां वरुणोऽधिपति:।
यो वा एता वशिनीरापो वेद वरुणमधिपतिम् । यथैतमेतासां
स्यन्दमानानां वशमादत्त एवा द्विषतां वशमादत्तेऽधिपतिर्भवति
स्वानां चान्येषां च य एवं वेद ।।४।।

ऊर्जो वै नामैता आपो यद्रावस्तासां त्वष्टाधिपति: ।
यो वा एता ऊर्ज आपो वेद त्वष्टारमधिपतिम् । ऊर्जस्वी
तेजस्वी भवति प्र साहस्रान् पशूनाप्नोत्यधिपतिर्भवति स्वानां
चान्येषां च य एवं वेद ।।५।।

वर्चो वै नामैता आपो यद् घृतं तासां पूषा अधिपति:।
यो वा एता वर्च आपो वेद पूषणमधिपतिम् । वर्चस्वी
तेजस्वी भवत्युतास्यानभ्यक्तस्य मुखं रोचतेऽधिपतिर्भवति
स्वानां चान्येषां च य एवं वेद ।।६।।

ओजो वै नामैता आपो यन्मधु तासामिन्द्रोऽधिपति:।
यो वा एता ओज आपो वेदेन्द्रमधिपतिम् । ओजस्वी
वीर्यावानिन्द्रियावी भवति प्र राजसभायां मधुपर्कमाप्नोत्य-
धिपत्तिर्भवति स्वानां चान्येषां च य एवं वेद ।।७।।

उग्रा वै नामैता आपो यद्ध्रादुनयस्तासां मरुतोऽधिपतय:।
यो वा एता उग्रा आपो वेद मरुतोऽधिपतीन् ।
उग्रो बलवान् भवति मारुतं शर्ध इत्येनमाहुरधिपतिर्भवति
स्वानां चान्येषां च य एवं वेद ।।८।।

महो वै नामैता आपो यद्वर्षं तासां पर्यन्योऽधिपति:।
यो वा एता मह आपो वेद पर्यन्यमधिपतिम् ।
महस्वी मित्रवाहो भवत्युतैनेन स्वा नन्दत्यस्माकमयमिति
तस्मात् सर्वो वृष्टे महीयतेऽधिपतिर्भवति स्वानां चान्येषां च
य एवं वेद ।।९।।

अतिमन्या वै नामैता आपो यत् सुरा तासामश्विनाधिपती ।
यो वा एता अतिमन्या आपो वेदाश्विनाधिपती । अतिमन्यते
भ्रातृव्यान्नैनं भ्रातृव्या अतिमन्यन्ते तस्मान्मत्तो मत्तमतिमन्यते
ऽधिपतिः भवति स्वानां चान्येषां च य एवं वेद ।।१०।।
परिचितो वै नामैता आपो याः कर्ष्वां तासां यमो ऽधिपतिः।
यो वा एताः परिचित आपो वेद यममधिपतिम् ।
पर्येनं स्वाश्च विश्याश्चावश्यन्त्यधिपतिः भवति स्वानां चान्येषां
च य एवं वेद ।।११।।
रन्तयो वै नामैता आपो यत स्त्रियस्तासां कामो ऽधिपतिः।
यो वा एता रन्तीरापो वेद काममधिपतिम् ।
रमन्ते अस्मिन् रमणीयो भवति काम इव स्त्रीणामधिपतिः
भवति स्वानां चान्येषां च य एवं वेद ।।१२।।
विश्वभृतो वै नामैता आपो यत्पुरुषस्तासां मृत्युरधिपतिः।
यो वा एता विश्वभृत आपो वेद मृत्युमधिपतिम् ।
विश्वस्य भर्ता भवति विश्वमेनं बिभर्त्यास्य त्रयो ऽग्नयो गृहे
धीयन्ते दक्षिणाग्निर्गार्हपत्य आहवनीयः। ऐनं चत्वारि वामानि
गच्छन्ति निष्कः कंसो ऽश्वतरो हस्त्यधिपतिः भवति स्वानां
चान्येषां च य एवं वेद ।।१३।।
तासां वा एतासामपां हिमवानूधः सोमो वत्सः परमेष्ठ्यधिपतिः।
यो वा एतासामपां हिमवन्तमूधः सोमं वत्सं परमेष्ठिनमधिपतिं
वेद । परमेष्ठी भवति गच्छति परमेष्ठितामधिपतिर्भवति
स्वानां चान्येषां च य एवं वेद ।।१४।।

*इत्यथर्ववेद पैप्पलाद संहितायां चतुर्दशर्चोनामएकादशकाण्डः समाप्तः*

# अथ पञ्चदशर्चोनाम द्वादशकाण्ड:

## १२-१

अग्निस्तक्मानमप बाधतामित: सोमो ग्रावा मरुत: पूतदक्षा:।
वेदिर्वर्हि: समिध: शोशुचाना अप रक्षांस्यमुया धमन्तु ।।१।।
अयं यो रूरो अभिशोचयिष्णुर्विश्वा रूपाणि हरिता कृणोति ।
तस्मै ते ऽरणाय बभ्रवे तपुर्मघाय नमो ऽस्तु तक्मने ।।२।।
तक्मन् सार्थिनमिच्छस्व वशी सन् मृडयासि न: ।
अथेहि यत्र ते गृहा अनिनूर्त्तेषु दस्युषु ।।३।।
य: पुरुष: पारुषेयो ऽवध्वंस इवारुण: ।
तक्मानं विश्वधावीर्या अधराञ्चं परा सुव ।।४।।
अधराञ्चं प्र हिणोमि नमस्कृत्वा तक्मने ।
शकम्भरस्य मुष्टिहा पुनर्गच्छ महावृषान् ।।५।।
महावृषान् मूजवत ओक एधि परेत्य ।
व्रतानि तक्मने ब्रूमो अन्यक्षेत्राणि वा इमा ।।६।।
ओको अस्य मूजवन्त ओको अस्य महावृषा: ।
याज्जातस्तक्मं तादसि बलिहिकेषु न्योचर: ।।७।।
तक्मन् व्याल वि गद व्यङ्ग भूरि यावय ।
दासीं निष्टक्वरीमिछ तां वज्रेण समर्पय ।।८।।
गिरिं गच्छ गिरिजासि गिरौ ते माहिषो गृह: ।
दासीमिच्छ प्रफर्व्यं तां तक्मन् वीव धूनुहि ।।९।।
यस्त्वं शीतो अथो रूर: सह कासावीविय: ।
भीमास्ते तक्मन् हेतयस्ताभि स्म परि वृङ्धि न: ।।१०।।

## १२-२

तक्मन् भ्रात्रा बलासेन स्वस्रा कासिकया सह ।
पाम्ना भ्रातृव्येण नश्येतो मरटाङ् अभि ।।१।।
गन्धारिभ्यो मूजवद्भ्य: काशिभ्यो मगधेभ्य: ।
जने प्रियमिव शेवधिं तक्मानं परि दध्मसि ।।२।।
नार्कविन्दान्नार्विदालान्नान्नदीं वर्तकावतीम् ।
व्रतानि तक्मने ब्रूमो अन्यक्षेत्राणि वा इमा: ।।३।।
अन्यक्षेत्रे न रमते सहस्राक्षो अमर्त्य: ।
अभूदु प्रार्थस्तक्मा स गमिष्यति बलिहिकाम् ।।४।।
अदो गच्छ मुजवतस्ततो वा घ परस्तरम् ।
मा स्मातो अभ्यैर्न: पुनस्तत्त्वा तक्मन्नुप ब्रुवे ।।५।।
परस्मै व त्वं चर परमस्यां परावति ।
यथा नो नान्तमायसि यथा नो नाभिशोचया ।।६।।

## १२-३

यथेयमुर्वी पृथिवी वृद्धैव गर्भमादधे ।
एवा दधामि ते गर्भं तस्मै त्वामवसे हुवे ।।१।।
पर्वताद्दिवो योनेर्गात्राद्गात्रात् समाशृतम् ।
रेतो देवस्यदेवस्य त्सरौ पर्णमिवाधाम् ।।२।।
विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु ।
आ सिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ।।३।।
गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति ।
गर्भं युवमश्विनास्यामा धत्तं पुष्करस्रजा ।।४।।
गर्भं ते राजा वरुणो गर्भं देवो बृहस्पति: ।
गर्भं त इन्द्रश्चाग्निश्च गर्भं धाता दधातु ते ।।५।।

गर्भो अस्योषधीनां गर्भो वनस्पतीनाम् ।
गर्भो विश्वस्य भूतस्य सो अग्ने गर्भमेह धा: ।।६।।
येनौषधयो गर्भिणी: पशवो येन गर्भिण: ।
तेषां गर्भस्य यो गर्भस्तेन त्वं गर्भिणी भव ।।७।।
वि ते ग्रन्थिं चृतामसि धाता गर्भं दधातु ते ।
आ योनिं पुत्रो रोहतु जननं प्रति जायताम् ।।८।।
जनिष्ट हि महिया आ योनिं समिहासरत् ।
अथा सोम इव भक्षणमा गर्भ: सीदत्वृत्वियम् ।।९।।
धात: श्रेष्ठेन रूपेणास्या नार्या गवीन्यो:।
पुमांसं पुत्रमा धेहि दशमे मासि सूतवे ।।१०।।

१२-४

सवित: श्रेष्ठेन रूपेणास्या नार्या गवीन्यो:।
पुमांसं पुत्रमा धेहि दशमे मासि सूतवे ।।१।।
विष्णो: श्रेष्ठेन रूपेणास्या नार्या गवीन्यो:।
पुमांसं पुत्रमा धेहि दशमे मासि सूतवे ।।२।।
त्वष्ट: श्रेष्ठेन रूपेणास्या नार्या गवीन्यो:।
पुमांसं पुत्रमा धेहि दशमे मासि सूतवे ।।३।।
भग: श्रेष्ठेन रूपेणास्या नार्या गवीन्यो:।
पुमांसं पुत्रमा धेहि दशमे मासि सूतवे ।।४।।
अधि स्कन्द वीरयस्व गर्भमा धेहि योन्याम् ।
वृषाणं वृष्ण्यावन्तं प्रजायै त्वा नयामसि ।।५।।
यद्वेद राजा वरुणो वेद देवो बृहस्पति: ।
इन्द्रो यद्वृत्रहा वेद तद्गर्भकरणं पिब ।।६।।
वि जिहीष्व बार्हत्सामे गर्भस्ते योनिमा शयाम् ।
ददन्ते पुत्रं देवा: सोमपामुभयाविनम् ।।७।।

सोमस्य त्वर्त्विंयेनोपैमि गर्भकृत्वने ।
ततस्ते पुत्रो जायतां कर्तवै वीर्येभ्य: ।।८।।

१२-५

जायस्वाग्नेऽश्वत्थादस्मै क्षत्रायौजसे ।
उग्र आपतिकादधि यो वृक्षां अधिरोहति ।।१।।
विबाधं चित् सहमानं त्वामग्ने जनयामसि ।
जातां जनिष्यमाणां सपत्नान् प्र णुदस्व मे ।।२।।
अश्वत्थस्यारोहस्य वृक्षस्यारणय: कृता: ।
ततो जाताय तेऽजनि वीडुजम्भाग्निरग्नये ।।३।।
तं जातं जातवेदसमा दधाम्यमर्त्यम् ।
पावकमग्निमूतये शुचिमन्तं विषासहिम् ।।४।।
उत्तनुष्व धनु: प्रति मुञ्चस्व वर्म जहि शत्रून् वीर्या ते कृणोमि ।
अत्र रध्यन्तु य उ ते सपत्नास्त्वमेकवृषो भव ।।५।।
वृषभं त्वा सजातानां सपत्नानां विषासहिम् ।
हन्तारं शत्रूणां कृण्मो विराजं गोपतिं गवाम् ।।६।।
समुद्रोऽस्यपां ज्येष्ठ इन्द्रो देवेषु वृत्रहा ।
व्याघ्रं सिंहं त्वा कृण्मो दमितारं पृतन्यताम् ।।७।।
इन्द्र इव दस्यूनधरान् कृणुष्वोग्र इव वातो विशृणन् सपत्नान् ।
ते शुष्यन्त्वप दावादिवाग्ने: पर्यवीवरथा एनान् ।।८।।
सं वृश्चेनांस्ते शुष्यन्तु वृश्चैनान् मोपजां शिष: ।
सपत्नान् सर्वांस्तृढ्वा त्वमेकवृषो भव ।।९।।
त्वमुग्रस्त्वं बली त्वमेधि विवाचनम् ।
त्वं पृतन्यत: पूर्व: सपत्नां अव धूनुष्व ।।१०।।

### १२-६

असपत्न: सपत्नहेन्द्र इवारिष्टो अक्षित: ।
अध: सपत्नास्ते पदो: सर्वे सन्त्वभिष्ठिता: ।।१।।
म्लायन्तु ते खातमूला: सपत्ना अग्निमेषां निर्ह्वयामि शरीरात् ।
हविषैषामपि दधामि प्राणांस्तथैभ्यो अमुचि: कृता:।।२।।
अभिवर्धमभिभवं सपत्नक्षयणं हवि: ।
राष्ट्राय तुभ्यं कृण्म: सपत्नेभ्य: पराभवन् ।।३।।
यो न: स्वो यो अरणो ऽरातीयति पूरुष: ।
इध्मस्येव प्रक्षायकस्तस्य मोच्छेषि किं चन ।।४।।
असपत्नं पुरस्तात् पश्चान्नो ऽभयं कृतम् ।
सविता मा दक्षिणत उत्तरान्मा शचीपति: ।।५।।
दिवो मादित्या रक्षन्तु भूम्या रक्षन्त्वग्नय: ।
इन्द्राग्नी रक्षतां मा पुरस्तादश्विनावभित: शर्म यच्छताम् ।
तिरश्चीनघ्न्या रक्षतु जातवेदा भूतकृतो मे सर्वत:सन्तु वर्म।।६।।

### १२-७

त्वया पूर्वमथर्वाणो जघ्नू रक्षांस्योषधे ।
त्वया जघान कश्यपस्त्वया कृण्वो अगस्त्य: ।।१।।
त्वया वयमप्सरसो गन्धर्वांश्चातयामसि ।
अजशृङ्ग्यज रक्ष: सर्वान् गन्धेन नाशय ।।२।।
नदीं यन्त्वप्सरसो अपान्तारमिव श्वसन् ।
गुल्गुलू पीला नलद्यौक्षगन्धि: प्रमन्दिनी ।।३।।
यत्रामर्त्या अप्स्वन्त: समुद्रे तरुर्नीली तुर्वशी पुण्डरिका।
तत् परेता अप्सरस: प्रतिबुद्धा अभूतन ।।४।।
यत्र प्रेङ्खो गन्धर्वाणां दिवि बद्धो हिरण्यय:।
तत् परेता अप्सरस: प्रतिबुद्धा अभूतन ।।५।।

गन्धर्वाणामप्सरसामानर्तमिति संगमम् ।
तत् परेता अप्सरस: प्रतिबुद्धा अभूतन ।।६।।
यत्राश्वत्था न्यग्रोधा महारुक्मा: शिखण्डिन: ।
तत् परेता अप्सरस: प्रतिबुद्धा अभूतन ।।७।।
यत्र वोऽक्षा हरिता अर्जुना आघाटा: कर्कय: संवदन्ति ।
तत् परेता अप्सरस: प्रतिबुद्धा अभूतन ।।८।।
इयं वीरुच्छिखण्डिनो गन्धर्वस्याप्सरापते: ।
भिनत्तु मुष्कावपि यातु शेफ: ।।९।।
एयमगन्नोषधिर्वीरुधां वीर्यावती ।
अजशृङ्ग्यराटकी तीक्ष्णशृङ्गी व्यृषतु ।।१०।।

१२-८

अपेतेतो अप्सरसो गन्धर्वा यत्र वो गृहा: ।
तीक्ष्णशृङ्ग्यराटक्यजशृङ्गी व्यृषतु ।।१।।
जाया वेद वो अप्सरसो गन्धर्वा: पतयो यूयम् ।
अप क्रामत् पुरुषादमर्त्या मर्त्यं मा सचध्वम् ।।२।।
भीमा इन्द्रस्य हेतय: शतमृष्टीरयस्मै ।
ताभिर्गन्धर्वानभैद्यानवकादान् व्यृषतु ।।३।।
अवकादाङ् अभिशाचो भित्सु द्योतयमामकान् ।
गन्धर्वान् सर्वानोषधे प्र णुदस्व परा णय ।।४।।
उन्माद्यन्तीरभिशोचयन्तीर्मुनिं नग्नं कृण्वतीर्मोघहासिनम् ।
अप्सरसो रघटो याश्चरन्ति गन्धर्वपत्नीरजशृङ्ग्याशये ।।५।।
श्वेतीकृण्वान: पुरुषं विश्वा रूपाणि बोभुवत् ।
श्वेवैकं कपिरिवैकं कुमार: सर्वकेशक: ।
प्रिय दृशे भूत्वा गन्धर्व: सचते स्त्रियं तमितो नाशयामसि।।६।।

१२-९

यो वै वशां देवयते पचते वाहुताममा ।
मृत्यो: स बध्यते पाशे देवानां च यमस्य च ।।१।।
दक्षिणां सूर्यामदितिं वदन्ति वशां वाचं कल्पयन्त: समानीम् ।
सप्तऋषयो नि दधुर्वाचमेतां सरस्वती मृडया कल्पयन्त: ।।२।।
इमां वशां वाचमाहुर्वशेति तिस्रो वशा अतिहिता: सधस्थे ।
तासामग्नौ मनसैकां जुहोमि तां न: स्वाद्वीं भूतपति: कृणोतु ।।३।।
स्वाद्वीं न एतां सविता कृणोतु स्वाद्वीं न एतां जनिता पशूनाम् ।
जुहुध्यग्ने वयुनानि विद्वांस्तां न: स्वाद्वीं भूतपति: कृणोतु ।।४।।
इदं तृतीयं वशिनी वशाशि महिम्ने त्वा गर्भो अभ्या विवेश ।
उशती त्वमुशतो गच्छ देवान् सत्या: सन्तु यजमानस्य कामा: ।।५।।
इयमम्भसा वाजसुतस्तभे गौर्यस्यामिन्द्रो वरुणास्तित्विषाते ।
नृम्णमनृम्णं सचत इयमागन् धीर: पशुर्वीर्यमा विवेश ।।६।।
वशा ससूव स्थविरं विपश्चितं वशा ससूव वष्कयं दिविस्पृशन् ।
वशा ससूव तरुणं विभाजने वशा ससूव संजितं धनानाम् ।।७।।
यत् प्रोक्षणमपतद्बर्हिषस्परि दक्षिणतो वेद्या इन्द्रियावत् ।
वशा संभूत्याधि गौरमिमेत्तस्या: पीवो अभवद्गर्भवाससम् ।।८।।
नमो महिम्न उत चक्षुषे वां वशर्षभो मनसा तत् कृणोमि ।
देवाङ् अपीतं पथिभि: शिवेभिर्मा नो हिंसिष्टं हरसा देव्येन ।।९।।
वशामस्कन्ददृषभस्तिष्ठन्तीमधि तन्तुषु ।
गर्भं तमद्य को वेद यतिधा सो अकल्पयत् ।।१०।।

१२-१०

रूपमेक: पर्यभवद्राजा नामैक उच्यते ।
पतीरूपस्यैको रूपं रूपमेक: सुकृत्त्वनाम् ।।१।।

प्रजापति: परमेष्ठी मृत्युर्विश्वानर: स्व: ।
सरस्वानस्या यज्ञस्य वशाया अधि जज्ञिरे ।।२।।
यस्य गृह आदायेत वशा देवकृतं हवि: ।
निधानमस्या एष्यं दुहित्रे पत्यामिव ।।३।।
नास्या: सकृदभि तिष्ठेन्नास्य श्लोणा गृहे स्यात् ।
वशा कन्येव दुर्मङ्क्षापचित्याविजानता ।।४।।
नैनां रक्षेत् ब्राह्मणेभ्यो नामा वि ग्लापयाति च ।
यतीं न पत्या वर्तयेद् यस्य गोषु वशा स्यात् ।।५।।
नास्या वशमा रुन्धेद् देवा मनुष्या उत ।
वशं यदन्वैद् ब्रह्मणा तस्मादेषाभवद्वशा ।।६।।
वशं कृण्वाना वशिनीयमागन् पदं कल्याण्यवपश्यमाना ।
अग्निष्ट्येष्टिमभि जायमाना यज्ञस्य मात्राममभिकल्पमाना ।।७।।
इन्द्रवन्तस्ते मरुतस्तुरीयं भेजिरे वशे ।
तुरीयमादित्या रुद्रास्तुरीयं वसवो वशे ।।८।।
तुरीयभाज आदित्यान् वशाया: कवयो विदु: ।
अथास्या: पथ्यैका तनुश्चतस्त्रश्चक्लृपे दिश: ।।९।।
वशा पन्थामन्वपश्यन्नाकपृष्ठं स्वर्विदाम् ।
आदित्या एनामन्वायन्नृषयश्च तपस्विन: ।।१०।।

१२-११

पदेपदे कल्पयन्त आदित्याङ्गिरसो यजु: ।
ईडाना अन्वायन्वशां तदैडं सामोच्यते ।।१।।
वशेडा वशानुमतिर्वशामाहु: सरस्वतीम् ।
विराजं मन्यन्ते वशां वाग्वशा पृथिवी वशा ।।२।।
वशा द्वेष्ट्री सिनीवाली वशोषा निर्ऋतिर्वशा ।
वशायां मृत्युमविशदा मृत्युमविशद्वशा ।।३।।

अग्निर्वागुदकं चक्षुर्मनो वातो वशी वशा ।
तन्वं को अस्यास्तां वेद ययोदक्रामदेकया ।।४।।
यां चक्षुषा मनसा संविदाना हृदा पस्यन्ति कवयो मनीषिण: ।
तस्या: प्रजाधिपति: पशूनां वशा राज्ञा नांतवेषा सृष्टि: ।।५।।
को वशाया ऊधो वेद क उल्बं च जरायु च ।
स्तनानस्या: को वेद क इ तद्वेद यहुहे ।।६।।
अहमस्या ऊधो वेदाहमुल्बं च जरायु च ।
स्ततानस्या अहं वेदाथो तद्वेद यहुहे ।।७।।
नैनामहं रक्षेयं दद्यामेव स्याच्च मे ।
स्तना ह्यस्या अहं वेद क्षीरमुल्बं च जरायु च ।।८।।
कृत्तिर्योनिरधिवासो जरायु पाण्डमुल्बं नाभिरुष्णीषमस्या:।
आ जरसं धयतु मातरं वशी ब्रह्मभि: क्लृप्त: स ह्यस्य बन्धु: ।।९।।

*(इति पञ्चदशर्चोनामद्वादशकाण्डे प्रथमो ऽनुवाक:)*

१२-१२

इन्द्रस्य नु वीर्याणि प्र वोचं यानि चकार प्रथमानि वज्री ।
अहन्नहिमन्वपस्ततर्द प्र वक्षणा अभिनत् पर्वतानाम् ।।१।।
अहन्नहिं पर्वते शिश्रियाणं त्वष्टास्मै वज्रं स्वर्यं ततक्ष ।
वाश्रा इव धेनव: स्यन्दमाना अञ्ज: समुद्रमव जग्मुराप:।।२।।
वृषायमाणो ऽवृणीत सोमं त्रिकद्रुकेष्वपिबत् सुतस्य ।
आ सायकं मघवादत्त वज्रमहन्नेनं प्रथमजामहीनाम् ।।३।।
यदिन्द्राहन् प्रथमजामहीनामान् मायिनाममिना: प्रोत माया: ।
आत् सूर्यं जनयन् द्यामुषासं तादीत्ना शत्रुं न किला विवित्से ।।४।।
अहन् वृत्रं वृत्रतरं व्यंसमिन्द्रो वज्रेण महता वधेन ।
स्कन्धांसीव कुलिशेना विवृक्णाहि: शयदुपपृक् पृथिव्या: ।।५।।

अयोद्धेव दुर्मद आ हि जुह्वे महावीरं तुविबाधमृजीषम् ।
नातारीदस्य समृतिं वधानां सं रुजाना: पिपिष इन्द्रशत्रु:।।६।।
अपादहस्तो अपृतन्यदिन्द्रमास्य वज्रमधि सानौ जघान ।
वृष्णो वध्रि: प्रतिमानं बुभूषन् पुरुत्रा वृत्रो अशयद् व्यस्त:।।७।।
नदं न भिन्नममुया शयानं मनो रुहाणा अति यन्त्याप: ।
याश्चिद्वृत्रो महिना पर्यतिष्ठत् तासामहि: पत्सुत:शीर्बभूव।।८।।
नीचावया अभवद्वृत्रपुत्रेन्द्रो अस्या अव वधर्जभार ।
उत्तरा सूरधर: पुत्र आसीद् दानु: शये सहवत्सा न धेनु:।।९।।
अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम् ।
वृत्रस्य निण्यं वि चरन्त्यापो दीर्घं तम आशयदिन्द्रशत्रु:।।१०।।

१२-१३

दासपत्नीरहिगोपा अतिष्ठन् निरुद्धा आप: पणिनेव गाव:।
अपां बिलमपिहितं यदासीद्वृत्रं जघन्वाङ् अप तद्ववार ।।१।।
अश्व्यो वारो अभवस्तदिन्द्र सृके यत्त्वा प्रत्यहन् देव एक:।
अजयो गा अजय: शूर सोममवासृज: सर्तवे सप्त सिन्धून्।।२।।
नास्मै विद्युन् न तन्यतु: सिषेध न याम्यहमकिरद्ध्रादुनिं च ।
इन्द्रश्च यद् युयुधाते अहिश्चोतापरीभ्यो मघवा वि जिग्ये।।३।।
अहेर्यातारं कमपश्य इन्द्र हृदि यत्ते जघ्नुषो भीरगच्छत् ।
नव च यन्नवतिं च स्रवन्ती: श्येनो न भीतो अतरो रजांसि।।४।।
इन्द्रो यातो ऽवसितस्य राजा शमस्य च शृङ्गिणो वज्रबाहु: ।
सेदु राजा क्षयति चर्षणीनामरान् न नेमि: परि ता बभूव।।५।।

१२-१४

यो जात एव प्रथमो मनस्वान् देवो देवान् क्रतुना पर्यभूषत्।
यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्र:।।१।।

यः पृथिवीं व्यथमानामदृंहद् यः पर्वतान् प्रकुपिताङ् अरम्णात्।
यो अन्तरिक्षं विममे वरीयो यो द्यामस्तभ्नात् स जनास इन्द्रः।।२।।
यो हत्वाहिमरिणात् सप्त सिन्धून् यो गा उदाजदपधा वलस्य।
यो अश्मनोरन्तरग्निं जजान संवृक् समत्सु स जनास इन्द्रः।।३।।
येनेमा विश्वा च्यवना कृतानि यो दासं वर्णमधरं गुहाकः।
श्वघ्नीव यो जिगीवाल्लक्षमाददर्यः पुष्टानि स जनास इन्द्रः।।४।।
यं स्मा पृच्छन्ति कुह सेति घोरमुतेमाहुर्नैषो अस्तीत्येनम्।
सो अर्यः पुष्टीर्विज इवा मिनाति श्रदस्मै धत्त स जनास इन्द्रः।।५।।
यो रध्रस्य चोदिता यः कृशस्य यो ब्रह्मणो नाधमानस्य कीरेः।
युक्तग्राव्णो योऽविता सुशिप्रः सुतसोमस्य स जनास इन्द्रः।।६।।
यस्याश्वासः प्रदिशि यस्य गावो यस्य ग्रामा यस्य विश्वे रथासः।
यः सूर्यं य उषसं जजान यो अपां नेता स जनास इन्द्रः।।७।।
यं क्रन्दसी संयती विह्वयेते परेऽवर उभया अमित्राः।
समानं चिद् रथमातस्थिवांसा नाना हवेते स जनास इन्द्रः।।८।।
यस्मान् नर्ते विजयन्ते जनासो यं युध्यमाना अवसे हवन्ते।
यो विश्वस्य प्रतिमानं बभूव यो अच्युतच्युत् स जनास इन्द्रः।।९।।
यः शश्वतो मह्येनो दधानानबुध्यमानान् सर्वा जघान।
यः शर्धते नानुददाति शृध्यां यो दस्योर्हन्ता स जनास इन्द्रः।।१०।।

१२-१५

यः शम्बरं पर्वतेषु क्षियन्तं चत्वारिंश्यां शरद्यन्वविन्दत्।
ओजायमानं यो अहिं जघान दानुं शयानं स जनास इन्द्रः।।१।।
यः शम्बरं पर्यचरच्छचीभिर्यो वा वृकस्य नापिबत् सुतम्।
अन्तर्गिरौ यजमानं वहुं जनं यस्तंनासूरुक्षु स जनास इन्द्रः।।२।।

य: सप्तरश्मिर्वृषभस्तुविष्मानवासृजत् सर्तवे सप्त सिन्धून् ।
यो रौहिणमस्फुरद् वज्रबाहुर्द्यामारोहन्तं स जनास इन्द्र:।।३।।
द्यावा चिदस्मै पृथिवी नमेते शुष्माच्चिदस्य पर्वता भयन्ते।
य: सोमपा निचितो वज्रबाहुर्यो वज्रहस्त: स जनास इन्द्र:।।४।।
य: सुन्वन्तमवति य: पचन्तं य: शंसन्तं य: शशमानमूती ।
यस्य ब्रह्म वर्धनं यस्य सोमो यस्येदं राध: स जनास इन्द्र:।।५।।
य: सुन्वते पचते दुध्र आ चिद्वाजं दर्दर्षि स किलासि सत्य:।
वयं त इन्द्र विश्वह प्रियास: सुवीरासो विदथमा वदेम ।।६।।
जातो व्यख्यत् पित्रोरुपस्थे भुवो न वेद जनितु: परस्य ।
तविष्यमाणो न्वोजो अख्यद् व्रता देवानां स जनास इन्द्र:।।७।।
य: सोमकामो हर्यश्व आसु यस्माद्रेजन्ते भुवनानि विश्वा ।
यो जघान शम्बरं यश्च शुष्णं य एकवीर: स जनास इन्द्र:।।८।।

१२-१६

शं न इन्द्राग्नी भवतामवोभि: शं न इन्द्रावरुणा रातहव्या ।
शमिन्द्रासोमा सविताय शं यो: शं न इन्द्रापूषणा वाजसातौ ।।१।।
शं नो भग: शमु न: शंसो अस्तु शं न: पुरन्धि: शमु सन्तु राय।
शं न: सत्यस्य सूयमस्य शंस: शं नो अर्यमा पुरुजातो अस्तु ।।२।।
शं नो धाता शमु धर्ता नो अस्तु शं न उरूची भवतु स्वधाभि:।
शं रोदसी बृहती शं नो अद्रि: शं नो देवानां सुहवानि सन्तु ।।३।।
शं नो अग्निर्ज्योतिरनीको अस्तु शं मित्रावरुणावश्विना शम् ।
शं न: सुकृतां सुकृतानि सन्तु शं न इषिरो अभि वातु वात:।।४।।
शं नो द्यावापृथिवी पूर्वहूतौ शमन्तरिक्षं दृशये नो अस्तु ।
शं न ओषधीर्वनिनो भवन्तु शं नो रजस: पतिरस्तु जिष्णु:।।५।।

शं न इन्द्रो वसुभिर्देवो अस्तु शमादित्येभिर्वरुण: सुशंस:।
शं नो रुद्रो रुद्रेभिर्जलाष: शं नस्त्वष्टा ग्नाभिरिह शृणोतु ।।६।।
शं न: सोमो भवतु ब्रह्म शं न: शं नो ग्रावाण: शमु सन्तु राज्ञा:।
शं न: स्वरूणां मितयो भवन्तु शं न: प्रस्व: शम्वस्तु वेदि ।।७।।
शं न: सूर्य उरुचक्षा उदेतु शं नो भवन्तु प्रदिशश्चतस्र:।
शं न: पर्वता ध्रुवयो भवन्तु शं न: सिन्धव: शमु सन्त्वाप:।।८।।
शं नो अदितिर्भवतु व्रतेभि: शं नो भवन्तु मरुत: स्वर्का:।
शं नो विष्णु: शमु पूषा नो अस्तु शं नप भवित्रं शम्वस्तु वायु:।।९।।
शं नो देव: सविता त्रायमाण: शं नो भवन्तूषसो विभाती:।
शं न: पर्यन्यो भवतु प्रजाभ्य: शं न: क्षेत्रस्य पतिरस्तु शम्भु:।।१०।।

१२-१७

शं न: सत्यस्य पतयो भवन्तु शं नो अर्वन्त: शमु सन्तु गाव:।
शं न ऋभव: सुकृत: सुहस्ता: शं नो भवन्तु पितरो हवेषु ।।१।।
शं नो देवा विश्वेदेवा भवन्तु सं सरस्वती सह धीभिरस्तु ।
शमभिषाच: शमु रातिषाच: शं नो दिव्या: पार्थिवा: शं नो अप्या:।।२।।
शं नो अज एकपाद् देवो अस्तु शमहिर्बुध्न्य: शं समुद्र: ।
शं नो अपां नपात् पेरुरस्तु शं न: पृश्निर्भवतु देवगोपा:।।३।।
आदित्या रुद्रा वसवो जुषन्तामिदं ब्रह्म क्रियमाणं नवीय: ।
शृण्वन्तु नो दिव्या: पार्थिवासो गोजाता उत ये यज्ञियास:।।४।।
ये देवानामृत्विजो यज्ञियासो मनोर्यजत्रा अमृता ऋतज्ञा:।
ते नो रासन्तामुरुगायमद्य यूयं पात स्वस्तिभि: सदा न:।।५।।
तदस्तु मित्रावरुणा तदग्ने शंयोरश्मभ्यमिदमस्तु शस्तम् ।
अशीमहि गातुमुत प्रतिष्ठां नमो दिवे बृहते सादनाय ।।६।।

## १२-१८

अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एष: ।
तस्मै जुहोमि हविषा घृतेन मा देवानां यूयवद्भागधेयम् ।।१।।
युक्तो वह जातवेद: पुरस्तादग्ने विद्धि क्रियमाणं यथेदम् ।
त्वं भिषग् भेषजस्यापि कर्ता त्वया गामश्वं पुरुषं सनेम ।।२।।
तथा त्वमग्ने कृणु जातवेदोऽनेन विद्वान् हविषा यविष्ठ ।
पिशाचो अस्य यतमो जघास यथा सो अस्य परिधिष्पताति।।३।।
योऽस्य दिदेव यतमो जघास यथा स अस्य परिधिष्पताति ।
तथा त्वमग्ने कृणु जातवेदो विश्वेभिर्देवै: सह संविदान: ।।४।।
अक्ष्यौ नि विध्य हृदयं नि विध्य जिह्वां नि तृन्धि प्र दत: शृणीहि ।
पिशाचो अस्य यतमो जघासाग्ने यविष्ठ प्रति तं शृणीहि ।।५।।
यदस्य हृतं विहृतं यत् पराभृतमात्मनो जग्धमुत यत् पिशाचै:।
तदग्ने विद्वान् पुनरा भर त्वं शरीरे प्राणमसुमेरयास्य ।।६।।
अपां त्वा पाने यतमो ददम्भौदने मन्थे यदि वोत लेहे ।
तदात्मना प्रजया पिशाचा वि यातयन्तामगदोऽयमस्तु ।।७।।
क्षीरे त्वा मांसे यतमो ददम्भाकृष्टपच्ये अशने धान्ये य: ।
तदात्मना प्रजया पिशाचा वि यातयन्तामगदोऽयमस्तु ।।८।।
आमे सुपक्वे शवले विपक्वे य इमं पिशाचो अशने ददम्भ।
तमिन्द्रो वाजी वज्रेण हन्तु भिनत्तु सोम: शिरो अस्य धृष्णु:।।९।।
दिवा त्वा नक्तं यतमो ददम्भ क्रव्याद् यातु: शयने पिशाच:।
तदग्ने विद्वान् प्र दह क्षिणीह्यप्येनं धेहि निर्ऋतेरुपस्थे।।१०।।

## १२-१९

सोमस्येन्द्रस्य वरुणस्य राज्ञो विष्णोर्बलेन सवितु: सवेन ।
अग्नेर्होत्रेण प्र णुदे पिशाचान् यविष्ठस्य ब्रह्मणा जातवेदस:।।१।।

क्रव्यादमग्ने रुधिरं पिशाचं मनोहनं जहि जातवेद: सहोभि: ।
श्रद्धेमं ब्रह्म जुषतां दक्षिणायुर्यथा जीवात्यगदो भवति ।।२।।
पुनस्त्वा प्राण: पुनरैत्वायु: पुनश्चक्षु: पुनरैतु श्रोत्रम् ।
अपघ्ना नो दुरितानि विश्वा सतं हिमा: सर्ववीरा मदेम।।३।।
पुनरस्मै मनो धेहि पुनरायु: पुनर्बलम् ।
अपानमस्य प्राणं चाग्ने वर्धय जीवसे ।।४।।
चक्षु: सूर्य पुनर्देहि वात प्राणं समीरय ।
शरीरमस्य मांसान्यग्ने सं भारया त्वम् ।।५।।
समा भर जातवेदो यज्जग्धं यत् पराभृतम् ।
गात्राण्यस्य कल्पय पुनरा प्यायतामयम् ।।६।।
सोमस्येव जातवेदो अंशुरा प्यायतामयम् ।
अग्ने विरप्सिनं मेध्यमयक्ष्मं कृणु जीवसे ।।७।।
सं मा सिञ्चन्तु मरुत: सं पूषा सं बृहस्पति: ।
सं मायमग्नि: सिञ्चतु प्रजया च धनेन च दीर्घमायुष्कृणोतु मे।।८।।
वि मुञ्चामि ब्रह्मणा जातवेदसमग्निं होतारमजरं रथस्पृतम्।
सर्वा देवानां जनिमानि विद्वान् यथाभागं वहतु हव्यमग्नि:।।९।।
ये पुमांसो यातुधाना या स्त्रियो यातुधान्य: ।
बलवदिन्द्रस्य वज्रेणावाचीनानव हन्मि तान् ।।१०।।

१२-२०

यं शपामो य उ न: शपाति यं दिष्मो य उ द्वेषत् पिशाच:।
क्रव्यादमग्ने महता वधेन तमत्रापि प्र दह जातवेद: ।।१।।
य आरेभे यस्य वा घास्यप्सरा य: कृण्वेन संविदो यातुमावान् ।
उलूकयातुं भृमलो यस्य यातुस्तमत्रापि प्र दह जातवेद: ।।२।।

य आददे यस्य वाघासि पित्र्यास्तेन श्वयातुरुत संभिर्धेहिभि:।
य: पताद्रोधनस्याधिदेवनं क्रव्यात् पिशाच: क्रविषस्तितृप्सन्।
उलूकयातुं भृमलो यस्य यातुस्तमत्रापि प्र दह जातवेद: ।।३।।
य: पुरुषेणेयते रथेन क्रव्याद् यातु: पिशुन: पिशाच:।
वैश्वानरेण सयुजा सूर्येण तमत्रापि प्र दह जातवेद:।।४।।
यो नो वलिं मृगयां यश्च न: कृषिं परितिष्ठाद् यतुभिर्यश्च न: शपात्।
अस्ता रुद्र: श्रथत्वायुरस्य तमत्रापि प्र दह यातवेद:।।५।।
मा यातुमान् विदत मृडितारमलोका अस्मै प्रदिशो भवन्तु ।
समेनं तपतां रोदसी उभे तमत्रापि प्र दह यातवेद:।।६।।
ज्योतिष्मतीस्तपना याश्च रोचना प्रत्योषन्तीस्तन्वो यास्ते अग्ने।
ताभिर्मे मर्माण्यभितो ददस्व मा त्वा दभन् यातुधाना नृचक्ष:।।७।।
अपो देवी: पिशाचानामप नह्यन्त्वास्यम् ।
यथेमं ममात्मानमनाधृष्य पुन: पतान् ।।८।।
सदं पुष्पे सदं फले सदमिन्द्राभिरक्षिते ।
सदा पिशाचा म्रियन्तां मैषामुच्छेषि कश्चन ।।९।।
ये पतन्तो यातुधाना दिवानक्तमुपाचरान् ।
रात्री मा तेभ्यो रक्षत्वह्न आत्मानं परि ददे ।।१०।।

१२-२१

इमं बध्नामि ते मणिं दीर्घायुत्वाय तेजसे ।
दर्भं सपत्नजम्भनं द्विषतस्तपनं हृद: ।।१।।
द्विषतस्तापयन् हृद: शत्रूणां तापयन् मन: ।
दुर्हार्द: सर्वास्त्वं दर्भ घर्म इवाभीत् सुतापयन् ।।२।।
घर्म इवाभितपन् दर्भ द्विषतो नितपन् मणे ।
हृद सपत्नानां भिन्धीन्द्र इव विरुजं बलम् ।।३।।

भिन्धि दर्भ सपत्नानां हृदयं द्विषतां मणे ।
उद्यं त्वचमिव भूम्या: शिर एषां वि पातय ।।४।।
भिन्धि दर्भ सपत्नान् मे भिन्धि मे पृतनायत: ।
भिन्धि मे सर्वान् दुर्हार्दो भिन्धि मे द्विषतो मणे ।।५।।
छिन्धि दर्भ सपत्नान् मे छिन्धि मे पृतनायत: ।
छिन्धि मे सर्वान् दुर्हार्दो छिन्धि मे द्विषतो मणे ।।६।।
वृश्च दर्भ सपत्नान् मे वृश्च मे पृतनायत: ।
वृश्च मे सर्वान् दुर्हार्दो वृश्च मे द्विषतो मणे ।।७।।
कृन्त दर्भ सपत्नान् मे कृन्त मे पृतनायत: ।
कृन्त मे सर्वान् दुर्हार्दो कृन्त मे द्विषतो मणे ।।८।।
पिंश दर्भ सपत्नान् मे पिंश मे पृतनायत: ।
पिंश मे सर्वान् दुर्हार्दो पिंश मे द्विषतो मणे ।।९।।
विध्य दर्भ सपत्नान् मे विध्य मे पृतनायत: ।
विध्य मे सर्वान् दुर्हार्दो विध्य मे द्विषतो मणे ।।१०।।

१२-२२

निक्ष दर्भ सपत्नान् मे निक्ष मे पृतनायत: ।
निक्ष मे सर्वान् दुर्हार्दो निक्ष मे द्विषतो मणे ।।१।।
तृन्धि दर्भ सपत्नान् मे तृन्धि मे पृतनायत: ।
तृन्धि मे सर्वान् दुर्हार्दो तृन्धि मे द्विषतो मणे ।।२।।
भङ्धि दर्भ सपत्नान् मे भङ्धि मे पृतनायत: ।
भङ्धि मे सर्वान् दुर्हार्दो भङ्धि मे द्विषतो मणे ।।३।।
मृण दर्भ सपत्नान् मे मृण मे पृतनायत: ।
मृण मे सर्वान् दुर्हार्दो मृण मे द्विषतो मणे ।।४।।
मन्थ दर्भ सपत्नान् मे मन्थ मे पृतनायत: ।
मन्थ मे सर्वान् दुर्हार्दो मन्थ मे द्विषतो मणे ।।५।।

पिण्ढि दर्भ सपत्नान् मे पिण्ढि मे पृतनायत: ।
पिण्ढि मे सर्वान् दुर्हार्दो पिण्ढि मे द्विषतो मणे ।।६।।
ओष दर्भ सपत्नान् मे ओष मे पृतनायत: ।
ओष मे सर्वान् दुर्हार्दो ओष मे द्विषतो मणे ।।७।।
दह दर्भ सपत्नान् मे दह मे पृतनायत: ।
दह मे सर्वान् दुर्हार्दो दह मे द्विषतो मणे ।।८।।
जहि दर्भ सपत्नान् मे जहि मे पृतनायत: ।
जहि मे सर्वान् दुर्हार्दो जहि मे द्विषतो मणे ।।९।।
यत्ते दर्भ जरामृत्यू स ते मर्मसु वर्म ते ।
तेनेमं वर्मिणं कृत्वा सपत्नान् जहि वीर्यै:।।१०।।
शतं ते दर्भ वर्माणि सहस्रं वीर्याणि ते ।
तमस्मै विश्वे त्वां देवा जरसे भर्तवा अदु:।।११।।
त्वामाहुर्देववर्म त्वां दर्भ ब्रह्मणस्पतिम् ।
त्वामिन्द्रस्याहुर्वर्म त्वं राष्ट्राणि रक्षसि ।।१२।।
सपत्नक्षयणं दर्भं द्विषतस्तपनं हृद: ।
मणिं क्षत्रस्य वर्धनं तनूपानं कृणोमि ते ।।१३।।
यत् समुद्रो अभ्यक्रन्दत् पर्यन्यो विद्युता सह ।
ततो हिरण्ययो बिन्दुस्ततो दर्भो अजायत ।।१४।।

*(इति पञ्चदशर्चोनामद्वादशकाण्डे द्वितीयो ऽनुवाक:)*

*इत्यथर्ववेद पैप्पलादसंहितायां पञ्चदशर्चोनामद्वादशकाण्ड:समाप्त:*

# अथ षोडशर्चोनाम त्रयोदशकाण्ड:

## १३-१

अन्तर्हितं मे बृहदन्तरिक्षमन्तर्हिता: पर्वता अग्नयो मे ।
मैषां राध्यभिचार एष प्रत्यगेनान् प्रतिसरेण हन्मि ।।१।।
तप:श्रमावन्तरौ मत् परीतं ब्रह्मयज्ञमन्तरं मद् दधामि ।
मैषां राध्यभिचार एष प्रत्यगेनान् प्रतिसरेण हन्मि ।।२।।
अग्नीषोमावन्तरौ मद् भवाथो दिवं वर्म पृथिवीं च कृण्मे ।
मैषां राध्यभिचार एष प्रत्यगेनान् प्रतिसरेण हन्मि ।।३।।
अन्तर्हितं मे साम प्रस्तुतमन्तर्हित: परमेष्ठी प्रजापति: ।
मैषां राध्यभिचार एष प्रत्यगेनान् प्रतिसरेण हन्मि ।।४।।
अन्तर्हिता सर्पराज्ञी विराण् मे ऽन्तर्हित: पुरुषो मेध्यो मे ।
मैषां राध्यभिचार एष प्रत्यगेनान् प्रतिसरेण हन्मि ।।५।।
अन्तर्हिता मे षडुर्वी: सध्रीचीरन्तर्हिता: साध्या आप्त्या मे ।
मैषां राध्यभिचार एष प्रत्यगेनान् प्रतिसरेण हन्मि ।।६।।
अन्तर्हिता महर्षय: प्रचेतसो ऽन्तर्हित: सूर्यो मातरिश्वा ।
मैषां राध्यभिचार एष प्रत्यगेनान् प्रतिसरेण हन्मि ।।७।।
अन्तर्हिता मे नद्य: स्यन्दमाना अन्तर्हिता ओषधी: पुष्पिणीर्मे ।
मैषां राध्यभिचार एष प्रत्यगेनान् प्रतिसरेण हन्मि ।।८।।
अन्तर्हिता: पशव: कक्ष्या मे ऽन्तर्हितं वयो यत् पतत्रि ।
मैषां राध्यभिचार एष प्रत्यगेनान् प्रतिसरेण हन्मि ।।९।।
अन्तर्हिता म इषवो ब्राह्मणानामन्तर्हिता वनस्पतय: समूला: ।
मैषां राध्यभिचार एष प्रत्यगेनान् प्रतिसरेण हन्मि ।।१०।।

## १३-२

अन्तर्हिता देवतल्पा: पुरो मे ऽन्तर्हिता जगती छन्दसां मे ।
मैषां राध्यभिचार एष प्रत्यगेनान् प्रतिसरेण हन्मि ।।१।।
अन्तर्हिता मे समुद्रा द्वादशा अन्तर्हिता उसषि तारका मे ।
मैषां राध्यभिचार एष प्रत्यगेनान् प्रतिसरेण हन्मि ।।२।।
अन्तर्हिता अग्नयो धिष्ण्या मे ऽन्तर्हिता ऋतव आर्तवा मे ।
मैषां राध्यभिचार एष प्रत्यगेनान् प्रतिसरेण हन्मि ।।३।।
अन्तर्हिता मे प्रदिशश्चतस्रो ऽन्तर्भूतमुत भव्यं दधेऽहम् ।
मैषां राध्यभिचार एष प्रत्यगेनान् प्रतिसरेण हन्मि ।।४।।
हन्मि तेऽहं कृतं हविर्यो मे घोरमचीक्लृप: ।
अपाञ्चौ त उभौ बाहू अपि नह्याम्यास्यम् ।।५।।
अपि नह्यामि ते बाहू अपि नह्याम्यास्यम् ।
अग्नेर्देवस्य मन्युना तेन तेऽवधिषं हविर्यो मे घोरमचीक्लृप:।।६।।

## १३-३

उदित: शतयोजनमिन्द्रो वर्तयते रथम् ।
सायकं क्षुरवर्तमानमहेर्जातानि जम्भयन् ।।१।।
दृढास आसन्नहयो हता उदरसर्पिण: ।
पुच्छमिद्रुष्यायन्त श्वापिण्डमदन्निव ।।२।।
पापक पापरूपक किं मे सखायमातुद: ।
न मामपश्य आगतं सतीनं विषदूषणम् ।।३।।
अहिजम्भाश्चरामसि मुष्कावरुहो गवामिव ।
पीलू उप स्वजं हन्म उपस्तम्भे पृदाक्वम् ।।४।।
ये के चेदमुपासौषुर्वातस्येव पृथग् यत: ।
अङ्गो नु सर्वे ब्रूताहेयमरसं विषम् ।।५।।

त्रिन्धिसि त निषदनं त्रिपुषि पाप ते गृहः ।
अच्छन्नं त्वा वातो हन्त्यच्छन्नमभि वर्षति ।।६।।
नाकुलेन भेषजेन तेनाहीन् जम्भयामसि ।
मश्चतुर्नाम वृक्षकः स एनान् अरसान् अकः ।।७।।
असिताहेरहं विषमुभयोः शितस्य च ।
अभिक्रन्दस्य या रोपीस्ता इतोऽप नयामसि ।।८।।
इदं पैद्वो अजायतेदमस्य पिपर्तनम् ।
इदं कनिक्रदो मृगो विषमेति पराभवन् ।।९।।
विषूचीना वाता वान्तु विष्वग्वर्षन्तु वृष्टयः ।
विष्वग्विष प्र मेह त्वं शतधार इवावटः ।।१०।।

१३-४

निरितो हरितस्रजमिन्द्रो वर्तयते रथम् ।
तेनापिलिह्व इयते निपिसंनहिनामनः ।।१।।
येनेन्द्र दस्यूनमृणोर्येन वृत्रं पराभिनः ।
तेना शतक्रतो त्वमहेर्जातानि जम्भय ।।२।।
प्रत्यमोदत पृथिवी प्रति द्यौः प्रति सूर्यः ।
पैद्वो यदश्वमाता क्रन्देनाहीनपावपत् ।।३।।
यदा पैद्वोऽश्वमाता क्रन्देनाहीनपावपत् ।
रज्जू ष्म दत्वती शेरे पूयन्तीं पृथिवीमनु ।।४।।
नापो जीर्यन्ति नामृतं नेन्द्राणी अविधवाभवत् ।
न त्वामास्तेभिषद्विषमश्मानमिव सायकम् ।।५।।
इन्द्राग्नी मित्रावरुणा त्वष्टारमदितिं भगम् ।
हुवे ऽहमर्वन्तं पैद्वं म्यामेयं पुरुषो रिषत् ।।६।।

सद्यो जातोऽकनिक्रदत् सोल्वो व्यधूनुत ।
क्रन्देनाश्वस्य वाजिनोऽहन्यन्ताहय: पृथक् ।।७।।

*(इति षोडशर्चोनामत्रयोदशकाण्डे प्रथमो ऽनुवाक:)*

१३-५

इमं स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया ।
भद्रा हि न: प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव ।।१।।
यस्मै त्वमायजसे स साधत्यनर्वा क्षेति दधते सुवीर्यम् ।
स तूताव नैनमश्नोत्यंहतिरग्ने सख्ये मा रिषामा वयं तव ।।२।।
भरामेध्मं कृणवामा हवींषि ते चितयन्त: पर्वणापर्वणा वयम् ।
जीवातवे प्रतरं साधया धियो ऽग्ने सख्ये मा रिषामा वयं तव ।।३।।
शकेम त्वा समिधं साधया धियस्त्वे देवा हविरदन्त्याहुतम् ।
त्वमादित्याङ आ वह तान् ह्युष्मस्यग्ने सख्ये मा रिषामा वयं तव ।।४।।
त्वमध्वर्युरुत होतासि पूर्व्य: प्रशास्ता पोता जनुषा पुरोहित: ।
विश्वा विद्वाङ आर्त्विज्या धिर पुष्यस्यग्ने सख्ये मा रिषामा वयं तव।।५।।
दिशां गोपा अस्य चरन्ति जन्तवो द्विपाच्च यदुत चतुष्पदक्तुभि: ।
चित्र: प्रकेत उषसो महाङ अस्यग्ने सख्ये मा रिषामा वयं तव ।।६।।
यो विश्वत: सुप्रतीक: सदृङ्ङसि दूरे चित् सन् तड़िदिवाति रोचसे ।
रात्र्याश्चिदन्धो अति देव पश्यस्यग्ने सख्ये मा रिषामा वयं तव ।।७।।
पूर्वो देवा भवतु सुन्वतो रथोऽस्माकं शंसो अभ्यस्तु दूढ्य: ।
तदा जानीतोत पुष्यता वचोऽग्ने सख्ये मा रिषामा वयं तव।।८।।
वधैर्दु:शंसाङ् अप दूढ्यो जहि दूरे वा ये अन्ति वा के चिदत्रिण:।
अथा यज्ञाय गृणते सुगं कृध्यग्ने सख्ये मा रिषामा वयं तव ।।९।।
यदयुक्था अरुषा रोहिता रथे वातजूता वृषभस्येव ते रव: ।
आदिन्वसि वनिनो धूमकेतुनाग्ने सख्ये मा रिषामा वयं तव ।।१०।।

१३-६

अध स्वनादुत विभ्युः पतत्रिणो द्रप्सा यत्ते यवसादो व्यस्थिरन् ।
सुगं तत्ते तावकेभ्यो रथेभ्यो ऽग्ने सख्ये मा रिषामा वयं तव।।१।।
त्वं मित्रस्य वरुणस्य धास्यवयातां मरुतां हेड़ो अद्भुतः ।
मृडा सु नो भूत्वेषां मनः पुनरग्ने सख्ये मा रिषामा वयं तव।।२।।
देवो दवानामसि मित्रो अद्भुतो वसुर्वसूनामसि चारुरध्वरे ।
शर्मन् स्याम तव सप्रथस्तनऽग्ने सख्ये मा रिषामा वयं तव।।३।।
तत्ते भद्रं यत् समिद्धः स्वे दमे सोमाहुतो जरसे मृडयत्तमः ।
दधासि रत्नं द्रविणं च दाशुषे ऽग्ने सख्ये मा रिषामा वयं तव ।।४।।
यस्मै त्वं सुद्रविणो ददाशो ऽनागास्त्वमदिते सर्वताता ।
यं भद्रेण शवसा चोदयासि प्रजावन्तो राधसा ते स्याम ।।५।।
स त्वमग्ने सौभगत्वस्य विद्वानस्माकमायुः प्र तिरेह देव ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः।।६।।

१३-७

किमिन्द्रस्य परिहितं किमग्नेः किं विष्णोस्त्वष्टुर्वरुणस्य वासः।
बृहस्पतेरुत सोमस्य राज्ञः किं वसाना मरुतो वर्षयन्तु ।।१।।
धातूरुद्रस्य किं वायोर्वाजिनां वसनं महत् ।
किं पूषा ब्रह्मणस्पतिर्विश्वे देवाश्च बिभ्रति ।।२।।
किं देवानां परिधानं समानं यस्मिन्नेषां सांमनस्यं बभूव ।
क्व रात्री नि विशते क्वाहः क्वेदमभ्रं भवति यत्समेति व्येति च।।३।।
कतमेनायो दिवमुद्वहन्ति कः समेनोदयनेन नेता ।
वातस्य त्वा विद्युतां स्तनयित्नुरपां पृच्छाम्ययनान्यग्नेः।।४।।
पृच्छामि त्वा पृषतीं रोहिणीं च वत्सं पृच्छामि सहमातरं त्वा ।
इन्द्रं त्वानु पृच्छामि साक्षात् सभानां च सभापतिम् ।।५।।

को वयसामदधान्नामानि क: पशूनां क: सर्पाणां देवजना य आसन् ।
को ऽस्य जन्तोरदधाद् ब्रूहि नस्तत् ।।६।।
कति रोहा: स्वरा रोहयन्ति येभी रोहितो दिवमारुरोह ।
राष्ट्रभृत: क्षत्रभृतो वसुभृतो वसुदानवो वसुयव: ।।७।।
कश्चतुर्धा वि क्रमते महित्वा कं रक्षन्ति कवयोऽप्रमादम् ।
पुरुषं त्वानु पृच्छामि साक्षान्मृत्योरङ्गानि कति तानि वेत्थ ।।८।।
यं सिषेव वृषभश्चर्षणीनामिन्द्रो वज्रमहिना स्पर्धमान: ।
येन वृत्रं मघवा संपिपेश तं न: प्र ब्रूहि यदि तं प्रवेत्थ ।।९।।
क: पर्वतानामदधान्नामानि को वनस्पतीनामदधादोषधीनाम् ।
पृच्छामि त्वा भुवनस्य नाभिं गां त्वा पृच्छामि कतमानि साक्षात् ।।१०।।

१३-८

देवतल्पा देवकशा: क्वेह तान्न: प्र ब्रूहि यदि तान् प्रवेत्थ ।
पृच्छामि त्वा गरगिर: कियन्तो येभ्योऽग्निर्हव्यं वहति प्रजानन्
हुतं मर्त्यैरमृतोमतर्त्येभ्य: ।।१।।
स्वप्ने य एकस्तमसा सहैत्यङ्गानि गृह्णन् पुरुषस्य चक्षु: ।
स प्रातरेति तमसा पुन: सहाज्योतिरेति क्व सददेति ।।२।।
व्रतपतिमधिपतिं मधुकृता मधुपतिम् ।
देवांस्त्वा सर्वान् पृच्छाम्यहुतादश्च ते कति ।।३।।
को ऽन्तरिक्षात् परि पश्यतीदं यस्मादग्र इन्द्रियं संबभूव ।
महत् स कस्मादभयं बिभाय
कस्ययुक्तस्यास्यास्त्रक्वाल्लोहितं परापतत्तत् क्वेह ।।४।।
इत्थमेके प्र व्रजन्तीत्थमेके
दक्षिणा: प्रत्यञ्च उदञ्च: प्राञ्चोऽभि व्रजन्त्येके ।
तेषां सर्वेषामिह सङ्गति: साकं स एको भूतश्चरति प्रजानन् ।।५।।

१३-९

मरीचिरासीत्सा मनसः समभवत् ।
सा प्रावीयत सा गर्भमधत्त ।
स गर्भो ऽवर्धत स वृद्धो ऽब्रवीज्जाया इति ।
तस्यै प्रजापतिरजुहोत्स्वधिष्ठाना चेति स्वधिचरणा चेति।
प्रजापते स्वसुर्ज्यो कपाले वि जिहीथां मामासन्ताप्तं
महान्तं लोकमभिपश्यमाने ।
सो ऽजायत तस्य जातस्य द्यावापृथिवी पार्श्वे आस्तां
समुद्रौ कुक्षी सूर्याचन्द्रमसावक्षी विराट् शिरः ।
तस्माज्जातात् सर्वे पाप्मानो विजन्ते सर्वे अस्मात्
पाप्मानो विजन्ते य एवं वेद ।।१।।

*(इति षोडशर्चोनामत्रयोदशकाण्डे द्वितीयो ऽनुवाक:)*

*इत्यथर्ववेद पैप्पलाद संहितायां षोडशर्चोनामत्रयोदशकाण्ड:समाप्त:*

# अथ सप्तदशर्चोनाम चतुर्दशकाण्ड:

## १४-१

एन्द्रो बाहुभ्यामभरच्चिकित्वानपो देवीर्वरुणाय प्रजानन् ।
तमादित्या अभ्यसिञ्चन्त सर्वे राजानमुग्रं बृहते रणाय
ता न आपो राजसूया अवन्तु ।।१।।
हिरण्यवर्णा: शुचय: पावका यासु जात: कश्यपो यास्विन्द्र: ।
या आग्निं गर्भं दधिरे सुवर्णास्ता न आपो राजसूया अवन्तु ।।२।।
यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यज्जनानाम् ।
या आग्निं गर्भं दधिरे सुवर्णास्ता न आपो राजसूया अवन्तु ।।३।।
यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति ।
या आग्निं गर्भं दधिरे सुवर्णास्ता न आपो राजसूया अवन्तु ।।४।।
शिवेन मा चक्षुषा पश्यताप: शिवया तन्वोप स्पृशत त्वचं मे ।
घृतश्चुत: शुचयो या: पावकास्ता न आपो राजसूया अवन्तु ।।५।।
अपो देवीर्मधुमतीरगृह्णतोर्जस्वती राजसूया मयोभुव: ।
याभिर्मित्रावरुणावभ्यषिञ्चन् ता न आपो राजसूया अवन्तु ।।६।।
वरुणेन प्रेषिता यन्ति शुभ्रा उत्सं देवीर्दधते या हिरण्ययम् ।
या ब्रह्मणा पुनते संविदानास्ता न आपो राजसूया अवन्तु ।।७।।
अप: समुद्राद्दिवमुद्वहन्ति दिवस्पृथिवीमभि या: सृजन्ति ।
याभिरीशाना मरुतश्चरन्ति ता न आपो राजसूया अवन्तु ।।८।।
या अमृतं बिभ्रति या मधु प्रियं या अगृभ्णन् ऋषयो देवसख्ये ।
याभिरिन्द्रमत्यनयन्नरातीस्ता न आपो राजसूया अवन्तु ।।९।।
या जीवधन्या धनमुत्पृणन्ति देवायते दाशुषे मर्त्याय ।
यासां पयो अक्षितमक्षितानां ता न आपो राजसूया अवन्तु।।१०।।

१४-२

हिरण्यौपशा ध्वजनी: पुनाना या: समुद्रमभ्यर्चन्ति धेनव: ।
या: पर्जन्यो वहत्यन्तरिक्षे ता न आपो राजसूया अवन्तु।।१।।
रथन्तरे बृहति गीयमाने क्षत्रं जिन्वन्ति प्र तिरन्त्यायु: ।
याभिस्त्रयान् वाजिनो वाजयन्ति ता न आपो राजसूया अवन्तु।।२।।
याभि: सह वृत्रहा सोममिन्द्रो वसोरीशानो अपिबत् सुतस्य ।
या: सप्त ऋषय:कवय: पुनन्ति ता न आपो राजसूया अवन्तु।।३।।
सप्त ऋषयो भरतमभ्यषिञ्चन्नास्मिन् राष्ट्रमदधुर्दक्षिणावत् ।
प्रजायै मनुमसुमवन्त देवास्ता न आपो राजसूया अवन्तु।।४।।
याभिर्यज्ञं प्राञ्चमुक्षयन्ति धीरा याभि: सोमं मधुपृचं पुनन्ति ।
याभिरिदं जीवति विश्वमेजत्ता न आपो राजसूया अवन्तु।।५।।
यासां स्तोका मधुमया वभूवुर्घृतं संज्ञानं मधु पिन्वते या:।
या: सोम आप: प्रणयन्ति ब्रह्मणा ता न आपो राजसूया अवन्तु।।६।।
यासां पदोराज्यं वाजिनं तु सोमस्य प्रसवमनु या: पवन्ते ।
अन्तर्वतीस्तरुणवत्सा घृताचीस्ता न आपो राजसूया अवन्तु।।७।।
अजीजनन्त मतय: स्वर्विद आ ब्रह्मणा सूक्तधेयान्यगु:।
असूषुत राजसूया: पयांसि प्रासावीद्देव: सविता भुवनानि विश्वा।।८।।
सोमो राजा भवो राजा पशुपति: पशूनां वरुणो धृतव्रत:।
ये राजसूये असूयन्त देवास्ते ते क्षत्रं दधत्त्वायुरोज: ।।९।।
आस्थादुदस्थादजनिष्ट विप्रो मृधो व्यास्थदशसीत बाहू ।
आरे अवाधिष्ट निर्ऋतिं पराचै: समपृक्त रश्मिभि: सूर्यश्च ।।१०।।

१४-३

अपश्यं त्वावरोहन्तं दिवित: पृथिवीमव ।
अपश्यमस्यन्तं रुद्रं नीलग्रीवं शिखण्डिनम् ।।१।।

दिव उग्रो ऽवारुक्षत् प्रत्यष्ठाद् भूम्यामधि ।
जनास: पश्यतेमं नीलग्रीवं विलोहितम् ।।२।।
एष ऐत्यवीरहा रुद्रो जलाषभेषजी ।
वि ते क्षेपमनीनशद्वातीकारो व्येतु ते ।।३।।
नमस्ते भव भामाय नमस्ते भव मन्यवे ।
नमस्ते अस्तु बाहुभ्यामुतो त इषवे नम: ।।४।।
यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे ।
शिवां गिरिश तां कृणु मा हिंसी: पुरुषान् मम ।।५।।
शिवेन वचसा त्वा गिरिशाच्छा वदामसि ।
यथा न: सर्वमिज्जगदयक्ष्मं सुमनो असत् ।।६।।
या त इषु: शिवतमा शिवं बभूव ते धनु: ।
शिवा शरव्या या तव तया नो मृड़ जीवसे ।।७।।
या ते रुद्र शिवा तनूरघोरापापकाशिनी ।
तया नस्तन्वा शन्तमया गिरिशन्ताभि चाकश ।।८।।
असौ यस्ताम्रो अरुण उत बभ्रुर्विलोहित ।
ये चेमे अभितो रुद्रा दिक्षु श्रिता:सहस्रशो ऽवैषां हेड़ ईमहे।।९।।
अदृशन् त्वावरोहन्तं नीलग्रीवं विलोहितम् ।
उत त्वा गोपा अदृशन्नुत त्वोदहार्य: ।
उतो त्वा विश्वा भूतानि तस्मै दृष्टाय ते नम:।।१०।।

१४-४

नमो ऽस्तु नीलशिखण्डाय सहस्राक्षाय वाजिने ।
अथो ये अस्य सत्वानस्तेभ्यो ऽहमकरं नम: ।।१।।
नमांसि त आयुधायानातताय धृष्णवे ।
उभाभ्यामकरं नमो बाहुभ्यां तव धन्वने ।।२।।

प्र मुञ्च धन्वनस्पर्युभयोरात्न्योर्ज्याम् ।
याश्च ते हस्त इषवः परा ता भगवो वप ।।३।।
अवतत्य धनुस्त्वं सहस्राक्ष शतेषुधे ।
निशीर्य शल्यानां मुखा शिवो नः शम्भुरा भव ।।४।।
विज्यं धनुः शिखण्डिनो विशल्यो वणवाङ उत ।
अनेशन्नस्येषवः शिवो अस्य निषङ्गतिः ।।५।।
परि ते धन्वनो हेतिरस्मान् वृणक्तु विश्वतः ।
अथो य इषुधिस्तवारे अस्मन्नि धेहि तम् ।।६।।
या ते हेतिर्मिढुष्टम हस्ते बभूव ते धनुः ।
तया त्वं विश्वतो अस्मनयक्ष्मया परि भुज ।।७।।

१४-५

सुपार्श्वा कामदुघा न आगञ्छतौदना पयसा पिन्वमाना ।
ऊर्जं दुहाना अनपस्फुरन्ती यजमानस्य प्रतिरन्त्यायुः ।।१।।
गृभ्णामि मेध्यामुशतीं स्वस्तय ऊर्जस्वतीमनमीवां स्वाध्याम् ।
विश्व लोको मम देवेष्वस्तु शतौदनां श्रद्दधानः पचामि ।।२।।
बधान देवीमभि धेहि भुञ्जतीं शतौदनां कामदुघा ह्येषा ।
मैनां हिंसीरश्मना जहषाणोऽप्येतु देवाङ अति गच्छति द्विषः।।३।।
आ रभस्व ब्रह्मणा वैश्वदेवीं शतौदनां शतपाप्मानो अस्याः ।
समर्पयन्नश्मना पर्वतेन स्वर्गं लोकमधि रोहयैनम् ।।४।।
धृष्णुह्येनां विकृता विकृन्तन्नपघ्नंश्चर्मेरया सं सृजैनाम् ।
विराज दुहितेरया समक्ता कामंकामं यजमानाय दुहाम् ।।५।।
यथापरु विशसन्नाति मंस्थाः कृणुष्वामेनावधेयान् पृथक् ।
अगन् देवान् मानुषी या पुराभूच्छतौदना पुरुरूपा सुवर्णा ।।६।।

द्विपाद् द्विहस्त: पुरुषो महदमो वनस्पतिं बिभर्ति सायकाग्रम् ।
तेन परूंषि प्रविद्वानघ्न्याया: शतौदनां देवीं शतधा व्यस्य ।।७।।
एतं ब्रध्नं चर्मण: कृन्त साधु तमु प्रमाय शतधा व्यस्य ।
समुत्सृजन्नवधानानि सर्वा रायस्पोषं यजमानाय धेहि ।।८।।
ऋचा कुम्भीमध्यग्नौ श्रयामि भूम्यां त्वा भूमिमधि धारयामि।
अपो मासं बिभ्रती मा व्यथिष्ठा मा त्वा वधिषुर्मेनिभि: पिशाचा: ।।९।।
ऊर्ध्व: प्रेहि मा सं विक्था व्यस्य रजो अन्तरम् ।
रक्षांसि सर्वा तीर्त्वाथा रोह दिवं त्वम् ।।१०।।

## १४-६

दिवं प्रेहि शतौदने सहस्रस्यायनं भव ।
अयुतं प्रयुतं भवाक्षितिर्भवतात्त्वं स्वर्गं लोकमा रुह: ।।१।।
शतौदनां शतधा भक्षयन्ति शतं रोहान् रोहति यो ददाति ।
वामदेव्यं नौधसमस्या: पक्षौ तृतीये नाके अधि विष्टपि श्रिता।।२।।
शतौदनां शतधा कल्पमाना शतं रूपाणि कृणुते स्वर्यती ।
सा नो देवी सुहवा शर्म यच्छत्वथो मृडातीदृशे ।।३।।
शतौदना द्वादशाहेन संमिता शतं पृष्ठानि ससृजे स्वर्यती ।
सर्वान् यज्ञान् परियती परस्तात् सा दातारं रायस्पोषे दधातु।।४।।
अभि प्रेहि शतौदन ईजानान् सोमसत्वन: ।
यज्ञांस्त्वं सर्वानाप्त्वा कामप्रस्यायनं भव ।।५।।
अभि प्रेहि शतौदने यज्ञेनायज्वनस्तर ।
आ देवयूनरूरुहो यत्रादस्त्रिदिवं दिव: ।।६।।
इरापदी प्रथमा शतौदना सत्यं ह मध्यममृतं शिरस्तव ।
उभे देवी रोदसी आ पृणासि ।।७।।

ऋतं ह श्रोणी उत सक्थौ तवौजो ह बाहू उत तद्बलाय कम्।
अनुष्टु जठरमादु पार्श्वे सर्वाल्लोकां छतौदना समाप ।।८।।
चक्षुष्मती प्रथमा शतौदना सूर्यो ह चक्षुरुत चन्द्रमास्तव ।
विश्वैर्देवैर्ऋतुभि: संविदाना सा दातारं तृप्त्या तर्पयासि ।।९।।
शतं पयांसि शतमस्या वत्सा: शतधा पक्वां वि भजन्त्येनाम् ।
सप्त लोका दिव्यार्पिता ये तां जिगेथ प्रथमा शतौदने।।१०।।

१४-७

सहस्रेण शतमाना यदेषि लोकां जिगेथ प्रथमा शतौदने ।
सर्ववेदसमुत वाजपेयं सर्वाल्लोकां छतौदना समाप ।।१।।
इन्द्र: पपात प्रथम: शतौदनां सप्तऋषिभ्य: सुमनस्यमान:।
तयासुराणां बलमोज आ ददे तया रुरोह विष्टपो देवलोकान्।।२।।
विश्वामित्रोऽयं जमदग्निरत्रिर्भरद्वाजो गोतमोऽयं वसिष्ठ: ।
इदं पक्वं कश्यपसप्तमा: प्राश्नन्तु प्रथमा: शतौदनाम् ।।३।।
ज्योतिष्मती प्रथमा शतौदना त्रीणि ज्योतींषि कृणुते स्वर्यती ।
तां दातार उपजीवन्ति यत्र तत्र देवै: सधमादं मदन्ति ।।४।।
छन्द:पक्षा बृहती शतौदना त्रीणि छन्दांसि ससृजे स्वर्यती ।
ऋतूनामधिराजं संवत्सरं पतिमस्या विन्दन् ।।५।।
अतिक्रम्याग्निष्टोममतिरात्रं शतौदने ।
यज्ञांस्त्वं सर्वानाप्त्वा चित्यमग्निं व्यश्नुहि ।।६।।
अश्वमेध्यमतिक्रम्य द्वादशाहं शतौदने ।
त्रिरात्रं साह्नमाप्त्वा वाजपेयेन कल्पते ।।७।।
ये सहस्रैरीजाना अग्निहोत्रहुतश्च ये ।
यज्ञैर्ये सर्वैरीजानास्तान आप्नोति शतौदना ।।८।।

शं ते परूंषि सुभगे दधामि शं ते मांसान्यत्तथा भवन्ति ।
अस्थि यत्ते शमिता शशार तत्ते त्वष्टाविहतं निष्कृणोतु ॥९॥
ये यज्ञेन जिता लोका या नु च्छन्दांसि भेजिरे ।
सर्वांस्तांल्लोकानाप्नोति यो ददाति शतौदनाम् ॥१०॥

१४-८

इषिरा योषा युवतिर्दमूना रात्री देवस्य सवितुर्भगस्य ।
अश्वक्षता सुहवा संभृतश्रीरा पप्रौ द्यावापृथिवी महित्वा ॥१॥
अव विश्वान्यरुहद् गभीरोद्वर्षिष्ठमरुहदश्रमिष्ठा ।
उशती रात्र्यनुसानु भद्राद्वि तिष्ठते मित्र इव स्वधाभिः ॥२॥
नर्ये वन्द्ये सुभगे सुजात आ त्वागन् रात्रि सुमना इह स्याम् ।
अस्मांस्त्रायस्व नर्याणि जाताश्व्या यानि गव्यानि पुष्टा ॥३॥
सिंहस्य रात्र्युशती पिशस्य व्याघ्रस्य द्वीपिनो वर्च आ ददे ।
अश्वस्य ब्रध्नं पुरुषस्य मायं पुरु रूपाणि कृणुषे विभाती ॥४॥
शिवां रात्रिमह्नि सूर्यं च हिमस्य माता सुहवा नो अस्तु ।
अस्य स्तोमस्य सुभगे नि बोध येन त्वा वन्दे विश्वासु दिक्षु ॥५॥
स्तोमस्य नो विभावरि रात्रि राजेव जोषसै ।
असाम सर्ववीरा भवाम सर्ववेदसो व्युच्छन्तीरनूषसः ॥६॥
शम्या ह नाम दधिषे मम दिप्सन्ति ये धना ।
तात्रीहि तानसदपाथ स्तेनो न विद्यतेऽथ रिपुर्न विद्यते ॥७॥
भद्रासि रात्रि चमसो न पिष्टो विश्वं गोरूपं युवतिर्बिभर्षि ।
चक्षुष्मती मे मृषती वपूंषि प्रदित्थां दिव्यां रुक्मा ङ अमुक्थाः ॥८॥
यो अद्य स्तेन आयत्यघायुर्मृत्यो रिपुः ।
रात्री तस्य प्रतीत्य प्र ग्रीवा प्र शिरो हनत् ॥९॥

प्र पादौ न यथायति प्र हस्तौ न यथाशिषत् ।
यो मलिम्लरुपायति स संपिष्टो अपायति ।
अपायति स्वपायति शुष्के स्थाणावपायत ।।१०।।

१४-९

अन्धं रात्रि तिष्ठधूममशीर्षाणमहिं कृणु ।
अक्षौ वृकस्य निर्जह्या स्तेनं द्रुपदे जहि ।।१।।
ये ते रत्र्यनड्वाहस्तीक्ष्णशृङ्गः स्वाशवः ।
तेभिर्नो अद्य पारयाति दुर्गाणि विश्वहा ।।२।।
रात्रिंरात्रिमरिष्यन्तस्तरेम तन्वा वयम् ।
गम्भीरमप्लवा इव न तरेयुररातयः ।।३।।
यथा शाम्याकः प्रपतन् प्रेदिवान्नानुविद्यते ।
एवा रात्रि प्र पातय यो अस्मा ङ अभ्यघायति ।।४।।
अप स्तेनं वासोमथं गोअजमुत तस्करम् ।
अथो यो अर्वतः शिरोऽभिधाय निनीषति ।।५।।
यदद्य रात्रि सुभगे विभजन्त्ययो वसु ।
यदेह्यस्मान् भ्राजयाथेदन्यानुपायसि ।।६।।
उषसे नः परि धेहि सर्वान् रात्र्यनागसः ।
उषा नो अह्न आ भजादहस्तुभ्यं विभावरि ।।७।।

*(इति सप्तदशर्चोनामचतुर्दशकाण्डे तृतीयो ऽनुवाकः)*

*इत्यथर्ववेद पैप्पलाद शाखा संहितायां सप्तदशर्चोनाम चतुर्दशकाण्डः समाप्तः*

# अथ अष्टादशर्चोनाम पञ्चदशकाण्डः

१५-१

सम्यन्दिग्भ्यः पवते सं स्वर्विन्मधोरतो माधवः पात्वस्मान् ।
अग्निर्देवो दुष्टरीतुरदाभ्य इदं क्षत्रं रक्षतु पात्वस्मान् ।।१।।
रथन्तरं सामभिः पात्वस्मान् गायत्रेण च्छन्दसा विश्वरूपम् ।
द्वादशा इष्टय स्तोमो अह्नां समुद्रो वाच इदमोजः पिपर्तु ।।२।।
उग्रा दिशामभिभूतिर्वयधाः शुचिः शुक्रे अहन्योजस्ये ।
इन्द्राधिपतिः पिपृतादतो नो मयि क्षत्रं विश्वतो धारयेदम् ।।३।।
बृहद्राष्ट्रं क्षत्रभृद्वृद्धवृष्ण्यं त्रिष्टुभौजः शुभितमुग्रवीरम् ।
इन्द्र स्तोमैः पञ्चदशेन वर्च इदं वातेन सगरेण रक्षतु ।।४।।
प्राची दिशां सहयशा यशस्वती विश्वे देवाः प्रावृषाह्नां स्वर्वती ।
इदं क्षत्रं दुष्टरमस्त्वोजो अनाधृष्टं सहस्वं सहस्वत् ।।५।।
वैरूपे सामन्यह तच्छकेयं जगत्यैनद्विक्ष्वा वेशयामि ।
विश्वे देवाः सप्तदशेन वर्चमिदं क्षत्रं सलिलावतमुग्रम् ।।६।।
धर्त्री दिशां क्षत्रमिदं दाधर्तूपस्थाशानां मित्रवदस्त्वोजः ।
मित्रावरुणा शरदाह्ना चिकित्नू अस्मै क्षत्राय महि शर्म यच्छतम् ।।७।।
वैराजे सामन्यधि मे मनीषानुष्टुभा संभृतं वीर्यं सह ।
इदं क्षत्रं मित्रवदार्द्रदान्वोजा मित्रावरुणा रक्षतमाधिपत्ये ।।८।।
सम्राड् दिशां सहसाम्नी सहस्वत्यृतुर्हेमन्तो विष्टया नः पिपर्तु ।
ओषजातां बृहती तु शक्वरीमं यज्ञमवतां नो घृताची ।।९।।
स्वर्वती सुदुघा नः पयस्वती दिशां देव्यवतु नो घृताची ।
त्वं गोपाः पुरएतोत पश्चाद् बृहस्पते याम्यां युङ्धि वाचम् ।।१०।।

१५-२

स्तोमैकविंशे भुवनस्य पत्नि विवस्वग्वाते अभि नो गृणीहि ।
घृतवती सवितराधिपत्ये पयस्वती रन्तिराशा नो अस्तु ।।१।।
ऊर्ध्वा दिशां रन्तिराशौषधीनां संवत्सरेण सविता नो अह्ना ।
रेवत्साम्नां पङ्क्तिश्छन्दसामजातशत्रु: स्योना नो अस्तु ।।२।।
विष्टम्भो दिवो धरुण: पृथिव्या अस्येशाना जगतो विष्णुपत्नी ।
विश्वव्यचा इषयन्ती सुहुति: स्योना नो अस्त्वदितेरुपस्थे ।।३।।
ध्रुवा दिशां विष्णुपत्न्यघोरास्येशाना सहसो या मनोता ।
बृहस्पतिर्मातरिश्वोत वायु: सन्धाना वाता अभि नो गृणन्तु ।।४।।
यो न: पिता जनिता यो विधर्ता यो न: सतो अभ्या सज्जजान ।
स आशिषा द्रविणमिच्छमान: प्रथमच्छदो वर आ विवेश ।।५।।
अभ्या वर्तस्व पृथिवी यज्ञेन पयसा सह ।
अपान्तो अग्निरिषितोऽव रोहतु ।।६।।
यदग्ने चन्द्रं यत् पूतं यच्छुक्रं यच्च यज्ञियम् ।
तद् देवेभ्यो भरामसि ।।७।।
इषमूर्जमहमत आदि यज्ञस्य योनौ महिषस्य धामन् ।
आ नो गोषु विशस्त्वा प्रजायां जहामि सेदिमनिराममीवाम् ।।८।।

१५-३

आयुषोऽसि प्रतरणं विप्रं भेषजमुच्यसे ।
तदाञ्जन त्वं शन्तातेसि मायोभवं कृतम् ।।१।।
यो हरिमा जायान्यो अङ्गभेदो विसल्पक: ।
सर्वं ते यक्ष्ममङ्गेभ्यो बहिर्निर्हन्त्वाञ्जनम् ।।२।।
आञ्जनं पृथिव्यां जातं भद्रं पुरुषजीवनम् ।
कृणोत्वप्रमायकं रथजूतिमनागसम् ।।३।।

प्राण प्राणं त्रायस्वासो असवे मृड ।
निर्ऋते निर्ऋत्या न: पाशेभ्यो मुञ्च ।।४।।
सिन्धोगर्भो ऽसि विद्युतां पुष्पम् ।
वात: प्राण: सूर्यश्चक्षुर्दिवस्पय: ।।५।।
देवाञ्जनं त्रैककुदं परि मा पाहि विश्वत: ।
न त्वा तरन्त्योषधयो बाह्या: पर्वतीया उत ।।६।।
वीदं मध्यमवासृजद्रक्षोहामीवचातन: ।
अमीवा: सर्वाश्चातयन्नाशयदभिभा इत ।।७।।
बह्विदं राजन् वरुणानृतमाह पुरुष: ।
तस्मात् सहस्रवीर्य मुञ्च न: पर्यंहस: ।।८।।
यदापो अघ्न्या इति वरुणेति यदूचिम ।
तस्मात् सहस्रवीर्य मुञ्च न: पर्यंहस: ।।९।।
मित्रश्च त्वा वरुणश्चानुप्रेयतुराञ्जन ।
तौ त्वानुगत्य दूरं भोगाय पुनरोहतु ।।१०।।

१५-४

ऋणादृणमिव सं नय कृत्यां कृत्याकृतो गृहम् ।
चक्षुर्मन्त्रस्य दुर्हार्द: पृष्टीरपि शृणाञ्जन ।।१।।
यदस्मासु दुष्वप्न्यं यद् गोषु यच्च नो गृहे ।
अमामगत्यस्त दुर्हार्द: प्रिय प्रति मुञ्चताम् ।।२।।
अपामूर्ज अतसो वावृधानमग्नेर्जातमधि जातवेदस: ।
चतुर्वीरं पर्वतीयं यदाञ्जनं दिश: प्रदिश: करदिच्छिवास्ते ।।३।।
चतुर्वीरं बध्यत आञ्जनं ते सर्वा दिशो अभयास्ते भवन्तु ।
ध्रुवस्तिष्ठाधि सवितेव वार्य इमा विशो अभि हरन्तु ते बलिम्।।४।।

आङ्क्ष्वैकं मणिमेकं कृणुष्व स्नाह्येकेन पिबैकमेषाम् ।
चतुर्वीरं नैर्ऋतेभ्यश्चतुर्भ्यो ग्राह्या बन्धेभ्यः परि पात्वस्मान्।।५।।
अग्निर्माग्न्येनावतु प्राणायापानायायुषे वर्चस
ओजसे तेजसे स्वस्तये सुभूतये स्वाहा।।६।।
इन्द्रो मेन्द्रियेणावतु प्राणायापानायायुषे वर्चस ओजसे
तेजसे स्वस्तये सुभूतये स्वाहा।।७।।
सोमो मा सोम्येनावतु प्राणायापानायायुषे वर्चस
ओजसे तेजसे स्वस्तये सुभूतये स्वाहा।।८।।
भगो मा भगेनावतु प्राणायापानायायुषे वर्चस
ओजसे तेजसे स्वस्तये सुभूतये स्वाहा।।९।।
मरुतो मा गणैरवन्तु प्राणायापानायायुषे वर्चस
ओजसे तेजसे स्वस्तये सुभूतये स्वाहा।।१०।।

*(इति अष्टादशर्चोनामपञ्चदशकाण्डे प्रथमो ऽनुवाकः)*

१५-५

आयुर्दा देव जरसं पृणानो घृतप्रतीको घृतपृष्ठो अग्ने ।
घृतं पिबन्नमृतं चारु गव्यं पितेवपुत्रं जरसे नयेमम् ।।१।।
आयुरस्मै धेहि जातवेदः प्रजां त्वष्टरधि नि धेह्योनः ।
रायस्पोषं सवितरा सुवास्मै शतं जीवाति शरदस्तवायम्।।२।।
इममग्न आयुषे वर्चसे धाः प्रियं रेतो वरुण मित्र राजन् ।
मातेवास्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथासत् ।।३।।
अग्निष्ट आयुः प्रतरं कृणोतु सोमस्ते पुष्टिं प्रतरं दधातु ।
इन्द्रो मरुत्वानधि ते ब्रवीत्वादित्यैस्ते अदितिः शर्म यच्छतु ।।४।।
रेवतीस्त्वा व्यक्षणं कृत्तिकाश्चकृतस्त्वा ।
अपसस्त्वामतन्वत धियोऽवयन्नवाग्नायीरपृञ्चन् ।।५।।

सहस्रमन्तां अभितोऽददन्ताशीतिर्मध्यमभयं वि नारीः ।
देवीर्देवाय परिधे सवित्रे महत्तदासामधवन्महित्वम् ।।६।।
इममश्मानमा तिष्ठाश्मेव त्वं स्थिरो भव ।
प्र मृणीहि दुरस्यतः सहस्व पृतनायतः ।।७।।
येन देवं सवितारं परि देवा अधारयन् ।
तेनेमं ब्रह्मणस्पते परि राष्ट्राय धत्तन ।।८।।
परीममिन्द्रमायुषे महे क्षत्राय धत्तन ।
यथैतं जरसे नयां ज्योक् क्षत्रे अधि जागरत् ।।९।।
परीमं सोममायुषे महे श्रोत्राय धत्तन ।
यथैनं जरसे नयां ज्योक् श्रोत्रे अधि जागरत् ।।१०।।

१५-६

परि धत्त धत्त वर्चसेमं जरामृत्युं कृणुत दीर्घमायुः ।
बृहस्पतिः प्रायच्छद्वास एतत्सोमाय राज्ञे परिधातवा उ ।।१।।
जरां सु गच्छ परि धत्स्व वासो भवा गृष्टीनामभिशस्तिवा उ ।
शतं च जीव शरदः सुवर्चा रायस्पोषमुप सं व्ययस्व ।।२।।
परीदं वासो अपि धाः स्वस्तये ऽभूर्वापीनामभिशश्तिपा उ ।
शतं च जीव शरदः पुरूचीर्वसूनि चारुर्वि भजासि जीवन् ।।३।।
योगेयोगे तवस्तरं वाजेवाजे हवामहे ।
सखाय इन्द्रमूतये ।।४।।
हिरण्यवर्णो अजरः सुवीरो जरामृत्युः प्रजया सं विशस्व ।
तदग्निराह तदु सोम आह बृहस्पतिः सविता तदिन्द्रः ।।५।।
यदोत्तमत्तन्तुबद्धाय नावद्वासः पूर्वयावत् पुरुरूपपेशः ।
भद्रातीकासमजरं सुवीरं तेन ते देवाः प्र तिरन्त्वायुः ।।६।।

यस्य ब्रह्माण: सिचमारभन्ते श्रथ्नन्तो नीवं प्रतिरन्त आयु:।
तस्य देवा देवहूतिं जुषन्तां स विश्वहा सचतां स्वस्ति।।७।।
अन्यदा धत्स्व परि धत्स्व वास इममुल्वमपलंपामि यस्ते ।
जरसे त्वामृषय: सं व्ययन्तु सूर्यो भगस्ते प्र तिरन्त्वायु।।८।।
यस्य देवास: प्रथमवास्यं हरामि तं त्वा विश्वे अवन्तु देवा:।
तं त्वा भ्रातर: सुवृधा वर्धमानमनु जायन्तां बहव: सुजातम्।।९।।
अहतेनाहतो भव स्थिर स्थिरेण सं भव ।
प्र मृणीहि दुरस्यत: सहस्व पृतनायत: ।।१०।।

१५-७

मित्र: पृथिव्या अध्यक्ष: ।
स मावत्वस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां
पुरोधायामस्यां देवहुत्यामस्यामाकूत्यामस्यामाशिषि: स्वाहा ।।१।।
वरुणो ऽपामध्यक्ष: ।
स मावत्वस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां
पुरोधायामस्यां देवहुत्यामस्यामाकूत्यामस्यामाशिषि: स्वाहा ।।२।।
वायुरन्तरिक्षस्याध्यक्ष: ।
स मावत्वस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां
पुरोधायामस्यां देवहुत्यामस्यामाकूत्यामस्यामाशिषि: स्वाहा ।।३।।
सूर्यो दिवो ऽध्यक्ष: ।
स मावत्वस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां
पुरोधायामस्यां देवहुत्यामस्यामाकूत्यामस्यामाशिषि: स्वाहा ।।४।।
चन्द्रमा नक्षत्राणामध्यक्ष: ।
स मावत्वस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां
पुरोधायामस्यां देवहुत्यामस्यामाकूत्यामस्यामाशिषि: स्वाहा ।।५।।

वसु: संवत्सराणामध्यक्ष: ।
स मावत्वस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां
पुरोधायामस्यां देवहुत्यामस्यामाकूत्यामस्यामाशिषि: स्वाहा ।।६।।
संवत्सर ऋतूनामध्यक्ष: ।
स मावत्वस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां
पुरोधायामस्यां देवहुत्यामस्यामाकूत्यामस्यामाशिषि: स्वाहा ।।७।।
अग्निर्वनस्पतीनामध्यक्ष: ।
स मावत्वस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां
पुरोधायामस्यां देवहुत्यामस्यामाकूत्यामस्यामाशिषि: स्वाहा ।।८।।
इन्द्र: कर्मणामध्यक्ष: ।
स मावत्वस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां
पुरोधायामस्यां देवहुत्यामस्यामाकूत्यामस्यामाशिषि: स्वाहा ।।९।।
सविता प्रसवानामध्यक्ष: ।
स मावत्वस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां
पुरोधायामस्यां देवहुत्यामस्यामाकूत्यामस्यामाशिषि: स्वाहा ।।१०।।

१५-८

विष्णु: पर्वतानामध्यक्ष: ।
स मावत्वस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां
पुरोधायामस्यां देवहुत्यामस्यामाकूत्यामस्यामाशिषि: स्वाहा ।।१।।
त्वष्टा रूपाणामध्यक्ष: ।
स मावत्वस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां
पुरोधायामस्यां देवहुत्यामस्यामाकूत्यामस्यामाशिषि: स्वाहा ।।२।।
रुद्र: पशूनामध्यक्ष: ।
स मावत्वस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां
पुरोधायामस्यां देवहुत्यामस्यामाकूत्यामस्यामाशिषि: स्वाहा ।।३।।

सोम: पयसामध्यक्ष: ।
स मावत्वस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां
पुरोधायामस्यां देवहुत्यामस्यामाकूत्यामस्यामाशिषि: स्वाहा ।।४।।
पर्जन्य ओषधीनामध्यक्ष: ।
स मावत्वस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां
पुरोधायामस्यां देवहुत्यामस्यामाकूत्यामस्यामाशिषि: स्वाहा ।।५।।
समुद्रो नदीनामध्यक्ष: ।
स मावत्वस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां
पुरोधायामस्यां देवहुत्यामस्यामाकूत्यामस्यामाशिषि: स्वाहा ।।६।।
हिंकार: साम्नामध्यक्ष: ।
स मावत्वस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां
पुरोधायामस्यां देवहुत्यामस्यामाकूत्यामस्यामाशिषि: स्वाहा ।।७।।
सरस्वती वाचामध्यक्षा।
सा मावत्वस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां
पुरोधायामस्यां देवहुत्यामस्यामाकूत्यामस्यामाशिषि: स्वाहा ।।८।।
पूषा पथीनामध्यक्ष: ।
स मावत्वस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां
पुरोधायामस्यां देवहुत्यामस्यामाकूत्यामस्यामाशिषि: स्वाहा ।।९।।
गायत्री छन्दसामध्यक्षा।
सा मावत्वस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां
पुरोधायामस्यां देवहुत्यामस्यामाकूत्यामस्यामाशिषि: स्वाहा।।१०।।

१५-९

बृहस्पतिर्देवानामध्यक्ष: ।
स मावत्वस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां
पुरोधायामस्यां देवहुत्यामस्यामाकूत्यामस्यामाशिषि: स्वाहा ।।१।।

प्रजापति: प्रजानामध्यक्ष: ।
स मावत्वस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां
पुरोधायामस्यां देवहुत्यामस्यामाकूत्यामस्यामाशिषि: स्वाहा ।।२।।
यम: पितृणामध्यक्ष: ।
स मावत्वस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां
पुरोधायामस्यां देवहुत्यामस्यामाकूत्यामस्यामाशिषि: स्वाहा ।।३।।
पितर: परे ऽवरस्ततस्ततामह: ।
ते मावत्वस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां
पुरोधायामस्यां देवहुत्यामस्यामाकूत्यामस्यामाशिषि: स्वाहा ।।४।।
देवानां देवा देवा देवेष्वधिदेवा: परा क्रमध्वम् ।
प्रथमा द्वितीयेषु द्वितीयास्तृतीयेषु ।।५।।
त्रिरेकादशा विश्वे वैश्वानरा महि महान्तो न मा रभध्वम् ।
इदं शकेयं यदिदं कृणोमि स्वाहा ।।६।।

*(इति अष्टादशर्चोनामपञ्चदशकाण्डे द्वितीयो ऽनुवाक:)*

## १५-१०

जीमूतस्येव भवति प्रतीकं यद्वर्मी याति समदामुपस्थे ।
अनाविद्धया तन्वा जय त्वं स त्वा वर्मणो महिमा पिपर्तु ।।१।।
धन्वना गा धन्वनाजिं जयेम धन्वना तीव्रा: समदो जयेम ।
धनु: शत्रोरपकामं कृणोतु धन्वना सर्वा: पृतना जयेम ।।२।।
वक्ष्यन्तीवेदा गनीगन्ति कर्णं प्रियं सखायं परिषस्वजाना ।
योषेव शिङ्क्ते विततािध धन्वञ्ज्या इयं समिति पारयन्ती।।३।।
ते आचरन्ती समनेव योषा मातेव पुत्रं पिपृतामुपस्थे ।
अप शत्रून् विध्यतां संविदाने आर्त्नी इमे विस्फुरन्ती अमित्रान्।।४।।

बह्वीनां पिता बहुरस्य पुत्रो व्यच: कृणोति समदोऽवगत्य ।
इषुधि: सङ्का: पृतनाश्च सर्वा: पृष्ठे निनद्धो जयति प्रसूत:।।५।।
रथे तिष्ठन्नयति वाजिन: पुरो यत्रयत्र कामयते सुषारथि:।
अभीशूनां महिमानं पनायत मन: पश्चादनु यच्छन्ति रश्मय:।।६।।
तीव्रान् घोषान् कृण्वतां वृषपाणयो ऽश्वा रथेभि: सह वाजयन्त:।
अपक्रामन्त प्रपदैरमित्रान् क्षिणन्ति शत्रून्रनपव्ययन्त ।।७।।
रथवाहनं हविरस्य नाम यत्रायुधं निहितमस्य वर्म ।
तत्रा रथमुप शग्मं सदेम विश्वाहा वयं सुमनस्यमाना:।।८।।
स्वादुषंसद: पितरो वयधा: कृच्छ्रेश्रित: शक्तीवन्तो गभीरा:।
चित्रसेना इषुबला अमृध्रा: सतोवीरा उरवो व्रातसाहा:।।९।।
ब्राह्मणास: पितर: सोम्यास: शिवे नो द्यावापृथिवी अनेहसा।
पूषा न पातु दुरितादृतावृधो रक्षा माकिर्णो अघशंस ईशत।।१०।।

१५-११

बृहस्पतिर्न: परि पातु पश्चादुतोत्तरस्मादधरादघायो: ।
इन्द्र: पुरस्तादुत मध्यतो न: सखा सखिभ्यो वरिव: कृणोतु ।।१।।
सुपर्णं वस्ते मृगो अस्या दन्तो गोभि: संनद्धा पतति प्रसूता ।
यत्रा नर: सं च वि च द्रवन्ति तदस्मभ्यमिषव: शर्म यच्छान् ।।२।।
सुपर्णो वासो यदु सर्पिरासामनो हिरण्यमिषव: पतत्री ।
मास्माङ् अरत्रमुत आपतन्तीरित: प्रहिता: सवितर्जयन्तु ।।३।।
अहिरिव भोगै: पर्येति बाहुं ज्याया हेतिमपबाधमान:।
हस्तघ्नो विश्वा वयुनानि विद्वान् पुमान् पुमांसं परि पातु मृत्यो:।।४।।
आ जङ्घन्ति सान्वेषां जघनां उप जिघ्नते ।
अश्वाजनि प्र चोदयाश्वान् समत्सु पादय ।।५।।

दिवस्पृथिव्या: पर्योज आभृतं वनस्पतिभ्य: परि संभृतं सह: ।
अपामोज्मानं परि गोभिराभृतमिन्द्रस्य वज्रं हविषा रथं यज ।।६।।
इन्द्रस्य वज्रो मरुतामनीकं मित्रस्य गर्भो वरुणस्य नाभि: ।
सेमां नो हव्यदातिं जुषाणो देव रथ प्रति हव्या गृभाय ।।७।।
वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरण: सुवीर: ।
गोभि: संनद्धो रथ वीडयस्वास्थाता ते जयतु जेत्वानि ।।८।।
उप श्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुतां विष्ठितं जगत् ।
स दुन्दुभे सजूरिन्द्रेण देवैर्दूराद् दवीयो अप सेध शत्रून्।।९।।
आ क्रन्दय बलमोजो न आ धा अभि ष्टन दुरिता बाधमान:।
अप सेध दुन्दुभे दुच्छुनामित इन्द्रस्य मुष्टिरसि वीडयस्व ।।१०।।

## १५-१२

प्रामूञ्जयाभीमे जयन्तु केतुमद् दुन्दुभिर्वावदीतु ।
समश्वपर्णा: पतयन्तु नो नरोऽस्माकमिन्द्र रथिनो जयन्तु ।।१।।
इन्द्रो रथाय प्रपदं कृणोतु यमध्यष्ठान् मघवा जयन्तम् ।
इर्य इव पशुभिर्युयोतु गोपा अरिष्टो जात: प्रथम: सिषासन्।।२।।
पर्यन्यस्येव स्तनयित्लुरासोरिन्द्राग्न्योरिव चेखिद्यते घोषो अस्य ।
साहस्रो वीर: शतं ससन्वानयुतं ससन्वान् रथ मृडेह ।।३।।
श्येनस्य पक्षौ हरिणस्य बाहू इन्द्रस्य मुष्टिर्मरुतामनीकम् ।
गोभि: सनद्धो असि वीडयस्व ।।४।।
उद्यंयमीति सवितेव बाहू उभे सिचौ यजते भीम ऋञ्जन् ।
उच्छुक्रमत्क्रमजते शचीभिर्नवा मातृभ्यो वसना जहाति ।।५।।
उग्रौ ते नेमि पवी त उग्रा उग्रा: शङ्कवो बृहतो रथस्य ।
ईषात्र वेणवो नमतिस्त उग्राग्निश्चक्षु: प्रवयणं रथस्य ।
तेनामित्रान् प्रमृणन् याहि शत्रून् ।।६।।

अरा नाभयो वलमित्ते अक्ष उग्रौ ते कोषौ सहनिस्यदाभ्याम्।
आण्योर्वध्रानुत कोषघोरा स्थानं बन्ध उत बन्धुरं ते ।।७।।
गौष्ठे बलं मृग एकमङ्गं परा क्रमध्वं मह आ सुवन्त ।
अभीशवो हतानेन वृत्रमयं क्षत्रेण प्रजयास्तूग्र: ।।८।।
आ तिष्ठ जिष्णुस्तरसा सपत्नान् साहस्रो वीर: प्रमृणन् याहि शत्रून्।
पृष्टियुगे कृणुतं वीर्याणि तदेतामेतं रथमस्य शग्मे ।।९।।
अष्टौ चक्षूंषि कवय: सं नमन्त्वश्वा प्राकाशा ऋजु धावयन्त:।
अनु त्वा स्कम्भो ददतां पितेव चक्रमाणमैनं
धत्स्वोपस्थे प्र तिरात्यायु:।।१०।।
कविभि: स्युत: स रथे विबद्ध: स धन्वधिर्धनुचित्ते जजान।
अनुप्रास्येमानि पृथुमध्यमान्यश्वेभ्य: शंत्वाय कविभि:
कृतानि तेभिष्टे शर्म यच्छन्तु देवा ।।११।।

१५-१३

अग्निं ब्रूमो वनस्पतीनोषधीरुत वीरुध: ।
इन्द्रं बृहस्पतिं सूर्यं ते नो मुञ्चन्त्वंहस: ।।१।।
ब्रूमो देवं सवितारं धातारमुत पूषणम् ।
त्वष्टारमग्र्यं ब्रूमस्ते नो मुञ्चन्त्वंहस: ।।२।।
ब्रूमो राजानं वरुणं मित्रं विष्णुमथो भगम् ।
अंशं विवस्वन्तं ब्रूमस्ते नो मुञ्चन्त्वंहस: ।।३।।
गन्धर्वाप्सरसो ब्रूमो अश्विना ब्रह्मणस्पतिम् ।
अर्यमा नाम यो देवस्ते नो मुञ्चन्त्वंहस: ।।४।।
वातं ब्रूम: पर्जन्यमन्तरिक्षमथो दिश: ।
आशाश्च सर्वा ब्रूमस्ते नो मुञ्चन्त्वंहस: ।।५।।

अहोरात्रे इदं ब्रूमः सूर्याचन्द्रमसा उभा ।
आदित्यान् सर्वान् ब्रूमस्ते नो मुञ्चन्त्वंहसः ।।६।।
मुञ्चन्तु मा सपथ्यादहोरात्रे अथो उषाः ।
सोमो मा दिव्यो मुञ्चतु यमाहुश्चन्द्रमा इति ।।७।।
पञ्च राज्यानि वीरुधां सोमश्रेष्ठानि ब्रूमसि ।
भङ्गो दर्भो यवः सहस्ते नो मुञ्चन्त्वंहसः ।।८।।
ये ग्राम्याः सप्त पशव आरण्या उत ये मृगाः ।
शकुन्तान् पक्षिणो ब्रूमस्ते नो मुञ्चन्त्वंहसः ।।९।।
भवाशर्वाविदं ब्रूम उग्रः पशुपतिश्च यः ।
इषूर्या एषां विद्मस्ते नो मुञ्चन्त्वंहसः ।।१०।।

१५-१४

यज्ञं ब्रूमो यजमानमृचः सामानि भेषजा ।
यजूंषि होत्रान् ब्रूमस्ते नो मुञ्चन्त्वंहसः ।।१।।
ऋतून् ब्रूम ऋतुपतीनार्तवाङ् उत हायनान् ।
समाः संवत्सरान् मासस्ते नो मुञ्चन्त्वंहसः ।।२।।
दिवं ब्रूमो नक्षत्राणि भूमिं यक्षाणि पर्वतान् ।
समुद्रा नद्यो वेशन्तास्ते नो मुञ्चन्त्वंहसः ।।३।।
सप्त ऋषीन्वा इदं ब्रूमोऽपो देवीः प्रजापतिम् ।
पितृन् यमश्रेष्ठान् ब्रूमस्ते नो मुञ्चन्त्वंहसः ।।४।।
विश्वान् देवानिदं ब्रूमः सत्यसन्धानृतावृधः ।
विश्वाभिः पत्नीभिः साकं ते नो मुञ्चन्त्वंहसः ।।५।।
आदित्या रुद्रा वसवो देवा दैवा अथर्वाणः ।
अङ्गिरसो मनीषिणस्ते नो मुञ्चन्त्वंहसः ।।६।।

ये देवा दिविषदो ऽन्तरिक्षसदश्च ये ।
पृथिव्यां शक्रा ये श्रितास्ते नो मुञ्चन्त्वंहस: ।।७।।
एत देवा दक्षिणत: पश्चात् प्राञ्च उतेदन ।
पुरस्ताच्छक्रा उत्तराद्विश्वे देवा: समेत्य ते नो मुञ्चन्त्वंहस:।।८।।
अरायान् ब्रूमो रक्षांसि सर्पान् पुण्यजनानुत ।
मृत्यूनेकशतं ब्रूमस्ते नो मुञ्चन्त्वंहस: ।।९।।
या देवी: पञ्च प्रदिशो ये देवा द्वादशर्त्तव: ।
संवत्सरस्य ये दंष्ट्रास्ते न: सन्तु सदा शिवा:।।१०।।
भूतं ब्रूमो भूतपतिं भूतानामुत यस्पति: ।
भूतानि सर्वा ब्रूमस्ते नो मुञ्चन्त्वंहस: ।।११।।

*(इति अष्टादशर्चोनामपञ्चदशकाण्डे तृतीयो ऽनुवाक:)*

१५-१५

यावद् द्यौर्यावत् पृथिवी यावत् पर्येति सूर्य: ।
तावत् त्वमुग्र ओषधे परि पाह्यरुन्धति ।।१।।
अरिष्टस्त्वा खनत्यरिष्टाय खनामि त्वा ।
द्विपाच्चतुष्पादस्माकं सर्वमस्त्वनातुरम् ।।२।।
देवानामसि स्वसा मरुतामसि सञ्चरी ।
यं जीवमश्नुषे त्वं न स रिष्याति पूरुष: ।।३।।
अरुन्धती नामासि तृतीयस्यामितो दिवि ।
तत्रामृतस्य रोहणं तेन त्वाच्छावदामसि ।।४।।
शं त आपो हृद्या: शं ते कुलिज्या उत ।
शं वात: शं बृहस्पति: सं ते तपतु सूर्य: ।।५।।
शं त इन्द्राग्नी भवतां शं रात्री प्रति धीयताम् ।
शं ते पृथिव्यां वीरुध: शमु ते सन्त्वोषधी: ।।६।।

बह्वीषु हि त्वामविदमोषधीं वीर्यावतीम् ।
अरुन्धति त्वामाहार्षमितो मा पारयानिति ।।७।।
अभिप्रेप्सेव जीवन्तमभि दस्येदरुन्धती ।
एषादविद्ध्यभेषजी देवी वातीकृतस्य च ।।८।।
अनु षिञ्च नस्तत् कुर्वगदो वै भविष्यति ।
वातीकृतस्य भेषज्यागन् देव्यरुन्धती ।।९।।
मा बिभेर्न मरिष्यस्यगदो वै भविष्यसि ।
वातीकृतस्य भेषज्यागन् देव्यरुन्धती ।।१०।।

१५-१६

अरुन्धत्य: सं वदन्ते गाव: प्रव्राजिनीरिव ।
यमातुरमभिगच्छामावतं कृणु मावतं ।।१।।
इमं मे त्वं जरामृत्युं पुरुषं कृण्वोषधे ।
राज्ञी हि सर्वासामस्योषधीनामरुन्धती ।।२।।
त्रायमाणा ह्यसि जीवला वीर्यावती ।
अरुन्धति त्वामाहार्षमितो मा पारयानिति ।।३।।
दिग्धेन च विद्धस्याघस्याघविषा च या ।
अरुन्धति त्वं तस्यासि विषस्य विषदूषणी ।।४।।
आहेयेन च दष्टस्याघस्याघविषा च या ।
अरुन्धति त्वं तस्यासि विषस्य विषदूषणी ।।५।।
वातीकारेण च क्षिप्तस्याघस्याघविषा च या ।
अरुन्धति त्वं तस्यासि विषस्य विषदूषणी ।।६।।
भवेन च क्षिप्तस्याघस्याघविषा च या ।
अरुन्धति त्वं तस्यासि विषस्य विषदूषणी ।।७।।

शर्वेण च क्षिप्तस्याघस्याघविषा च या ।
अरुन्धति त्वं तस्यासि विषस्य विषदूषणी ।।८।।
रुद्रेण च क्षिप्तस्याघस्याघविषा च या ।
अरुन्धति त्वं तस्यासि विषस्य विषदूषणी ।।९।।
पशुपतिना च क्षिप्तस्याघस्याघविषा च या ।
अरुन्धति त्वं तस्यासि विषस्य विषदूषणी ।।१०।।

१५-१७

उग्रेण च देवेन च क्षिप्तस्याघस्याघविषा च या ।
अरुन्धति त्वं तस्यासि विषस्य विषदूषणी ।।१।।
महादेवेन च क्षिप्तस्याघस्याघविषा च या ।
अरुन्धति त्वं तस्यासि विषस्य विषदूषणी ।।२।।
ईशानेन च क्षिप्तस्याघस्याघविषा च या ।
अरुन्धति त्वं तस्यासि विषस्य विषदूषणी ।।३।।
यत् पृथिव्यां विषं वीरुत्स्वधि यद्विषम् ।
अरुन्धति त्वं तस्यासि विषस्य विषदूषणी ।।४।।
यदोषधीभ्य: संभरन्ति ब्रह्माणो मेनये विषम् ।
अरुन्धति त्वं तस्यासि विषस्य विषदूषणी ।।५।।
यद् ब्राह्मणा: संभरन्ति तृष्टमाशीविषं विषम् ।
अरुन्धति त्वं तस्यासि विषस्य विषदूषणी ।।६।।
य: क्षिप्तो मृत्युनायस्मैर्यो दष्टस्तृष्टदंशभि: ।
अरुन्धति त्वं तस्यासि विषस्य विषदूषणी ।।७।।
सं जिहीष्वामुक्था यक्ष्मादारुक्षो लोकमुत्तमम् ।
अपा जीवसि पात्रेणाधि जीवपुरा इहि ।।८।।

१५-१८

अप्सरसो वि वो यकृद्वि वो भिनद्मि मेहनं ।
वि चण्डालं व्यर्जुनं वि ववृत्रं भिनद्मि वः ।।१।।
विश्वजन्याः पाञ्चजन्या महारुक्माः शिखण्डिनीः ।
सर्वा इन्द्रस्य वज्रेण हता बुद्बुदयातवः ।।२।।
अन्धाचीमसिताचीमुलूखलस्य बुध्नेन ।
अवैतं वत्सपं जहि ।।३।।
दूरादेनाः प्रत्यपश्यप्रापतन्तीरथो दिवः ।
देवानां हव्यमोहनीरिन्द्रो अप्सरसो हनत् ।।४।।
आ हता अप ता इतः खलादिव यातुधान्यः ।
अमुं गच्छत पूरुषं समुद्रमपगच्छति ।।५।।
दिवं गच्छन्तु दिव्याः सरो गच्छन्तु सारसीः ।
उलुङ्गुलस्य यो गृहस्तदु गच्छन्त्वासुरीः ।।६।।
आस्कन्दिके विस्कन्दिके पराचीरप नृत्यतु ।
सारङ्गेण शुना सह ।।७।।
यः सारङ्गो हिरण्यदन् श्वा दिव्यः परिप्लवः ।
तस्याहं नाम जग्रभास्मा अरिष्टतातये ।।८।।
अद्यां ते विरणी पराचीरप नृत्यत ।
शृणामि घोरा वः पृष्टी ब्रह्मणा किकसा उत ।।९।।
एकत्रिशंदश्ववतीश्चतस्र उत गुङ्गुवः ।
शिवा दश शृता दश केशिनीः पञ्चविंशतिः ।
इदमुलुङ्गुलुकाभ्यो अप्सराभ्यो ऽकरं नमः ।।१०।।

१५-१९

याः प्रेङ्खे प्रेङ्खयन्ते सन्ताने मालवा इव ।
इदमुलुङ्गुलुकाभ्यो अप्सराभ्यो ऽकरं नमः ।।१।।

याः पुरस्तादाचरन्ति साकं सूर्यस्य रश्मिभिः ।
इदमुलुङ्गुलुकाभ्यो अप्सराभ्यो ऽकरं नमः ।।२।।
या अधरादाचरन्त्यनसा छदिसा सह ।
इदमुलुङ्गुलुकाभ्यो अप्सराभ्यो ऽकरं नमः ।।३।।
याः पश्चादाचरन्त्यन्धेन तमसा सह ।
इदमुलुङ्गुलुकाभ्यो अप्सराभ्यो ऽकरं नमः ।।४।।
या उत्तरादाचरन्ति वर्षेण विद्युता सह ।
इदमुलुङ्गुलुकाभ्यो अप्सराभ्यो ऽकरं नमः ।।५।।
या अधस्तादुद्वीक्षन्ते साच्यक्षि करिक्रतीः ।
इदमुलुङ्गुलुकाभ्यो अप्सराभ्यो ऽकरं नमः ।।६।।
या उपरिष्टादवेक्षन्ते नीलव्यक्तानि बिभ्रतीः ।
इदमुलुङ्गुलुकाभ्यो अप्सराभ्यो ऽकरं नमः ।।७।।
या अन्तरिक्ष ईरयन्ति वातेन रेष्मणा सह ।
इदमुलुङ्गुलुकाभ्यो अप्सराभ्यो ऽकरं नमः ।।८।।
या नदीः प्रतिगाहन्ते संरभ्य कन्या इव ।
इदमुलुङ्गुलुकाभ्यो अप्सराभ्यो ऽकरं नमः ।।९।।
यास्तीर्थानि विगाहन्ते ऽघ्न्याः श्वसतीरिव ।
इदमुलुङ्गुलुकाभ्यो अप्सराभ्यो ऽकरं नमः ।।१०।।
याः समुद्रादुच्चरन्त्युच्चैर्घोषान् करिक्रतीः ।
इदमुलुङ्गुलुकाभ्यो अप्सराभ्यो ऽकरं नमः ।।११।।
या गच्छन्ति जनंजनमिच्छन्तीः प्रयुतं बहु ।
इदमुलुङ्गुलुकाभ्यो अप्सराभ्यो ऽकरं नमः ।।१२।।

*(इति अष्टादशर्चोनामपञ्चदशकाण्डे चतुर्थो ऽनुवाकः)*

१५-२०

त्वज्जाता रुद्र शन्तमा त्वं हि नो बभुर्या भेषजेभिः ।
व्यक्ष्मां यावयास्मद् व्यंहो व्यमीवाश्चातयास्मद्विषूचीः ।।१।।
त्वं देवानामसि रुद्र श्रेष्ठस्तवस्तमस्तवसामुग्रबाहो ।
हृणीयसा मनसा मोदमान आ बभूविथ रुद्रस्य सूनोः ।।२।।
त्वं हि नो वीराङ् ईरय भेषजेभिरुरुं नो भवन्तमघवो मरुत्वं ।
करा नः पारमंहसः स्वस्ति विश्वा अभीतीरप सेधास्मत् ।।३।।
त्वं हि नो वृषभ चक्षिमेष्ठा अस्मै रुद्रायोग्राय मीढुषे ।
क्षयद्वीराय प्र भरामहे मतिं यथा नः शमसो द्विपदे शं चतुष्पदे।।४।।
क्व तेषु रुद्र हस्तो मृडयाको जलाषः ।
अपभर्ता रपसो दैव्यस्य ।।५।।
प्र यक्ष्मः प्र निर्ऋतिरेत्वस्मत् सेनेव सृष्टा प्र चताममीवा ।
आराद्धत् सना वृजना जहीति ।।६।।
अर्हन् धनुर्हितं बिभर्ष्यर्हन् निष्कं रजतं विश्वरूपम् ।
अर्हन्निदं दयसे विश्वमेजन्न ते दूरं न परिष्ठास्ति
ते भव सद्यः सर्वान् परि पश्यसि भूमिम् ।।७।।
नमस्ते अस्तु विद्युते नमस्ते स्तनयित्नवे ।
नमस्ते अस्त्वश्मने येन प्रदिशमस्यसि ।।८।।
मा देवानामुग्र राजन्नस्माकं पुरुषा रिषन् ।
रक्षांस्यस्मद् यक्ष्मांश्च नाशयामसि ब्रह्मणा ।।९।।
ब्रह्मणेतो नाशयामो यत् किञ्चाङ्गेष्वामयत् ।
शल्यां यक्ष्मस्याथो रोपीस्ता इतो वि नयामसि ।।१०।।

१५-२१

नयामि वां पशुपती घृतेनाज्येन वर्धयन् ।
यं दिष्मो यश्च नो द्वेष्टि तस्य वेशः करिष्यथः ।।१।।

अधि ब्रूतं पशुपती द्विपदे मे चतुष्पदे ।
प्रसूतौ यत्र जघ्नतुस्ततो मेमातरं रिषत् ।।२।।
या वां रुद्र: शिवा तनू या वां सन्ति रोगणा: ।
या वामायुष्मतीस्तनूस्ताभिर्नो मृडतं युवम् ।।३।।
न प्र मिनन्ति व्रतिनो व्रतानि सत्यं जिन्वन्तो विदथा वदन्त: ।
यस्येमे रोदसी उभे संयुक्ते मनसा हृदा ।।४।।
स प्रजानां प्रजापति: साधु रक्षति वर्षति ।
स वेद रत्नभेषजं देवेभ्यस्पर्याभृतं तेन नो मृडतं युवम् ।
जीवातवे न मर्तवे ऽथो अरिष्टतातये ।।५।।
सगुणास आसते संयुक्ता बलाय कम् ।
तेषां यदिन्द्रियं बृहच्चतिरोचतिरोचना ।।६।।
ये ते रोचने बृहती अन्तरिक्षे अथो दिव: ।
ताभ्यामुप प्र याहि न: सर्ववीरा ङ अरिष्यत: ।।७।।
सर्ववीरा अरिष्यन्तो रोचने अधि तस्थिम ।
यथा नस्तृष्णमद्रसु दिवि क्षिपद्भ्यो अप्सु या ।।८।।

१५-२२

इन्द्राग्नी हुवे प्रथमौ ह्वयामि मरुत: शिवाम् ।
ह्वयामि विश्वां देवानिमं होममवन्तु मे ।।१।।
त्वं प्रथमो अमृतत्वमग्ने देवो देवत्वं प्रथमो जिगेथ ।
तव दिवि हृदयं सं वभूब स न: शिवा आपो जातवेदो नि यच्छ ।।२।।
अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एष: ।
तस्मै जुहोमि हविषा घृतेन मा देवानां यूयवद्भागधेयम् ।।३।।
ये देवा दिवि ष्ठ ये पृथिव्यां जातवेदो य उरावन्तरिक्षे ।
ये गिरिषु पर्वतेष्वप्स्वन्तस्ते देवा अशनिं यावयाथ ।।४।।

मित्रं दिग्भि: कृणुष्व जातवेद आशाभिर्मित्रमधिपा विपश्चित् ।
मा नो हिंसीर्दिव्येनाग्निना सस्यां येन यन्ति मरुत स्पर्धमाना: ।।५।।
विद्योतमान स्तनयन् वृषेवैषि कनिक्रदत् ।
भीम: पर्जन्य ते रथ: स उ न: शर्म यच्छतु ।।६।।
ये विद्युतमशनिमातन्वन्ति मरुत: सलिलादधि ।
कृष्यै नो विश्ववाराया अवधन्वा नि तन्वताम् ।।७।।
यो विद्युतमशनिमातन्त्यन्तरिक्षादुत वाताद्दिवश्च ।
तेभ्यो मरुद्भ्यो नमो ऽस्त्वोजसे ।।८।।
ता यन्तु स्वरंकृता: स्योना: शिवतमा: पथा ।
मा न इन्द्र यवं वधीर्मित्रमेनेन कृण्महे ।।९।।
दर्भो अग्र ओषधिनां शतकाण्डो अजायत ।
स देवै: प्रहितो ऽयमागन् स्वस्तये वृषा
मरुद्भि: सह संविदान:।।१०।।

## १५-२३

वृषाक्षस्यासुरस्य मेनिरसि तां त्वया तथा वेद
कर्णास्य कौविदस्येवमाशा।
तां माभ्यव गा द्वादशाह्नानि वि रक्षे ।।१।।
असिर्मे तिग्मस्यायस इन्द्राग्निभ्यां सुसंशित: ।
तेन सेधामिदादुनिं कृषिं मे माव
गादिति सस्यं मे मा वधीदिति ।।२।।
मरुत: परि वृङ्धि नो दिव: क्षुद्रेभिरश्मिभि: ।
उदुम्बरस्य शाखया चक्षुषाशनिं यावयामसि ।।३।।
मरुतो मृडयात नो दिव: शुक्रेभिरश्मिभि: ।
उदुम्बरस्य शाखया विचक्षुषाशनिं यावयामसि ।।४।।

वर्तादूर्तमा क्राम पर्वतादधि पर्वतम् ।
गिरौ प्रतिशृता सती वृक्षान् भङ्धि मा यवम् ।।५।।
अदाम्ना त्वा सन्द्यामि यावण्या परिभूर्ण्या ।
सानौ प्रतिशृता सती तृणं भङ्धि मा यवम् ।।६।।
उशती नामासि सलिन्दा नाम ।
अन्यामासां गच्छ यं द्विष्मस्तं गच्छ ।।७।।
पराचीमनु संवर्तं पराचीमनु संविदं पराच्यनु नि द्रव ।
इतस्त्वा नाशयामसि ब्रह्मणा वीर्यावता ।।८।।
वार्भवोदकं भवोदकस्योदकं भव ।
क्षुद्रात् क्षोदीयसि भूत्वाथेह्यधमं तम: ।।९।।
स्योना भव शिवा भव शिवाच्छिवतरा भव ।
फेनान्मृदीयसी भूत्वेदं शस्यमुपा चर ।।१०।।
नमस्ते अस्तु विद्युते नमस्ते स्तनयित्लवे ।
नमस्ते अग्ने दूरेहेते कृण्मो
मा नो हिंसीर्द्विपदो मा चतुष्पद: ।।११।।
प्रति त्वा सहसासह: सहसा प्रति रुध्मसि ।
ऐन्द्रमिदं सहो महद् भूम्यास्तवं दिवि श्रितम् ।
अफालकृष्टमा क्राम मा न इन्द्र यवं वधी: ।।१२।।
या: समुद्रादुच्चरन्त्युत्सेभ्यो या नदीभ्य: ।
अत्यन्त: सर्पो वैद्युतो ऽशनिं यावयादित: ।।१३।।

*(इति अष्टादशर्चोनामपञ्चदशकाण्डे पञ्चमो ऽनुवाक:)*

*इत्यथर्ववेदपैप्पलादसंहितायां अष्टादशर्चोनामपञ्चदशकाण्ड: समाप्त:*

# अथ क्षुद्रकाण्डनामषोडश: काण्ड:

## १६–१

अन्तकाय मृत्यवे नमो इहायमस्तु पुरुष: सहासुना ।
सूर्यस्य भागे अमृतस्य लोके प्राणा अपाना इह ते रमन्ताम् ।।१।।
उदेनं भगो अग्रभीदुदेनं सोमो अंशुमान् ।
उदेनं मरुतो देवा उदिन्द्राग्नी स्वस्तये ।।२।।
इह ते ऽसुरिह प्राण इहायुरिह ते मन: ।
उत्वा निर्ऋत्या: पाशेभ्यो दैव्यावाचा भरामसि ।।३।।
उत्क्रामात: माव पत्था मृत्यो: पड्वीशमवमुञ्चमान: ।
मा छित्था अस्माल्लोकादग्ने: सूर्यस्य संदृश: ।।४।।
तुभ्यं वात: पवतां मातरिश्वा तुभ्यं वर्षन्त्वमृतान्याप: ।
सूर्यस्ते तन्वे शं तपाति त्वां मृत्युर्दयतां मा प्र मेष्ठा: ।।५।।
उद्यानन्ते पुरुष नावयानं जीवातन्ते दक्षपतिं कृणोतु ।
आ हि रोहो ममृतं सुखं रथमथजिर्विर्विदथमा वदासि।।६।।
माते मनस्तत्रगान् मा तिरोभून् मा जीवेभ्य: प्रमोदो मानुगा: पितृन्।
विश्वे देवा अभिरक्षन्तु त्वेह ।।७।।
मा गताना मादिधीथा ये नयन्ति परावतम् ।
उदारोह तमसो ज्योतिरेह्या ते हस्तं रभामहे ।।८।।
श्यामश्चत्वा मा बलश्च प्रेषितौ यमस्य यौपथिरक्षी श्वानौ ।
अर्वाङ् एहिमा वि दीध्यो माति तिष्ठ: पराङ्मना: ।।९।।
मैतं पन्थामनु गा भीम एष येन पूर्वं नेयथ तं ब्रवीमि ।
तम एतत् पुरुष मा प्र पत्था अभयं परस्तादभयं ते अर्वाक्।।१०।।

१६–२

रक्षन्तु त्वाग्नयो ये अप्स्वन्ता रक्षतु त्वा मनुष्या यमिन्धते ।
वैश्वानरो रक्षतु जातवेदा दिव्यस्त्वा मा प्र धाग्विद्युता सह ।।१।।
रक्षतु त्वा पृथिवी रक्षतु द्यौः सूर्यश्च त्वा रक्षतां चन्द्रमाश्च ।
मात्वा क्रव्यादभि मंस्तारात्संकसुकाच्चर ।।२।।
अन्तरिक्षं रक्षतु देवहेत्याः बोधश्च त्वा प्रतीबोधश्च रक्षताम् ।
अस्वप्नश्च त्वानवद्राणश्च रक्षतां गोपायंश्च त्वा रक्षतां जागृविश्च।।३।।
तेत्वा रक्षन्तु तेत्वा गोपायन्तु तेत्वांहसस्पान्तु तेभ्यो नमस्तेभ्य स्वाहा।।४।।
जीवेभ्यस्त्वा समुदे वायुरिन्द्रो धाता दधातु सविता त्रायमाणः ।
मा त्वा प्राणो बलं हासीदसुं तेनु ह्वयामसि ।।५।।
मा त्वा जम्भः संहनुर्मातमोविदन् मा जिह्वाबर्हिः प्रमयुः कथा स्याः।
उत् त्वादित्या वसवो भरन्तूदिन्द्राग्नी स्वस्तये ।।६।।

अयं देवा इहैवास्त्वयं मामुत्र गादितः ।
इमं सहस्रवीर्येण मृत्योरुत् पारयामसि ।।७।।
उत् त्वा मृत्योरपीपरं सं धमन्तु वयोधसः ।
मा त्वा व्यस्तकेश्यो मा त्वाघरुदो रुदन् ।।८।।
अर्हाषं त्वाविदं त्वा पुनरागाः पुनर्नवः ।
सर्वाङ्गः सर्वं ते चक्षुः सर्वमायुश्च ते ऽविदन् ।।९।।
उत् त्वा द्यौरुत् पृथिव्युत् प्रजापतिरग्रभीत् ।
उत् त्वा मृत्योरोषधयः सोमराज्ञीरपीपरन् ।।१०।।
व्यवात् ते ज्योतिरभूदप त्वत् तमो अक्रमीत् ।
अप त्वन्मृत्युं निर्ऋतिमप यक्ष्मं नि दध्मसि ।।११।।

१६–३

आ रभस्वेमाममृतस्य श्नुष्टिमच्छिद्यमाना जरदष्टिरस्तु ते ।
असुं त आयुः पुनरा भरामि रजस्तमो मोप गा मा प्रमेष्ठाः।।१।।

जीवतां ज्योतिरभ्येहि लोकमा त्वा हरामि शतशारदाय ।
द्राघीय आयु: प्रतरं ते कृणोम्यवमुञ्चन्तु मृत्युपाशान् अशस्ती: ।।२।।
वातत्ते प्राणमविदन् सूर्याच्चक्षुरहं परि ।
यस्ते मनस्त्वयि तद्धारयामि सं वित्स्वाङ्गैर्वदजिह्वयालपन् ।।३।।
प्राणेन त्वा द्विपदां चतुष्पदामग्निमिव जातमभिसं धमामि ।
नमस्ते मृत्यो चक्षुषे नम: प्राणाय तेऽकरन् ।।४।।
अयं जीवतु मा मृतेमं समीरयामसि ।
कृणोम्यस्मै भेषजं मृत्यो मा पुरुषं वधी: ।।५।।
जीवलां नघारिषां जीवन्तीमोषधीमहम् ।
त्रायमाणां सहमानां सहस्वतीमरुन्धतीमिह हुवेऽस्मा अरिष्टतातये ।।६।।
अधि ब्रूहि मा रभथा: सृजेमं तवैव संत्सर्वहाया इहास्तु ।
भवाशर्वौ मृडतं शर्मयच्छतमपसिध्य दुरितं धत्तमायु: ।।७।।
देवानां हेति: परि त्वा वृणक्तु पारयामि रजस उत्त्वामृत्योरपीपरम् ।
आरादग्निं क्रव्यादं निरुहं जीवातवे ते परिधिं दधामि ।।८।।
अस्मै मृत्योरधिब्रुहीमं दयस्वोदितो यमेतु ।
अरिष्ट: सर्वाङ्ग: सुश्रुज्जरसा शतहायनात्मनाभुजमश्नवत् ।।९।।
यत् ते नियानं रजसं मृत्यो अनवधर्ष्यम् ।
पथ इमं तस्माद्रक्षन्तो ब्रह्मास्मै वर्म्म कृण्मसि ।।१०।।

१६-४

कृणोमि ते प्राणापानौ जरां मृत्युं कृणुतां दीर्घमायु: स्वस्ति ।
वैवस्वतेन प्रहितान् यमदूतांश्चरत आरादप सेधामि सर्वान् ।।१।।
अरादरातिं निर्ऋतिं परो ग्राहिं क्रव्याद: पिशाचान् ।
रक्षो यत् सर्वं दुर्भूतं तत् तम इवाप हन्मसि ।।२।।

अग्नेष्टे प्राणममृतादायुष्मतो वन्वे जातवेदस: ।
यथा न रिष्या अमृत: सजूरसस्तत्ते कृणोमि तदु ते समृध्यताम्।।३।।
शिवे ते स्तां द्यावापृथिवी असंतापे अधिश्रियौ ।
शं ते सूर्या तपति शं वातो वातु ते हृदे ।
शिवा अभिरक्षन्तु त्वापो दिव्या: पयस्वती: शिवास्ते सन्त्वोषधी:।।४।।
उत् त्वा हार्षमधरस्यादुत्तरां पृथिवीमभि ।
तत्र त्वादित्यौ रक्षतां सूर्या चन्द्रमसावुभा ।।५।।
यत्ते वास: परिधानं यां नीविं कृणुषे त्वम् ।
शिवं ते तन्वे तत् कृण्म: संस्पर्शे ऽद्रूक्ष्णमस्तु ते ।।६।।
यत् क्षुरेण मर्चायता सुतेजसा वप्ता वपसि केशश्मश्रु ।
शुभं मुखं मैनमायु: प्र मोषी: ।।७।।
शिवौ ते स्तां व्रीहियवावबलासावदोमधौ ।
एतौ यक्ष्मं वि बाधेते एतौ मुञ्चतो अंहस: ।।८।।
यदश्नासि यत् पिबसि धान्यं कृष्या: पय: ।
आद्यं यदनाद्यं सर्वं ते अन्नमविषं कृणोमि ।।९।।
अह्ने च त्वा रात्रये चोभाभ्यां परि दध्मसि ।
अरायेभ्यो जिघत्सुभ्य इमं न: परि रक्षतु ।।१०।।

१६—५

शतं ते ऽयुतं हायनान् द्वे युगे त्रीणि चत्वारि सन्तु ।
इन्द्राग्नी विश्वे देवा अनुमन्यन्तामहृणीयमाना: ।।१।।
शरदे त्वा हेमन्ताय वसन्ताय ग्रीष्माय परि दध्मसि ।
वर्षाणि तुभ्यं स्योनानि येषु बर्धन्त ओषधी: ।।२।।
मृत्युरीशे द्विपदां मृत्युरीशे चतुष्पदाम् ।
तस्मात् त्वां मृत्योर्गोपतेरुद्धरामि स मा मृथा: ।।३।।

सो ऽरिष्टो न मरिष्यसि न मरिष्यसि मा बिभे: ।
न वै तत्र प्र म्रीयन्ते नो यन्त्यध्वरं रज: ।।४।।
सर्वो वै यत्र जीवति गौरश्व: पुरुष: पशु: ।
यत्रेदं ब्रह्म क्रीयते परिधिर्जीवनाय कम् ।।५।।
परित्वा पातु समानेभ्यो ऽभिचारात् सबन्धुभ्य: ।
यमग्निर्भवामृतो ऽतिजीवो मा ते हासिषुरसव: शरीरम् ।।६।।
विश्वे देवा अमृतेन बिभ्रत्वधिवक्ता पशुपतिष्टे अस्तु ।
अनामयत्सविता ते कृणोत्वा त्वा प्राणो विशतु जीवनाय।।७।।
ये मृत्यव एकशतं या नाष्ट्रातिजीव्या ।
मुञ्चन्तु तस्मात् त्वा देवा अग्नेर्वैश्वानरादधि ।।८।।

*(इति क्षुद्रकाण्डनामषडशोकाण्डे प्रथमो ऽनुवाक:)*

१६-६

रक्षोहणं वाजिनमा जिघर्मि मित्रं प्रथिष्ठमुपयामि शर्म ।
शिशानो अग्नि: क्रतुभि: समिद्ध: स नो दिवा स रिष: पातुनक्तम् ।।१।।
अयोदंष्ट्रो अर्चिषा वावृधानानुप स्पृश जातवेद: समिद्ध: ।
आ जिह्वाया मूरदेवान् रभस्व क्रव्यादो वृष्ट्वापि धत्स्वासन्।।२।।
उभोभयाविन्नुप धेहि दंष्ट्री हिंस्त्र: शिशानोवरं परं च ।
उतान्तरिक्षे परि याह्यग्ने जम्भै: सं देह्यभि यातुधानान् ।। ३ ।।
अग्ने त्वचं यातुधानस्य भिन्द्धि हिंस्राशनिर्हरसा हन्त्वेनम् ।
प्र पर्वाणि जातवेद: शृणीहि क्रव्यात् क्रविष्णुर्वि चिनोत्वेनम् ।। ४ ।।
जञ्जैरिषू: संनममानो अग्ने वाचा शल्याङ् अशनिभिर्दिहान ।
ताभिर्विध्य हृदये यातुधानान् प्रतीचो बाहून् प्रति भङ्ग्ध्येषाम् ।। ५ ।।
यत्रेदानीं पश्यसि जातवेदस्तिष्ठन्तमग्न उता वा चरन्तम् ।
उतान्तरिक्षे पतन्तं यातुधानं तमस्ता विध्य शर्वा शिशान: ।। ६ ।।

उत्तारब्धान्त्स्पृणुहि जातवेद उत्तारेभाणां ऋष्टिभिर्यातुधानान् ।
अग्ने पूर्वो नि जहि शोशुचान आमाद: क्ष्विङ्कास्तमदन्त्वेनी: ।। ७ ।।
इह प्र ब्रूहि यतम: सो अग्ने यो यातुधानो य इदं शृणोति ।
तमा रभस्व समिधा यविष्ठ नृचक्षसश्चक्षुषे रन्धयैनम् ।। ८ ।।
तीक्ष्णेनाग्ने चक्षुषा रक्ष यज्ञं प्राञ्चं वसुभ्य: प्र णय प्रचेत: ।
हिंस्रं रक्षांस्यभि शोशुचानं मा त्वा दभन् यातुधाना नृचक्ष: ।। ९ ।।
नृचक्षारक्ष: प्रतिपश्य विक्षु तस्य त्रीणि प्रति शृणीह्यग्रा: ।
तस्याग्ने पृष्टीर्हरसा शृणीहि त्रेधा मूलं यातुधानस्य वृश्च ।। १० ।।

१६-७

त्रिर्यातुधान: प्रसितिं त एत्वृतं यो अग्ने अनृतेन हन्ति ।
तमर्चिषा स्फूर्जयन् जातवेद: समक्षमेनं गृणते नि वृङ्धि ।। १ ।।
यदग्ने अद्य मिथुना शपातो यद्वाचस्तृष्टं जनयन्त रेभा: ।
मन्योर्मनस: शरव्या जायते या तया विध्व हृदये यातुधानान् ।। २ ।।
पराशृणीहि तपसा यातुधानान् पराग्ने रक्षो हरसा शृणीहि ।
परार्चिषा मूरदेवाञ्छृणीहि परासुतृप: शोशुचत: शृणीहि ।। ३ ।।
पराद्य देवा वृजिनं शृणीहि प्रत्यगेनं शपथा यन्तु सृष्टा: ।
वाचास्तेनं शरव ऋच्छन्तु मर्मन् विश्वस्यैतु प्रसितिं यातुधान: ।। ४ ।।
सनादग्ने मृणसि यातुधानान्नत्वा रक्षांसि पृतनासु जिग्यु: ।
अनु दह सहमूरान् क्रव्यादो मा ते हेत्या मुक्षत दैव्याया: ।। ५ ।।
य: पौरुषेयेण क्रविषा समङ्क्ते योऽश्व्येन पशुना यातुधान: ।
यो अघ्न्याया भरति क्षीरमग्ने स्तेषां शीर्षाणि हरसापि वृश्च ।। ६ ।।
संवत्सरीणं पय उस्त्रीयायास्तस्य माशीद्यातुधानो नृचक्ष: ।
पीयूषमग्ने यतमस्तितृप्सात् तं प्रत्यञ्चमर्चिषा विध्व मर्माणि ।। ७ ।।

विषं गवां यातुधाना: पिवन्त्वावृश्चन्त्वामदितये दुरेवा: ।
परैणान् देव: सविता ददातु परा भागमोषधीनां जयन्ताम् ।। ८ ।।
त्वं नो अग्ने अधरादुदक्तस्त्वं पश्चादुत रक्षा पुरस्तात् ।
प्रति ते ते अजरासस्तपिष्ठा अघशंसं शोशुचतो दहन्तु ।।९।।
पश्चात् पुरस्तादधरादुदक्त: कवि: काव्येन परि पाह्यग्ने ।
सखा सखायमजरो जरिम्णे अग्ने मर्त्याङ् अमर्त्यस्त्वं न: ।।१०।।

१६-८

तदग्ने चक्षु: प्रति धेहि रेभे सफारुजं येन पश्यसि यातुधानान् ।
अथर्ववज्ज्योतिषा दैव्येन सत्यं धूर्वन्तमचितं न्योष ।।१।।
परि त्वाग्ने पुरं वयं विप्रं सहस्य धीमहि ।
धृषद्वर्णं दिवेदिवे हन्तारं भङ्गुरावताम् ।।२।।
वि ज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुषे महित्वा ।
प्रादेवीर्माया: सहते दुरेवा: शिशीते शृङ्गे रक्षसे विनिक्ष्वे ।।३।।
अग्नी रक्षांसि सेधति शुक्रशोचिरमर्त्य:।
शुचि: पावक ईड्य: ।।४।।
अग्ने रक्षाणो अंहस: प्रतिस्म देवरिषत: ।
तपिष्ठै रजरो दह ।।५।।
ये ते शृङ्गे अजरे जातवेदस्तिग्म शोचीर्ब्रह्म संशिते ।
ताभ्यां दुर्हार्दमभिदासन्तं किमीदिनं
प्रत्यञ्च यातुधानं यातवेदो विनिक्ष्व ।।६।।
विषेण भङ्गुरावत: समिन्द्र रक्षसो दह ।
अग्ने शुक्रेण शोचिषा तपुरग्रेभिरर्चिभि: ।।७।।
प्रत्यग्ने मिथुना दह यातुधाना किमीदिना ।
सं त्वा शिशामि जागृह्यदब्धं विप्र मन्मभि: ।।८।।

प्रत्यग्ने हरसा हर: शृणीहि विश्वत: प्रति ।
यातुधानस्य रक्षसो बलं वि रुज वीर्यम् ।।९।।
सीदान्वेया: प्रमृण रक्ष इन्द्र यातुधान क्षयणैर्मूरै: ।
एतावग्ने मिथुना यातुधाना विष्वञ्चौ उक्तै हरसा शयाताम् ।।१०।।
बृहस्पतिर्न: परि पातु पश्चादुतोत्तरस्मादधरादघायो: ।
इन्द्र: पुरस्तादुत मध्यतो न: सखा सखिभ्यो वरिव: कृणोतु ।।११।।

१६-९

इन्द्रासोमा तपतं रक्ष उब्जतं न्यर्पयतं वृषणा तमोवृध: ।
परा शृणीतमचितो न्योषतं हतं नुदेथां नि शिशीतमत्त्रिण:।।१।।
इन्द्रासोमा समघशं समभ्यगं तपुर्ययस्तु चरुरग्निवाङ् इव ।
ब्रह्मद्विषे क्रव्यादे घोरचक्षसे द्वेषो धत्तमनवायं किमीदिने ।।२।।
इन्द्रासोमा दुष्कृतो वव्रे अन्तरनारम्भणे तमसि प्र विध्यतम् ।
यथैषां नात: पुनरेकश्चनोदयत् तद् वामस्तु सहसे मन्युमच्छव: ।।३।।
इन्द्रासोमा वर्तयतं दिवस्पर्यग्नितप्तेभिर्युवमश्महन्मभि: ।
तपुर्वधेभिरजरेभिरत्त्रिणो नि पर्शाने विध्यतं यन्तु निस्वरम् ।।४।।
इन्द्रासोमा प्र हरतं दिवो वधं सं पृथिव्या अघशंसाय तर्हणम् ।
उत् तक्षतं स्वर्यं पर्वतेभ्यो येन रक्षो वावृधानं निजूर्वथ: ।।५।।
इन्द्रासोमा परि वां भूतु विश्वत इयं मति: कक्ष्याश्वेव वाजिना ।
यां वां होत्रां तं परिहिनोमि मेधयेमा ब्रह्माणि नृपती इव जिन्वतम्।। ६।।
प्रति स्मरेथां तुजयद्भिरेवैर्हतं द्रुहो रक्षसो भङ्गुरावत:।
इन्द्रासोमा दुष्कृते मा सुगं भूद् यो मा कदा चिदभिदासति द्रुहु:।। ७।।
यो मा पाकेन मनसा चरन्तमभिचष्टे अनृतेभिर्वचोभि: ।
आपो इव काशिना संगृभीता असंनस्त्वासत इन्द्र वक्ता।।८।।

ये पाकशंसं विहरन्त एवैर्ये वा भद्रं दूषयन्ति स्वधाभिः।
अहये वा तान् प्रददातु सोम आवा दधातु निर्ऋतेरुपस्थे ।।९।।
यो नो रसं दिप्सति पित्वो अग्ने यो अश्वानां यो गवां यस्तनूनाम् ।
रिपु स्तेन स्तेयकृद् दभ्रमेतु नि ष हीयतां तन्वा तना च।।१०।।

१६-१०

परः सो अस्तु तन्वा तना च तिस्रः पृथिवीरधो अस्तु विश्वाः।
प्रति शुष्यति यशो अस्य देवा यो मा दिवा दिप्सति यश्च नक्तम्।।१।।
सुविज्ञानं चिकितुषे जनाय सच्चासच्च वचसी पस्पृधाते ।
तयोर्यत् सत्यं यतरदृजीयस्तदित् सोमोवति हन्त्यासत् ।। २ ।।
न वा उ सोमो वृजिनं हिनोति न क्षत्रियं मिथुया धारयन्तम् ।
हन्ति रक्षो हन्त्यासद्वदन्तमुभाविन्द्रस्य प्रसितौ शयाते ।।३।।
यदि वाहमनृतदेवो अस्मि मोघं वा देवाङ् अप्यूहे अग्ने ।
किमस्मभ्यं जातवेदो हृणीषे द्रोघवाचस्ते निर्ऋथं सचन्ताम् ।।४।।
अद्या मुरीय यदि यातुधानो अस्मि यदि वायुस्ततप पूरुषस्य ।
अधा स वीरैर्दशभिर्वि यूया यो मा मोघं यातुधानेत्याह ।। ५ ।।
यो मायातुं यातुधानेत्याह यो वा रक्षाः शुचिरस्मीत्याह ।
इन्द्रस्तं हन्तु महता वधेन विश्वस्य जन्तोरधमस्पदीष्ट ।।६।।
प्र या जिगाति खर्गलेव नक्तमप द्रुंहुस्तन्वं गूहमाना ।
वव्राङ् अनन्ताङ् अव सा पदीष्ट ग्रावाणो घ्नन्तु रक्षस उपद्वैः।।७।।
वि तिष्ठध्वं मरुतो विक्ष्वीच्छत गृभायतः रक्षसः सं पिनष्टन ।
वयो ये भूत्वा पतयन्ति नक्तभिर्ये वा रिपो दधिरे देवे अध्वरे।।८।।
एत उ त्ये पतयन्ति श्वयातव इन्द्रं दिप्सन्ति दिप्सवो अदाभ्यम् ।
शिशीते शक्रः पिशुनेभ्यो वध नूनं सृजदशनिं यातुमद्भ्यः।।९।।

प्र वर्तय दिवो अश्मानमिन्द्र सोमशितं मघवन् सं शिशाधि ।
प्राक्तो अपाक्तो अधरादुदक्तोऽभि जहि रक्षस: पर्वतेन ।।१०।।

१६-११

इन्द्रो यातूनामभवत् पराशरो हविर्मथीनामभ्याविवासताम् ।
अभीदु शक्र: परशुर्यथा वनं पात्रेव भिन्दन्त्सत एतु रक्षस: ।।१।।
उलूकयातुं शुशुलूकयातुं जहि श्वयातुमुत कोकयातुम् ।
सुपर्णयातुमुत गृध्रयातुं दृषदेव: प्र मृण रक्ष इन्द्र ।।२।।
मा नो रक्षो अभि नड्यातुमावतामपोच्छन्तु मिथुना या किमीदिना ।
पृथिवी न: पार्थिवात् पात्वंहसोन्तरिक्षं दिव्यात्पात्वस्मान् ।।३।।
इन्द्र जहि पुमांसं यातुधानमुत स्त्रियं मायया शाशदानाम् ।
विग्रीवासो मूरदेवा ऋदन्तु मा ते दृशन्त्सूर्यमुच्चरन्तम् ।।४।।
प्रति चक्ष्व वि चक्ष्वेन्द्रश्च सोम जागृतम् ।
रक्षोभ्यो वधमस्यतमशनिं यातुमद्भ्य: ।।५।।

*(इति क्षुद्रकाण्डनामषडशोकाण्डे द्वितीयो ऽनुवाक:)*

१६-१२

या बभ्रवो याश्च शुक्रा रोहिणीरुत पृश्नय: ।
असिक्नी: कृष्णा ओषधी: सर्वाच्छावदामसि ।।१।।
त्रायन्तामिमं पुरुषं यक्ष्माद्देवेषितादधि ।
यासां द्यौष्पिता पृथिवीमाता समुद्रो मूलं वीरुधां बभूव।।२।।
आपो अग्रं दिव्या ओषधय: ।
तास्ते यक्ष्ममेनस्यमङ्गादङ्गादनीनशम् ।।३।।
प्रस्तृणोती स्तम्बिनीरेकशुङ्गा: प्रोतन्वतीरोषधीरा वदामि ।
अंशुमती: काण्डिनीर्या विशाखा ह्वयामि ते वीरुधो
वैश्वदेवीरुग्रा: पुरुषजीवनी: ।।४।।

यद्व: सह: सहमाना वीर्यं यच्च वो बलम् ।
तेनेम मस्माद्यक्ष्मात्पुरुषं मुञ्चतौषधी: ।।५।।
जीबलां नघारिषां जीवन्तीमोषधीमुत ।
अरुन्धतीमुन्नयन्तीं पुष्पां मधुमतीं हुवे ।।६।।
इहा यन्तु प्रचेतसो मेदिनीर्वचसो मम ।
यथेमं पारयामसि पुरुषं दुरितादधि ।।७।।
अग्नेर्घासो अपां गर्भो या रोहन्ति पुनर्नवा: ।
ध्रुवा: सहस्रनाम्नीर्भेषजी: सन्त्वाभृता:।।८।।
अवकोल्वा उदकात्मान ओषधय:।
व्यृषन्ति दुरितं तीक्ष्णशृङ्ग्न्य: ।।९।।
उन्मुञ्चन्तीर्विवरुणा उग्रा या विषदूषणीरथोबलासनाशनी: ।
रक्षोनाशनी: कृत्यादूषणीश्च यास्ता इहा सन्त्वोषधी: ।।१०।।

१६-१३

शिवास्ते सन्त्वोषधीरपक्रीता: सहीयसीर्वीरुधो या अभिष्टुता: ।
अपां रसस्वतीं ज्येष्ठां त्रायन्तामस्माकं गामश्वं पुरुषं पशुम् ।।१।।
मधुमन्मूलं मधुमदग्रमासां मधुमन्मध्यं वीरुधां बभूव ।
मधुमत्पर्णं मधुमत्पुष्पमासां मधो: संभूता अमृतस्य भक्षो-
घृतमन्नं दुह्रतं गोपुरोगवम् ।।२।।
यावती: कियतीश्चेमा: पृथिव्यामध्योषधी: ।
ता न: सहस्रपर्णो मृत्योर्मुञ्चन्त्वंहस: ।।३।।
वैयाघ्रो मणिर्वीरुधां त्रायमाणोभिशस्तिया: ।
अमीवा: सर्वा रक्षांस्यप हन्त्वधि दूरमस्मत् ।।४।।
सिंहस्येव स्तनथोरोषधीनामग्नेरिव विजन्त आभृताभ्य: ।
गवां यक्ष्म: पुरुषाणां वीरुद्भिरतिनुक्तो नाव्या एतु स्रोत्या:।।५।।

मुमुञ्चाना ओषधयो ऽग्नेर्वैश्वानरादधि ।
भूमिं संतन्वतीरिव यासां राजा वनस्पति: ।।६।।
याश्चाहं वेद वीरुधो याश्च पश्यामि चक्षुषा ।
अज्ञाता जानीमश्च या यासु विद्मसि संभृतम् ।
सर्वा: समग्रा ओषधीर्बोधन्तु वचसो मम ।।७।।
या रोहन्त्याङ्गीरसी: पर्वतेषु समेषु च । वीरुधो विश्वभेषजी: ।
ता नो पयस्वती: शिवा ओषधी: सन्त्वु शं हृदे ।।८।।
अश्वत्थो दर्भो वीरुधां सोमो राजामृतं हवि: ।
व्रीहिर्यवश्च भेषजौ दिवस्पुत्रावमर्त्यौ ।।९।।
उज्जिहीध्वे स्तनयत्यभिक्रन्दत्योषधी: ।
यदा व: पृश्निमातर: पर्जन्यो रेतसावति ।। १० ।

१६-१४

तस्यामृतस्येमं बलं पुरुषं पाययामसि ।
अथो कृणोमि भेषजं यथासच्छतहायन: ।।१।।
वराहो वेद वीरुधं नकुलो वेद भेषजीम् ।
गन्धर्वा: सर्पा या विदुस्ता इहा सन्त्वोषधी: ।।२।।
या सुपर्णा आङ्गिरसीर्दिव्या या रघटो विदु: ।
वयांसि हंसा या विदुर्याश्च सर्वे पतत्रिण: ।
मृगा या विदुरोषधीस्ता अस्मा अवसे हुवे ।।३।।
यावतीनामोषधीनां गाव: प्राश्नन्त्यघ्न्या यावतीनामजावय: ।
तावतीर्विश्वभेषजीरा भरामि त्वामभि ।।४।।
यावतीषु मनुष्या भेषजं विषयो विदु: ।
तावतीस्तुभ्यमाभृता: शर्म यच्छन्त्योषधी: ।।५।।

पुष्पवतीः प्रसूमतीः फलिनीरफला उत ।
संमातर इव दुह्रामस्मा अरिष्टतातये ।।६।।
उत्वाहार्षं पञ्चशलादुत्वा दशशला दुत ।
उत्वा यमस्य पड्बीशादोषधीभिरपीपरम् ।।७।।

१६-१५

इन्द्रस्य प्रथमो रथो देवानामपरो रथो वरुणस्य तृतीय इत् ।
अहिनामपमारथ स्थाणुमारदथार्षत् ।।१।।
दर्भः शोचिस्तरूणकमश्वस्य वारः पुरुषस्य वारः ।
रथस्य बन्धुरमहीनामरसं विषं वारिदुग्रम् ।।२।।
अव श्वेत पदा जहि पूर्वेण चापरेण च ।
उदप्लुतमिव दार्वहीनामरसं विषं वारिदुग्रम् ।।३।।
अरंघुषो निमज्योन्मज्य पुनरब्रवीत् ।
उदप्लुतमिव दार्वहीनामरसं विषं वारिदुग्रम् ।।४।।
पैद्वो हन्ति कसर्णीलं पैद्व श्वित्रमुतासितम् ।
पैद्वो रथर्व्याः शिरः सं बिभेद पृदाक्वाः ।।५।।
पैद्वो प्रेहि प्रथमोनु त्वा वयमेमसि ।
अहीन् व्य ऽस्यतात् पथो येन स्मा वयमेमसि ।।६।।
इदं पैद्वो अजायतेदमस्य परायणम् ।
इमान्यर्वतः पदाहिघ्न्यो वाजिनीवतः ।।७।।
संयतं न वि ष्परद् व्यात्तं न सं यमत् ।
अस्मिन् क्षेत्रे द्वावही स्त्री च पुमांश्च तावुभावरसा ।।८।।
अरसास इहाहयो ये अन्ति ये च दूरके ।
घनेन हन्मि वृश्चिकमहिं दण्डेनागतम् ।।९।।
अघाश्वस्येदं भेषजमुभयोः स्वजस्य च ।
इन्द्रो मह्यमघायन्तमहिं पैद्वो अरन्धयत् ।।१०।।

१६-१६

पैद्वस्य मन्महे वयं स्थिरस्य स्थिरधाम्न: ।
इमे पश्चात्पृदाकव: प्रदीध्यत आसते ।।१।।
नष्टासवो नष्टविषा हता इन्द्रेण वज्रिणा ।
जघानेन्द्रो जघ्निमा वयम् ।।२।।
हतास्तिरश्चिराजयो निपिष्ठास: पृदाकव: ।
दर्विं करिक्रतं श्वित्रं दर्भेष्वसितं जहि ।।३।।
कैरातिका कुमारिका सका खनति भेषजम् ।
हिरण्ययीभिरभ्रिभिर्गिरीणामुप सानुषु ।।४।।
आयमगन् युवा भिषक् पृश्निहापराजित: ।
स वै स्वजस्य जम्भन उभयोर्वृश्चिकस्य च ।।५।।
इन्द्रो मे ऽहीन् जम्भयन्मित्रश्च वरुणश्च ।
वाता पर्जन्योभा ।।६।।
पैद्वो मे ऽहीनजम्भयत् पृदाकुं च पृदाकव: ।
स्वजं तिरश्चिराजिं कसर्णीलं दशोदसिन् ।।७।।
इन्द्रो जघान प्रथमं जनितारमहे तव ।
तेषां वस्तृह्यमाणानां क: स्वित् तेषामसद्रस: ।।८।।
सं हि शीर्षाण्यग्रभं पौञ्जिष्ठ इव कर्वरम् ।
सिन्धोर्मध्यं परेत्य व्य ऽनिजमहेर्विषम् ।।९।।
अहीनां सर्वेषां विषं परा वहन्तु सिन्धव: ।
हतास्तिरश्चिराजयो निपिष्टास: पृदाकव: ।।१०।।

१६-१७

ओषधीनामहं वृण उर्वरीरिव साधुया ।
नयाम्यर्वतीरिवाहे निरैतु ते विषम् ।।१।।

यदग्नौ सूर्ये विषं पृथिव्यामोषधीषु यत् ।
कान्दा विषं कनिक्लकं निरैत्वैतु ते अहे ।।२।।
अङ्गा दङ्गात् प्र च्यावय हृदयं परि वर्जय ।
अधा विषस्य तत्तेजोवाचीनं तदेतु ते ।।३।।
अग्ने त्रायस्व विमदं नयेमं पुनर्धेहि जीवसे जातवेद:।
मा ते हेडांसि दुरिताव गन्माहिर्वधीद् द्विषत: पुरुषं न:।।४।।
ये अग्निजा ओषधीजाहीनां ये अभ्रजा विद्युत आबभूवु: ।
येषां जातानि बहुधा बहूनि तेभ्य: सर्पेभ्यो नमसा विधेम।।५।।
तौदी नामासि कन्या घृताची नाम वा असि ।
अधस्पदेन ते पदोराददे विषदूषणम् ।।६।।
आरे अभूद्विषमरौद्विषे विषमप्रागपि ।
अग्निरहेर्निरधाद् विषं सोमो निरणयीत् ।
दंष्ट्रारमन्वगाद्विषमहिरमृत ।।७।।

१६-१८

कुतस्तौ जातौ कतम: सो अर्ध: कस्माल्लोकात्कतमस्या: पृथिव्या:।
वत्सौ विराज: सलिलादुदैतां त्वौ त्वा पृच्छामि कतरेण दुग्धा।।१।।
यो अक्रन्दयत् सलिलं महित्वा योनिं कृत्वा त्रिभुजं शयान: ।
वत्स: कामदुघो विराजो गुहा: चक्रे तन्व: पराचै: ।।२।।
यानि चत्वारि बृहन्ति येषां चतुर्थं वियुनक्ति वाचम् ।
ब्रह्मैनद्विद्यात्तपसा विपश्चिद्यस्मिन्नेकं युज्यते यस्मिन्नेकम् ।।३।।
बृहत: परि सामानि षष्ठात्पञ्चाधि निर्मिता ।
बृहद् बृहत्या निर्मितं कुतोधि बृहती मिता ।।४।।
बृहती परि मात्राया मातुर्मात्राधि निर्मिता ।
माया हि यज्ञे मायाया मायाया मातली परि।।५।।

वैश्वानरस्य प्रतिमोपरि द्यौर्यावद्रोदसी विबबाधे अग्नि: ।
तत: षष्ठादामुतो यन्ति स्तोमा उदितो यन्त्यभि षष्ठमह्न: ।।६।।
षट् त्वा पृच्छाम ऋषय: कश्यपेदं त्वं हि युक्तं युयुक्षे योग्यं च ।
विराजमाहुर्ब्रह्मण: पितरं तां नो विधेह्यतुधा सखिभ्य: ।।७।।
यां प्रच्युतामनु यज्ञा: प्रोच्यवन्त उपतिष्ठन्त उपतिष्ठमानाम् ।
यस्या व्रते प्रसवे यक्षमेजति सा विराडृषय: परमे व्योमन् ।।८।।
अप्राणैति प्राणेन प्राणतीनां विराट् स्वराजमभ्येति पश्चात् ।
विश्वं मृशन्तीमभिरूपां विराजं पश्यन्ति त्वे न त्वे पश्यन्तेनाम् ।।९।।
को विराजो मिथुनत्वं प्र वेद क ऋतुन् क उ कल्पमस्या: ।
क्रमान् को अस्या: बहुधा विदुग्धान् को अस्या धाम कतिधा व्युष्टी: ।।१०।।

१६-१९

इयमेव सा या प्रथमा व्यौच्छात्साप्स्वन्तश्चरति प्रविष्टा ।
वधूर्जिगाय नवगज्जनित्री महान्तो अस्यां महिमानो अन्त: ।।१।।
छन्द: पक्षे उषसा पेपिशाने समानं योनिमनु सं चरेते ।
सूर्यपत्नी सञ्चरत: प्रजानती केतुमती अजरे भूरिरेतसा ।।२।।
ऋतस्य पन्थामनु तिस्र आगुस्त्रयो घर्मा अनु रेत आगु: ।
प्रजामेका जिन्वत्यूर्जमेका राष्ट्रमेका रक्षति देवयूनाम् ।।३।।
अग्निषोमावदधुर्या तुरीयासीद्यज्ञस्य पक्षावृषय: कल्पयन्त: ।
गायत्रीं त्रिष्टुभं जगतीमनुष्टुभं बृहदर्कीं यजमानाय स्वराभरन्त: ।।४।।
पञ्च व्युष्टीरनु पञ्च दोहा गां पञ्चनाम्नीमृतवोनु पञ्च ।
पञ्च दिश: पञ्चदशेन क्लृप्तास्ता एकमूर्ध्नीरभि लोकमेकम् ।।५।।
षड्जाता भूता: प्रथमजर्तस्य षड्डु सामानि षडहं वहन्ति ।
षड्योगं सीरमनु सामसाम षडाहुर्द्यावापृथिवी: षडुर्वी: ।।६।।

षडाहु: शीतान् षड्ड मास उष्णानृतुं नो ब्रूत यतमोतिरिक्त: ।
सप्त सुपर्णा: कवयो नि षेदु: सप्त छन्दांस्यनु सप्त दीक्षा: ।।७।।
सप्तहोमा: समिधो ह सप्त मधूनि सप्तर्तवो नु सप्त ।।८।।
सप्ताज्यानि परि भूतमायन् सप्त होतार ऋतुष्या यजन्ति
ता: सप्त गृध्रा इति शुश्रवाहम् ।।९।।
अष्टौ धामानि प्रथमजर्तस्याष्टेन्द्रर्त्विजो दैव्या ये ।
अष्टयोनिरदितिरष्टपुत्रा अष्टमीं रात्रिमभि हव्यमेतु ।।१०।।
इत्थं श्रेयो मन्यमाने दमागमं युष्माकं सख्ये अहमस्मि शेवा ।
समानजन्मा क्रतुरस्तु व: शिव: स न: सर्वा: सं चरति प्रजानन्।।११।।

१६-२०

केबलीन्द्राय दुदुहे हि गृष्टिर्वशं पीयूषं प्रथमं दुहाना ।
अथातर्पयच्चतुरश्चतुर्धा देवान् मनुष्याङ् असुरानुतर्षीन् ।।१।।
अष्टेन्द्रस्य षड् यमस्य ऋषीणां सप्त सप्तधा ।
अपो मनुष्यानोषधीस्तां उ पञ्चानु सेचिरे ।।२।।
को नु गौ: क एकर्षि: किमु साम का आशिष: ।
यक्ष्मं पृथिव्यामेकवृदेकर्तु: कतमो नु स: ।।३।।
एक गौरेक एकर्षिरेकं सामैक धाशिष: ।
यक्ष्मं पृथिव्यामेकवृदेकर्तुर्नाति रिच्यते ।।४।।

१६-२१

प्राणाय नमो यस्य सर्वमिदं वशे ।
यो भूत: सर्वस्येश्वरो यस्मिन् सर्वं प्रतिष्ठितम् ।।१।।
नमस्ते प्राण क्रन्दाय नमस्ते स्तनयित्नवे ।
नमस्ते अस्तु विद्युते नमस्ते प्राणवर्षते ।।२।।

यत् प्राण ऋतावागते अभिक्रन्दत्योषधी: ।
प्र वीयन्ते गर्भान् दधतेथो बह्वीर्वि जायन्ते ।।३।।
यत् प्राण स्तनयित्नुना ऽभिक्रन्दत्योषधी: ।
सर्वं तदा प्र मोदते यत् किं च भूम्यामधि ।।४।।
यदा प्राणो अभ्यक्रन्दीद्वर्षेण स्तनयित्नुना ।
पशवस्तत् प्र मोदन्ते महो वै नो भविष्यति ।।५।।
अभिवृष्टा ओषधय: प्राणेन समवादिरन् ।
आयुर्वै न: प्रातीतर: त्मर्वा न: सुरभीरक: ।।६।।
नमस्ते प्राण प्राणते नमो अस्त्वोपानते ।
प्रतीचीनाय ते नम: पराचीनाय ते नम:
सर्वस्मै त इदं नम: ।।७।।
नमस्ते अस्त्वायते नमो अस्तु परायते ।
नमस्ते प्राण तिष्ठत आसीनायोत ते नम: ।।८।।
या ते प्राण प्रिया तनूर्या वा ते प्राण प्रेयसी ।
अथो यद् भेषजं तव तस्य नो धेहि जीवसे ।।९।।
प्राण: प्रजा अनुपास्ते पिता पुत्रमिव प्रियम् ।
प्राणो ह सर्वस्येश्वरो यच्च प्राणति यच्च न ।।१०।।

१६-२२

प्राण मृत्यु: प्राणोमृतं प्राणं देवा उपासते ।
प्राणो ह सत्यवादिनमुत्तमे लोक आदधत् ।।१।।
प्राणो विराट् प्राणो देष्ट्री प्राणं सर्व उपासते ।
प्राणो अग्निश्चन्द्रमा: सूर्य: प्राणमाहु: प्रजापतिम् ।।२।।
प्राणापानौ व्रीहियवावनड्वान् प्राण उच्यते ।
यवे ह प्राण आहितोपानो व्रीहिरुच्यते ।।३।।

अपानति प्राणति पुरुषो गर्भे अन्तरा ।
यदा त्वं प्राण जिन्वस्यथ स जायते त्वुत ।।४।।
प्राणमाहुर्मातरिश्वानं वातो ह प्राण उच्यते ।
प्राणे ह भूतं भव्यं च प्राणे सर्वं समाहितम् ।।५।।
आथर्वणीराङ्गिरसीर्दैवीर्मनुष्यजाश्च याः ।
सर्वाः प्र मोदन्तु ओषधयो यदात्वं प्राण जीन्वसि ।।६।।
यदा प्राणो अभ्यवर्षिद्वर्षेण पृथिवीं महीम् ।
ओषधयः प्र मोदन्तेथो याः काश्च वीरुधः ।।७।।
यस्ते प्राणेदं वेद यस्मिंश्चासि प्रतिष्ठितः ।
सर्वे अस्मै बलिं हरानमुष्मिंल्लोक उत्तमे ।।८।।
यथा प्राण बलिहृतस्तुभ्यं सर्वाः प्रजा इमाः ।
एवा तस्मै बलिं हरान् यस्त्वा शुश्राव: सुश्रवाः ।।९।।
अन्तर्गर्भश्चरति देवतास्वाभूतो भूतः स उ जायते पुनः ।
स भूतं भव्यं भुवनं भविष्यत् पिता पुत्रं प्र विवेशा शचीभिः।।१०।।

१६-२३

एकपादं नोत्खिदति सलिलाद्धंस उत्पतन् ।
यदङ्ग स तमुत्खिदेन्नैवाद्य न श्वः
रात्री नाहः स्यान्न प्रज्ञायैति किं च न ।।१।।
अष्टाचक्रं वर्त्तत एकनेमि सहस्राक्षरं प्र पुरो नि पश्चात् ।
अर्धेनेदं परिबभूव विश्वं यदस्यार्धं कतमः स केतुः ।।२।।
यो अस्य विश्वजन्मन ईशे सर्वस्य चेष्टतः ।
अन्येषु क्षिप्रधन्वने तस्मै प्राण नमोस्तु ते ।।३।।
यो अस्य सर्व जन्मन ईशे विश्वस्य चेष्टतः ।
अतन्द्रो ब्रह्मणा धीरः प्राणो मामभि रक्षतु ।।४।।

ऊर्ध्व: सुप्तेषु जागार ननु तीर्यङ् नि पद्यते ।
न सुप्तमस्य सुप्तेष्वनु सुश्राव कश्चन ।।५।।
प्राणो मा मत् पर्यावृतो न मदन्यो भविष्यसि ।
अपां गर्भमिव जीवसे प्राण बध्नामि त्वा मयि ।। ६ ।

१६-२४

सहस्रस्त्वेष ऋषभ: पयस्वान् विश्वा रूपाणि वक्षणासु बिभ्रत्।
भद्रं दात्रे यजमानाय शिक्षन् बार्हस्पत्य उस्रियस्तन्तुमातान् ।।१।।
अपां यो अग्रे प्रतीमा बभूवु: प्रभू: सर्वस्मै पृथिवीव देवी ।
पिता वत्सानां पतिरघ्न्यानां साहस्रे पोषे अपि न: कृणोतु ।।२।।
पुमानन्तर्वाङ् स्थविर: पयस्वान् वसो: कबन्धमृषभो बिभर्ति ।
तमिन्द्राय पथिभिर्देवयानैर्हुतमग्निर्वहतु जातवेदा: ।।३।।
देवानां भाग उपनाह एषो ऽपां रस ओषधीनां घृतस्य ।
सोमस्य द्रप्समवृणीत शक्रो वृहन्नद्रिरभवद्यच्छरीरम् ।।४।।
पिता वत्सानां पतिरघ्न्यानामथो पिता महतां गर्गराणाम् ।
वत्सो जरायु: प्रतिधुक् पीयूष आमिक्षा घृतं तद्वस्य रेत: ।।५।।
सोमस्य पूर्णं कलसं विभर्षि त्वष्टा रूपाणां जनिता पशूनाम् ।
शिवास्ते सन्तु प्रजन्व इमान्यस्मभ्यं स्वधिते यच्छ या अमू: ।।६।।
इन्द्रस्यौजो वरुणस्य बाहू अश्विनोरंसौ मरुतामियं ककुत् ।
बृहस्पति: संभूतमेतमाहुर्ये धीरास: कवयो मनीषिण: ।।७।।
आज्यं बिभर्ति घृतमस्य रेत: साहस्र: पोषस्तमु यज्ञमाहु: ।
इन्द्रस्य रूपमृषभो वसान: सो अस्मान् देवा: शिव ऐतु दत्त: ।।८।।
दैवीर्विश: पयस्वाना तनोषि त्वामिन्द्रं त्वां सरस्वन्तमाहु: ।
सहस्रं स एकमुखा ददाति यो ब्राह्मण ऋषभोमाजुहोति ।।९।।

बृहस्पति: सविता ते मनो दधौ त्वष्टुर्वायो: पर्यात्मा त आभृत:
अन्तरिक्षे मनसा त्वा जुहोमि बर्हिष्टे द्यावापृथिवी अभूताम्।।१०

१६-२५

य इन्द्र इव देवेष्वेति गोषु विवावदत्।
तस्य ऋषभस्याङ्गानि ब्रह्मा सं स्तौतु भद्रया।।१।।
पार्श्वे आस्तामनुमत्या भगस्यास्तामनूवृजौ।
अष्ठीवन्तावब्रवीन्मित्रो ममैतौ केवलाविति।।२।।
भसदासीदादित्यानां श्रोणी आस्तां बृहस्पते:।
पुच्छं वातस्य देवस्य तेन धूनोत्योषधी:।।३।।
क्रोड आसीज्जामिशंसस्य सोमस्य कलशो धृत:।
उत्थातुरब्रुवन् पदो यदृषभं व्यकल्पयन्।।४।।
गुदा आसन् सिनीवाल्या: सुर्यायास्त्वचमब्रुवन्।
देवा: संगत्य यत्सर्व ऋषभं व्यकल्पयन्।।५।।
ते कुष्ठिका: स्वरमायै: कूर्मेभ्यो अदधु: शफान्।
ऊबध्यमस्य कीटेभ्य: श्ववर्तेभ्यो अधारयन्।।६।।
शृङ्गाभ्यां रक्ष ऋषत्यरातिं हन्ति चक्षुषा।
शृणोति भद्रं कर्णाभ्यां गवां य: पतिरघ्न्य:।।७।।
शतयाजं स यजते नैनं ऋण्वन्त्यग्नय:।
जिन्वन्ति सर्वे तं देवा यो ब्राह्मण ऋषभमाजुहोति।।८।
ब्राह्मणेभ्य ऋषभं दत्वा वरीय: कृणुते मन:।
पृष्टिं सो अघ्न्यानां स्वे गोष्ठे वि पश्यतु।। ९।
गाव: सन्तु प्रजा: सन्त्वथो अस्तु तनूबलम्।
सर्वं तदनु मन्यन्तां देवा ऋषभदायिने।।१०।।

१६-२६

अयं पियान इन्द्रियं रयिं बिभर्ति चेतनीम् ।
अयं धेनु सुदुघां नित्यवत्सां वशं दुहे
विपश्चितं परो दिव: ।।१।।
पिशङ्गरूपो नभसो वयोधा ऐन्द्र: शुष्मो विश्वरूपो नागन् ।
प्रजामस्मभ्यं दधत् रयिं च रायस्पोष मुप सत्ता सदेम ।।२।।
एतं वो युवानं परि दध्मो अत्र तेन क्रिडन्तीश्चरत वशाङ् अनु ।
मा नो हिंसिष्ट जनुषा सुभागा रायस्पोसैरभि न: सचध्वम् ।।३।।
उपेहोपपर्चना ऽस्मिन् गोष्ठे उप पृञ्चतु ।
उप ऋषभस्य यद्रेत उपेन्द्र तव वीर्यम् ।।४।।

१६-२७

अयं प्रतिसरो मणिर्वीरो वीराय वध्यते ।
वीर्यावान् सपत्नहा शूरवीर: परिपाण: सुमङ्गल: ।।१।।
अयं मणि सपत्नहा सुवीर: सहस्वान् वाजी सहमान उग्र: ।
प्रत्यक्कृत्या दूषयन्नेतु वीर: ।।२।।
अनेनेन्द्रो मणिना वृत्रमहन्ननेनासुरान् पराभावयन्मनीषी ।
अनेन द्यावापृथिवी उभे अजयदनेनाजयत् प्रदिशश्चतस्र: ।।३।।
अयं स्राक्त्यो मणि: प्रतीवर्त: प्रतिसर: ।
ओजस्वान् विमृधो मणि: सो अस्मान् पातु विश्वत: ।।४।।
तदग्निराह तदु सोम आह बृहस्पति: सविता तदिन्द्र: ।
ते ते देवा: पुरोहिता: प्रतीची: कृत्या: प्रतिसरैरजन्तु ।।५।।
अन्तर्दधे द्यावापृथिवी उताहरुत सूर्यम् । उतेमं ब्रह्मणस्पतिम् ।
ते ते देवा: पुरोहिता: प्रतीची: कृत्या: प्रतिसरैरजन्तु ।।६।।
ये स्राक्त्यं मणिं जना वर्माणि कृण्वते ।
सूर्यो दिवमिवारुह्य वि कृत्या वाधते वशी ।।७।।

स्राक्त्येन मणिन ऋषिणेव मनीषिणा ।
अजैषं सर्वा पृतना वि मृधो हन्मि रक्षस: ।।८।।
या: कृत्या आङ्गिरसीर्या: कृत्या आसुरीरुत ।
कृत्या या: स्वयंकृता या उ चान्येभिराभृता: ।
उभयीस्ता: परा यन्तु परावतो नवतिं नाव्या अति ।।९।।
अस्यै मणिं वर्म वध्नन्तु देवा इन्द्रो विष्णु: सविता रुद्रो अग्नि
प्रजापति: परमेष्ठी विराड् वैश्वानर ऋषयश्च सर्वे ।।१०।।

१६-२८

उत्तमो अस्योषधीनामनड्वान् जगतामिव व्याघ्र: श्वपदामिव ।
यमैच्छामाविदाम तं प्रतिस्पाशनमन्तितम् ।।१।।
स इद् व्याघ्रो भवत्यथो सिंहो अथो वृषा ।
सर्वा दिशो वि राजति यो बिभर्तीमं मणिम् ।।२।।
नैनं घ्नन्त्यप्सरसो न गन्धर्वा न मर्त्या: ।
सर्वा दिशो वि राजति यो बिभर्तीमं मणिम् ।।३।।
कश्यपस्त्वामसृजत कश्यपस्त्वा समैरयत् ।
अबिभस्त्वेन्द्रो मानुषे वर्म बिभ्रत् संश्रेषिणे ऽजयत् ।।४।।
मणिंसपत्नं जम्भनं वर्म देवा अबध्नत ।
यस्त्वा कृत्याभिर्यस्त्वा दीक्षाभिर्यस्त्वा यज्ञैर्जिघांसति ।
प्रत्यक् त्वमिन्द्र तं जहि वज्रेण शतपर्वणा ।।५।।
अयमिद्वै: प्रतीवर्त: सहस्वान् संजयो मणि: ।
प्रजां धनं च रक्षतु परिपाण: सुमङ्गल: ।।६।।
असपत्नं नो अधरादसपत्नं न उत्तरात् ।
इन्द्रासपत्नं न: पश्चाज्ज्योति: शूर पुरस्कृधि ।।७।।

त्राग्नं वर्म बहुलं यदुग्रं विश्वे देवा नाति विध्यन्ति सर्वे ।
सो तन्वं त्रायतां सर्वतो बृहदायुष्मान् जरदष्टिर्यथासत् ।।८।।
आ त्वा रुक्षद्देवमणिर्मह्या अरिष्टतातये ।
इमं मेथिमभिसंविशध्वं तनूपानं त्रिवरूथमोजसे ।।९।।
अस्मिन्निन्द्रो नि दधातु नृम्णमिमं देवासो अभिसंविशध्वम् ।
दीर्घायुत्वाय शतशारदायायुष्मान् जरदष्टिर्यथासत् ।।१०।।

इन्द्रो बध्नातु ते मणिं जिगीवाङ् अपराजित:
सोमपा अभयंकरो वृषा ।
स त्वा रक्षतु सर्वदा दिवानक्तं च विश्वत: ।।११।।

*(इति क्षुद्रकाण्डनामषोडषकाण्डे पञ्चमो ऽनुवाक:)*

१६-२९

इन्द्रो मन्थतु मन्थिता शक्र: शूर: पुरन्दर: ।
यथा हनाम सेनाममित्राणां सहस्रश: ।।१।।
पूतिरज्जुरुपध्मानी पूतिं सेनां कृणोत्वमुम् ।
अग्निं धूमं परादृश्य हृत्स्वा दधतां भयम् ।।२।।
पुरुषानमून् पुरुषाह्व: कृणोतु हन्त्वेनान् वधको वधै: ।
क्षिप्रं शर इव भज्यन्तां बृहज्जालेन संदिता: ।।३।।
अमुनश्वत्थ नि: शृणीहि खादामून् खदिराजिरम् ।
ताजभङ्ग इव भज्यन्तां बृहज्जालेन संदिता: ।।४।।
अन्तरिक्षं जालमासीज्जालदण्डा दिशो मही: ।
तेनाभिधाय सेनामिन्द्रो दस्युन् अपावपत् ।।५।।
बृहत्ते जालं बृहत इन्द्र शूर सहस्रार्घस्य शतवीर्यस्य ।
तेन न्युब्जमघवन्नमित्रा: शस्वतीभ्य: समाभ्य: ।।६।।

बृहद्धि जालं बृहत: शक्रस्य वाजिनीवत: ।
तेन शतं सहस्रमयुतं जघानेन्द्रो दस्युनामभिधाय सेनाम्।।७।
अयं लोको जालमासीच्छक्रस्य महतो महान् ।
तेनाहमिन्द्रजालेन तमसामूनपि दधामि सर्वान् ।।८।।
सेदिरुग्रा व्यृद्धिरार्तिश्चानपवाचना ।
श्रमस्तन्द्रीश्च मोहश्च तैरमूनपि दधामि सर्वान् ।।९।।
मृत्यवेमुन् प्र यच्छामि मृत्युपाशैरमी सिता: ।
मृत्योर्ये अघला दूतास्तेभ्य एनान् प्रति नयामि बद्धान् ।।१० ।।

१६-३०

मृत्युदूता अमूत्रयत यमदूता अपोम्भत: ।
पर:सहस्रा हन्यन्तां तृणेढ्येनां मत्यं भवस्य ।।१।।
साध्या एकं जालदण्डमुद्यत्य यन्त्वोजसा ।
रुद्रा द्वितीयं वसवस्तृतीयमादित्यैरेक उब्जत: ।।२।।
विश्वे देवा उपरिष्टादुब्जन्तो यन्त्वोजसा ।
मध्येन घ्नन्तो यन्तु सेनामङ्गिरसो वधै: ।।३।।
वनस्पतीन् वानस्पत्यानोषधीरुत वीरुध: ।
द्विपाच्चतुष्पादिष्णामि यथा सेनाममूं हनन् ।।४।।
गन्धर्वाप्सरसो देवान् सर्पान् पुण्यजनान् पितृन् ।
दृष्टानदृष्टानिष्णामि यथा सेनाममूं हनन् ।।५।।
मृत्युपाशा इमे युक्ता यानाक्रम्य न मुच्यसे ।
अमुष्याहन्तु सेनाया इदं कूटं सहस्रहम् ।।६।।
घर्म: समिद्धो अग्निनायं होम: सहस्रह: ।
भवश्च पृश्निबाहु: शर्व सेनाममूं हतम् ।।७।।

मृत्योराषमा पद्यन्तां क्षुधं सेदिं वधं भयम् ।
इन्द्रश्चाक्षुजालाभ्यां शर्व सेनाममूं हतम् ।।८।।
पराजिता: प्र त्रसतामित्रा जिता धावत ब्रह्मणा ।
बृहस्पतिप्रणुत्तानां मामीषां मोचि कश्चन ।।९।।
अव पद्यन्तामेषामायुधानि मा शकन् प्रतिधामिषुम् ।
अथैषां बहु बिभ्यतामिषवो घ्नन्तु मर्मणि ।।१०।।
समेनान् क्रोशतां द्यावापृथिवी उभे
समन्तरिक्षं सह देवताभि: ।
मा ज्ञातारं मा प्रतिष्ठां विदन्त
मिथो विघ्नाना उप यन्तु मृत्युम्।।११।।

१६-३१

दिशश्चतस्रोश्वतर्यो देवरथस्य पुरोडाशा: शफा अन्तरिक्षमुद्धि:।।१।।
द्यावापृथिवी पक्षसी ऋतवोभीशवो वाक्परिरथ्यम् ।।२।।
अहोरात्रे चक्रे मासरा: संवत्सरो अधिष्ठानम् ।।३।।
विराडीषाग्नीरथमुखमिन्द्र: सव्यष्ठाश्चन्द्रमा: सारथि: ।।४।।
इतो जयेतो वि जय स्व जय सं जय स्वाहा ।।५।।

१६-३२

दिवस्पृथिव्या अन्तरिक्षात्समुद्रादग्नेर्वातान्मधुकशा हि यज्ञे ।
तां चायित्वामृतं वसानां हृद्भि: प्रजा: प्रति नन्दन्ति सर्वा: ।।१।
पश्यन्त्यस्याश्चरितं पृथिव्यां पृथङ्नरो बहुधा मीमांसमाना: ।
अग्नेर्वातान्मधुकशा हि यज्ञे मरुतामुग्रा नप्ति: ।।२।।
महद्विश्वरूपं पयो अस्या: समुद्रस्योत त्वा रेत आहु: ।
यत ऐति मधुकशा रराणा तत् प्राणस्तदमृतं निविष्टम् ।।३।।
मातादित्यानां दुहिता वसूनां प्राण: प्रजानाममृतस्य नाभि: ।
हिरण्यवर्णा मधुकशा घृताची महद् भर्गश्चरति मर्त्येषु ।।४।।

मधो: कशामजनयन्त देवास्तस्या गर्भो अभवद्विश्वरूप: ।
तं जातं तरुणं पिपर्ति माता स जातो विश्वा भुवनाभि वस्ते।।५।।
कस्तौ प्र वेद क उ तौ न आह
यावस्या: स्तनौ सहस्रधारावक्षितौ ।
ऊर्जं दुहाते अनपस्फुरन्तौ ।।६।।
कस्तं प्र वेद क उ तं चिकेत यो अस्या हृद: कलश:
सोमोधानो अक्षित: ।
ब्रह्मा सुमेधा: सो अस्मिन् मदेत ।।७।।
हिङ् करिक्रती बृहती वयोधा उच्चैर्घोषाभि याति या व्रता: ।
त्रीन् घर्मानभि वावशाना मिमाति मायुं पयते पयोभि: ।।८।।
यामापीनामुपसीदन्त्यापो यां शाक्वरा वृषभा यां स्वराज: ।
ते वर्षन्ति ते वर्षयन्ति तद्विदे काममूर्जमाप: ।।९।।
स्तनयित्नुस्ते वाक् प्रजापते वृषा शुष्मं क्षिपसि भूम्यामधि ।
अग्नेर्वातान्मधुकशा हि यज्ञे मरुतामुग्रा नप्ति: ।।१०।।

१६-३३

यथा सोम: प्रात:सवने अश्विनोर्भवति प्रिय: ।
एवामे अश्विना वर्च आत्मनि ध्रियताम् ।।१।।
यथा सोमो द्वितीयसवन इन्द्राग्न्योर्भवति प्रिय: ।
एवा म इन्द्राग्नि वर्च आत्मनि ध्रियताम् ।।२।।
यथा सोमस्तृतीयसवन ऋभूणां भवति प्रिय: ।
एवा म ऋभवो वर्च आत्मनि ध्रियताम् ।।३।।
मधु जनिषीय मधु वंशिषीय ।
पयस्वानग्न आगमं तं मा सं सृज वर्चसा ।।४।।

सं माग्ने वर्चसा सृज सं प्रजया समायुषा ।
विद्युर्मे अस्य देवा इन्द्रो विद्यात्सहऋषिभि: ।।५।।
यद् गिरिषु पर्वतेषु गोष्वश्वेषु यन्मधु ।
सुरायां सिच्यमानायां यत्तत्र मधु तन्मयि ।।६।।
यथामधु मधुकृत: सं भरन्ति मधावधि ।
एवा मे अश्विना बलमोजश्च ध्रियताम् ।।७।।
यथा मक्षा इदं मधु न्यञ्जन्त्यक्ष्णावधि ।
एवा मे अश्विना वर्चस्तेजोश्च ध्रियताम् ।।८।।
अश्विना सारघेण मा मधुनाङ्क्तं शुभस्पती ।
यथा वर्चस्वतीं वाचमावदानि जनाङ् अनु ।।९।।
वृषा शुष्मं क्षिपसि भूम्यां दिवो मधो कशया पृथिवीमनक्षि ।
तां जातां पशव उप जीवन्ति सर्वे तेनो सेषमूर्ज पिपर्त्ति।।१०।।

१६-३४

पृथिवी दण्डोन्तरिक्षं गर्भो द्यौ कशा विद्युत् प्रकाश: ।।१।।
मधो: कशासि घृताची हिरण्ययो विदु: ।।२।।
उर्व्यसि प्रभ्व ऽस्यम्भोऽसि नभो ऽसि सहो ऽसि ।।३।।
अम्भो मां कृणु नभो मां कृणु सहो मां कृणु ।।४।।
समुद्रोस्यक्षितो अपरिमिता सहस्रर्माणि: सहस्रं मामृच्छतु।।५।।
यो वै मधुकशाया: सप्त मधूनि वेद सप्त मधुमतीन् ।।६।।
मधुमन्तं लोकं जय ऽसि मध्वस्याहार्यं भवति ।।७।।
यद्वीध्रे स्तनयति तत् प्रजापतिरेव प्रजाभ्य: प्रादुर्भवति ।।८।।
तस्मात् प्राचीनोपवीतस्तिष्ठे प्रजापते ऽनु मा बुध्यस्वेति ।।९।।
अन्वेनं प्रजापतिरनुप्रजा बुध्यन्ते य एवं वेद ।।१०।।

*(इति क्षुद्रकाण्डनामषोडशकाण्डे षष्ठो ऽनुवाको)*

१६-३५

यां कल्पयन्ति बहतौ वधूमिव
विश्वरूपां हस्तकृतां चिकित्सवः।
सारादेत्वप नुदाम एनान् ।।१।।
शीर्षण्वतीं पयस्वतीं कर्णिनीं कृतां कृत्याकृतां
संभृतां विश्वरूपाम् ।
प्रत्यक् प्रतिप्रहिण्मसि यश्चकार तमृच्छतु ।।२।।
शूद्रकृता राजकृता स्त्रीकृता ब्रह्मभिः कृता ।
जाया पत्या नुत्तेव कर्त्तारं वन्धुमृच्छतु ।।३।।
अनयाहमोषध्या सर्वाः कृत्या अदूदुषम् ।
यां क्षेत्रे चक्रुर्यां गोभ्यो यां वा ते पुरुषेभ्यः ।।४।।
कृत्याः सन्तु कृत्याकृते शपथाः शपथीब्ने ।
प्रत्यक् प्रति प्रहिण्मसि यश्चकार तमृच्छतु ।।५।।
प्रतीचीन आङ्गीरसोऽध्यक्षो नः पुरोहितः ।
प्रातीचीः कृत्या आकृत्यामून् कृत्याकृतो जहि ।।६।।
यस्त्वोवाच परेहीति प्रतिकूलमुदाय्यम् ।
तं कृत्ये अभिनिवर्तस्व मास्मानिच्छो अनागसः ।।७।।
यस्ते परूंषि संदधौ रथस्येव ऋभुर्धिया ।
तं गच्छ तत्र तेयनमज्ञातस्तेयं जनः ।।८।।
ये त्वा कृत्वालेभिरे विद्वला अभिचारिणः ।
विद्मेदं कृत्यादूषणं प्रतिवर्त्म पुनः सरं
तेन त्वा स्नपयामसि।।९।।
यद्दुर्भगां प्रस्नपितां मृतवत्सामुपेयिम ।
अपैतु सर्वं मत्पापं द्रविणं मोप तिष्ठतु ।।१०।।

१६- ३६

यत्ते पितृभ्यो ददतो यज्ञे वा नाम जगृहु: ।
सन्देश्यात्सर्वस्मात् पापादिमा मुञ्चन्तु त्वौषधी: ।।१।।
देवैनसात् पित्र्यान्नामग्राहात् संन्देश्यादभिनिष्कृतात् ।
मुञ्चन्तु त्वा वीरुधो वीर्येण ब्रह्मण: ऋग्भि: पयस ऋषीणाम्।।२।।
यथा वातश्च्यावयति भूम्या रेणुमन्तरिक्षाच्चाभ्रम् ।
एवा मत् सर्वं दुर्भूतं ब्रह्मनुत्तमपायति ।।३।।
अपक्राम नानदती विनद्धा गर्दभीव ।
कर्तॄन्नक्षस्वेतो नुत्ता ब्रह्मणा वीर्यावता ।।४।।
अयं पन्थापि नयामस्त्वा कृत्ये प्रहितां प्रति त्वा प्र हिण्म: ।
तेनाभि याहि भञ्जत्यनस्वतीव वाहिनी विश्वरूपा कुरूटिनी।।५।।
पराक्ते ज्योतिरपथं ते अर्वागन्यत्रास्मदयना कृणुष्व ।
परेणेहि नवतिं नाव्या अति दुर्गा: स्रोत्या मा क्षणिष्ठा: परेहि।।६।।
वात इव वृक्षं नि मृणीहि पादय मा गामश्वं पुरुषमुच्छिष एषाम्।
कर्तॄन्निवृत्येत: कृत्येप्रजास्त्वाय बोधय ।।७।।
यां ते चक्रुर्बर्हिषि यां श्मशाने कृत्यां क्षेत्रे वलगं वा निचख्नु: ।
अग्नौ वा त्वा गार्हपत्येभिचेरु: पाकं सन्तं धीरतरा -
अनागसं तदितो नाशयामसि ।।८।।
उपाहृतमनुबुद्धं निखातं वैरं त्सार्यन्वविदाम कर्त्रम् ।
तदेतु यत आगतं त्राताश्व इव वर्ततां हन्तु कृत्याकृत: प्रजाम्।।९।।
स्वायसा असय: सन्ति नो गृहे विद्मा ते कृत्ये यतिधा परुंषि ।।१०।।

१६-३७

उत्तिष्ठैव परेहीतोज्ञाते किमिहेच्छसि ।
ग्रीवास्तेकृत्ये पादौ चापि कर्त्स्यामि निर्द्रव ।।१।।

इन्द्राग्नी अस्मान्रक्षतां यौ प्रजानां प्रजावती ।
सोमो राजाधिपा मृडिता च भूतस्य न: पतयो मृडयन्तु ।।२।।
भवाशर्वा वस्यतां पापकृत्वने
कृत्याकृते दुष्कृते विद्युतं देवहेतिम् ।।३।।
यद्येयथ द्विपदी चतुष्पदी कृत्याकृता संभृता विश्वरूपा ।
सेतो ऽष्टापदी भूत्वा पुन: परेहि दुच्छुने ।।४।।
अभ्यक्ताक्ता स्वरंकृता सर्वं भरन्ती दुरितं परेहि ।
जानीहि कृत्ये कर्तारं दुहितेव पितरं स्वम् ।।५।।
परेहि कृत्ये मा तिष्ठो विद्धस्येव पदं नय ।
मृग: स मृगयुस्त्वं न त्वा निकर्तुमर्हति ।।६।।
अमर्त्यो मृत्य: स्वयंकृतं यं चकाराचित्या
हस्ताभ्यामात्मनेवधीम् ।।७।।
उतहन्ति पूर्वासिनं प्रत्यादायावर्हीष्वा ।
उतो पूर्वस्य निघ्नतो नि हन्त्यपर: प्रति ।।८।।
एतद्धि शृणु मे वचोथेहि यत एयथ ।
यस्त्वा चकार तं पुन: ।।९।।
अनागोहत्या वै भीमा कृत्ये मा नो गामश्वं पुरुषं वधी: ।।१०।।

१६–३८

यत्र यत्रासि निहिता ततस्त्वोत्थापयामसि ।
पर्णाल्लघीयसी भव ।।१।।
यदि स्थ तमसाभृता जालेनाभिहिता यूयम् ।
सर्वा: संलुप्येत: कृत्या: पुन: कृत्ये प्र हिण्मसि ।।२।।
कृत्याकृतं मूलकृतमभिनिष्कारिण: प्रजाम् ।
मृणीहि कृत्ये मोच्छिषोमून् कृत्याकृतं जहि ।।३।।

यथा सूर्यस्तमसो मुच्यते परि रात्रिं जहात्युषसश्च केतून् ।
एवाहं सर्वं दुर्भूतं हस्तीव रजो दुरितं जहामि ।।४।।

१६-३९

उपमित: प्रतिमितोऽथो परिमितश्च य: ।
शालाया विश्ववाराया नद्धानि वि चृतामसि ।।१।।
यत्ते नद्धं विश्ववारे पाशो ग्रन्थिश्च य: कृत: ।
बृहस्पतिरिवाहं बलं वाचा वि स्रंसयामि तत् ।।२।।
आ ययाम सं बबर्ह ग्रन्थींश्चकार ते दृढान् ।
परूंषि विद्वाञ्छस्तेवेन्द्रेण वि चृतामसि ।।३।।
संदंशानां पलदानां परिष्वञ्जल्यस्य च ।
सर्वामानस्य पत्नि ते नद्धानि वि चृतामसि ।।४।।
वंशानां ते नहनानां प्राणाहस्य तृणस्य च ।
पक्षाणां विश्ववारेते नद्धानि वि चृतामसि ।।५।।
यानि ते अन्त: शिक्यान्याबेधू रण्याय कम् ।
प्र ते तानि वि चृतामसि शिवा मानस्य पत्नी
न उद्धिता तन्वे भव ।।६।।
हविर्धानमग्निशालं पत्नीनां सदनं सद: ।
सदो देवानामसि देवी शाले ।।७।।
अक्षुमोपशं विततं सहस्राक्षं विषूवति ।
अपिनद्धमभिहितं ब्रह्मणा वि चृतामसि ।।८।।
यश्च त्वा प्रतिगृह्णाति येन चासि मिता त्वम् ।
उभौ मानस्य पत्नि तौ जीवतां जरदष्टी ।।९।।
अमुत्रैनमा गच्छताद् दृढा नद्धा परिष्कृता ।
यस्यास्ते वि चृतामस्यङ्गमङ्गं परुष्परु: ।।१०।।

१६-४०

अग्निमन्तश्छादयसि पुरुषान् पशुभि: सह ।
विजावति प्रजावति वि ते पाशांश्चृतामसि ।।१।।
उर्जस्वती घृतवती पृथिव्यां निमिता मिता ।
विश्वान्नं बिभ्रती शाले मा हिंसी: प्रतिगृह्णत: ।।२।।
यस्त्वा पूर्वो निमिमाय सञ्जभार वनस्पतीन् ।
प्रजायै चक्रे त्वा शाले परमेष्ठी प्रजापति: ।।३।।
नमस्तस्मै नमो दात्रे शालापतये च कृण्मसि ।
नमोग्नये प्रचरते पुरुषाय च ते नम: ।।४।।
गोभ्यो अश्वेभ्यो नमो यच्छालायां विजायते ।
अन्तरा द्यां च पृथिवीं च यद् व्यचस्तेन शालां
प्रति गृह्णामि त इमाम् ।।५।।
यदन्तरिक्षं रजसो विमानं तत् कृण्वेहमुदरं शेवधिभ्य:।
यच्छालां प्रति गृह्णामि तस्मै ।।६।।
तृणैरावृता पलदान् वसाना रात्रिव शाला जगतो निवेशनी।
मिता पृथिव्यां तिष्ठसि हस्तिनीव पद्वती ।।७।।
या द्विपक्षा चतुष्पक्षा षट्पक्षा या निमीयते ।
अष्टापक्षां दशपक्षां शालां
मानस्य पत्नीमग्निर्गर्भ इवा शये ।।८।।
इटस्य ते वि चृताम्यपिनद्धमपोर्णुवन् ।
वरुणेन समुब्जितां मित्र: प्रातर्व्युब्जतु ।।९।।
कुलायेधि कुलायं कोशे कोश: समुब्जित: ।
तत्र मर्तो वि जायते यस्माद्विश्वं प्रजायते ।।१०।।

१६-४१

चतु: स्रक्तिं परिचक्रां कविभिर्निर्मितां मिताम् ।
इन्द्राग्नी रक्षत: शालाममृतौ सोम्यं सद: ।।१।।
मा न: पाशान् प्रति मुचो गुरुर्भारो लघुर्भव: ।
वधूमिव त्वा शाले यत्रकामं भरामसि ।।२।।
इमा आप: प्र हराम्ययक्ष्मा यक्ष्मनाशनी: ।
गृहानभि प्र सीदाम्यमृतेन सहाग्निना ।।३।।
प्रतीचीं त्वा प्रतीचीन: शाले प्रैम्यहिंसतीम् ।
अग्निर्ह्यन्तरापश्चर्तस्य प्रथमोभा ।।४।।
स्वाहा देवेभ्य: स्वाह्येभ्य:
प्राच्या दिश: शालाया नमो महिम्ने ।।५।।
स्वाहा देवेभ्य: स्वाह्येभ्य:
दक्षिणाया दिश: शालाया नमो महिम्ने ।।६।।
स्वाहा देवेभ्य: स्वाह्येभ्य:
प्रतीच्या दिश: शालाया नमो महिम्ने ।।७।।
स्वाहा देवेभ्य: स्वाह्येभ्य:
उदीच्या दिश: शालाया नमो महिम्ने ।।८।।
स्वाहा देवेभ्य: स्वाह्येभ्य:
ध्रुवाया दिश: शालाया नमो महिम्ने ।।९।।
स्वाहा देवेभ्य: स्वाह्येभ्य:
ऊर्ध्वाया दिश: शालाया नमो महिम्ने ।।१०।।
स्वाहा देवेभ्य: स्वाह्येभ्य:
दिशोदिश: शालाया नमो महिम्ने ।।११।।

## १६-४२

अरातीयोर्भ्रातृव्यस्य दुर्हार्दो द्विषतः शिरः ।
प्र वृश्चामीदमोजसा ।।१।।
वर्ममह्यमयं मणिः फालाज्जातः करिष्यति ।
तृप्तो मन्थेनमागमद्रसेन सह वर्चसा ।।२।।
यत् त्वा शिक्वः परावधीत्तक्षा हस्तेन वास्या ।
आपस्त्वा तस्माज्जीवलाः पुनन्तु शुचयः शुचिम् ।।३।।
हिरण्यस्रगयं मणिर्दुहानोवः स्वक्षतम् ।
श्रद्धां यज्ञं महो दधत् गृहे वसतु नोतिथिः ।।४।।
तस्मै घृतं सुरां मध्वन्नमन्नं क्षदामहे ।
स नः पितेव पुत्रेभ्यः श्रेयः श्रेयश्चिकित्सतु देवेभ्यो मणिरेत्य।।५।
यमबध्नाद् बृहस्पतिर्मणिं फालं घृतश्चुतमुग्रं खदिरमोजसे ।
तमग्निः प्रत्यमुञ्चताज्याय रसायकं सोऽस्मा आज्यं दुहे।
भूयो भूयः श्वः श्वस्तेन त्वं द्विषतो जहि ।।६।।
यमबध्नाद् बृहस्पतिर्मणिं फालं मधुश्चुतमुग्रं खदिरमोजसे ।
तमिन्द्रः प्रत्यमुञ्चतौजसे वीर्यायकं सोऽस्मै बलमिदुहे।
भूयो भूयः श्वः श्वस्तेन त्वं द्विषतो जहि ।।७।।
यमबध्नाद् बृहस्पतिर्मणिं फालं घृतश्चुतमुग्रं खदिरमोजसे ।
तं सूर्यः प्रत्यमुञ्चत तेनेमा अजयद्दिशः सोऽस्मै वर्च इदुहे।
भूयो भूयः श्वः श्वस्तेन त्वं द्विषतो जहि ।।८।।

## १६-४३

यमबध्नाद् बृहस्पतिर्मणिं फालं घृतश्चुतमुग्रं खदिरमोजसे ।
तं सोमः प्रत्यमुञ्चत द्रविणाय रसायकं
सो अस्मै मोह इदुहे ।
भूयो भूयः श्वः श्वस्तेन त्वं द्विषतो जहि ।।१।।

यमबध्नाद् बृहस्पतिर्मणिं फालं घृतश्चुतमुग्रं खदिरमोजसे ।
तं बिभ्रच्चन्द्रमा मणिमसुराणां पुरोजयद
दानवानां हिरण्ययी: सो अस्मै तेज इद् दुहे ।
भूयो भूय: श्व: श्वस्तेन त्वं द्विषतो जहि ।।२।।
यमबध्नाद् बृहस्पतिर्मणिं फालं घृतश्चुतमुग्रं खदिरमोजसे ।
तं राजा वरुणो मणिं प्रत्यमुञ्चत शंभुवं
सो अस्मै राज्यं इद् दुहे ।
भूयो भूय: श्व: श्वस्तेन त्वं द्विषतो जहि ।।३।।
यमबध्नाद् बृहस्पतिर्मणिं फालं घृतश्चुतमुग्रं खदिरमोजसे ।
तं त्वष्टा प्रत्यमुञ्चत प्रजाभ्यो वीर्यायकं
सो अस्मै रूपमिदुहे ।
भूयो भूय: श्व: श्वस्तेन त्वं द्विषतो जहि ।।४।।
यमबध्नाद् बृहस्पतिर्मणिं फालं घृतश्चुतमुग्रं खदिरमोजसे ।
तं बिभ्रत् सविता मणिं तेनेदमजयत्स्व:
सो अस्मै सुनृतां दुहे ।
भूयो भूय: श्व: श्वस्तेन त्वं द्विषतो जहि ।।५।।
यमबध्नाद् बृहस्पतिर्मणिं फालं घृतश्चुतमुग्रं खदिरमोजसे ।
तमापो बिभ्रतीर्मणि सदा धावन्त्यक्षिता:
स आभ्यो अमृतं दुहे।
भूयो भूय: श्व: श्वस्तेन त्वं द्विषतो जहि ।।६।।
यमबध्नाद् बृहस्पतिर्मणिं फालं घृतश्चुतमुग्रं खदिरमोजसे ।
तेनमां मणिना कृषिमश्विनावभिरक्षत:
स भिषग्भ्यां पयो दुहे ।
भूयो भूय: श्व: श्वस्तेम त्वं द्विषतो जहि ।।७।।

यमबध्नाद् बृहस्पतिर्मणिं फालं घृतश्चुतमुग्रं खदिरमोजसे ।
यमवध्नाद्बृहस्पतिर्वाताय मणिमाशवे
सो अस्मै वाजिनमिदुहे ।
भूयो भूय: श्व: श्वस्तेन त्वं द्विषतो जहि ।।८।।
यमबध्नाद् बृहस्पतिर्मणिं फालं घृतश्चुतमुग्रं खदिरमोजसे ।
तं देवा बिभ्रतो मणिं सर्वांल्लोकान् युधाजयन्
स एभ्यो जितिमिदुहे ।
भूयो भूय: श्व: श्वस्तेन त्वं द्विषतो जहि ।।९।।
यमबध्नाद् बृहस्पतिर्मणिं फालं घृतश्चुतमुग्रं खदिरमोजसे ।
तामिमं देवता मणिं तुभ्यं दधतु भर्तवे
स उ ते भूतिमिदुहाम् ।
भूयो भूय: श्व: श्वस्तेन त्वं द्विषतो जहि ।।१०।।

१६-४४

अन्तर्देशा अबध्नत प्रदिशस्तमबध्नत ।
प्रजापतिसृष्टो मणिर्द्विषतो मे अधराङ् अक: ।।१।।
ऋतवस्तमबध्नतार्तवास्तमबध्नत ।
संवत्सरस्तं बद्धूवा सर्वं भूतं वि राजति ।।२।।
अथर्वाणो अबध्नताथर्वणा अबध्नत ।
अङ्गीरसस्तं वद्धूवा दस्यूनां बिभिदु: पुर: ।।३।।
तं धाता प्रत्यमुञ्चत स भूतान्यकल्पयत् ।
तेन त्वं द्विषतो जहि ।।४।।
यमवध्नाद् बृहस्पतिर्देवेभ्यो असुरक्षितिम् ।
स त्वायं मणिरागमत् सह
गोभिरजाविभिरन्नेन प्रजया सह ।।५।।

यमवध्नाद् बृहस्पतिर्देवेभ्यो असुरक्षितिम् ।
स त्वायं मणिरागमन्मधोर्घृतस्य धारया
कीलालेन श्रिया सह ।।६।।
यमवध्नाद् बृहस्पतिर्देवेभ्यो असुरक्षितिम् ।
स त्वायं मणिरागमदोजसा तेजसा सहसा भूत्वा
द्रविणेन श्रिया सह ।।७।।
यस्य लोका इमे त्रय: पयो दुग्धमुपासते ।
स त्वायमभिरक्षतु मणि: श्रैष्ठ्याय मूर्धत: ।।८।।
स त्वायं शतदक्षिणो मणि: श्रैष्ठ्याय जिन्वतु ।
यं देवा: पितरो मनुष्या उपजीवन्तु सर्वदा ।।९।।
यस्मै त्वा यज्ञवर्धन मणे प्रत्यमुचं शिवम् ।
तं त्वं शतदक्षिणो मणे श्रैष्ठाय जिन्वतात् ।।१०।।

१६-४५

असपत्न: सपत्नहा सपत्नान्मे अधराङ् अक: ।
उत्तरं द्विषतस्त्वा मणि: कृणोतु देवजा: ।।१।।
मणिं समस्त्रवीर्यं ब्रह्मणा तेजसा सह प्रति मुञ्चामि ते शिवम् ।
स त्वायमभिरक्षतु देवै: फाल मणि: सह ।।२।।
यथा बीजमुर्वरायां कृष्टे फालेन रोहति ।
एवास्मिन्प्रजा पशवो अन्नमन्नं वि रोहतु ।।३।।
एतमिध्मं समाभृतं जुषाणो अग्ने प्रतिहर्य होमम् ।
तस्मिन् विदेम सुमतिं स्वस्ति चक्षु: प्राणं प्रजां
पशून् जातवेदसि ब्रह्मणा ।।४।।

१६-४६

क्षा चासि क्षमाचासि तस्यास्ते भूतं च सुभूतं चैति मुखे ।
ताभ्यां ते विधेयं ताभ्यां ते नमस्ताभ्यां नो मृड

ताभ्यां नो ऽधि ब्रूहि ताभ्यां नो ऽभि जिघ्र ।
मातेव पुत्रं पितेव सूनुमयं ते अस्मि तन्वं मुमुग्धि
ग्राह्या बन्धेभ्यो विमदं न एनम् ।।१।।
भूमिश्चासि भूतिश्चासि तस्यास्ते भुवनं च सुभूतिश्चैति मुखे ।
ताभ्यां ते विधेयं ताभ्यां ते नमस्ताभ्यां नो
मृड ताभ्यां नो ऽधि ब्रूहि ताभ्यां नो ऽभि जिघ्र ।
मातेव पुत्रं पितेव सूनुमयं ते अस्मि तन्वं मुमुग्धि
ग्राह्या बन्धेभ्यो विमदं न एनम् ।।२।।
पृथ्वीचासि पृथिवीचासि तस्यास्ते
भविष्यच्चाभविष्यच्चैति मुखे ।
ताभ्यां ते विधेयं ताभ्यां ते नमस्ताभ्यां नो
मृड ताभ्यां नो ऽधि ब्रूहि ताभ्यां नो ऽभि जिघ्र ।
मातेव पुत्रं पितेव सूनुमयं ते अस्मि तन्वं मुमुग्धि
ग्राह्या बन्धेभ्यो विमदं न एनम् ।।३।।
क्षेम्या चासि क्षितिश्चासि तस्यास्ते कं च नाकं चैति मुखे ।
ताभ्यां ते विधेयं ताभ्यां ते नमस्ताभ्यां नो मृड
ताभ्यां नो ऽधि ब्रूहि ताभ्यां नो ऽभि जिघ्र ।
मातेव पुत्रं पितेव सूनुमयं ते अस्मि तन्वं मुमुग्धि
ग्राह्या बन्धेभ्यो विमदं न एनम् ।।४।।
दृढा चासि सुदृढा चासि तस्यास्ते स्वश्च स्वर्गश्चैति मुखे ।
ताभ्यां ते विधेयं ताभ्यां ते नमस्ताभ्यां नो मृड
ताभ्यां नो ऽधि ब्रूहि ताभ्यां नो ऽभि जिघ्र ।
मातेव पुत्रं पितेव सूनुमयं ते अस्मि तन्वं मुमुग्धि
ग्राह्या बन्धेभ्यो विमदं न एनम् ।।५।।

अमितिश्चासि निर्ऋतिश्चासि तस्यास्ते मित्रं च मैत्रं चैति मुखे।
ताभ्यां ते विधेयं ताभ्यां ते नमस्ताभ्यां नो
मृड ताभ्यां नोऽधि ब्रूहि ताभ्यां नोऽभि जिघ्र ।
मातेव पुत्रं पितेव सूनुमयं ते अस्मि तन्वं मुमुग्धि
ग्राह्या बन्धेभ्यो विमदं न एनम् ।।६।।
शितिपृष्ठा चासि विधून्वाना चासि
तस्यास्ते विन्दच्च विन्दमानं चैति मुखे ।
ताभ्यां ते विधेयं ताभ्यां ते नमस्ताभ्यां नो मृड
ताभ्यां नोऽधि ब्रूहि ताभ्यां नोऽभि जिघ्र ।
मातेव पुत्रं पितेव सूनुमयं ते अस्मि तन्वं मुमुग्धि
ग्राह्या बन्धेभ्यो विमदं न एनम् ।।७।।
सुहिता चासि सुहितिश्चासि तस्यास्ते
वित्तिश्च सुवित्तिश्चैति मुखे ।
ताभ्यां ते विधेयं ताभ्यां ते नमस्ताभ्यां नो मृड
ताभ्यां नोऽधि ब्रूहि ताभ्यां नोऽभि जिघ्र ।
मातेव पुत्रं पितेव सूनुमयं ते अस्मि तन्वं मुमुग्धि
ग्राह्या बन्धेभ्यो विमदं न एनम् ।।८।।
वप्साचासि वप्सतिश्चासि तस्यास्ते वसुश्च प्रवसुश्चैति मुखे ।
ताभ्यां ते विधेयं ताभ्यां ते नमस्ताभ्यां नो मृड
ताभ्यां नोऽधि ब्रूहि ताभ्यां नोऽभि जिघ्र ।
मातेव पुत्रं पितेव सूनुमयं ते अस्मि तन्वं मुमुग्धि
ग्राह्या बन्धेभ्यो विमदं न एनम् ।।९।।
परुश्चासि सदान्वाना चासि तस्यास्ते स्वं च स्वावं चैति मुखे ।
ताभ्यां ते विधेयं ताभ्यां ते नमस्ताभ्यां नो मृड

ताभ्यां नोऽधि ब्रूहि ताभ्यां नोऽभि जिघ्र ।
मातेव पुत्रं पितेव सूनुमयं ते अस्मि तन्वं मुमुग्धि
ग्राह्या बन्धेभ्यो विमदं न एनम् ।।१०।।

१६-४७

पृश्निश्चासि पृषतीच्चासि तस्यास्ते यच्छश्च प्रयच्छश्चैति मुखे।
ताभ्यां ते विधेयं ताभ्यां ते नमस्ताभ्यां नो मृड
ताभ्यां नोऽधि ब्रूहि ताभ्यां नोऽभि जिघ्र ।
मातेव पुत्रं पितेव सूनुमयं ते अस्मि तन्वं मुमुग्धि
ग्राह्या बन्धेभ्यो विमदं न एनम् ।।१।।
विश्वभृच्चासि विश्वरूपा चासि तस्यास्ते ददच्च प्रददच्चैति मुखे ।
ताभ्यां ते विधेयं ताभ्यां ते नमस्ताभ्यां नो मृड
ताभ्यां नोऽधि ब्रूहि ताभ्यां नोऽभि जिघ्र ।
मातेव पुत्रं पितेव सूनुमयं ते अस्मि तन्वं मुमुग्धि
ग्राह्या बन्धेभ्यो विमदं न एनम् ।।२।।
गिरन्तीचासि गरगृच्चासि तस्यास्ते वृन्दं च सुवृन्दानं चैति मुखे ।
ताभ्यां ते विधेयं ताभ्यां ते नमस्ताभ्यां नो मृड
ताभ्यां नोऽधि ब्रूहि ताभ्यां नोऽभि जिघ्र ।
मातेव पुत्रं पितेव सूनुमयं ते अस्मि तन्वं मुमुग्धि
ग्राह्या बन्धेभ्यो विमदं न एनम् ।।३।।
गुर्वीचासि गुरुभृच्चासि तस्यास्ते दोहश्च दुहानं चैति मुखे ।
ताभ्यां ते विधेयं ताभ्यां ते नमस्ताभ्यां नो मृड
ताभ्यां नोऽधि ब्रूहि ताभ्यां नोऽभि जिघ्र ।
मातेव पुत्रं पितेव सूनुमयं ते अस्मि तन्वं मुमुग्धि
ग्राह्या बन्धेभ्यो विमदं न एनम् ।।४।।

दितिश्चास्यदितिश्चासि तस्यास्ते पयस्वापयस्वच्चैति मुखे ।
ताभ्यां ते विधेयं ताभ्यां ते नमस्ताभ्यां नो
मृड ताभ्यां नोऽधि ब्रूहि ताभ्यां नोऽभि जिघ्र ।
मातेव पुत्रं पितेव सूनुमयं ते अस्मि तन्वं मुमुग्धि
ग्राह्या बन्धेभ्यो विमदं न एनम् ।।५।।
जूर्णा चासि जरयन्ती चासि तस्यास्ते
दक्षश्च दक्षमाणं चैति मुखे ।
ताभ्यां ते विधेयं ताभ्यां ते नमस्ताभ्यां नो मृड
ताभ्यां नोऽधि ब्रूहि ताभ्यां नोऽभि जिघ्र ।
मातेव पुत्रं पितेव सूनुमयं ते अस्मि तन्वं मुमुग्धि
ग्राह्या बन्धेभ्यो विमदं न एनम् ।।६।।
अप्रतिष्ठा चासि प्रतिष्ठिता चासि तस्यास्ते
ओजश्च तेजश्चैति मुखे ।
ताभ्यां ते विधेयं ताभ्यां ते नमस्ताभ्यां नो मृड
ताभ्यां नोऽधि ब्रूहि ताभ्यां नोऽभि जिघ्र ।
मातेव पुत्रं पितेव सूनुमयं ते अस्मि तन्वं मुमुग्धि
ग्राह्या बन्धेभ्यो विमदं न एनम् ।।७।।
लोकिनी चासि लोककृच्चासि तस्यास्ते
स्रवश्च स्रवस्यश्चैति मुखे ।
ताभ्यां ते विधेयं ताभ्यां ते नमस्ताभ्यां नो मृड
ताभ्यां नोऽधि ब्रूहि ताभ्यां नोऽभि जिघ्र ।
मातेव पुत्रं पितेव सूनुमयं ते अस्मि तन्वं मुमुग्धि
ग्राह्या बन्धेभ्यो विमदं न एनम् ।।८।।
उर्वीचासि प्रवर्वी चासि तस्यास्ते कुर्वच्च संस्कुर्वाणं चैति मुखे ।

ताभ्यां ते विधेयं ताभ्यां ते नमस्ताभ्यां नो
मृड ताभ्यां नोऽधि ब्रूहि ताभ्यां नोऽभि जिघ्र ।
मातेव पुत्रं पितेव सूनुमयं ते अस्मि तन्वं मुमुग्धि
ग्राह्या बन्धेभ्यो विमदं न एनम् ।।९।।
नीचीचास्युत्ताना चासि तस्यास्ते रोहच्च विरोहच्चैति मुखे ।
ताभ्यां ते विधेयं ताभ्यां ते नमस्ताभ्यां नो
मृड ताभ्यां नोऽधि ब्रूहि ताभ्यां नोऽभि जिघ्र ।
मातेव पुत्रं पितेव सूनुमयं ते अस्मि तन्वं मुमुग्धि
ग्राह्या बन्धेभ्यो विमदं न एनम् ।।१०।।

१६-४८

रोहीणी चासि सुरोहीणी चासि तस्यास्ते
चान्नं चान्नाद्यं चैति मुखे ।
ताभ्यां ते विधेयं ताभ्यां ते नमस्ताभ्यां नो मृड
ताभ्यां नोऽधि ब्रूहि ताभ्यां नोऽभि जिघ्र ।
मातेव पुत्रं पितेव सूनुमयं ते अस्मि तन्वं मुमुग्धि
ग्राह्या बन्धेभ्यो विमदं न एनम् ।।१।।
सरा चासि सरस्वती चासि तस्यास्ते
ब्रह्म च क्षत्रं चैति मुखे ।
ताभ्यां ते विधेयं ताभ्यां ते नमस्ताभ्यां नो मृंड
ताभ्यां नोऽधि ब्रूहि ताभ्यां नोऽभि जिघ्र ।
मातेव पुत्रं पितेव सूनुमयं ते अस्मि तन्वं मुमुग्धि
ग्राह्या बन्धेभ्यो विमदं न एनम् ।।२।।
वसुभृच्चासि वसुमतीचासि तस्यास्ते
सूनृता चेरा चैति मुखे ।

ताभ्यां ते विधेयं ताभ्यां ते नमस्ताभ्यां नो मृड
ताभ्यां नोऽधि ब्रूहि ताभ्यां नोऽभि जिघ्र ।
मातेव पुत्रं पितेव सूनुमयं ते अस्मि तन्वं मुमुग्धि
ग्राह्या बन्धेभ्यो विमदं न एनम् ।।३।।
महश्चासि महस्वती चासि तस्यास्ते
कामश्च तृप्तिश्चैति मुखे ।
ताभ्यां ते विधेयं ताभ्यां ते नमस्ताभ्यां नो मृड
ताभ्यां नोऽधि ब्रूहि ताभ्यां नोऽभि जिघ्र ।
मातेव पुत्रं पितेव सूनुमयं ते अस्मि तन्वं मुमुग्धि
ग्राह्या बन्धेभ्यो विमदं न एनम् ।।४।।
सर्वा चासि सर्वं च तदिदं तस्यास्ते
विश्वं च विश्वे च देवा यन्ति मुखे ।
ताभ्यां ते विधेयं ताभ्यां ते नमस्ताभ्यां नो मृड
ताभ्यां नोऽधि ब्रूहि ताभ्यां नोऽभि जिघ्र ।
मातेव पुत्रं पितेव सूनुमयं ते अस्मि तन्वं मुमुग्धि
ग्राह्या बन्धेभ्यो विमदं न एनम् ।।५।।

*( इति क्षुद्रकाण्डनामषोडशकाण्डे अष्टमोऽनुवाको )*

१६-४९

यद्देवा देवहेडनं देवासश्चकृमा वयम् ।
आदित्यास्तस्मान्नो यूयमृतस्य ऋतेन मुञ्चत ।।१।।
ऋतस्य ऋतेनादित्या यजत्रा मुञ्चतेह न: ।
यज्ञं यद्यज्ञवाहस: शिक्षन्त उपारिम: ।।२।।
मेदस्वता यजमाना: स्रुचाज्येन जुह्वत: ।
आकामा विश्वे वो देवा: शिक्षन्तो नोप शेकिम ।।३।।
यद्विद्वांसो यदविद्वांसो एनांसि चकृमा वयम् ।
तस्मान्नो इह मुञ्चतो विश्वे देवा: सजोषस: ।।४।।

यदि जाग्रद्यदि स्वपन्नेन एनस्योकरम् ।
भूतं मा तस्माद् भव्यं च द्रुपदादिव मुञ्चताम् ।।५।।
द्रुपदादिव: मुमुचान: स्विन्न: स्नात्वा मलादिव ।
पूतं पवित्रेणाज्यं विश्वान् मुञ्चन्तु मैनस: ।। ६ ।
यद्यामं चक्रुर्निखनन्तो अग्रे कार्षीवणा अन्नविदो न विद्यया ।
वैवस्वते राजनि तज्जुहोम्यथ यज्ञियं मधुमन्नो अस्तु ।।७।।
वैवस्वत: कृणवद् भेषजानि मधुभागो मधुना सं सृजाति ।
मातुर्यदेन इषितं न आगन् यद्वापितापराद्धो जिहीडे ।।८।।
यदीदं मातुर्यदि वा पितुर्नो भ्रातु: पुत्राच्चेतस एन आगन् ।
यावन्तो अस्या: पृथिवी सचन्ते तेषां सर्वेषां शिवो अस्तु मन्यु:।।९।।
अपमित्यमप्रतीत्तं यदस्मिन् यमस्य येन बलिना चरामि ।
इदं तदग्ने अनृणो भवामि जीवन्नेव प्रति ददामि सर्वम् ।।१०।।

१६-५०

इहैव सन्त: प्रति दद्म एनज्जीवा जीवेभ्यो नि हराम एनत् ।
अपमित्य धान्यं यज्जघसाग्निर्मा तस्मादनृणं कृणोतु ।।१।।
अनृणा अस्मिन्ननृणा: परस्मिन्तृतीये लोके अनृणा: स्याम ।
ये देवयाना उत पितृयाणां सर्वान् पथो अनृणा: आ क्षियेम।।२।।
यद्धस्ताभ्यां चकृमा किल्विषाण्यक्षाणामक्तमुपलप्समाना: ।
उग्रंपश्ये उग्रजितौ तदद्याप्सरसावनु दत्तामृणं न: ।।३।।
उग्रंपश्ये राष्ट्रभृतं किल्विषं यदक्षवृत्तमनुदत्तं नस्तत् ।
ऋणान्नो नर्णं यत्समानो यमस्य लोके अधिरज्जुरायत् ।।४।।
यस्मा ऋणं यस्य जायामुपैमि यं याचमानो अभ्यैमि देवा: ।
ते वाचं वादिषुर्मोत्तरां मद्देवपत्नी अप्सरसावधीतम् ।।५।।
यददीव्यन्नहमृणं कृणोम्यदास्यन्नग्न उत संगृणामि ।
वैश्वानरो अधिपा नो वसिष्ठ उदिन्नयाति सुकृतस्य लोकम् ।।६।।

वैश्वानरः पावयान्नः पवित्रैर्यत् संगरमभिधावाम्याशाम् ।
अनाजानन् मनसा याचमानः यत्तत्रैनो अप तत् सुवामि ।।७।।
वैश्वानराय प्रति वेदयामि एतद्यदृणं संगरो देवतासु ।
स एतान्पाशान् विचृतं प्र वेदाम्यथ यज्ञेन सह सं भवेम ।।८।।
यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिंसिम ।
अग्निर्मा तस्मादेनसो गार्हपत्यः प्र मुञ्चतु ।।९।।
भूमिर्मातादितिर्नो जनित्रं भ्रातान्तरिक्षमभिशस्त्या नः ।
द्यौर्नः पिता पित्र्याच्छं भवाति जामिमृत्वा माव पत्सि लोकात् ।।१०।।

१६-५१

यत्रा सुहार्दः सुकृतो मदन्ति विहाय रोगं तन्वः स्वायाः ।
अश्लोणा अङ्गैरह्रुताः स्वर्गे तत्रा पश्येम पितरौ च पुत्रान् ।।१।।
विषाणा पाशाङ् अभि वि ष्वाध्यस्मद् य उत्तमा अधमा वारुणा ये ।
यद्दारुणा वध्यसे यच्च रज्वां यद्भूम्यां वध्यसे यच्च वाचा ।।२।।
उदगातां भगवती विचृतौ नाम तारके ।
प्रेहामृतस्य यच्छतां प्रैतु बद्धोकमोचनम् ।।३।।
वि जिहीष्व लोकं कृणु बन्धान् मुञ्चासि वद्धकम् ।
योन्या इव प्रच्युतो गर्भः पथः सर्वाङ् अनु क्षिय ।।४।।
तं प्रजानन् प्रतिगृह्णाति विद्वान् बृहस्पतिः प्रथमजा ऋतस्य ।
अस्माभिर्दत्तं जरसः परस्तादच्छिन्नं तन्तुमनु सं तरेम ।।५।।
तत तन्तुमन्वेके तरन्ति येषां दत्तमायनं पित्र्येण ।
अबन्ध्वेके ददतः प्रयच्छान्दातुं चेच्छिक्षान्स स्वर्ग एषाम् ।।६।।
अन्वारभेथामनुसंरभेथामेतं लोकं श्रद्दधानाः सचन्ते ।
यद्वां पूर्तं परिविष्टमग्नौ तस्य गुप्तये दंपता स श्रयेथाम् ।।७।।

देवा: पितर: पितरो देवा: ।
यो ऽस्मि सो ऽस्मि सो ऽयमस्मि ।।८।।
स पचामि स यजामि स यजतेस्य ।
स्वमयं इष्टमस्तु सूनं श्रान्तं शिवं कृतम् तस्मान्मा यवम् ।।९।।
नाके राजन् प्रति तिष्ठ तत्रैतत्प्रति तिष्ठतु ।
विद्धि पूर्त्तस्य नो राजन् स देव सुमना भव ।।१०।।

१६-५२

अपास्मद् ब्राह्मणां संधामपधारां नि दध्मसि ।
इन्द्राग्नी विश्ववेदसावर्णवादधिमुञ्चताम् ।।१।।
नमस्ते ब्राह्मणा संधेपरे हि यते यथ ।
योष्मां द्वेष्टि यं वयं द्विष्मस्तं ते प्र सुवामिस्तमद्भिप्रसूता: ।।२।।
अपारं त्वाहुरर्णवम् अनुर्यायां नयेविदु: ।
यस्ते वेदो वरमास्य महत्साक्षाद्वेदि मुखं तवनिर्याण तव ते विदु:।।३।।
इन्द्रेण क्लृप्ता योनिर्नरको अस्या: कुलायम् ।
महान् समुद्रो रजसो विमान: स्वर्गे लोके अपि न: कृणोतु।।४।।

१६-५३

तस्यौदनस्य बृहस्पति: शिरो ब्रह्ममुखं
सूर्याचन्द्रमसावक्ष्यौ बृहद्रथन्तरे श्रोत्रे ।
अग्निरास्यं विद्युज्जिह्वा मरुतो दन्ता: पवमान: प्राण:।।१।।
ओषधयो लोमानि वनस्पतय: केशा: समुद्रोमूत्रमश्विना प्रपदे।
चरुं पञ्चबिलमुखं घर्मो ऽभीन्धे ।।२।।
चक्षुर्मुषलं काम उलूखलं
दिति: शूर्पमदिति: शूर्पग्राही वातोपाविनक् ।
गावस्तण्डुला अश्वा: कणा मशकास्तुषा:
कब्रु फलीकरणा: स्याममयो लोहितमयो अस्य मांसम् ।।३।।

त्रपु भस्मार्जुनमस्थि हरितं वर्णः पुष्करं गन्धः ।
खलः पात्रमष्टारौ बाहू स्फ्यावंसौ गुदा वरत्राः ।
ईषानूक्यं युगानि जत्रवः ।।४।।
ऋतं हस्तावाभिषेचनं कुल्योपसेचनमार्तवाः
पक्तारो अग्निः प्राशिता ब्राह्मणः प्रतिग्रहीता ।।५।।

१६-५४

तस्यौदनस्य भूमिः कुम्भी द्यौरपिधानं शरोभ्रमुषा
नीहारो बृहदायवनं रथन्तरं दर्वी ।।१।।
दिशः पार्श्वे सीताः पर्शवः सिकता ऊबध्यं
बलनमुपस्तरणमहोरात्रे विक्रमणे ओदनस्य ।।२।।
वर्षं प्रोक्षणं मरुतः पर्यैन्धति किष्करवः परिधयः ।
ऋचा कुम्भ्यधिहितार्त्विज्येन प्रेष्यते ब्रह्मणा प्रतिगृह्यते ।।३।।
य एतस्यौदनस्यैवं महिमानं विद्यात् ।
नाल्प इति ब्रूयान्नानुपसेचन इति नेदं च किं चेति ।।४।।
यावद्दाताभिमनस्येत तन्नाति वदेत् ।
ओदनेन यज्ञवचः सर्वे लोकाः समाप्याः ।
यस्मिन् समुद्रो द्यौर्भूमिस्त्रयोवरपरं श्रिताः ।।५।।

१६-५५

ब्रह्मवादिनो वदन्ति प्रत्यञ्चमोदनं प्राशीः
पराञ्चं त्वमोदनं प्राशीस्त्वामोदना इति ।
कस्यैनं शीर्ष्णा प्राशीः ।।१।।
ब्रह्मवादिनो वदन्ति प्रत्यञ्चमोदनं प्राशीः
पराञ्चं त्वमोदनं प्राशीस्त्वामोदना इति ।
कस्यैनं मुखेन प्राशीः ।।२।।

ब्रह्मवादिनो वदन्ति प्रत्यञ्चमोदनं प्राशी:
पराञ्च. त्वमोदनं प्राशीस्त्वामोदना इति ।
कस्यैनमक्षीभ्यां प्राशी: ।।३।।
ब्रह्मवादिनो वदन्ति प्रत्यञ्चमोदनं प्राशी:
पराञ्च त्वमोदनं प्राशीस्त्वामोदना इति ।
कस्यैनं श्रोत्राभ्यां प्राशी: ।।४।।
ब्रह्मवादिनो वदन्ति प्रत्यञ्चमोदनं प्राशी:
पराञ्च त्वमोदनं प्राशीस्त्वामोदना इति ।
कस्यैनमास्येन प्राशी: ।।५।।
ब्रह्मवादिनो वदन्ति प्रत्यञ्चमोदनं प्राशी:
पराञ्च त्वमोदनं प्राशीस्त्वामोदना इति ।
कस्यैनं जिह्वया प्राशी: ।।६।।
ब्रह्मवादिनो वदन्ति प्रत्यञ्चमोदनं प्राशी:
पराञ्च त्वमोदनं प्राशीस्त्वामोदना इति ।
कस्यैनं दन्तै: प्राशी: ।।७।।
ब्रह्मवादिनो वदन्ति प्रत्यञ्चमोदनं प्राशी:
पराञ्च त्वमोदनं प्राशीस्त्वामोदना इति ।
कस्यैनं प्राणै: प्राशी: ।।८।।
ब्रह्मवादिनो वदन्ति प्रत्यञ्चमोदनं प्राशी:
पराञ्च त्वमोदनं प्राशीस्त्वामोदना इति ।
कस्यैनमुरसा प्राशी: ।।९।।
ब्रह्मवादिनो वदन्ति प्रत्यञ्चमोदनं प्राशी:
पराञ्च त्वमोदनं प्राशीस्त्वामोदना इति ।
कस्यैनं व्यचसा प्राशी: ।।१०।।

ब्रह्मवादिनो वदन्ति प्रत्यञ्चमोदनं प्राशीः
पराञ्च त्वमोदनं प्राशीस्त्वामोदना इति ।
कस्यैनं पृष्ठेन प्राशीः ॥११॥
ब्रह्मवादिनो वदन्ति प्रत्यञ्चमोदनं प्राशीः
पराञ्च त्वमोदनं प्राशीस्त्वामोदना इति ।
कस्यैनमुदरेण प्राशीः ॥१२॥
ब्रह्मवादिनो वदन्ति प्रत्यञ्चमोदनं प्राशीः
पराञ्च त्वमोदनं प्राशीस्त्वामोदना इति ।
कस्यैनं वस्तिना प्राशीः ॥१३॥
ब्रह्मवादिनो वदन्ति प्रत्यञ्चमोदनं प्राशीः
पराञ्च त्वमोदनं प्राशीस्त्वामोदना इति ।
कस्यैनमूरुभ्यां प्राशीः ॥१४॥
ब्रह्मवादिनो वदन्ति प्रत्यञ्चमोदनं प्राशीः
पराञ्च त्वमोदनं प्राशीस्त्वामोदना इति ।
कस्यैनमष्ठीवद्भ्यां प्राशीः ॥१५॥
ब्रह्मवादिनो वदन्ति प्रत्यञ्चमोदनं प्राशीः
पराञ्च त्वमोदनं प्राशीस्त्वामोदना इति ।
कस्यैनं पद्भ्यां प्राशीः ॥१६॥
ब्रह्मवादिनो वदन्ति प्रत्यञ्चमोदनं प्राशीः
पराञ्च त्वमोदनं प्राशीस्त्वामोदना इति ।
कस्यामेनं प्रतिष्ठायां प्राशीः ॥१७॥
ब्रह्मवादिनो वदन्ति प्रत्यञ्चमोदनं प्राशीः
पराञ्च त्वमोदनं प्राशीस्त्वामोदना इति ।
कस्यैनं हस्ताभ्यां प्राशीः ॥१८॥

१६-५६

ततश्चैनमन्येन शीर्ष्णा प्राशीर्येनैतमग्रे प्राश्नन् ।
शिरस्ते अवपतिस्यतीत्येनमाह ।।१।।
ततश्चैनमन्येन मुखेन प्राशीर्येनैतमग्रे प्राश्नन् ।
मुखन्ते विड्क्षरिष्यतीत्येनमाह ।।२।।
ततश्चैनमन्याभ्यामक्षीभ्यां प्राशीर्याभ्यामेतमग्रे प्राश्नन् ।
अन्धो भविष्यतीत्येनमाह ।।३।।
ततश्चैनमन्याभ्यां श्रोत्राभ्यां प्राशीर्याभ्यामेतमग्रे प्राश्नन् ।
वधिरो भविष्यसीत्येनमाह ।।४।।
ततश्चैनमन्येनास्येन प्राशीर्येनैतमग्रे प्राश्नन् ।
वाक् ते प्रक्रमिष्यतीत्येनमाह ।।५।।
ततश्चैनमन्यया जिह्वया प्राशीर्ययैतमग्रे प्राश्नन् ।
जिह्वा ते पूर्वा मरिष्यतीत्येनमाह ।।६।।
ततश्चैनमन्येनमन्यैर्दन्तै: प्राशीर्यैरेतमग्रे प्राश्नन् ।
दन्तास्ते शत्स्यन्तीत्येनमाह ।।७।।
ततश्चैनमन्येनमन्यै: प्राणै: प्राशीर्यैरेतमग्रे प्राश्नन् ।
प्राणास्ता हास्यन्तीत्येनमाह ।।८।।
ततश्चैनमन्येनोरसा प्राशीर्येनैतमग्रे प्राश्नन् ।
कृष्यान रात्स्यसीत्येनमाह ।।९।।
ततश्चैनमन्येन व्यचसा प्राशीर्येनैतृमग्रे प्राश्नन् ।
राजयक्ष्मस्त्वा हनिष्यतीत्येनमाह ।।१०।।
ततश्चैनमन्येन पृष्ठेन प्राशीर्येनैतमग्रे प्राश्नन् ।
विद्युत् त्वा: हनिष्यतीत्येनमाह ।।११।।

ततश्चैनमन्येनोदरेण प्राशीर्येनैतमग्रे प्राश्नन् ।
दरणात्स्वाहनिष्यतीत्येनमाह ।।१२।।
ततश्चैनमन्येन वस्तिना प्राशीर्येनैतमग्रे प्राश्नन् ।
अप्सु मरिष्यसीत्येनमाह ।।१३।।
ततश्चैनमन्याभ्यामूरुभ्यां प्राशीर्याभ्यामेतमग्रे प्राश्नन् ।
ऊरूं ते ऽवपत्स्येते इत्येनमाह ।।१४।।
ततश्चैनमन्याभ्यामष्ठीवद्भ्यां प्राशीर्याभ्यामेतमग्रे प्राश्नन् ।
स्रामो भविष्यसीत्येनमाह ।।१५।।
ततश्चैनमन्याभ्यां पद्भ्यां प्राशीर्याभ्यामेतमग्रे प्राश्नन् ।
सर्पस्त्वा हनिष्यतीत्येनमाह ।।१६।।
ततश्चैनमन्यस्यां प्रतिष्ठायां प्राशिर्यस्यामेतमग्रे प्राश्नन्।
अप्रतिष्ठानो भविष्यसीत्येनमाह ।।१७।।
ततश्चैनमन्याभ्यां हस्ताभ्यां प्राशीर्याभ्यामेतमग्रे प्राशन् ।
ब्राह्मणं हनिष्यसीत्येनमाह ।।१८।।

१६-५७

तमहं न प्रत्यञ्चं न पराञ्चं नाहमोदनं न मामोदनः ।
ओदन एवौदनं प्राशीद् बृहस्पतिना शीर्ष्णाशीत् ।।१।।
तमहं न प्रत्यञ्चं न पराञ्चं नाहमोदनं न मामोदनः ।
ओदन एवौदनं प्राशीद् ब्रह्मणा मुखेनाशीत् ।।२।।
तमहं न प्रत्यञ्चं न पराञ्चं नाहमोदनं न मामोदनः ।
ओदन एवौदनं प्राशीद् सूर्याचन्द्रमसाभ्यामक्षिभ्यामाशीत् ।।३।।
तमहं न प्रत्यञ्चं न पराञ्चं नाहमोदनं न मामोदनः ।
ओदन एवौदनं प्राशीद् बृहद्रथन्तराभ्यां श्रोत्राभ्यामाशीत्।।४।।
तमहं न प्रत्यञ्चं न पराञ्चं नाहमोदनं न मामोदनः ।
ओदन एवौदनं प्राशीद् अग्नेरास्येनाशीत् ।।५।।

तमहं न प्रत्यञ्चं न पराञ्चं नाहमोदनं न मामोदनः ।
ओदन एवौदनं प्राशीद्विद्युता जिह्वयाशीत् ।।६।।
तमहं न प्रत्यञ्चं न पराञ्चं नाहमोदनं न मामोदनः ।
ओदन एवौदनं प्राशीन्मरुद्भिर्दन्तैराशीत् ।।७।।
तमहं न प्रत्यञ्चं न पराञ्चं नाहमोदनं न मामोदनः ।
ओदन एवौदनं प्राशीद् सप्त ऋषिभिर्प्राणैराशीत् ।।८।।
तमहं न प्रत्यञ्चं न पराञ्चं नाहमोदनं न मामोदनः ।
ओदन एवौदनं प्राशीत्पृथिव्योरसाशीत् ।।९।।
तमहं न प्रत्यञ्चं न पराञ्चं नाहमोदनं न मामोदनः ।
ओदन एवौदनं प्राशीदन्तरिक्षेण व्यचसाशीत् ।।१०।।
तमहं न प्रत्यञ्चं न पराञ्चं नाहमोदनं न मामोदनः ।
ओदन एवौदनं प्राशीद् दिवा पृष्ठेनाशीत् ।।११।।
तमहं न प्रत्यञ्चं न पराञ्चं नाहमोदनं न मामोदनः ।
ओदन एवौदनं प्राशीद् वरुणस्योदरेणाशीत् ।।१२।।
तमहं न प्रत्यञ्चं न पराञ्चं नाहमोदनं न मामोदनः ।
ओदन एवौदनं प्राशीत्समुद्रेण वस्तिनाशीत् ।।१३।।
तमहं न प्रत्यञ्चं न पराञ्चं नाहमोदनं न मामोदनः ।
ओदन एवौदनं प्राशीन्मित्रावरुणोयोरूरुभ्यामाशीत् ।।१४।।
तमहं न प्रत्यञ्चं न पराञ्चं नाहमोदनं न मामोदनः ।
ओदन एवौदनं प्राशीद् ऋतस्याष्ठीवद्भ्यामाशीत् ।।१५।।
तमहं न प्रत्यञ्चं न पराञ्चं नाहमोदनं न मामोदनः ।
ओदन एवौदनं प्राशीत्सवितुः पद्भ्यामाशीत् ।।१६।।
तमहं न प्रत्यञ्चं न पराञ्चं नाहमोदनं न मामोदनः ।
ओदन एवौदनं प्राशीदस्यां प्रतिष्ठायां प्राशीत् ।।१७।।

तमहं न प्रत्यञ्चं न पराञ्चं नाहमोदनं न मामोदनः ।
ओदन एवौदनं प्राशीत्सत्यस्य हस्ताभ्यामाशीत् ।। १८ ।
तं एनं प्रशीषुस्त एनमारुरोहन् त एनमजीगमन् ।
एतस्माद्वै लोकान् त्रयस्त्रिंशतं प्रजापतिन् निर्मिमीतः ।।१९।।
तस्य गुप्तये यज्ञानसृजन्त देवाः ।
ये त्रयस्त्रिंशत् प्रजापतिसृष्टा पुण्यलोकाः ।
ते ऽस्य सर्वे ऽभिजिता अवरुद्धा भवन्ति य एवं वेद ।।२०।।

१६-५८

एष वा ओदनः सर्वाङ्गः सर्वात्मा सर्वपरुः सर्वपात्सर्वपृष्ठः ।
सर्वाङ्गः सर्वात्मा सर्वपरुः सर्वपात्सर्वपृष्ठो भवति य एवं वेद।।१।।
स य एवं विदुष उपद्रष्टा भवति प्राणं रुणद्धि ।
न च प्राणं रुणद्ध्य अथ सर्वस्सं जीयते ।।२।।
न च सर्वस्सं जियते अथैनमाहाप्रतिष्ठानो ऽनायतनो मरिष्यसीति ।
अप्रतिष्ठान एवानायतनो म्रियते य एवं विदुष उपद्रष्टा भवति ।।३।।

१६-५९

केन पार्ष्णी आभृते पुरुषस्य केन मांसं संभृतं केन गुल्फौ ।
केनाङ्गुलीः पेशनीः केनखानिः केनोच्छ्लङ्खौ मध्यतः कः प्रतिष्ठाम्।।१।।
कस्मान्नु गुल्फावधरावकृण्वन्नष्ठीवन्तावुत्तरौ पुरुषस्य ।
निर्ऋत्यजङ्घे न्यदधुः क्वस्विज्जानुनोः संधी को इमौ जजान ।।२।।
चतुष्टयं युज्यते संहितान्तं जानुभ्यामूर्ध्वं शिथिरं कबन्धम् ।
श्रेणी यदूरू क उ तज्जजान याभ्यां कुसिन्धं सुधृतिर्बभूव ।।३।।
कति देवाः कतमे त आसन् य उरश्चिक्युरग्र्यंपुरुषस्य ।
कति स्तनौ न्यदधुः कः कफोडौ कति स्कन्धान् कति पृष्ठीरचिन्वन्।।४।।
को अस्य बाहू समभरद्वीर्यं कृणवादिति ।
अंसौ को अस्य तद्देवः कुसिन्ध आदधादधि ।।५।।

मस्तिष्कमस्य यतमो ललाटं ककाटिकां प्रथमो य: कपालम् ।
चित्वा चित्यं पुरुषस्य हन्वो दिवं रुरोह कतम: स देव: ।।६।।
क: सप्त खानि वि ततर्द शीर्षणि कर्णाविमावक्ष्णा नासिके मुखम्।
येषां पुरुत्रा विजयस्य मह्मनि चतुष्पादो द्विपदो यन्ति यामम्।।७।।
हन्वोर्हि जिह्वामदधात्पुरूचीमधा महीमधि शिश्राय वाचम् ।
स आ वरीवर्ति महिनाव्योमन्नपोवसान: क उ चित्प्रवेद ।।८।।
मूर्धानमस्य संसीव्याथर्वा हृदयं च यत् ।
मस्तिष्कादूर्ध्वं प्रैरयत् पवमानो ऽधि शीर्ष्ण: ।।९।।
तद्वा अथर्वण: शिरो देवकोश: समुब्जित: ।
तत्प्राणो अभि रक्षतु श्रियं अन्नमथो मन: ।।१०।।

१६-६०

प्रियाप्रियाणि बहुला स्वप्नं संबाधतन्द्र्य: ।
आनन्दमुग्रो नन्दांश्च तानिद्वहति पुरुष: ।।१।।
आर्तिरवर्तिर्निर्ऋति कुतो नु पुरुषेमति: ।
ऋद्धि: समृद्धिरव्यृद्धिर्मतिरुदितय: कुत: ।।२।।
को अस्मिन्नापो अदधाद्विषूवृत: पुरूच्युत: सिन्धुसृत्याय जाता: ।
तीव्रा अरुणा लोहिनीस्ताम्रधूम्रा उर्ध्वा अवाची: पुरुषे तिरश्ची: ।।३।।
को ऽस्मिन् प्राणमदधात् को अपानं व्यानमु ।
समानमस्मिन् को देवो ऽधि शिश्राय पुरुषे ।।४।।
को ऽस्मिन् रूपमदधात् को मह्मानं च नाम च ।
गातुं को अस्मिन् क: केतुं कश्चरित्राणि पूरुषे ।।५।।
को अस्मिन् रेतो अदधात्तन्तुरा तायतामिति ।
मेधां को अस्मिन्नध्यौहत् को वाणं को नृतो दधौ ।।६।।

को वाससा पर्यदधात् को अस्यायुरकल्पयत् ।
बलं को अस्मै प्रायच्छत् को अस्याकल्पयज्जवम् ।।७।।
को अस्मिन् यज्ञमदधादेको अग्रेधि पुरुषे ।
को अस्मिन् सत्यं कोनृतं को मृत्युं को अमृतं दधौ ।।८।।
केनापो अन्वतनुत केनाहरकृणोद् रुचे ।
उषसं केनान्वैन्द्ध केन सायंभवं ददे ।।९।।
केनेमां भूमिमौर्णोत् केन पर्यभवद्दिवम् ।
केनाभि मह्ना पर्वतान् केन कर्माणि पूरुषः ।।१०।।

१६-६१

केन देवाङ् अनु क्षियति केन दैवरजनयद्विशः ।
केनेदमन्यन्नक्षत्रं केन सत् क्षत्रमुच्यते ।।१।।
केन पर्जन्यमाप्नोति केन सोमं विचक्षणम् ।
केनेममग्निं पुरुषः केन संवत्सरं ममे ।।२।।
केनेयं भूमिर्निहिता केन द्यौरुत्तरा हिता ।
केनेदमूर्ध्वं तिर्यक् चान्तरिक्षं व्यचो हितम् ।।३।।
ब्रह्मणा भूमिर्निहिता ब्रह्म द्यामुत्तरां दधौ ।
ब्रह्मेदमूर्ध्वं तीर्यक् चान्तरिक्षं व्यचो हितम् ।।४।।
केन श्रोत्रियमाप्नोति केनेमं परमेष्ठिनम् ।
केन यज्ञश्च श्रद्धा च केनास्मिन्निहितं मनः ।।५।।
ब्रह्म श्रोत्रियमाप्नोति ब्रह्मेमं परमेष्ठिनम् ।
ब्रह्म यज्ञश्च श्रद्धा च ब्रह्मास्मिन्निहितं मनः ।।६।।
क इदमस्थ्यसृजत क इदं मांसं समभरत् ।
क इमां त्वचं च लोमं च को इदं रूपं समैरयत् ।।७।।
क इदं ब्रह्मास्थ्यसृजत ब्रह्म मांसं समभरत् ।
ब्रह्म त्वचं च लोमं च ब्रह्मरूपं समैरयत् ।।८।।

क इदं चक्षुरसृजत क: प्राणं केष्वामयत् ।
क इदं मनश्च वाचञ्च क इमां समभरत्पुरम् ।।९।।
ब्रह्म चक्षुरसृजत ब्रह्म के प्राणमावयत् ।
ब्रह्म मनश्च वाचञ्च ब्रह्म समभरत् पुरम् ।।१०।।

१६-६२

नैनं चक्षुर्जहाति न प्राणो जरस: पुरा ।
पुरं यो ब्रह्मणो वेद यस्मात् पुरुष उच्यते ।।१।।
यो वै तां ब्रह्मणो वेदामृतेनावृतां पुरम् ।
तस्मै ब्रह्म च ब्राह्मयश्चायुष्प्राणं प्रजां ददु: ।।२।।
अष्टाचक्रा नवद्वारा देवानां पूरयोध्या ।
तस्यां हिरण्यय: कोश: स्वर्गो ज्योतिषावृत: ।।३।।
तस्मिन् हिरण्यये कोशे त्र्योरे त्रिप्रतिष्ठिते ।
तस्मिन् यदन्तरात्मन्वत्तद्वै ब्रह्मविदो विदु: ।।४।।
प्रभ्राजमानां हरिणीं यशसा संपरीवृताम् ।
पुरं हिरण्ययीं ब्रह्मा विवेशापराजिताम् ।।५।।

१६-६३

अयं ते वरणो मणि: सपत्नक्षयण: कृत: ।
तेना रभस्व त्वं शत्रून् प्र मृणीहि दुरस्यत: ।।१।।
प्रैणाञ्छृणीहि प्र मृणा रभस्व मणिस्ते अस्तु पुरएता पुरस्तात् ।
अवारयन्त वरणेन देवा अभ्याचारमसुराणां श्वर्यत्।।२।।
आत्वारक्षद्वरणो विश्वभेषज: सहस्राक्षो हरितो हिरण्यय: ।
यस्ते शत्रून्नधरान्पादयासि पूर्वस्तान् दभ्नुहि य उ त्वा द्विषन्ति।।३।।
अयं ते कृत्यां विततां पौरुषेयमयं वधम् ।
अयं ते सर्वं पाप्मानं वरणो वारयिष्यते ।।४।।

वरणो वारयाता इत् अयं देवो वनस्पति: ।
यक्ष्म: प्रविष्टो यो ऽस्मिन्तमु देवा अवीवरन् ।।५।।
स्वप्नं सुप्त्वा यदि पश्यासि पापं मृग: सृतिं यति धावादजुष्टाम् ।
परिक्षवाच्छकुने: पापवादादयं मणिर्वरणो वारयातै ।।६।।
अरात्या मा निर्ऋत्या अभिचारादथो भयात् ।
मृत्योरोजीयसो वधात् त्वं वरणो वारय ।।७।।
वरणेन प्रव्यथिता भ्रातृव्या मे सबन्धव: ।
असूर्तं रजो अप्यगुस्ते यन्त्वधमं तम: ।।८।।
यन्मे माता यन्मे पिता भ्रातरो यच्च ते स्वा यदेनश्चकृमा वयम्।
तस्मान्नो वारयिष्यते अयं देवो वनस्पति: ।।९।।
अरिष्टोहमरिष्टगुरायुष्मान् सर्वपूरुष: ।
तस्मान्मायं वरणो मणि: परि पातु दिशोदिश: ।।१०।।

१६-६४

अयं मे वरण उरसि राजा देवो वनस्पति: ।
स मे क्षत्रं च राष्ट्रं च पशूनोजश्च ते दधत् ।।१।।
इमं बिभर्मि वरणमायुष्माञ्छतशारद: ।
स मे शत्रून् वि बाधतामिन्द्रो दस्यूनिवासुरान् ।।२।।
यथा वातो वनस्पतीन् जीर्णान्भनक्त्योजसा ।
एवा सपत्नांस्त्वं भङ्ग्धि पूर्वान् जातानुतापरान्
वरणस्त्वाभि रक्षतु ।।३।।
यथा वातेन प्रक्षीणा वृक्षा: शेरे न्यर्पिता: ।
एवा सपत्नांस्त्वं सर्वान् प्र क्षिणीहि न्यर्पय
पूर्वान् जातानुतापरान् वरणस्त्वाभि रक्षतु ।।४।।

यथा वातश्चाग्निश्च सर्वान् प्साप्तो वनस्पतीन् ।
एवा सपत्नांस्त्वं प्साहि पूर्वान् जातानुतावरान्
वरणस्त्वाभि रक्षतु ।।५।।
तास्त्वं प्र छिन्द्धि वरण पुरा दिष्टात् पुरायुषः ।
य इमं पशुषु दिप्सन्ति ये चास्य राष्ट्रदिप्सवः ।।६।।
यथा सूर्यो अतिभाति यथास्मिन् तेज आहितम् ।
एवा सपत्नांस्त्वं सर्वान् अति भाति श्वःश्वो
वरणस्त्वाभि रक्षतु ।।७।।
यथा यशः पृथिव्यां यथास्मिन् जातवेदसि ।
एवा मे वरणो मणिः कीर्त्तिं भूतिं नि यच्छतु
तेजसा मा समुक्षतु यशसा समनक्तु मा ।।८।।
यथा यशो अग्निहोत्रे वषट्कारे यथा यशः ।
एवा मे वरणो मणिः कीर्त्तिं भूतिं नि यच्छतु
तेजसा मा समुक्षतु यशसा समनक्तु मा ।।९।।
यथा यशः सोमपीथे मधुपर्के यथा यशः ।
एवा मे वरणो मणिः कीर्त्तिं भूतिं नि यच्छतु
तेजसा मा समुक्षतु यशसा समनक्तु मा ।।१०।।

१६-६५

यथा यशः कन्यायां यथास्मिन् संभृते रथे ।
एवा मे वरणो मणिः कीर्त्तिं भूतिं नि यच्छतु
तेजसा मा समुक्षतु यशसा समनक्तु मा ।।१।।
यथा यशश्चन्द्रमस्यादित्ये च नृचक्षसि ।
एवा मे वरणो मणिः कीर्त्तिं भूतिं नि यच्छतु
तेजसा मा समुक्षतु यशसा समनक्तु मा ।।२।।

यथा यश: प्रजापतौ यथास्मिन् परमेष्ठिनि ।
एवा मे वरणो मणि: कीर्त्तिं भूतिं नि यच्छतु
तेजसा मा समुक्षतु यशसा समनक्तु मा ।।३।।
यथा देवेष्वमृतं यथैषु सत्यमाहितम् ।
एवा मे वरणो मणि: कीर्त्तिं भूतिं नि यच्छतु
तेजसा मा समुक्षतु यशसा समनक्तु मा ।।४।।

१६-६६

अस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्न: ।
तृतीयो भ्राता घृतोपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रम् ।।१।।
सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा ।
त्रिनाभि चक्रमजरमनर्वं यस्मिनिमा विश्वा भुवनानि तस्थु:।।२।।
इमं रथमधि ये सप्त तस्थु: सप्तचक्रं सप्त वहन्त्यश्वा: ।
सप्त स्वसारो अभि सं नवन्त यत्र गवां निहिता सप्त नाम।।३।।
को ददर्श प्रथमं जायमानमस्थन्वतं यदनस्था बिभर्ति ।
भूम्या असुरसृगात्मा क्व स्वित् को विद्वांसमुप गात्प्रष्टुमेतत्।।४।।
पाक: पृच्छामि मनसाविजानन् देवानामेना निहिता पदानि ।
वत्से वष्कयेऽधि सप्त तन्तून् वि तत्निरे कवय ओतवा उ।।५।।
अचिकित्वांश्चिकितुषश्चिदत्र कवीन् पृच्छामि विद्मने न विद्वान् ।
वि यस्तस्तम्भ षडिमा रजांस्यजस्य रूपे किमपि स्विदेकम् ।।६।।
इह ब्रवीतु य ईमङ्ग वेदास्य वामस्य निहितं पदं वे: ।
शीर्ष्ण: क्षीरं दुह्रते गावो अस्य वव्रिं वसाना उदकं पदापु: ।।७।।
माता पितरमृत आ बभाज धीत्यग्रे मनसा सं हि जग्मे ।
सा बिभत्सुर्गर्भरसा निविद्धा नमस्वन्त इदुपवाकमीयु: ।।८।।

युक्ता मातासिद् धुरि दक्षिणाया अतिष्ठद् गर्भो वृजनीष्वन्त: ।
अमीमेद्वत्सो अनु गामपश्यद् विश्वरूप्यं त्रिषु योजनेषु ।।९।।
तिस्रो मातृस्त्रीन् पितृन् बिभ्रदेक ऊर्ध्वस्तस्थौ नेमव ग्लापयन्ति ।
मन्त्रयन्ते दिवो अमुष्य पृष्ठे विश्वविदं वाचमविश्वमिन्वाम् ।।१०।।

१६-६७

द्वादशारं नहि तज्जराय वर्वर्ति चक्रं परि द्यामृतस्य ।
आ पुत्रा अग्ने मिथुनासो अत्र सप्त शतानि विंशतिश्च तस्थु: ।।१।।
पञ्चपादं पितरं द्वादशाकृतिं दिव आहु: परे अर्धे पुरीषिणाम् ।
अथेमे अन्य उपरे विचक्षणं सप्तचक्रे षडर आहुरर्पितम् ।।२।।
पञ्चारे चक्रे परिवर्तमाने तस्मिन्ना तस्थुर्भुवनानि विश्वा ।
तस्य नाक्षस्तप्यते भूरिभार: सनादेव न च्छिद्यते सनाभि: ।।३।।
सनेमि चक्रमजरं वि वावृत उत्तानायां दश युक्ता वहन्ति ।
सूर्यस्य चक्षू रजसैत्यावृतं यस्मिनिमा विश्वा भुवनान्यार्पिता ।।४।।
साकंजानां सप्तथमाहुरेकजं षडिद्यमा ऋषयो देवजा इति ।
तेषामिष्टानि विहितानि धामश: स्थात्रे रेजन्ते विकृतानि रूपश:।।५।।
स्त्रीय: सतीस्तां उ मे पुंस आहु: पश्यदक्षण्वान् न वि चेतदन्ध: ।
कविर्य: पुत्र: स ईमा चिकेत यस्ता विजानात् सपितुष्पितासत्।।६।।
अव: परेण पर एनावरेण पदा वत्सं बिभ्रती गौरुदस्थात् ।
सा कद्रीची कं स्विदर्धं परागात्क्वस्वित्सूते नहि यूथे अस्मिन्।।७।।
अव: परेण पितरं यो अस्यानुवेद पर एनावरेण ।
कवीयमान: क इह प्र वोचद्देवं मन: कुतो अधि प्रजातम् ।।८।।
ये अर्वाञ्चस्तान् उ पराच आहुर्ये पराञ्चस्तान् उ अर्वाच आहु:।
इन्द्रश्च या चक्रथु: सोम तानि धुरा न युक्ता रजसो वहन्ति।।९।।

द्वा सुपर्णा सयुजा सखाया: समानं वृक्षं परि षस्वजाते ।
तयोरन्य: पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभि चाकशीति ।।१०।।
यस्मिन् वृक्षे मध्यद: सुपर्णा निविशन्ते सुवते चाधि विश्वे ।
तस्येदाहु: पिप्पलं स्वाद्वग्रे तन्नोन्नशद्य: पितरं न वेद ।।११।।
यत्रा सुपर्णा अमृतस्य भक्षमनिमेषं विदथाभिस्वरन्ति ।
इनो विश्वस्य भुवनस्य गोपा: स मा धीर: पाकमत्रा विवेश।।१२।।

१६-६८

यद्गायत्रे अधिगायत्रमाहितं त्रैष्टुभाद् वा त्रैष्टुभं निरतक्षत ।
यद्वा जगज्जगत्याहितं पदं य इत् तद्विदुस्ते अमृतत्वमानशु: ।।१।।
गायत्रेण प्रति मिमीते अर्कमर्केण साम त्रैष्टुभेन वाकम् ।
वाकेन वाकं द्विपदा चतुष्पदा ऽक्षरेण मिमते सप्त वाणी: ।।२।।
जगता सिन्धुं दिव्यस्तभायद्रथंतरे सूर्यं पर्यपश्यत् ।
गायत्रस्य समिधस्तिस्र आहुस्ततो मह्ना प्र रिरिचे महित्वा ।।३।।
उप ह्वये सुदुघां धेनुमेतां सुहस्तो गोधुगुत दोहदेनाम् ।
श्रेष्ठं सवं सविता साविषन्नोभीद्धो घर्मस्तदु षु प्र वोचम् ।।४।।
हिङ्कृण्वती वसूपत्नी वसूनां वत्समिच्छन्ती मनसाभ्यागात् ।
दुहामश्विभ्यां पयो ऽघ्नेयं सा वर्धतां महते सौभगाय ।।५।।
गौरमीमेदभि वत्सं मिषन्तं मूर्धानं हिङ्ङकृणोन्मातवा उ ।
सृक्वाणं घर्ममभि वावशाना मिमाति मायुं पयते पयोभि: ।।६।।
अयं स शिङ्क्ते येन गौरभीवृता मिमाति मायुं ध्वसनावधि श्रिता ।
सा चित्तिभिर्नि हि चकार मर्त्यं विद्युद् भवन्ती प्रति वव्रिमौहत ।।७।।
विधुं दद्राणं सलिलस्य पृष्ठे युवानं सन्तं पलितो जगार ।
देवस्य पश्य काव्यं महित्वाद्या ममार स ह्य: समान ।।८।।

अनच्छये तुरगातु जीवमेजद् ध्रुवं मध्य आ पस्त्यानाम् ।
जीवो मृतस्य चरति स्वधाभिरमर्त्यो मर्त्येना सयोनि: ।।९।।
अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् ।
स सध्रीची: स विषूचीर्वसान आ वरीवर्ति भुवनेष्वन्त: ।।१०।।

१६-६९

य ईं चकार न सो अस्य वेद य ईं ददर्श हिरुगिन्नु तस्मात् ।
स मातुर्योना परिवीतो अन्तर्बहुप्रजा निर्ऋतिमा विवेश ।।१।।
द्यौर्न: पिता जनिता नाभिरत्र वन्धुर्नो माता पृथिवी महीयम् ।
उत्तानयोश्चम्वोर्योनिरन्तरत्रा पिता दुहितुर्गर्भमाधात् ।।२।।
पृच्छामि त्वा परमन्तं पृथिव्या: पृच्छामि त्वा भुवनस्य नाभिम् ।
पृच्छामि त्वा वृष्णो अश्वस्य रेतो वाच: पृच्छामि परमं व्योम।।३।।
इयं वेदि: परो अन्त: पृथिव्या अयं यज्ञो भुवनस्य नाभि: ।
अयं सोमो वृष्णो अश्वस्य रेतो ब्रह्मायं वाच: परमं व्योम ।।४।।
सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि ।
ते धीतिभिर्मनसा ते विपश्चित: परिभुव: परि भवन्ति विश्वत: ।।५।।
न वि जानामि यदिवेदमस्मि निण्य: संनद्धो मनसा चरामि ।
यदा मागन्प्रथमजा ऋतस्यादिद्वाचो अश्नुवे भागमस्या: ।। ६ ।
उपाङ् प्राङ् एति स्वधया गृभीतोऽमर्त्यो मर्त्येना सयोनि: ।
ता शश्वन्ता विषूचीना वियन्ता न्यन्यं चिक्युर्न नि चिक्युरन्यम् ।।७।।
ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदु: ।
यस्तन्न वेद किमृचा करिष्यति य इत् तद्विदुस्त इमे समासते ।।८।।
ऋच: पदं मात्रया कल्पयन्तोऽर्धर्चेन चाक्लृपुर्विश्वमेजत् ।
त्रिपाद् ब्रह्म पुरुरूपं वि तष्ठे तेन जीवन्ति प्रदिशश्चतस्र: ।।९।।

सूयवसाद् भगवती हि भूया अथो वयं भगवन्त: स्याम: ।
अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती ।।१०।।
गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।
अष्टापदी नवपदी बभूवुषी सहस्राक्षरा भुवनस्य पङ्क्तिस्तस्या:
समुद्रा अधि वि क्षरन्ति ।।११।।
अपादेति प्रथमा पद्वतीनां कस्तद्वां मित्रावरुणा चिकेत ।
गर्भो भारं भरत्या चिदस्या ऋतं पिपर्त्यनृतं नि पाति ।।१२।।
कृष्णं नियानं हरय: सुपर्णा अपो वसाना दिवमुत्पतन्ति ।
त आववृत्रन् त्सदनादृतस्यादिद् घृतेन पृथिवीं व्यूदु: ।।१३।।

*(इति क्षुद्रकाण्डनामषोडशकाण्डे एकादशोऽनुवाक)*

१६-७०

द्यौर्जवेनापृथिवी वरिम्णान्तरिक्षं महित्वापो भूम्ना ।
देवस्य त्वा सवितु: प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां
प्रसूतं ब्राह्मणेभ्यो निर्वपामि ।।१।।
ऋषिभ्यस्त्वार्षेयेभ्यस्त्वा ।
जुष्टतमं वह्नितमं पप्रितमं
स्वस्तितममूर्जोभागमक्षितमक्षितये निर्वपामि ।।२।।
वसवस्त्वा गायत्रेण छन्दसा निर्वपन्तु ।।३।।
रुद्रास्त्वा त्रैष्टुभेन छन्दसा निर्वपन्तु ।।४।।
आदित्यास्त्वा जागतेन छन्दसा निर्वपन्तु ।।५।।
इदमभि राव्णामिदमभि गत्वराणामिदमभि मन्यूनाम् ।।६।।
यथा कूप: शतखा: सहस्रखा नोपदस्यन्ति ।।७।।
एवेदमोपदसत्तीर्थमश्विनोरिव ।
यो नो द्वेषन्मनसा यश्च वाचा दैव्ये लोक उत मानुषे य: ।।८।।

ग्राव्णा हन्तु महता तस्य सर्वमिन्द्रो देवो मघवाञ्छचीपति: ।
वीरुत्स[illegible] परि जयैतदूर्जा सोम पुनरा विशेह न: ।।९।।
दृंहस्य बाह्वो अम्वधृष्वमारिषो ऽग्निश्चैतत्सनिष्यत: ।
देवीराप ऊर्जो भागायवोक्षिताक्षितयासिञ्चामि ।।१०।।

१६-७१

अक्रव्यादा तन्वा जातवेदो या ते स्वर्गा तपसा सयोनि: ।
तयोदनमभिश्राम्यैतं तया नो अग्ने महि शर्म यच्छ: ।।१।।
सोमस्यांशुभिर्यत: मध्यमदित्या: पृष्ठेसीदत ।
ये त ओदन देवयाने लोके विदु: पात्रं दारुमयं मनुष्या: ।।२।।
तेषामेधि पात्र मात्र: स्वर्ग: पृथिवीं विद्म तव पात्रम् ।
एतास्त्वौदनोप यन्त्वापो घृतश्चुत: पयसा वर्धयन्ती: ।।३।।
स्तभ्नासि स्व: पृथिवीमुतद्यामुतान्तरिक्षं स्वधया पूरयासि ।
यावन्तस्तण्डुलास्तत्तस्य विष्ठास्तावन्तो यज्ञास्तत्तस्य दोहा:।।४।।
तावती स्वधा घृतपृष्ठे मे अस्तूर्जं दुहां मधुपृचं व्योमन् ।
यमोदनं पचामि श्रद्दधान: पात्रेपूरं घृतपृष्ठं जुषाण: ।।५।।
स मे मां क्षेष्ट सदमिष्यमानो यमस्य लोके परमे व्योमन् ।
ओदन: पात्रेण सह दक्षिणया ब्राह्मणेभ्यो दत्तो अमृतत्वे दधाति ।।६।।
सूर्यस्य ध्राजीरनु रश्मिन् आगन्दिवस्पृष्ठान् शकुन इवारोहन् ।
सं प्राणेन प्राणभृतं सृजामि सं वीर्येण पयसाशिषा च ।।७।।
आस्तावं गच्छ सुकृतां यत्र लोकं ते त्वां प्राश्नन्तु दक्षिणतो निषद्य ।
अग्निष्टोमेन सरथं हि याह्यथोक्तमतिरात्रं च गच्छ ।।८।।
द्विरात्र मात्रस्त्र्यहं व्यश्नुह्यथारोह चतूरात्रं रथमिव ।
चतूरात्रेण कल्पमानो हि याह्यथ सप्तरात्रं दशरात्रं च गच्छ।।९।।

द्वादशाहं परिभूय विश्वत एकविंशत्या विमृधो नुदस्व ।
एकविंशत्या विमृधो हि याह्यथैक चत्वारिंशतोप याह्येकम् ।
त्रयस्त्रिंशतामृतो भूत्वा त्रिमास्यमोदनान् वा रभस्व ।। १० ।

१६-७२

इदावत्सरं च परिवत्सरं च व्रध्नस्य विष्टपि परमे व्योमन् ।
नाकेन नाकमभिसंभवौदन ।।१।।
साध्यानयन्तु मुखतो ममैतमादित्यारुद्रा वसव: सचेतस: ।
विश्वे देवा ऋतुभि: संविदाना इमं रक्षन्तु सधमप्रमादम् ।।२।।
इदावत्सरं च परिवत्सरं च संवत्सरमहोरात्राणि मासा: ।
सूर्यस्याग्नेश्चन्द्रमसोनुभूतिं वातस्याभूतिमन्वावभौदन ।।३।।
यमीडते पितरो यं च देवा: पुरोहितं तपसा ब्रह्मणा च ।
स्वधामूर्जामक्षितिमा जुहोमि वाते देवे पवमाने बृहस्पतौ ।।४।।
चतुर्धैत्योदन: कल्पमान ऊर्जा देवान् स्वधा पितॄन् ।
शरीरं मनुष्यानाशितं भव ब्राह्मणान्
सो अस्माकमस्तु परमे व्योमन् ।।५।।
अयं पन्था ओदन देवयानो अनारुद्धो मृत्युना तेन याहि ।
अदब्ध स्वतो निहित: सकृद्भिर्ब्रह्मणा सृष्ट: प्रशिषायमस्य स: ।।६।
यत्र ते ग्राह्या ओदन तत् परेहि यत्राप: तद् गच्छन्त्याप: ।
यत्र योनिमोदनं ब्राह्मणा विदु: सो अस्माकमस्तु परमे व्योमन् ।।७।।
हुतं ते वाचि हुतमस्तु चक्षुषि हुतं विज्ञाने हुतमस्तु ते बले ।
श्रोत्रे प्राणे ते हुतं प्रजामृतत्वे ते हुतं कामे च हुतमस्तुते ।।८।।
यद्वाग्नेयो यदि वास्यैन्द्रो यदि मारुतो यदि वैश्वदेव: ।
यस्ते अग्निर्नृम्णानामहृद्यस्तास्मिन्नेष सुहुतो अस्त्वोदन:
सो अस्माकमस्तु परमे व्योमन् ।।९।।

य आविवेश नृम्णा मनुष्या अग्निनामग्नि: प्रथमो वयोधा: ।
स्तस्मिन्नेष सुहुतो अस्त्वोदन सो अस्माकमस्तु परमे व्योमन्।।१०।।

१६-७३

या ते तनूरपचक्राम मृत्यो देवानां सख्यमभिजीव लोकम् ।
अप्सुचरा गह्वरेष्ठा महित्वा तस्यामेष सुहुतो अस्त्वोदन:
सो अस्माकमस्तु परमे व्योमन् ।।१।।
अहेडमानाभ्ये हि नो गृहं संकाशं भद्रे सुमना अघोरा ।
प्रति त्वा वर्षवृद्धमेतु ।
एषां न स्वधा नवगज्जनित्र्यमृतेष्वमृता हुताभूत् ।।२।।
तान्नो गोपाय सधमप्रमादमस्माकमेतोरनुरक्षजागृहि ।
ये नो निधिमभिधामन्त्व्येतं प्रवाहं प्रौढं यमराज्ये ।।३।।
राजा तेषां वरुण इन्द्रियाण्यभितिष्ठतु हरसा दैव्येन ।
एतं सधस्था: परिणो वा ददाम्यनुख्याता यज्ञपतिर्यदायत् ।।४।।
य आखिदन्ति विखिदन्ति दत्तं विगृह्णते दक्षिणामीयमाना: ।
तानिन्द्रो देवो मघवाञ्छचीपतिरग्निमेदी प्रदहन्नेतु शक्र: ।
बृहस्पतिर्वरुण: सोम इन्द्रो ममैव दत्तं केवलं कृण्वन्तु ।।५।।

१६-७४

शीर्षक्तिं शीर्षामयं कर्णशूलं तृतीयकम् ।
सर्वं शीर्षण्यं ते रोगं बहिर्निर्मन्त्रयामहे ।।१।।
कर्णाभ्यां ते कङ्कूषेभ्य: शुक्तिबल्गं विलोहितम् ।
सर्वं शीर्षण्यं ते रोगं बहिर्निर्मन्त्रयामहे ।।२।।
य: कृणोति प्रमोतमन्धं कृणोति पूरुषम् ।
सर्वं शीर्षण्यं ते रोगं बहिर्निर्मन्त्रयामहे ।।३।।

यस्य हेतो: प्रच्यवते यक्ष्मो नासत आस्यत: ।
सर्वं शीर्षण्यं ते रोगं बहिर्निर्मन्त्रयामहे ।।४।।
शीर्षरोगमङ्गरोगं विश्वाङ्गीनं विसल्पकम् ।
सर्वं शीर्षण्यं ते रोगं बहिर्निर्मन्त्रयामहे ।।५।।
यस्य भीम: प्रतीकाश उद्वेपयति पूरुषम् ।
तक्मानं शीतं रूरञ्च तं ते निर्मन्त्रयामहे ।।६।।
य उरू अनुसर्पत्यथो एति गवीनिके ।
बलासमन्तरङ्गेभ्य: बहिर्निर्मन्त्रयामहे ।।७।।
यदिकामादपकामाद्धृदयाज्जायते परि ।
हृदो बलासमङ्गेभ्य: बहिर्निर्मन्त्रयामहे ।।८।।
हरिमाणं ते अङ्गेभ्यो यक्ष्मोधामन्तरात्मन: ।
यक्ष्मं ते सर्व मङ्गेभ्यो बहिर्निर्मन्त्रयामहे ।।९।।
आसो बलासो भवतु मूत्रं भवत्यामयत् ।
यक्ष्माणां सर्वेषां विषं निरवोचमहं त्वत् ।।१०।।

१६-७५

बहिर्बिलं निर्द्रवतु काहाबाहं तवोदरात् ।
यक्ष्माणां सर्वेषां विषं निरवोचमहं त्वत् ।।१।।
उदरात्ते परि क्लोम्न नाभ्या हृदयादधि ।
यक्ष्मोधामन्तरात्मनो बहिर्निर्मन्त्रयामहे ।।२।।
या: सीमानं विरुजन्ति मूर्धानं प्रत्यर्षणी: ।
अहिंसन्तीरनामया निर्द्रवन्ति बहिर्बिलम् ।।३।।
या हृदय मुपसर्पन्त्यनुतन्वन्ति कीकसा: ।
अहिंसन्तीरनामया निर्द्रवन्ति बहिर्बिलम् ।।४।।

या: पार्श्वे उपऋषन्त्यनुनिक्षन्ति पृष्ठी: ।
अहिंसन्तीरनामया निर्द्रवन्ति बहिर्बिलम् ।।५।।
यास्तिरश्चीरुपसर्पन्त्यर्षणीर्वक्षणासु ते ।
अहिंसन्तीरनामया निर्द्रवन्ति बहिर्बिलम् ।।६।।
या गुदा अनुसर्पन्त्यान्त्राणि याहयन्ति च ।
अहिंसन्तीरनामया निर्द्रवन्ति बहिर्बिलम् ।।७।।
यामज्ज्ञो अनुसर्पन्ति परुंषि विरुजन्ति च ।
अहिंसन्तीरनामया निर्द्रवन्ति बहिर्बिलम् ।।८।।
ये अङ्गानि विजयन्ति यक्ष्मासो रोपणा: सह ।
यक्ष्माणां सर्वेषां विषं निरवोचमहंत्वत् ।।९।।
विसल्पस्य विद्रधस्य वातीकारस्य वालजे: ।
यक्ष्माणां सर्वेषां विषं निरवोचमहंत्वत् ।।१०।।
पादाभ्यां ते गुल्फाभ्यां जानुभ्यां
ऊरुभ्यां श्रोणिभ्यां परि भंसस: ।
अनूकादर्षणीरुष्णिहाभ्यो ग्रीवाभ्य: स्कन्धेभ्य:
शिर्ष्णो रोगमनीनशम् ।।११।।
सन्ते शीर्ष्ण: कपालानि हृदयस्य च यो विदु: ।
उद्यन् सूर्य आदित्यो ऽङ्गरोगमनीनशत् ।।१२।।

*(इति क्षुद्रकाण्डनामषोडशकाण्डे द्वादशो ऽनुवाक:)*

१६-७६

सपत्नहनमृषभं घृतेन कामं शिक्षामि हविषाज्येन ।
नीचै: सपत्नान् मम पादय त्वमभिष्टुतो महता वीर्येण ।।१।।
यन्मे मनसो न प्रियं न चक्षुषो यन्मे हृदये नाभिनन्दति ।
तद्दुष्वप्न्यं प्रतिमुञ्चामि सपत्ने कामं स्तुष्ट्वानुदहं भिदेयम् ।।२।।

दुष्वप्न्यं काम दुरितं च कामाप्रजस्तामस्वगतामवर्तिम् ।
उग्र ईशान: प्रति मुञ्च तस्मिन् यो अस्मभ्यमंहूरणा चिकित्सात् ।।३।।
सा ते काम दुहिता धेनुरुच्यते यामाहुर्वाचं कवयो विराजम् ।
तया सपत्नान् परिवृङ्धि ये मम पर्येनान् प्राण:
प्रजा: पशवो जीवनं वृणक्तु ।।४।।
कामस्येन्द्रस्य वरुणस्य राज्ञो विष्णोर्बलेन सवितु: सवेन ।
अग्नेर्होत्रेण प्र णुदे सपत्नांच्छम्बीव नावमुदकेषु धीर: ।।५।।
अध्यक्षो वाजी मम काम उग्र: कृणोतु मह्यमसपत्नमेव ।
विश्वे देवा मम नाथं भवन्तु सर्वे देवा हवमा यन्तु म इमम् ।।६।।
इदमाज्यं घृतवज्जुषाणा: कामज्येष्ठा इह मादयन्ताम् ।
कृण्वन्तु मह्यमसपत्नमेव ।।७।।
इन्द्राग्नी काम सरथं हि भूत्वा निचै: सपत्नान् मम पादयाथ: ।
तेषां पन्नानामधमा तमांस्यग्ने वास्तून्यनुनिर्दह त्वम् ।।८।।
जहि त्वं काम मम ये सपत्ना अन्धा तमांस्यव पादयैनान् ।
निरिन्द्रिया ऽरसा: सन्तु सर्वे यथा न जीवात् कतमच्चनैषाम्।।९।।
अवधीत् कामो मम ये सपत्ना उरुं लोकमकरन् मह्यमेधतुम् ।
मह्यं नमन्तां प्रदिशश्चतस्रो मह्यं षडुर्वीर्घृतमा वहन्तु ।।१०।।

१६-७७

यत्ते काम शर्म त्रिवरुथमुद्भु ब्रह्म वर्म विततमनतिव्याध्यं कृतम् ।
तेन सपत्नान् परि वृङ्ग्धि ये मम पर्येनान् प्राण:
प्रजा: पशवो जीवलं वृणक्तु ।।१।।
अधरांच: प्र प्लवन्तां छिन्ना नौरिव बन्धनात् ।
न सायकप्रणुत्तानां पुनरस्ति निवर्त्तनम् ।।२।।

यावतोर्दिश: प्रदिशो विषूचीर्यावतीराशा अभिचक्षणा दिव: ।
ततस्त्वमसि ज्यायान् विश्वहा महांस्तस्मै ते काम नम इत् कृणोमि।।३।।
यावतीर्भृङ्गा जत्व: कुरूरवो र्यावतीर्वधा वृक्ष सर्प्यो बभूवु:।
ततस्त्वमसि ज्यायान् विश्वहा महांस्तस्मै ते काम नम इत् कृणोमि।।४।।
यास्ते शिवास्तन्व: काम भद्रा याभि: सत्यं भवति यद् वृणीषे ।
ताभिष्ट्वमस्मानुप संविशस्वान्यत्र पापीरप वेशया धिय: ।।५।।

## १६-७९

यौ ते मातोन्ममार्ज जाताया: पतिवेदनौ ।
दुर्णामा तत्र मा गृधदलिंश उत वत्सप: ।।१।।
पलालानुपलालौ शर्कुं कोकं मलिम्लुचं पलीजकम् ।
आश्लिष्यं वव्रिवाससमृक्षग्रीवं प्रमीलिनं मुष्कयोरपहन्मसि।।२।।
मा सं वृतो मोप सृप ऊरू माव सृपोन्तरा ।
कृणोम्यस्यै भेषजं बजं दुर्णामचातनम् ।।३।।
दुर्णामा च सुनामा चोभौ संवृतमिछत: ।
अरायानप हन्मसि सुनामा स्त्रैणमिछताम् ।।४।।
य: कृष्ण: केश्यसुर स्तम्बज उत तुण्डिक: ।
अराया नस्या भंससो मुष्कयोरपहन्मसि ।।५।।
अनुजिघ्रं प्रमृशन्तं क्रव्यादमुत रेरिहम् ।
अरायांछ्वकिष्किणो बज: पिङ्गो अनीनशत् ।।६।।
यस्त्वा सुप्ताञ्चरति यश्चदिप्सति जाग्रतीम् ।
छायामिव प्र तान् सूर्य: परिक्रामन्ननीनशत् ।।७।।
यस्त्वा सुप्तां निपद्यते भ्राता भुत्वा पितेव च ।
बजस्तान्त्सहतामित: क्लीवरूपांस्तिरीटिनम् ।।८।।

य: कृणोत्यवतकां मृतवत्सामिमां स्त्रियम् ।
तमोषधे त्वां नाशयास्या: कमलमञ्जिवम् ।।९।।
ये शाला: परिनृत्यन्ति सायं गर्दभनादिन: ।
कुसूला ये च कुक्षिला: कुकुभा: सरमा: सुमा: ।
तानोषधे त्वं गन्धेन विषूचीनान् वि नाशय ।।१०।।

१६-८०

ये कुकुन्धा: कुकुरभा: कृत्यैर्दूर्शानि बिभ्रती ।
क्लीबा इव प्र नृत्यन्तो घोषं ये कुर्वते वने
तानितो नाशयामसि ।।१।।
येषां पश्चात् प्रपदे पुर: पार्ष्णी पुरो मुखम् ।
खलजा: शकधूमजा: उरुण्डा ये च मट्मटा:
कुम्भमुष्का अयाशव: ।
तानस्या ब्रह्मणस्पते प्रतीबोधेन नाशय ।।२।।
ये सूर्यं न तितिक्षन्त आतपन्तममुं दिव: ।
अरायान् बस्तवासिनो दुर्गन्धींल्लोहितास्यान्
मककान् नाशयामसि ।।३।।
ये सूर्यात् परिसर्पन्ति स्नुषेव श्वशुरादधि ।
बजश्च तेषां पिङ्गश्च हृदयेधि नि विध्यताम् ।।४।।
य आत्मानमतिमात्रमंसाधाय बिभ्रति ।
स्त्रीणां श्रोणिप्रतोदिन इन्द्र रक्षांसि नाशय ।।५।।
ये पूर्वे वध्वो यन्ति हस्ते शृङ्गाणि बिभ्रत: ।
आपाकेस्था: प्रहासिन स्तम्बे
ये कुर्वते ज्योतिस्तानितो नाशयामसि ।।६।।

पर्यस्ताक्षा अप्रचङ्कशा अस्त्रैणा: सन्तु पण्डगा: ।
अव भेषज पातय य इमां संविवृत्सत्यपति: स्वपतिं स्त्रियम्।।७।।
उद्धर्षिणं मुनिकेशं जम्भयन्तं मरीमृशम् ।
उपेषन्तमुदुम्बलं तुण्डेलमुत शालुडम् ।
पदा प्र विध्य पार्ष्ण्या स्थालीं गौरिव स्पंदना ।।८।।
यस्ते गर्भं प्रतिमृशाज्जातं वा मारयाति ते ।
पिङ्गस्तमुग्रधन्वा कृणोतु हृदयाविधम् ।।९।।
ये अम्नो जातान् मारयन्ति सूतिका अनुशेरते ।
स्त्रीभागान् पिङ्गो गन्धर्वानभ्रं वातमिवाजतु ।।१०।।

१६-८१

परिसृष्टं धारयन्तं यद्धितं माव पादि तत् ।
गर्भं त उग्रौ रक्षतां भेषजौ नीविभार्यौ ।।१।।
परिपाणं पुरुषाणां रक्षसामसि चातनम् ।
अरायान् सर्वान् दुर्णाम्नो
यातुधानान्विषूचीनान् विनाशय ।।२।।
पवीनसात्तङ्गल्वाच्छायकादुत नग्नकात् ।
प्रजायै पत्ये त्वा पिङ्ग: परि पातु किमीदिन: ।।३।।
द्व्यास्याच्चतुरक्षात् पञ्चपादादनङ्गुले ।।४।।
वृन्तादभि प्रसर्पत: परि पाहि वरीवृतात् ।
य आमं मांसमदन्ति पौरुषेयं च ये क्रवि:।
गर्भान् खादन्ति केशवा:।
अरायानस्या भंससो मुष्कयोरप हन्मसि ।।५।।
पिङ्ग रक्ष जायमानं पुमांसं मा स्त्रियं करन् ।
आण्डादो गर्भान्मा दभन् बाधस्वेत: किमीदिन: ।।६।।

अप्रजास्त्वं मार्तवत्समाद्रोदमघमावयम् ।
वृक्षादिव स्त्रजं कृत्वा ऽप्रिये प्रति मुञ्च तत् ।।७।।
पिङ्ग जहि यातुधानान् दुर्गन्धींल्लोहितास्यान् ।
त्वया प्रणुत्ता: क्रव्यादो विश्वञ्चो यन्तु निर्हता: ।।८।।

१६-८२

उच्छिष्टे नामरूपाण्युच्छिष्टे लोक आहित: ।
उच्छिष्ट इन्द्रश्चाग्निश्च विश्वमन्त: समाहितम् ।।१।।
उच्छिष्टे द्यावापृथिवी विश्वं भूतं समाहितम् ।
आप: समुद्र उच्छिष्टे चन्द्रमा वात आहित: ।।२।।
सन्नुच्छिष्टेअसं श्चोभौ मृत्युर्वाज: प्रजापति: ।
लौक्या उच्छिष्टायत्ता व्रश्च द्रश्चापि श्रीर्मयि ।।३।।
दृढो दृंहस्थिरो अन्यो ब्रह्म विश्वसृजो दश ।
नाभिमिव सर्वतश्चक्रमुच्छिष्टे देवताहिता: ।।४।।
ऋक्साम यजुरुच्छिष्ट उद्गीथ: प्रस्तुतं स्तुतम् ।
हिंकार उच्छिष्टेस्वर: साम्नो मेढिश्च तन्मयि ।।५।।
ऐन्द्राग्नं पावमानं महानाम्नीर्महाव्रतम् ।
उच्छिष्टे यज्ञस्याङ्गान्यन्तर्गर्भ इव मातरि ।।६।।
राजसूयं वाजपेयमग्निष्टोमस्तदध्वर: ।
अर्काश्वमेधावुच्छिष्टे जीवबर्हिर्मदिन्तम: ।।७।।
अग्न्याधेयमथो दीक्षा कामप्रच्छन्दसा सह ।
उत्सन्ना यज्ञा: सत्त्राण्युच्छिष्टेधि समाहिता: ।।८।।
अग्निहोत्रं च श्रद्धा च वषट्कारो व्रतं तप: ।
दक्षिणेष्टं पूर्तं चोच्छिष्टेधि समाहिता: ।।९।।

एकरात्र: त्रिरात्रश्च सद्य: क्री: प्रक्रीरुक्थ्य: ।
ओतं निहितमुच्छिष्टे यज्ञस्याणूनि विद्यया: ।।१०।।

१६-८३

चतूरात्र: पञ्चरात्र: षड्रात्रश्चोभय: सह ।
षोडशी सप्तरात्रश्चोच्छिष्टाज्जज्ञिरे
सर्वे ये यज्ञा अमृते हिता:।।१।।
प्रतीहारो निधनं विश्वजिच्चाभिजिच्च य: ।
साह्नातिरात्रावुच्छिष्टे द्वादशाहोपि तन्मयि ।।२।।
सूनृता संनति क्षेम: स्वधोर्जामृतं सह: ।
उच्छिष्टे सर्वे प्रत्यञ्च: कामा: कामेन तृप्यन्तु ।।३।।
नव भूमी समुद्राश्चोच्छिष्टेधि श्रिता दिव: ।
आ सूर्यो भात्युच्छिष्टे अहोरात्रे च तन्मयि ।।४।।
उपहव्यं विषूवन्तं ये च यज्ञा गुहा हिता:
बिभर्ति भर्ता विश्वस्योच्छिष्टो जनितु: पिता . . . . .
पिता जनितुरुच्छिष्टो असो: पौत्र: पितामह: ।
स क्षियति विश्वस्येशानो वृषा भूम्यामतिघ्न्य: ।।६।।
ऋतं सत्यं तपो दीक्षा: श्रमो धर्मश्च कर्म च ।
भूतं भविष्यदुच्छिष्टे वीर्यं लक्ष्मीर्बलं बले ।।७।।
समृद्धिरोज आकूति: क्षत्रं राष्ट्रं षडुर्व्य: ।
संवत्सरोध्युच्छिष्ट इडा प्रैषा ग्रहा हवि: ।।८।।
चतुर्होतार आप्रियश्चातुर्मास्यानि नीविद: ।
उच्छिष्टे यज्ञा होत्राश्च पशुबन्धास्तदिष्टय: ।।९।।
अर्ध मासाश्च मासाश्चार्तवा ऋतुभि: सह ।
उच्छिष्टे घोषिणीराप: स्तनयित्नु: श्रुतिर्मही ।।१०।।

१६-८४

शर्करा: सिकता अश्मान ओषधयो विरुधस्तृणा ।
अभ्राणि विद्युतो वर्षमुच्छिष्टे संश्रिता श्रिता: ।।१।।
राद्धि: प्राप्तिर्व्याप्ति: समाप्तिर्मह एधतु: ।
अत्याप्तिरुच्छिष्टे भूतिराहिता निहिता हिता ।।२।।
यच्च प्राणति प्राणेन यच्च पश्यति चक्षुषा ।
उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिविश्रित: ।।३।।
प्राणापानौ चक्षु: श्रोत्रमक्षितिश्च क्षितिश्च या: ।
उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिविश्रित: ।।४।।
देवा: पितरो मनुष्या गन्धर्वाप्सरसश्च ये ।
उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिविश्रित: ।।५।।
ऋच: सामानि छन्दांसि पुराणं यजुषा सह ।
उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिविश्रित: ।।६।।
अथर्वाङ्गिरसो ब्रह्म सर्प पुण्यजनाश्च ये ।
उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिविश्रित: ।।७।।
आनन्दाश्च प्रमादाश्चाभीमोदमुदश्च ये ।
उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिविश्रित: ।।८।।

१६-८५

यन्मन्युर्जायामावहत् संकल्पस्य गृहादधि ।
क आसं जन्या: के वरा: क उ ज्येष्ठवरोऽभवत् ।।१।।
तपश्चैवास्तां कर्म चान्तर्महत्यर्णवे ।
त आसं जन्यास्तेवरा स उ ज्येष्ठवरोऽभवत् ।।२।।
दश साकमजायन्त देवा देवेभ्य: पुरा ।
यो वै तान् विद्यान्नामथा स वा अद्य महद्वदेत् ।।३।।

प्राणापानौ चक्षुः श्रोत्रमक्षितिश्च क्षितिश्च या ।
व्यानोदानौ वाङ् मनस्ते वा आकूतिमावहन् ।।४।।
अजाता आसन् नृतवोथो धाता बृहस्पतिः ।
इन्द्राग्नी अश्विना तर्हि कं ते ज्येष्ठमुपासत ।।५।।
तपश्चैवास्तां कर्म चान्तर्महत्यर्णवे ।
तपो ह यज्ञे कर्मणस्तत् ते ज्येष्ठमुपासत ।।६।।
कुत इन्द्रः कुतः सोमः कुतो अग्निरजायत ।
कुतस्त्वष्टा समभवद्धाता समभवत् कुतः ।।७।।
इन्द्रादिन्द्रः सोमात्सोमो अग्नेरग्निरजायत ।
त्वष्टा ह यज्ञे त्वष्टुर्धाता धातुरजायत ।।८।।
ये त आसन् दश जाता देवा देवेभ्यः पुराः ।
पुत्रेभ्यो लोकं दत्त्वा कस्मिन्ते लोक आसते ।।९।।
येतो भूमिः पूर्वासीद्यामद्धातय इद्विदुः ।
के तस्यां देवा आसते कस्मिन् उषाधिश्रिताः ।।१०।।

१६-८६

कुतः केशान् कुतः स्नाव कुतो अस्थीन्याभरत् ।
अङ्गा पर्वाणि मज्जानं को मांसं कुतो आभरत् ।।१।।
यदा केशानस्थि स्नाव मांसं मज्जानमाभरत् ।
शरीरं कृत्वा पादवत् कं लोकमनु प्राविशत् ।।२।।
संसिचो नाम ते देवा ये संभरैः समभरन् ।
सर्वं संसिच्य मर्त्यं देवाः परुषमाविशन् ।।३।।
शिरो हस्तावथो बाहू जिह्वां ग्रीवाश्च कीकसाः ।
पृष्टिर्बर्जह्ये पार्श्वे कस्तत् समदधादृषिः ।।४।।
उरू पादावष्ठीवन्तौ श्रोणीहस्तावथो मुखम् ।
त्वचा प्रावृत्य तत्सर्वं संधा समदधान्मही ।।५।।

यत्तच्छरीरमशयत् संधया संहितं महत् ।
येनेदमद्य रोचते को अस्मिन् वर्णमाभरत् ।।६।।
सर्वे देवा उपाशिक्षन् तदजानाद्वधू: सती ।
ईशा वशस्य या जाया सास्मिन् वर्णमाभरत् ।।७।।
यदा त्वष्टा व्यतृणत् पिता त्वष्टुर्य उत्तर: ।
गृहं कृत्वा मर्त्यं देवा: पुरुषमाविशन् ।।८।।
स्वप्नो वै तन्द्रीर्निर्ऋति: पाप्मानो नाम देवता: ।
जरा खालत्यं पालित्यं शरीरमनु प्राविशन् ।।९।।
स्तेयं दुष्कृतं वृजिनं सत्यं यज्ञो यशो मह: ।
बलं च क्षत्रमोजश्च शरीरमनु प्राविशन् ।।१०।।

१६-८७

भूतिश्च वा अभूतिश्च रातयोरातयोश्च या: ।
क्षुधश्च सर्वास्तृष्णाश्च शरीरमनु प्राविशन् ।।१।।
निन्दाश्च वा अनिन्दाश्च यच्च हन्तेति नेति च ।
शरीरं श्रद्धा दक्षिणाश्रद्धा चानु प्राविशन् ।।२।।
विद्याश्च वा अविद्याश्च यच्चान्यदुपदेश्यम् ।
शरीरं ब्रह्म प्राविशदृच: सामाथो यजु: ।।३।।
आनन्दानन्दा: प्रमुदोभीमोदमुदश्च ये ।
हसो नरिष्टा नृत्तानि शरीरमनु प्राविशन् ।।४।।
आलापाश्च प्रलापाश्चाभीलापलपश्च ये ।
शरीरं सर्वे प्राविशन्नायुज: प्रयुजो युज: ।।५।।
प्राणापानौ चक्षु: श्रोत्रमक्षितिश्च क्षितिश्च या: ।
व्यानोदानौ वाङ्मन: शरीरेण त ईयन्ते ।।६।।
आशिषश्च प्रशिषश्च संशिषो विशिषश्च या: ।
चित्तानि सर्वे संकल्पा: शरीरमनु प्राविशन् ।।७।।

... वै धृतयश्चेऽराशी: सूनृतेडा ।
शरीरं सर्वे प्राविशन्नृतरीष्यायुधोमृध: ।।८।।
आस्तेयीश्च वास्तेयीश्च त्वरणा: कृपणाश्च या: ।
गुह्या: शुक्रा आप: स्थूलास्ताबीभत्सुरसादयन् ।।९।।
अस्थि कृत्वा समिधं तदष्टापो असादयन् ।
रेत: कृत्वाज्यं देवा: पुरुषमाविशन् ।।१०।।

१६-८८

या आपो याश्च देवता या विराड् ब्रह्मणा सह ।
शरीरं ब्रह्म प्राविशच्छरीरेधि प्रजापति: ।।१।।
सूर्यश्चक्षुर्वात: प्राणं पुरुषस्य वि भेजिरे ।
अथास्येतरमात्मानं देवा: प्रायच्छन्नग्नये ।।२।।
तस्माद्वै विद्वान् पुरुषमिदं ब्रह्मेति मन्यते ।
सर्वा ह्यस्मिन् देवता: शरीरेधि समाहिता: ।।३।।
सर्वेभ्य: स्थानमङ्गेषु पिता लोकाङ् अकल्पयत् ।
शरीरं सर्वा देवता यथाङ्गमनु प्राविशन् ।।४।।
अङ्गमङ्गं शरीरस्य सर्वे देवा अनु प्राविशन् ।
पिता ह्येभ्य: प्रायच्छत्तं लोकमपराजितम् ।।५।।
तं लोकमपराजितं सर्वे देवा अनु प्राविशन् ।
प्रजापतिर्यदाभरच्छरीरं बहुधा हितम् ।।६।।

*(इति क्षुद्रकाण्डनामषोडशकाण्डे षोडशो ऽनुवाक:)*

१६-८९

अग्ने जायस्वादितिर्नाथितेयं ब्रह्मौदनं पचति पुत्रकामा ।
सप्तऋषयो भूतकृतस्ते त्वा मन्थन्तु प्रजया सहेह ।।१।।
कृणुत धूमं वृषण: सखायोद्रोघाविता वाचमच्छ ।
अयमग्नि: पृतनाषाट् सुवीरो येन देवा असहन्त शत्रून् ।।२।।

अग्नेजनिष्ठा महते वीर्याय ब्रह्मौदनाय पक्तवे जातवेद: ।
सप्तऋषयो भूतकृतस्ते त्वाजीजनन्नस्यै रयिं सर्ववीरं नि यच्छ ।।३।।
समिद्धो अग्ने समिधा समिध्यसे विद्वान् देवान् यज्ञियाङ् एह वक्ष: ।
तेभ्यो हव्यं श्रपयं जातवेद स्वर्गं लोकमधि रोहयैनम् ।।४।।
त्रेधा भाग निहितो य: पुरा वो देवानां पितृणामुत मर्त्यानाम् ।
अंशान् जानीध्वं वि भजामि तान् वो यो देवानां स इमां पारयति ।।५।।
अग्ने सहस्वानभिभूरभीदसि नीचो न्युब्ज द्वि॒षत: सपत्नान् ।
इयं मात्रा मीयमाना मिता च सजातांस्ते बलिहृत: कृणोतु ।।६।।
साकं सजातै: पयसा सहैध्युदुब्जैनां महते वीर्याय ।
उर्ध्वो नाकस्याधि रोह विष्टपं स्वर्गो लोक इति यं वदन्ति ।।७।।
इयं मही प्रति गृह्णातु चर्म पृथिवी देवी सुमनस्यमाना ।
अथ गच्छेम सुकृतामुलोकम् ।।८।।
एतौ ग्रावाणौ सयुजा युङ्ग्धि चर्माणि निर्भिन्ध्यंशून् यजमानाय साधु ।
अवघ्नती नि जहि ये पृतन्यव ऊर्ध्वं प्रजामुद्भरन्त्युदूह ।।९।।
गृहाण ग्रावाणौ सुकृतौ वीर हस्त आ ते देवा यज्ञिया यज्ञमगु: ।
त्रयो वरा यतमांस्त्वं वृणीषे तास्ते समृद्धीरिह राधयामि ।।१०।।

१६-९०

उपश्वसे द्रुबये सीदता यूयं वि विच्यध्वं यज्ञियासस्तुषै: ।
श्रिया समानानति सर्वान् त्स्यामाधस्पदं द्विषतस्पादयेम ।।१।।
इयं ते धीतिरिदमु ते जनित्रं गृह्णातु त्वामदिति: शूरपुत्रा: ।
परा पुनीहि य इमां पृतन्यवोस्यै रयिं सर्ववीरं नि यच्छ ।।२।।
परेहि नारि पुनरे हि क्षिप्रमपां त्वा गोष्ठो अध्यरुक्षद् भराय ।
ताषां गृह्णीताद्यतमा यज्ञिया असन्विभाज्य धीरीतरा जह[illegible] ।।३।।
एमा अगुर्योषित: शुम्भमाना उत्तिष्ठ नारि तवसं रभस्व ।
सुपत्नी पत्या प्रजया प्रजावत्या त्वागन् यज्ञ: प्रति कुम्भं गृभाय ।।४।।

उर्जो भागो निहितो य: पुरा वो ऋषिप्रशिष्टाप आहरैता: ।
अयं यज्ञो नाथविद् गातुवित् प्रजाविदुग्र: पशुविद्वीरविद्वो अस्तु ।।५।।
अग्ने चरुर्यज्ञियस्त्वाध्यरुक्षच्छुचिस्तपिष्ठस्तपसा तपैनम् ।
आर्षेया दैवा अभिसंगत्य भागमिमं तपिष्ठा ऋतुभिस्तपन्तु ।।६।।
शुद्धा आपो योषितो यज्ञिया इमा आपश्चरुमव सर्पन्तु शुभ्रा: ।
ददन् प्रजां बहुलान् पशून् मे पक्तौदनस्य सुकृतामेतु लोकम् ।।७।।
ब्रह्मणा शुद्धा उत पूता घृतेन सोमस्यांशवस्तण्डुला यज्ञिया इमे ।
अप: प्र विशत प्रति गृह्णातु वश्चरुरिमं पक्ता सुकृतामेतु लोकम् ।।८।।
अभ्यावर्तस्व प्रजया सहैनां प्रत्यङेनां देवताभि: सहैधि ।
स्वर्गं लोकमभिसंवर्धयैनामादित्यो देव: परमं व्योम ।।९।।
ऊरु: प्रथस्व महता महिम्ना सहस्त्रपृष्ठ: सुकृतस्य लोके ।
पितामहा: पितर: प्रजोपजाहं पक्त्वा पञ्चदशस्ते अस्मि ।।१०।।

१६-९१

सहस्त्रपृष्ठ: शतधारो अक्षितो ब्रह्मौदनो देवयान: स्वर्ग: ।
अमूंस्त आ दधामि प्रजया रेषयैनान् बलिहाराय कृणुतां मह्यमेव ।।१।।
उदेहि वेदिं प्रजया वर्धयैनां नुदस्व रक्ष: प्रतरं धेह्येनाम् ।
श्रिया समानानति सर्वान् स्यामाधस्पदं द्विषतस्पादयेम ।।२।।
ऋतेन तष्टा मनसा हितेयं ब्रह्मौदनस्य निहिता वेदिरग्रे ।
अंशध्रीं शुद्धामुप धेहि नारि तत्रौदनं सादय दैवानाम् ।।३।।
अदितेर्हस्तां स्त्रुचमेतां द्वितीयां सप्तऋषयो भूतकृतो यामकृण्वन् ।
सा गात्राणि विदुष्योदनस्य दर्विर्वेद्यामध्येनं चिनोतु ।।४।।
शृतं त्वा हविरूपसीदन्तु दैवा नि:सृप्याग्ने: पुनरेवं प्र सर्प ।
सोमेन पूतो जठरे सीद ब्रह्मणामार्षेयास्ते मा रिषन् प्राशितार:।। ५।।
सोमो राजन् संज्ञानमा वपैभ्य: सुब्राह्मणा यतमे त्वोपसीदान् ।
ऋषीनार्षेयांस्तपसोधि जातान् ब्रह्मौदने सुहवा जोहवीमि ।।६।।

इमा आपो मधुमतीर्घृतश्चुतो ब्रह्मणां हस्तेषु प्रपृथक् सादयामि ।
यत्काम इदमभिसिञ्चामि वोहमिन्द्रो मरुत्वान् त्स ददादिदं मे।।७।।
इदं मे ज्योतिरमृतं हिरण्यं पक्वं क्षेत्रात् कामदुघा म एषा ।
इदं धनं नि दधे ब्राह्मणेषु कृण्वे पन्थां पितृषु य: स्वर्ग: ।।८।।
अग्नौ तुषाङ् आ वप जातवेदसि पर: कम्बुकानप मृङ्ढ्येतान् ।
एतं शुश्रुम गृहराजस्य भागमथो विद्म निर्ऋतेर्भागधेयम् ।।९।।
श्राम्यत: पचत एति सुन्वत: स्वर्गं लोकमधिरोहयैनम् ।
येन रोहात् परमापद्य यद्वय: उत्तमं नाकं परमं व्योम ।।१०।।

१६-९२

बभ्रेरध्वर्यो मुखमेतद् वि मृङ्ढ्याज्याय लोकं कृणुहि प्रजानन् ।
घृतेन गात्रानु सर्वा वि मृड्ढि कृण्वे पन्थां पितृषु य: स्वर्ग:।।१।।
बभ्रे रक्ष: सुमदमा वपैभ्योब्राह्मणा यतमे त्वोपसीदान् ।
पुरीषिण: प्रथमाना: पुरस्तादार्षेयास्ते मा रिषन् प्राशितार: ।।२।।
आर्षेयेषु नि दध ओदन त्वा नानार्षेयाणामप्यस्त्वत्र ।
अग्निर्मे गोप्ता मरुतश्च सर्वे विश्वे देवा अभि रक्षन्तु पक्वम्।।३।।
यज्ञं दुहानं सदमित् प्रपीनं पुमांसं धेनुं सदनं रयीणाम् ।
प्रजामृतत्वमुत दीर्घमायू रायस्पोषमुप स त्वा सदेम ।।४।।
वृषभो ऽसि स्वर्ग ऋषीनार्षेयान् गच्छ ।
सुकृतां लोके सीद तत्र नौ संस्कृतम् ।।५।।
समाचिनुष्वानुसंप्रयाह्यग्ने पथ: कल्पय देवयानान् ।
एभि: सुकृतैरनु प्रगेष्म यज्ञं नाके तिष्ठन्तमधि सप्तरश्मौ ।।६।।
येन देवा ज्योतिषा द्यामुदायन् ब्रह्मौदनं पक्त्वा सुकृतस्य लोकम् ।
तं त्वा पचामि ज्योतिषां ज्योतिरुत्तमं सनस्त्वद् धेहि सुकृतामु लोके।।७।।

१६-९३

प्राच्यै त्वा दिशे निर्वपामि शतधारमपक्षुधम् ।
स पक्तारं वह सुकृतां यत्र लोको यत्र ऋषय: प्रथमजा: पुराणा: ।।१।।
दक्षिणायै त्वा दिशे निर्वपामि शतधारमपक्षुधम् ।
स पक्तारं वह सुकृतां यत्र लोको यत्र ऋषय: प्रथमजा: पुराणा: ।।२।।
प्रतीच्यै त्वा दिशे निर्वपामि शतधारमपक्षुधम् ।
स पक्तारं वह सुकृतां यत्र लोको यत्र ऋषय: प्रथमजा: पुराणा: ।।३।।
उदीच्यै त्वा दिशे निर्वपामि शतधारमपक्षुधम् ।
स पक्तारं वह सुकृतां यत्र लोको यत्र ऋषय: प्रथमजा: पुराणा: ।।४।।
ध्रुवायै त्वा दिशे निर्वपामि शतधारमपक्षुधम् ।
स पक्तारं वह सुकृतां यत्र लोको यत्र ऋषय: प्रथमजा: पुराणा: ।।५।।
ऊर्द्ध्वायै त्वा दिशे निर्वपामि शतधारमपक्षुधम् ।
स पक्तारं वह सुकृतां यत्र लोको यत्र ऋषय: प्रथमजा: पुराणा: ।।६।।
दिवे त्वा निर्वपामि शतधारमपक्षुधम् ।
स पक्तारं वह सुकृतां यत्र लोको यत्र ऋषय: प्रथमजा: पुराणा: ।।७।।
अन्तरीक्षाय त्वा निर्वपामि शतधारमपक्षुधम् ।
स पक्तारं वह सुकृतां यत्र लोको यत्र ऋषय: प्रथमजा: पुराणा: ।।८।।
पृथिव्यै त्वा निर्वपामि शतधारमपक्षुधम् ।
स पक्तारं वह सुकृतां यत्र लोको यत्र ऋषय: प्रथमजा: पुराणा: ।।९।।
पशुभ्यस्त्वा निर्वपामि शतधारमपक्षुधम् ।
स पक्तारं वह सुकृतां यत्र लोको यत्र ऋषय: प्रथमजा: पुराणा: ।।१०।।

१६-९४

मनुष्येभ्यस्त्वा निर्वपामि शतधारमपक्षुधम् ।
स पक्तारं वह सुकृतां यत्र लोको यत्र ऋषय: प्रथमजा: पुराणा: ।।१।।

पितृभ्यस्त्वा निर्वपामि शतधारमपक्षुधम् ।
स पक्तारं वह सुकृतां यत्र लोको यत्र ऋषय: प्रथमजा पुराणा: ।।२।।
ऋषिभ्यस्त्वा निर्वपामि शतधारमपक्षुधम् ।
स पक्तारं वह सुकृतां यत्र लोको यत्र ऋषय: प्रथमजा पुराणा: ।।३।।
आर्षेभ्यस्त्वा निर्वपामि शतधारमपक्षुधम् ।
स पक्तारं वह सुकृतां यत्र लोको यत्र ऋषय: प्रथमजा: पुराणा: ।।४।।
अङ्गीरोभ्यस्त्वा निर्वपामि शतधारमपक्षुधम् ।
स पक्तारं वह सुकृतां यत्र लोको यत्र ऋषय: प्रथमजा: पुराणा: ।।५।।
आङ्गीरसेभ्यस्त्वा निर्वपामि शतधारमपक्षुधम् ।
स पक्तारं वह सुकृतां यत्र लोको यत्र ऋषय: प्रथमजा: पुराणा: ।।६।।
अथर्वभ्यस्त्वा निर्वपामि शतधारमपक्षुधम् ।
स पक्तारं वह सुकृतां यत्र लोको यत्र ऋषय: प्रथमजा: पुराणा: ।।७।।
आथर्वणेभ्यस्त्वा निर्वपामि शतधारमपक्षुधम् ।
स पक्तारं वह सुकृतां यत्र लोको यत्र ऋषय: प्रथमजा: पुराणा: ।।८।।
वनस्पतिभ्यस्त्वा निर्वपामि शतधारमपक्षुधम् ।
स पक्तारं वह सुकृतां यत्र लोको यत्र ऋषय: प्रथमजा: पुराणा: ।।९।।
वानस्पत्येभ्यस्त्वा निर्वपामि शतधारमपक्षुधम् ।
स पक्तारं वह सुकृतां यत्र लोको यत्र ऋषय: प्रथमजा: पुराणा: ।।१०।।

१६-९५

वीरुद्भ्यस्त्वा निर्वपामि शतधारमपक्षुधम् ।
स पक्तारं वह सुकृतां यत्र लोको यत्र ऋषय: प्रथमजा: पुराणा: ।।१।।
ओषधीभ्यस्त्वा निर्वपामि शतधारमपक्षुधम् ।
स पक्तारं वह सुकृतां यत्र लोको यत्र ऋषय: प्रथमजा: पुराणा: ।।२।।
ऋतुभ्यस्त्वा निर्वपामि शतधारमपक्षुधम् ।
स पक्तारं वह सुकृतां यत्र लोको यत्र ऋषय: प्रथमजा: पुराणा: ।।३।।

आर्तवेभ्यस्त्वा निर्वपामि शतधारमपक्षुधम् ।
स पक्तारं वह सुकृतां यत्र लोको यत्र ऋषय: प्रथमजा: पुराणा: ।।४।।
लोकेभ्यस्त्वा निर्वपामि शतधारमपक्षुधम् ।
स पक्तारं वह सुकृतां यत्र लोको यत्र ऋषय: प्रथमजा: पुराणा: ।।५।।
लौक्येभ्यस्त्वा निर्वपामि शतधारमपक्षुधम् ।
स पक्तारं वह सुकृतां यत्र लोको यत्र ऋषय: प्रथमजा: पुराणा: ।।६।।
लोकानां त्वा ऽध्यक्षेभ्यो निर्वपामि शतधारमपक्षुधम् ।
स पक्तारं वह सुकृतां यत्र लोको यत्र ऋषय: प्रथमजा: पुराणा: ।।७।।
देवेभ्यस्त्वा निर्वपामि शतधारमपक्षुधम् ।
स पक्तारं वह सुकृतां यत्र लोको यत्र ऋषय: प्रथमजा: पुराणा: ।।८।।
दैवेभ्यस्त्वा निर्वपामि शतधारमपक्षुधम् ।
स पक्तारं वह सुकृतां यत्र लोको यत्र ऋषय: प्रथमजा: पुराणा: ।।९।।
सर्वाभ्यस्त्वा निर्वपामि शतधारमपक्षुधम् ।
स पक्तारं वह सुकृतां यत्र लोको यत्र ऋषय: प्रथमजा: पुराणा: ।।१०।।

१६-९६

पुमान् पुंसो अधि तिष्ठ चर्म न ते शिश्नं प्र दहाज्जातवेदा: ।
भवात् ते स्त्रैणमप्यप्सरासु ।।१।।
महती द्यावापृथिवी अन्तरिक्षमिदं महत् ।
महान् महिम्ना सर्वाङ्गो यस्त्वा पचत्योदन ।।२।।
सप्तैनं सूर्याभृता: सप्त पुष्करणीरुत ।
सप्तो सहस्रं गन्धर्वा यस्त्वा पचत्योदन ।।३।।
धातात्रैषामुद्गातासीद्देवा होतार ऋत्विज: ।
सर्वाङ्ग यत्रौदनं सत्येनाग्रे समैरयन् ।।४।।
सप्त ऋषयो भूतकृत ऋषय: साध्याश्च ये ।
ते वै सर्वाङ्गमोदनं श्रद्धयाग्रे समैरयन् ।।५।।

य: सर्वाङ्गं पचति ब्रह्माणं च न हिंसति ।
तस्मै ज्योतिष्मन्तं लोकं यमो राजाभि रक्षति ।।६।।
तं सर्वाङ्गं घृतपृष्ठं द्यौमात्रं देवं संहितम् ।
निधत्स्वा मुत्रत्शेवधि तं ते ब्रह्माभि रक्षतु ।। ७ ।
तस्यौदनस्योदरमन्तरिक्षं द्यौ: पृष्ठं दिश: पार्श्वे ।
सूर्या चन्द्रमसावक्षावृतवो दन्ता: पवमान: प्राणो अङ्गिरसो रूपम् ।।८।।

*(इति क्षुद्रकाण्डनामषोडषकाण्डे पञ्चदश अनुवाक:)*

## १६-१७

आ नयैतमा रभस्व सुकृतां लोकमपि गच्छतु प्रजानन् ।
तीर्त्वा तमांसि बहुधा विपश्यन्नजो नाकमा क्रमतां तृतीयम् ।।१।।
प्र पदोऽव नेनिग्धि दुश्चरितं यच्चचार शुद्धै: शफैरा क्रमतां प्रजानन् ।
ज्योतिष्मन्तं सुकृतां लोकमीप्सन् तृतीये नाके अधि वि क्रमस्व ।।२।।
अनु च्छ्य श्यामेन त्वचमेतां विशस्तर्यथापर्वसिना माभि मंस्था: ।
माभि द्रुह: परुश: कल्पयैनं सुकृतां मध्ये अधि वि श्रयैनम् ।।३।।
भूम्यां त्वा भूमिमधि धेह्य् एतामासिञ्चोदकमव धेह्येनम् ।
पर्याधत्ताग्निना शमितार: शृतो गच्छतु सुकृतां यत्र लोक: ।।४।।
उत्क्रामात: परि चेदतप्तस्तप्ताच्चरोरधि नाकं तृतीयम् ।
अग्नेरग्निरधि सं बभूविथ ज्योतिष्मान् गच्छ सुकृतां यत्र लोक: ।।५।।
पञ्चौदन: पञ्चधा वि क्रमस्वाक्रंस्यमान: पञ्च ज्योतींषि ।
ईजानानां सुकृतां प्रेहि मध्यं ज्योतिष्मन्तमभि लोकं जयास्मै ।।६।।
अजमेवाग्निमजमु ज्योतिराहुरजं ब्रह्मणे जीवता देयमाहु: ।
अजस्तमांस्यप हन्ति दूरमस्मिंल्लोके श्रद्दधानेन दत्त: ।।७।।
एतद्वो ज्योति: पितरस्तृतीयं पञ्चौदनं ब्रह्मणेजं ददाति ।
अजस्तमांस्यप हन्ति दूरं पञ्चौदनो ब्रह्मणे दीयमान: ।।८।।

पञ्चौदनो ब्रह्मणे दीयमानोजो नाकं मा क्रमतां तृतीयम् ।
विचक्रमाण: सुकृतस्य लोके स्वर्ज्योतिषा तमो अप हन्ति दूरम् ।।९।।
अजा क्रमस्व सुकृतां यत्र लोक: शरभो न चत्तो अति दुर्गाण्येष: ।
पञ्चौदनो ब्रह्मणे दीयमानो विश्वरूपा कामदूघास्येका ।।१०।।

१६-९८

ज्योतिष्मन्तं सुकृतां लोकमीप्सन् पञ्चौदनं ब्रह्मणेजं ददाति ।
स व्याप्नुह्येभि लोकं जयास्मै शिवोस्मभ्यं प्रतिगृहीत एधि ।।१।।
अजस्त्रिनाके त्रिदिवे त्रिपृष्ठे सुकृतां लोके ददिवासं दधाति ।
पञ्चौदनो ब्रह्मणे दीयमान: स दातारं तृप्त्या तर्पयाति ।।२।।
अजोह्यग्नेरजनिष्ट शोकात् विप्रो विप्रस्य सहसो वयोधा: ।
हुतमिष्टमभिपूर्तं वषट्कृतं तद्देवा ऋतुश: कल्पयन्तु ।।३।।
अमोतं वासो दद्याद्धिरण्यमपि दक्षिणाम् ।
तथा लोकान् समाप्नुयाद् ये दिव्या येच पार्थिवा: ।।४।।
एतास्त्वाज धारा: उप यन्तु विश्वत: सोम्या देवीर्घृतपृष्ठा मधुश्चुत:।
स्तभान पृथिवीं दिवं सदस्व नाके तिष्ठास्यधि सप्तरश्मौ ।।५।।
पृष्ठात् पृथिव्या अहमन्तरिक्षमारुहमन्तरिक्षाद् दिवमारुहम् ।
दिवो नाकस्य पृष्ठात् स्वर्ज्योतिरगामहम् ।।६।।
अजो ऽस्यज स्वर्गो ऽसि त्वया लोकमङ्गिरस: प्राजानम् ।
तं लोकमनु प्र ज्ञेष्म ।।७।।
येना सहस्रं वहसि येन वा सर्ववेदसम् ।
तेनेमं यज्ञं नो वह स्वर्देवेषु गन्तवे ।।८।।
अजं च पचत पञ्च चौदनान् ।
अजं पञ्चौदनान् पक्त्वा देवा लोकान् समानशु: ।।९।।
पञ्चौदनं पञ्चभिरङ्गुलिभिर्दर्व्योद्धर पञ्च चौदनमेतम् ।
प्राचीं दिशं दक्षिणां प्रतीचीमुदीचीं ध्रुवामूर्ध्वां दिशमाक्रमस्व ।। १० ।।

१६-९९

प्राच्यां दिशि शिरो अजस्य धेहि दक्षिणायां दिशि दक्षिणं धेहि पार्श्वम्।
प्रतीच्यां दिशि भसदमस्य धेह्युदीच्यां दिश्युत्तरं धेहि पार्श्वम् ।।१।।
अजस्यानूकमूर्धायां दिशि धेहि दिशि धेहि पाजस्यं ध्रुवायाम् ।
अन्तरिक्षे मध्यतो मध्यमस्य पद्भिश्चतुर्भिः प्रति तिष्ठ दिक्षु ।।२।।
शृतमजं शृतया प्रोर्णुहि त्वचा सर्वैरङ्गैः संभृतं विश्वरूपम् ।
स उत्तिष्ठप्रेहि नाकमुत्तमं पद्भिश्चतुर्भिः प्रति तिष्ठ दिक्षु ।।३।।
सर्वादिशः संविदानाः सध्रीचीः सान्तर्देशाः प्रतिगृह्णन्तु तेजम् ।
तास्ते रक्षन्तु तव तुभ्यमेतं ताभ्यो जुहोमि हविषा घृतेन ।।४।।
यं ब्राह्मणे निदधे यं च विक्षु या विप्रुष ओदनानामजस्य ।
सर्वं तदग्ने सुकृतस्य लोके जानीतान्नः सङ्गमने पथीनाम् ।।५।।
अजः पञ्चौदनो व्यक्रमत
तस्योर ईयमभवदुदरमन्तरिक्षं द्यौः पृष्ठं दिशः पार्श्वे ।।६।।
दितिश्चादितिश्च शृङ्गे सत्यं च ऋतं च चक्षुषी ।
विश्वरूपं श्रद्धा प्राणो विराट् शिरः ।।७।।
एष वा अपरिमितो यज्ञो यदजः पञ्चौदनः ।
अपरिमितं लोकं जयत्यपरिमितं लोकमवऋन्धे
य एवं विदुषेजं पञ्चौदनं ददाति ।।८।।
नास्यास्थीनि भिन्द्यान्न मज्ज्ञो निर्धयेत् ।
सर्वाणि समादायेदमिदं प्रवेशयेत् ।।९।।
इदमिदमस्य रूपं तेनैनं सं गमयति ।
स्वधामूर्जमक्षितिमहो अस्मै दुहे य एवं विदुषेजं पञ्चौदनं ददाति।।१०।।

१६-१००

इन्द्रायभागं सविता कृणोत्विमं यज्ञं यज्ञपतिश्च सूरिः ।
ये नो द्विषन्त्यनु तान् रभस्वारिष्ठा वीरा यजमानस्य सर्वे ।।१।।

पञ्चलोकाः पञ्चऋतवः ।
पञ्चसु तुतुष्टु घ्नोति य एवं विदुषेजं पञ्चौदनं ददाति ।।२।।
एष वै निदाघो यज्ञो यदजः पञ्चौदनः ।
निरप्रियं भ्रातृव्यं दहति भवत्यात्मना
परास्याप्रियो भ्रातृव्यो भवति । य एवं विदुषेजं पञ्चौदनं ददाति ।।३।।
यो वा आयन्तमित्यृतुं वेद ।
आयतीमेवाप्रियस्य भ्रातृव्यस्य श्रियमा दत्ते भवत्यात्मना
परास्याप्रियो भ्रातृव्यो भवति । य एवं विदुषेजं पञ्चौदनं ददाति ।।४।।
यो वै संयन्तमित्यृतुं वेद ।
संयतीमेवाप्रियस्य भ्रातृव्यस्य श्रियमा दत्ते भवत्यात्मना
परास्याप्रियो भ्रातृव्यो भवति । य एवं विदुषेजं पञ्चौदनं ददाति ।।५।।
यो वै संभवन्तमित्यृतुं वेद ।
भवन्तीमेवाप्रियस्य भ्रातृव्यस्य श्रियमा दत्ते भवत्यात्मना
परास्याप्रियो भ्रातृव्यो भवति । य एवं विदुषेजं पञ्चौदनं ददाति ।। ६।।
यो वा अभिभवन्तमित्यृतुं वेद ।
अभिभवन्तीमेवाप्रियस्य भ्रातृव्यस्य श्रियमादत्ते भवत्यात्मना
परास्याप्रियो भ्रातृव्यो भवति । य एवं विदुषेजं पञ्चौदनं ददाति ।।७।।
यो वा उद्यन्तमित्यृतुं वेद ।
उद्यतीमेवाप्रियस्य भ्रातृव्यस्य श्रियमा दत्ते भवत्यात्मना
परास्याप्रियो भ्रातृव्यो भवति । य एवं विदुषेजं पञ्चौदनं ददाति ।।८।।
यो वै मूर्द्धानमित्यृतुं वेद ।
मूर्ध्नीमेवाप्रियस्य भ्रातृव्यस्य श्रियमा दत्ते भवत्यात्मना
परास्याप्रियो भ्रातृव्यो भवति । य एवं विदुषेजं पञ्चौदनं ददाति ।।९।।

योवै सर्वमित्यृतुं वेद ।
सर्वामेवाप्रियस्य भ्रातृव्यस्य श्रियमा दत्ते भवत्यात्मना
परास्याप्रियो भ्रातृव्यो भवति ।
य एवं विदुषेजं पञ्चौदनं ददाति॥१०॥
यावन्त्यस्य लोमानि ब्रह्मणास्तृणोति वेद्याम् ।
तावतीरस्यधाराः समुद्रस्येवाक्षताः ॥११॥
दुहां क्षीरं भवतु सर्पिरेभ्यः स्वराड् भुत्वोपतिष्ठत्सुराणाम् ।
मधोर्धारामधुघेभ्यो दुहनोजो नाके तिष्ठतु मोदमानः ॥१२॥

१६-१०१

स्कम्भेनेमे विष्टभिते द्यौश्च भूमिश्च तिष्ठतः ।
स्कम्भ इदं सर्वमार्पितमेजत्प्राणं निमिषच्च यत् ॥१॥
एकचक्रं वर्तत एकनेमि सहस्राक्षरं प्र पुरो नि पश्चात् ।
अर्धेनेदं परिबभूव विश्वं यदस्यार्ध कतमः सकेतुः ॥२॥
पञ्चवाहि बहत्यग्रमस्य प्रष्टयो युक्ता अनुसंवहन्ति ।
अयातमस्य ददृशे न यातं परं नेदीयोवरं दवीयः ॥३॥
इदं सवितर्वि जानीहि षड् यमा एक एकजः ।
तस्मिन् हापित्वमिछन्ते य एषामेक एकजः ॥४॥
तिर्यग्बिलश्चमस उर्ध्वबुध्नो यस्मिन् यशो निहितं विश्वरूपम् ।
तत्रासत ऋषयः सप्त साकं ये अस्य गोपा महतो बभूवुः॥५॥
तिस्रो ह प्रजा अत्यायमायन् न्य न्या अर्कमभितोविशन्त ।
बृहन् ह तस्थौ रजसो विमानो हरितो हरिणीरा विवेश ॥६॥
द्वादश प्रधयश्चक्रमेकं त्रीणि नभ्यानि क उ तच्चिकेत ।
तत्राहतास्त्रीणि शतानि शङ्कवः षष्टिश्च खीला अविचाचला ये॥७॥
अनन्तं विततं पुरुत्रानन्तमन्तवच्चा समन्ते ।
ते नाकपालश्चरति प्रजानन् विद्वान् भूतं यदु भव्यमस्य ॥८॥

आवि: संनिहितं गुहा जरन्नाम महत् पदम् ।
तत्रेदं सर्वमार्पितमेजत् प्राणत् निमिषच्च यत् ॥९॥
ऊर्ध्वं भरन्तमुदकं कुम्भेनेवोदहार्यम् ।
पश्यन्ति सर्वे चक्षुषा न सर्वे मनसा विदु: ॥१०॥

१६-१०२

ऊनात्पूर्णमुदचति पूर्णादूनमुदच्यते ।
कविस्तद्ब्रह्मणा वेद यतस्तत् परिषिच्यते ॥१॥
प्रजापतिश्चरति गर्भे अन्तरदृश्यमानो बहुधा वि जायते ।
अर्धेन विश्वं भुवनं जजान यदस्यार्धं किमुतज्जजान ॥२॥
यदेजति चरति यच्च तिष्ठत्यप्राणत् प्राणन्निमिषच्च चेष्टत ।
तद्दाधार पृथिवीं विश्वरूपं तत् संभूय भवत्येकमेव ॥३॥
या: पुरस्ताद्युज्यते योत पश्चाद्या विश्वतो युज्यते योत सर्वत: ।
यया यज्ञस्त्रायते प्राङ् तां त्वा पृच्छामि कतमा नु सर्चाम् ॥४॥
यत: सूर्य उदेत्यस्तं यत्र च गच्छति ।
तदेव मन्येहं ज्येष्ठं ततो नात्येति किं चन ॥५॥
सत्येनोर्ध्वो स्तपति ब्राह्मणार्वाङ् वि पश्यति ।
प्राणेन तिर्यङ् प्राणाति यस्मिन् ज्येष्ठमधि श्रितम् ॥६॥
यो वै ते विद्यादरणी याभ्यां निर्मथ्यते वसु ।
सविद्वान् ज्येष्ठं मन्येत स विद्याद् ब्राह्मणं महत् ॥७॥
अपादग्रे समभवत् सो अग्रे स्वराभरत् ।
चतुष्पाद् भूत्वा भोग्य: सर्वमादत्त भोजनम् ॥८॥
भग्यो भवदथो अन्नमदद् बहु ।
यो वेदमुत्तरावन्तमुपासातै सनातनम् ॥९॥
सनातनमेनमाहुरुताद्य स्यात् पुनर्णव: ।
अहोरात्रे प्र जायेते अन्यो अन्यस्य रूपयो: ॥१०॥

१६-१०३

शतं सहस्रमयुतं न्यर्वुदमसंख्येयं स्वमस्मिन्निविष्टम् ।
तदस्य घ्नन्त्यभिपश्यत एव तस्माद्देवो रोचते एष एतत् ।।१।।
आराग्रमात्रंददृश उतैकं नेव दृश्यते ।
तत: परिष्वजीयसी देवता सा मम प्रिया ।।२।।
इयं कल्याण्यजरा मर्त्यस्यामृता गृहे ।
यस्मै कृता शये स यश्चकार जजार स: ।।३।।
त्वं स्त्री त्वं पुमानसि त्वं कुमार्युत वा कुमार: ।
त्वं जीर्णो दण्डेन भञ्जसि त्वं जातो भवसि विश्वतोमुख: ।।४।।
उतैष ज्येष्ठ उत वा कनिष्ठ उतैषां भ्रातोत वा पितैष: ।
एको देवो मनसि प्रविष्ट: प्रथमो जात: स उ गर्भे अन्त: ।।५।।
अनेनैत्येजति सर्वमस्मिन् विश्वाभूतानि पर्याभृतस्य ।
स पुमान् पूंसो जनयन्नृतेन सर्वानन्तान् गच्छति तिष्ठन्नेव ।।६।।
मध्ये दिवो निहित: पृश्निरस्मा विचक्रमाणौ रजसस्पात्यन्तौ ।
स विश्वाभिरभि चष्टे शचीभिरन्तरापूर्वमपरं च केतुम् ।।७।।
ये अर्वाङ् मध्य उत वा पुराणे वेदं विद्वांसमभितो वदन्ति ।
आदित्यमेव ते परि वदन्ति सर्वे अग्निं द्वितीयं त्रिवृतं च हंसम् ।।८।।
एकामृचं समिन्धते द्वादशभिरग्निभि: ।
तस्यामापस्तस्याङ्गावस्तस्यामोषधय: श्रिता: ।।९।।
सप्त सुपर्णा उप धावन्ति वाणमनुष्टुभा संभृतं विश्वरूपं ।
तमाततं विततं तन्तुमाततं स न: पुनातु सलिलस्य पृष्ठे ।।१०।।
सप्त ऋषय: प्रतिहिता: शरीरे सप्त रक्षन्तु सदमप्रमादम् ।
सप्ताप: स्वपतो लोकमीयुस्तत्र जागृतो अस्वप्नजौ
सत्रसदौ च देवौ ।।११।।

*(इति क्षुद्रकाण्डनामषोडशकाण्डे षडशो ऽनुवाक:)*

## १६-१०४

भवाशर्वौ मृडतं माभि यातं भूतपती पशुपती नमो वाम् ।
प्रतिहितामायतां मा वि स्राष्टं मा नो हिंसिष्टं द्विपदो मा चतुष्पद: ।।१।।
शुने क्रोष्ट्रे मा शरीराणि कर्तमलिक्लवेभ्यो गृध्रेभ्यो
ये च कृष्णा अविष्यव:।
मक्षिका: ते पशुपते वयांसि ते विघसे मा विदन्त ।।२।।
क्रन्दाय ते प्राणाय ते याश्चते भव रोपय: ।
नमस्ते रुद्र कृण्म: सहस्राक्षायमर्त्त्य: ।।३।।
पुरस्तात्ते नम: कृण्म: उत्तरादधरादुत ।
अभीवर्गाद्दिवस्पर्यन्तरिक्षाय ते नम: ।।४।।
मुखाय ते पशुपते यानि चक्षूंसि ते भव ।
त्वचे रूपाय संदृशे प्रतीचीनाय ते नम: ।।५।।
अङ्गेभ्यो उदराय जिह्वाया आस्याय च ।
दद्भ्यो गन्धाय ते नम: ।।६।।
अस्त्रा नीलशिखण्डेन सहस्राक्षेण वाजिना ।
ऋद्रेणार्ध्वकघातिना तेन मा समरामहि ।।७।।
स नो भव: परि वृणक्तु विश्वत
आपो इवाग्नि: परि वृणक्तु नो भव: ।
मा नो अभि मांस्त नमो अस्त्वस्मै ।।८।।
चतुर्नमो अष्टकृत्वो भवाय दश कृत्व: पशुपते नमस्ते ।
तवेमे पञ्च पशवो विभक्ता गावो अश्वा: पुरुषा आदजावय: ।।९।।
तव चतस्त्र: प्रदिशस्तव द्यौस्तवेदमुग्रोर्वन्तरिक्षम् ।
तवेदं सर्वमात्मन्वद्यदेजदधिभूम्याम् ।।१०।।

१६-१०५

उरु: कोशो वसुधानस्तवायं यस्मिन्निमा विश्वा भुवनान्यन्त: ।
स नो मृड पशुपते नमस्ते
पर: क्रोष्टारो अभिभा: श्वान: परो यन्त्वघरुदो विकेश्य: ।।१।।
धनुर्बिभर्षि हरितं हिरण्ययं सहस्रघ्नि शतवधं शिखण्डिन् ।
रुद्रस्येषुश्चरति देवहेतिस्तस्मै नमो यतमस्यां दिशीत: ।।२।।
योभियात निलयते त्वामुग्र निचिकीर्षति ।
पश्चादनुप्रयुंङ्क्षे तं विद्धस्य पदनीरिव ।।३।।
भवारुद्रौ सयुजा संविदानावुभावुग्रौ चरतो वीर्याय ।
तयोर्भूमिरन्तरिक्षं स्वर्द्यौस्ताभ्यां नमो भवमर्त्त्याय कृण्म: ।।४।।
नमस्ते अस्त्वायते नमो अस्तु परायते ।
नमस्ते रुद्र तिष्ठत आसीनायोत ते नम: ।।५।।
नम: सायं नम: प्रातर्नमो रात्र्या नमो दिवा ।
भवाय च शर्वाय चोभाभ्यामकरं नम: ।।६।।
सहस्राक्षमतिपश्यं पुरस्ताद् रुद्रमस्यन्तं बहुधा विपश्चितम् ।
मोपाराम जिह्वयेयमानम् ।।७।।
श्यावाश्वं कृष्णमसितं मृणन्तं भीमं रथं केशिन: पादयन्तम् ।
पुर्वे प्रतीमो नमो अस्त्वस्मै ।।८।।
मा नोभि स्रा मत्यं देवहेतिं मा न: क्रुध: पशुपते नमस्ते ।
अन्यत्रास्मद्दिव्यां शाखां वि धूनु ।।९।।
मा नो हिंसीरधि नो ब्रूहि परि णो वृङ्ग्धि मा क्रुध: ।
मा त्वया समरामहि ।।१०।।

१६-१०६

मा नो अश्वेषु गोषु पुरुषेषु मा गृधो नो अजाविषु ।
अन्यत्रोग्र वि वर्तय पियारूणां प्रजां जहि ।।१।।

यस्य तक्मा कासिका हेतिरेकाश्वस्येव वृषण: क्रन्द एति ।
अभिपूर्वं निर्णयते नमो अस्त्वस्मै ।।२।।
यस्तिष्ठति विष्टभितो अन्तरिक्षेऽयज्वन: प्रमृणन् देवपीयून् ।
तस्मै नमो दशभि: शक्वरीभि: ।।३।।
तुभ्यमारण्या: पशवो मृगा वने हितास्तुभ्यं
वयांसि शुकुना: पतत्रिण: ।
तव यक्षं पशुपतेप्स्वन्तस्तुभ्यं क्षरन्ति दिव्या आपो मृधे ।। ४ ।
शिंशुमारा अजगरा: पुलीकया जषा मत्स्या रजसा येभ्यो अस्यसि ।
न ते दूरं न परिष्ठास्ति ते भव सद्य: सर्वान् प्रति पश्यसि भूमिम्।।५।।
पूर्वस्माद्धंस्युत्तरस्मिन् समुद्रे मा नो रुद्र तक्मना मा विषेण ।
मा न: सं स्रा दिव्येनाग्निना ऽन्यत्रास्मद्विद्युतं पातयैताम् ।।६।।
भवो दिवो भव ईशे पृथिव्या भव आ पप्र उर्वन्तरिक्षम् ।
तस्य मा प्रापत् दुच्छुना का चनेह ।।७।।
भव राजन् यजमानाय मृड पशूनां हि पशुपतिर्बभूथ ।
य: श्रद्दधाति सन्ति देवा इति चतुष्पदे द्विपदेस्य मृड ।।८।।
मा नो महान्तमुत मा नो अर्भकं मा न: उक्षन्तमुत मा नो उक्षत: ।
मा नो हिंसी पितरं मोत मातरं स्वां तन्व रुद्र मा रीरिषो न: ।।९।।

रुद्रस्यैलबकारेभ्यो ऽसंसूक्त गिरेभ्य: ।
इदं महाश्वेभ्य: श्वभ्यो अकरं नम: ।
नमस्ते घोषिणीभ्यो नमस्ते केशिनीभ्य: ।
नम: संभुञ्जतीभ्य: नमो नमस्वस्तीभ्यो।। १० ।

१६-१०७

नमस्ते जायमानायै जाताया उत ते नम: ।
बालेभ्य: शफेभ्यो रूपायाघ्न्ये ते नम: ।।१।।

यो विद्यात् सप्त प्रवत: सप्त विद्यात् परावत: ।
शिरो यज्ञस्य यो विद्यात् स वशां प्रति गृह्णीयात् ।।२।।
वेदाहं सप्त प्रवत: सप्त वेद: परावत: ।
शिरो यज्ञस्याहं वेद सोमं चास्यां विचक्षणम् ।।३।।
यया द्यौर्यया पृथिवी ययापो गुपिता इमा: ।
वशां सहस्रधारां ब्रह्मणाच्छावदामसि ।।४।।
शतं वत्सा: शतं दोग्धार: शतं गोप्तारो अधि पृष्ठे अस्या: ।
ये देवास्तस्यां प्राणन्ति ते वशां विदुरेकधा ।।५।।
यज्ञपदीराक्षीरा स्वधाप्राणा महीलुका ।
वशा पर्जन्यपत्नी देवाङ् अप्येति ब्रह्मणा ।।६।।
अनु त्वाग्नि: प्राविशदनु सोमो वसे त्वा ।
ऊधस्ते भद्रे पर्जन्यो विद्युतस्ते स्तना वशे ।।७।।
अपस्त्वं धुक्षे प्रथमा उर्वरा अपरा वशे ।
तृतीयं राष्ट्रं धुक्षेऽन्नं क्षीरं वशे त्वम् ।।८।।
यदादित्यैर्हूयमानोपातिष्ठ ऋतावरी ।
इन्द्र: सहस्रं पात्रान् सोमं त्वापाययद् वशे ।।९।।
यदनूचीन्द्रमैरात् त्व ऋषभो ऽह्वयत् ।
तस्मात्ते वृत्रहा पय: क्षीरं कृद्धो ऽभरद् वशे ।।१०।।

१६-१०८

यत् क्रुद्धो धनपति: क्षीरं ते अभरद् वशे ।
इदं तदद्य नाकस्त्रिषु पात्रेषु रक्षति ।। १ ।
त्रिषु पात्रेषु तं सोममा देव्यभरद् वशा ।
अथर्वा यत्र दीक्षितो वर्हिष्यास्त हिरण्यये ।।२।।
सं हि सोमेनागत समु सर्वेण पद्वता ।
वशा समुद्रे प्रानृत्यदृच: सामानि बिभ्रती ।।३।।

सं हि सूर्येणागत समु सर्वेण चक्षुषा ।
वशा समुद्र मध्यष्ठाद् गन्धर्वै: कलिभि: सह ।।४।।
सं हि वातेनागत समु सर्वै: पतत्रिभि: ।
वशा समुद्रमत्यख्यद् भद्रा ज्योतींषि बिभ्रती ।।५।।
तद् भद्रा: समगच्छन्त वशा द्रेष्ट्र्यथो स्वधा
अथर्वा यत्र दीक्षितो बर्हिष्यास्त हिरण्यये ।।६।।
अभीवृता हिरण्येन यदतिष्ठ ऋतावरि ।
अश्व: समुद्रो भूत्वाध्यस्कन्दद् वशे त्वा ।।७।।
वशा माता राजन्यस्य वशा माता स्वधे तव ।
वशाया यज्ञ आयुधं ततश्चित्तमजायत ।।८।।
ऊर्ध्वो बिन्दुरुदचरद् ब्रह्मण: ककुदादधि ।
ततस्त्वं यज्ञिषे वशे ततो होता अजायत ।।९।।
आस्नस्ते गाथा ऽभवन्नुष्णिहाभ्यो बलं तव ।
पाजस्याज्जज्ञे ते यज्ञ स्तनेभ्यो रश्मयो वशे ।।१०।।

१६-१०९

इर्माभ्यामयनं जातं शक्थिभ्यां च वशे तव ।
आन्त्रेभ्यो अत्रा यज्ञिरे उदरादधि वीरुध: ।।१।।
यदुदरं वरुणस्यानुप्राविशथा वशे ।
ततस्त्वा ब्रह्मोदह्वयत् स हि नेत्रमवेत्तव ।।२।।
सर्वे गर्भादवेपन्त जायमानादसूस्व: ।
ससूव हि तामाहुर्वशेति ब्रह्मणा क्लृप्त उत बन्धुरस्या: ।।३।।
युध एक: सं सृजति यो अस्या एक इद्वशी ।
तरांसि यज्ञा अभवन् तरसां चक्षुरभवद् वशा ।।४।।
वशा सूर्यं प्रत्यगृह्णाद् वशा यज्ञमधारयत् ।
वशायामन्तराविशदोदनो ब्रह्मणा सह ।।५।।

वशामेवाहुरमृतं वशां मृत्युमुपासते ।
वशेदं सर्वमभवद्देवा मनुष्या असुरा: पितर ऋषय: ।।६।।
य एवं विद्यात् स वशां प्रति गृह्णीयात् ।
तथा हि यज्ञ: सर्वपाद्दुहे दात्रे अनपस्फुरन् ।।७।।
तिस्रो जिह्वा वरुणस्यान्तर्दीद्यत्यासनि ।
तासां या मध्ये राजति सा वशा दुष्प्रतिग्रहा ।।८।।
चतुर्धा रेतो अभवद् वशाया:
आपस्तुरीयं अमृतं तुरीयं यज्ञस्तुरीयं पशवस्तुरीयम् ।
य एवं विद्यात् स वशां प्रति गृह्णीयात् ।।९।।
वशा द्यौर्वशा पृथिवी वशा विष्णु: प्रजापति: ।
वशाया दुग्धमपिबन् साध्या वसवश्च ये ।।१०।।

१६-११०

वशाया दुग्धं पीत्वा साध्या वसवश्च ये ।
इमे ब्रध्नस्य विष्टपि पयो अस्या उपासते ।।१।।
सोममेनामेके दुह्रे घृतमेक उपासते ।
य एवं विदुषे वशां ददुस्ते गतास्त्रिदिवं दिव: ।।२।।
वशां दत्त्वा ब्राह्मणेभ्य: सर्वाल्लोकान् समश्नुते ।
ऋतं ह्यस्यामाहितमपि ब्रह्माथो तप: ।।३।।
वशां देवा उप जीवन्ति वशां मनुष्या उत ।
वशेदं सर्वमभवद्यावत् सूर्यो विपश्यति ।।४।।

*(इति क्षुद्रकाण्डनामषोडशकाण्डे सप्तदशो ऽनुवाक:)*

१६-१११

यो वा एकं ब्रह्मा ऽनुष्ठ्या विद्यात् स वा अद्य महद् वदेत् ।
परूंषि यस्य संभारा ऋचो यस्यानूक्यम् ।।१।।

छन्दांसि यस्य लोमानि परिस्तरणमिद्धविर्यजुर्हृदयमुच्यते ।
यदतिथिपतिरतिथीन् प्रतिपश्यति देवयजनं प्रेक्षते ।।२।।
यदभिवदति दीक्षामुपैति यदुदकं याचत्यप: प्र णयति ।
या यज्ञ आप: प्रणीयन्ते ता एव ता: ।।३।।
यत् तर्पणमाहरन्ति योग्नीषोमीय: पशुर्वध्यते स एव स: ।
यत् खादमाहरन्ति पुरोडाशावेव तौ ।।४।।
यदावसथान् कल्पयन्ति सदोहविर्धानान्येव तत् कल्पयन्ति।
यदुपस्तृणन्ति बर्हिरेव तत् ।।५।।
यत् कशिपूपबर्हणान्याहरन्ति परिधय एव ते ।
यदुपरिशयनमाहरन्ति स्वर्गमेव तेन लोकमव रुन्द्धे ।।६।।
यदभ्यञ्जनमाहरन्त्याज्यमेव तत् ।
यदशनकृतं ह्वयन्ति हविष्कृतमेव तदध्वयन्ति ।।७।।
यद् व्रीहयो यद्यवा निरुप्यन्ते अंशव एव तेऽन्यूप्यन्ते ।।८।।

१६-११२

उलूखल मुसलं ग्रावाणौ शूर्पं पवित्रं तुषा ऋजीषा ।
स्रुग् दर्विर्नेक्षणमायवनं आपो ऽभिषवणी: द्रोणकलश: कुम्भ्य: ।।१।।
इदमेव कृष्णाजिनं वायव्यानि पात्राणि ।
यजमानब्राह्मणं वा एतदतिथिपति: कृणुते
यदाहार्याण्यवेक्षत इदं भूया इदामिति ।।२।।
यदाह भूय उद्धरेति प्रजां चैव तेन पशूंश्च वर्धयते-
प्राणमेव तेन वर्षीयांसं कृणुते ।।३।।
यत् संपृच्छति काममेव तेनावरुद्धे कामं हि पृष्ठो याचति ।
यदुदकमभिषिञ्चत्यप एव तेनावरुन्द्धे ।।४।।

यदुपहरति हवींष्या सादयति ।
तेषामासन्नानामतिथिरात्मनि जुहोति ।
स्रुक्कारेण वषट्कारेण स्रुचा हस्तेन प्राणे यूपे ।।५।।

१६-११३

तस्मान्नद्विषन्नद्यान्न द्विषतो ऽन्नमद्यान्न मीमांसितस्य न मीमांसमानस्य।।१।।
सर्वो वा एष जग्धपाप्मा यस्यान्नमश्नन्ति ।।२।।
सर्वो उ एषो ऽजग्धपाप्मा यस्यान्नं नाश्नन्ति ।।३।।
प्रजापतेर्वा एष विक्रान्तमनुविक्रमते य उपहरति ।।४।।
प्राजापत्यो वा एतस्य यज्ञो विततो य उपहरति ।।५।।
सर्वदा वा एष सुतसोम युक्तग्रावार्द्रपवित्र
आहृतयज्ञक्रतुर्विततोध्वरो य उपहरति ।।६।।
यो ऽतिथीनां स आहवनीयो यो ऽन्नकरण: स
दक्षिणाग्निर्यो वेश्मनि स गार्हपत्य: ।।७।।
इष्टं च वा एष पूर्तं चाश्नाति य: पूर्वोतिथेरश्नाति ।
प्रजां च वा एष पशूंश्चाश्नाति ।।८।।
ऊर्जं च वा एष पयश्च गृहाणामश्नाति य: पूर्वोतिथेरश्नाति ।।९।।
एष वा अतिथिर्यच्छ्रोत्रिय: तस्मात् पूर्वो
नाश्नीयादशितावत्यश्नीयात्तद् व्रतम् ।।१०।।
यज्ञस्याविच्छेदाय यज्ञस्य गुप्तये यज्ञस्य सात्मत्वाय ।।११।।

१६-११४

यत् क्षीरमुपसिच्योपहरति यावदग्निष्टोमेन
समृद्धेनेष्ट्वाव रुन्द्धे तावदेनेनाव रुन्द्धे ।।१।।
यत् सर्पिरुपसिच्योपहरति यावत् साह्नेन
समृद्धेनेष्ट्वाव रुन्द्धे तावदेनेनाव रुन्द्धे ।।२।।

यन् मधूपसिच्योपहरति यावदतिरात्रेण
समृद्धेनेष्ट्वाव रुन्द्धे तावदेनेनाव रुन्द्धे ।।३।।
यन् मांसमुपसिच्योपहरति यावद्द्वादशाहेन
समृद्धेनेष्ट्वाव रुन्द्धे तावदेनेनाव रुन्द्धे ।।४।।
यदुदकमुपसिच्योपहरति प्रजानां प्रजननाय योग्जीवति
सर्वमायुरेति नपुनरा जरस: प्र मीयते य एवं वेद ।।५।।

१६-११५

तस्मै वा उषा हिङ्कृणोति सविता भूत्वा प्र स्तौति
बृहस्पतिरूर्जोयोद्गायति त्वष्टा पुष्ट्या प्रति हरति विश्वे देवा निधनम्।
निधनं भूत्या: प्रजाया: पशूनां भवति य एवं वेद ।।१।।
तस्मा उद्यन् सूर्यो हिङ्कृणोति सङ्गव: प्र स्तौति
मध्यन्दिन उद्गायत्यपराह्ण: प्रतिहरत्यस्तंयन् निधनम् ।
निधनं भूत्या: प्रजाया: पशूनां भवति य एवं वेद ।।२।।
तस्मा अभ्रो भवन् हिङ्कृणोति विद्योतमान: प्र स्तौति
स्तनयन्नुद्गायति वर्षं प्रति हरत्युद्गृह्णन् निधनम् ।
निधनं भूत्या: प्रजाया: पशूनां भवति य एवं वेद ।।३।।
अतिथीन् प्रति पश्यति हिङ्कृणोत्यभि वदति प्र स्तौत्युदकं
याचत्युद्गायत्युपहरति प्रति हरत्युच्छिष्टं निधनम् ।
निधनं भूत्या: प्रजाया: पशूनां भवति य एवं वेद ।।४।।

१६-११६

एते वै प्रियाश्चाप्रियाश्च ऋत्विज:
स्वर्गं लोकं गमयन्ति यदतिथय: ।।१।।
यत् क्षत्तारं ह्वयत्या श्रावयति ।। २ ।।
यत् प्रतिशृणोति प्रत्याश्रावयति ।।३।।

यत् परिवेष्टार आवसथान् प्रपद्यन्ते चमसाध्वर्यव
एव ते तेषां वै न कश्चनाहोता ।। ३ ।।
यत् प्रातरुपहरति प्रात: सवनमेव तत् ।। ४ ।।
यद्दिवोपहरति माध्यन्दिनमेव तत् सवनम् ।। ५ ।।
यत् सायमुपहरति तृतीय सवनमेव तत् ।। ६ ।।
यदतिथिपतिरतिथीन् परिविष्यासनं याचते
अवभृथमेव तदुपावैति ।। ७ ।।
यत् सभागयति दक्षिणामेव तत् सभागयति
यदनुतिष्ठत्युदवस्यत्त्येव तत् ।। ८ ।।

१६-११७

स उपहूत: पृथिव्यां भक्षयत्युपहूतस्तस्मिन् यत् पृथिव्यां विश्वरूपम्।
पृथिव्यां तपति पृथिव्यामाभाति स्वर्गलोक भवति य एवं वेद ।। १ ।।
स उपहूतो अन्तरिक्षे भक्षयत्युपहूतस्तस्मिन् यदन्तरिक्षे विश्वरूपम्।
अन्तरिक्षे तपत्यन्तरिक्ष आभाति स्वर्गलोक भवति य एवं वेद ।।२।।
स उपहूतो दिवि भक्षयत्युपहूतस्तस्मिन् यद्दिवि विश्वरूपम् ।
दिवि तपति दिव्याभाति स्वर्गलोक भवति य एवं वेद ।।३।।
स उपहूतो देवेषु भक्षयत्युपहूतस्तस्मिन् यद्देवेषु विश्वरूपम् ।
देवेषु तपति देवेष्वाभाति स्वर्गलोक भवति य एवं वेद ।।४।।
स उपहूतो लोकेषु भक्षयत्युपहूतस्तस्मिन् यल्लोकेषु विश्वरूपम् ।
लोकेषु तपति लोकेष्वाभाति स्वर्गलोक भवति य एवं वेद।।५।।

१६-११८

यत् प्राङ्ग् आसीनो निर्वपति यज्ञाय च देवेभ्यश्चा वृश्चते ।।१।।
यद्दक्षिणामासीनो निर्वपति यमाय च पितृभ्यश्चा वृश्चते ।।२।।
यत् प्रत्यङ्ग् आसीनो निर्वपति वरुणायाप्सुषदे चा वृश्चते ।।३।।
यदुदङ्ग् आसीनो निर्वपति सोमाय च राज्ञे सप्तऋषिभ्यश्चा वृश्चते।।४।।

यदुपस्थं कृत्वासीनो निर्वपति भूमये चाग्नये चा वृश्चते ।।५।।
यदूर्ध्वकृरासीनो निर्वपति वायवे चान्तरिक्षाया चा वृश्चते ।।६।।
यदूर्ध्वस्तिष्ठन् निर्वपति दिवे चादित्याय चा वृश्चते ।।७।।

१६-११९

यं कामयेत पापीयानात्मना प्रजया पशुभिर्गृहैर्ध्वनेन स्यादिति ।
तस्यैवं निर्वपेत्तस्यैवं निरुप्यैवमेवानु निर्वपेत् ।
तवैव स पापीयानात्मना प्रजया पशुभिर्गृहैर्ध्वनेन
भवतीदमिदं कुर्यात् सा प्रायश्चित्तिः ।।१।।
यं कामयेत वसीयान् छ्रेयानात्मना प्रजया पशुभिर्गृहैर्ध्वनेन स्यादिति ।
तस्यैवं निर्वपेत्तस्यैवं निरुप्यैवमेवानु निर्वपेत् ।
तवैव न वसीयान् छ्रेयानात्मना प्रजया पशुभिर्गृहैर्ध्वनेन
भवतीदमिदं कुर्यात् सा प्रायश्चित्तिः ।।२।।

१६-१२०

यदवहन्यमानस्य तण्डुलस्कन्दति समासमानस्य वरः प्रमायुषो भवति।।१।।
यदिष्ट्वा भवति पितृदेवत्यं करोति ।।२।।
यद् विष्यन्दते गृहाणाञ्च पशूनाञ्च पयो विष्यन्दते ।।३।।
यदुपसिञ्चति गृहाणाञ्च पशूनाञ्च पयोपसिञ्चति ।।४।।
यदायवनीय शीर्यते गृहपतिर्म्रियते ।।५।।
यद् दर्वीः शीर्यते गृहपत्नी म्रियते ।।६।।
यत् कुम्भी विकसति सर्वज्यानिर्दाता च प्रतिगृहीता च जीयते।।७।।

१६-१२१

यत् प्राञ्चमुद्वर्तयति यज्ञाय च देवेभ्यश्चा वृश्चते ।।१।।
यद्दक्षिणाञ्चमुद्वर्तयति यमाय च पितृभ्यश्चा वृश्चते ।।२।।
यत् प्रत्यञ्चमुद्वर्तयति वरुणायाप्सुषदे चा वृश्चते ।।३।।

यदुदङ्ङमुद्वर्तयति सोमाय च राज्ञे सप्तऋषिभ्यश्चा वृश्चते ।।४।।
यदनुद्वृतमुद्धरति दिशोदिशो वैनं भयमा गच्छति ।।५।।

१६-१२२

यत् प्राचीनं बर्हि: स्तृणाति यज्ञाय च देवेभ्यश्चा वृश्चते ।।१।।
यद्दक्षिणाचीनं बर्हि: स्तृणाति यमाय च पितृभ्यश्चा वृश्चते ।।२।।
यत् प्रतीचीनं बर्हि: स्तृणात्यकृतपूर्व करोति ।।३।।
यदुदीचीनं बर्हि: स्तृणाति सोमाय च राज्ञे सप्तऋषिभ्यश्चा वृश्चते ।।४।।

१६-१२३

यत् पुरस्तात्पात्रस्य श्छिरं करोत्यर्ष: प्रतिग्रहीतुर्मुखे जायते ।।१।।
यद्दक्षिणत: पात्रस्य श्छिरं करोति यमाय च पितृभ्यश्चा वृश्चते ।।२।।
यत् पश्चात् पात्रस्य श्छिरं करोति प्रतीची प्रतिग्रहितारं शरव्यच्छितु।।३।।
यदुत्तरत: पात्रस्य श्छिरं करोति
सोमाय च राज्ञे सप्तऋषिभ्यश्चा वृश्चते ।।४।।

१६-१२४

यच्छुक्रो भवत्यादित्यानामेव प्रियं धामोपैति ।
स य: शुक्रं प्राश्नीयादादित्यानां त्वा
प्रियेण धाम्ना प्राश्नामीत्येनं प्राश्नीयात् ।
ततश्चैनमन्येन धाम्ना प्राश्नात्यादित्येभ्य वृश्चते ।।१।।
यत् फलीकृतो भवति विश्वेषामेव देवानां प्रियं धामोपैति ।
स य: फलीकृतं प्राश्नीयाद्विश्वेषां त्वा देवानां
प्रियेण धाम्ना प्राश्नामीत्येनं प्राश्नीयात् ।
ततश्चैनमन्येन धाम्ना प्राश्नाति विश्वेभ्यो देवेभ्य आ वृश्चते ।।२।।
यद् फलीकृतो भवति मरुतामेव देवानां प्रियं धामोपैति ।

स यो फलीकृतं प्राश्नीयान्मरुतां त्वा देवानां
प्रियेण धाम्ना प्राश्नामीत्येनं प्राश्नीयात् ।
ततश्चैनमन्येन धाम्ना प्राश्नाति मरुद्भ्य आ वृश्चते ।।३।।
यद् वक्षामो भवत्यग्नेरेव प्रियं धामोपैति ।
स यद् वक्षामं प्राश्नीयादग्नेस्त्वा
प्रियेण धाम्ना प्राश्नामीत्येनं प्राश्नीयात् ।
ततश्चैनमन्येन धाम्ना प्राश्नात्यग्नय आ वृश्चते ।।४।।
यदनवक्षामो भवति मित्रावरुणयोरेव प्रियं धामोपैति ।
स यदनवक्षामं प्राश्नीयान् मित्रावरुणयोस्त्वा
प्रियेण धाम्ना प्राश्नामीत्येनं प्राश्नीयात् ।
ततश्चैनमन्येन धाम्ना प्राश्नामि मित्रावरुणाभ्यामा वृश्चते ।।५।।
यत् क्लिन्नो भवतीन्द्रस्यैव प्रियं धामोपैति ।
स यत् क्लिन्न प्राश्नीयादीन्द्रस्य त्वा
प्रियेण धाम्ना प्राश्नामीत्येनं प्राश्नीयात् ।
ततश्चैनमन्येन धाम्ना प्राश्नातीन्द्राया वृश्चते ।।६।।
यत् क्लिन्नो भवति पितृणामेव प्रियं धामोपैति ।
स यत् क्लिन्नं प्राश्नीयात्पितृणां त्वा
प्रियेण धाम्ना प्राश्नामीत्येनं प्राश्नीयात् ।
ततश्चैनमन्येन धाम्ना प्राश्नाति पितृभ्य आ वृश्चते ।।७।।
यत् क्षुद्रो भवत्यपामेव प्रियं धामोपैति ।
स यत् क्षुद्रं प्राश्नीयादपां त्वा
प्रियेण धाम्ना प्राश्नामीत्येनं प्राश्नीयात् ।
ततश्चैनमन्येन धाम्ना प्राश्नात्यद्भ्य आ वृश्चते ।।८।।

यच्छिथिरो भवति दिशामेव प्रियं धामोपैति ।
स यत् शिथिर प्राश्नियाद्दिशां त्वा
प्रियेण धाम्ना प्राश्नामीत्येनं प्राश्नीयात् ।
ततश्चैनमन्येन धाम्ना प्राश्नाति दिग्भ्य आ वृश्चते।।९।।
यद् गलन्ती भवति प्रजापतेरेव प्रियं धामोपैति ।
स यद् गलन्तीनं प्राश्निया प्रजापतेस्त्वा
प्रियेण धाम्ना प्राश्नामीत्येनं प्राश्नीयात् ।
ततश्चैनमन्येन धाम्ना प्राश्नाति प्रजापतय आ वृश्चते।।१०।।
यच्छुष्को भवत्युर्ध्वनभस एव प्रियं धामोपैति ।
स यच्छुष्कं प्राश्नीयादूर्ध्वनभसस्त्वा
प्रियेण धाम्ना प्राश्नामीत्येनं प्राश्नीयात् ।
ततश्चैनमन्येन धाम्ना प्राश्नात्यूर्ध्वनभस आ वृश्चते ।।११।।

## १६-१२५

यत् क्षीरमुपसिच्य प्रथमं प्राश्नाति किलास: प्रतिग्रहीतारं हन्ति ।।१।।
यत् सर्पिरुपसिच्य प्रथमं प्राश्नाति शर्व: प्रतिग्रहितारं हन्ति ।।२।।
यन् मधूपसिच्य प्रथमं प्राश्नाति महादेव: प्रतिग्रहितारं हन्ति ।।३।।
यन् मांसमुपसिच्य प्रथमं प्राश्नातीशान: प्रति ग्रहितारं हन्ति ।।४।।
यदुदकमुपसिच्य प्रथमं प्राश्नाति तत् समृद्धम् ।
ज्योग् जीवति सर्वमायुरेति न पुरा जरस: प्र मीयते य एवं वेद।।५।।

## १६-१२६

यत् प्राशिष्यन् पुरस्तादभिमृशति ।
प्राङ् प्रतिग्रहीतु: प्राण: प्र क्रामति
ततो एवोत्थाय प्र ब्रजति शिरस्तस्य रुदतीति
द्वादशीर्नाति जीवत्येनं चैनं प्राश्नन्तमुपद्रष्टा गृह्णामि ।।१।।

यत् प्राशिष्यन् दक्षिणत: प्रमृशति ।
दक्षिणा प्रतिग्रहीतु: प्राण: प्र क्रामति
ततो एवोत्थाय प्र ब्रजति शिरस्तस्य रुदतीति
द्वादशीर्नाति जीवत्येनं चैनं प्राश्नन्तमुपद्रष्टा गृह्णामि ।।२।।
यत् प्राशिष्यन् उत्तरत: प्रमृशति ।
उदङ् प्रतिग्रहीतु: प्राण: प्र क्रामति
ततो एवोत्थाय प्र ब्रजति शिरस्तस्य रुदतीति
द्वादशीर्नाति जीवत्येनं चैनं प्राश्नन्तमुपद्रष्टा गृह्णामि ।।३।।
यत् प्राशिष्यन् पश्चात् प्राञ्चमभिमृशति ।
शर्मणा चैवैनं तद्वर्मणा चाभिमृशति शर्म चैवास्मै
वर्म च भवति जयत्योदनमोदनलोको भवति य एवं वेद।।४।।

१६-१२७

इन्द्रस्यौज स्थेन्द्रस्य सह स्थेन्द्रस्य बलं
स्थेन्द्रस्य नृम्णं स्थेन्द्रस्य शुक्लं स्थेन्द्रस्य वीर्यं स्थ ।
जिष्णावे योगायेन्द्रयोगैर्वो युनज्मि जिष्णावे योगाय
विश्वानि मा रूपाण्युप तिष्ठन्तु युक्ता माप: स्थ ।।१।।
इन्द्रस्यौज स्थेन्द्रस्य सह स्थेन्द्रस्य बलं
स्थेन्द्रस्य नृम्ण स्थेन्द्रस्य शुक्लं स्थेन्द्रस्य वीर्यं स्थ ।
जिष्णावे योगाय क्षत्रयोगैर्वो युनज्मि जिष्णावे योगाय
विश्वानि मा रूपाण्युप तिष्ठन्तु युक्ता माप: स्थ ।।२।।
इन्द्रस्यौज स्थेन्द्रस्य सह स्थेन्द्रस्य बलं
स्थेन्द्रस्य नृम्ण स्थेन्द्रस्य शुक्लं स्थेन्द्रस्य वीर्यं स्थ ।
जिष्णावे योगाय ब्रह्मयोगैर्वो युनाज्मि जिष्णावे योगाय
विश्वानि मा रूपाण्युप तिष्ठन्तु युक्ता माप: स्थ ।।३।

इन्द्रस्यौज स्थेन्द्रस्य सह स्थेन्द्रस्य बलं
स्थेन्द्रस्य नृम्ण स्थेन्द्रस्य शुक्लं स्थेन्द्रस्य वीर्यं स्थ ।
जिष्णावे योगायान्नयोगैर्वो युनाज्मि जिष्णावे योगाय
विश्वानि मा रूपाण्युप तिष्ठन्तु युक्ता माप: स्थ ।।४।।
इन्द्रस्यौज स्थेन्द्रस्य सह स्थेन्द्रस्य बलं
स्थेन्द्रस्य नृम्ण, स्थेन्द्रस्य शुक्लं स्थेन्द्रस्य वीर्यं स्थ ।
जिष्णावे योगायअपांयोगैर्वो युनाज्मि जिष्णावे योगाय
विश्वानि मा रूपाण्युप तिष्ठन्तु युक्ता माप: स्थ ।।५।।

१६-१२८

अग्नेर्भाग स्थ ।अपां शुक्रं देवीरापो वर्चो अस्मासु धत्त ।
प्रजापतेर्वो धाम्ना ऽस्मै लोकाय सादये ।।१।।
इन्द्रस्य भाग स्थ ।अपां शुक्रं देवीरापो वर्चो अस्मासु धत्त ।
प्रजापतेर्वो धाम्ना ऽस्मै लोकाय सादये ।।२।।
सोमस्य भाग स्थ ।अपां शुक्रं देवीरापो वर्चो अस्मासु धत्त ।
प्रजापतेर्वो धाम्ना ऽस्मै लोकाय सादये ।।३।।
वरुणस्य भाग स्थ । अपां शुक्रं देवीरापो वर्चो अस्मासु धत्त ।
प्रजापतेर्वो धाम्ना ऽस्मै लोकाय सादये ।।४।।
यमस्य भाग स्थ ।अपां शुक्रं देवीरापो वर्चो अस्मासु धत्त ।
प्रजापतेर्वो धाम्ना ऽस्मै लोकाय सादये ।।५।।
पितृणां भाग स्थ ।अपां शुक्रं देवीरापो वर्चो अस्मासु धत्त ।
प्रजापतेर्वो धाम्ना ऽस्मै लोकाय सादये ।।६।।
बृहस्पतेर्भाग स्थ ।अपां शुक्रं देवीरापो वर्चो अस्मासु धत्त ।
प्रजापतेर्वो धाम्ना ऽस्मै लोकाय सादये ।।७।।
देवस्य सवितुर्भाग स्थ ।अपां शुक्रं देवीरापो वर्चो अस्मासु धत्त।
प्रजापतेर्वो धाम्ना ऽस्मै लोकाय सादये ।।८।।

१६-१२९

यो व आपोपां भागो अप्स्वन्तर्यजुष्यो देवयजन: ।
इदं तमति सृजामि तं माभ्यवनिक्षि ।
तेन तमभ्यतिसृजामि यो ऽस्मान् द्वेष्टि यं वयं द्विष्म: ।
तं वधेयं तं स्तृषीयानेन ब्रह्मणानेन कर्मणानया मेन्या ।।१।।
यो व आपोपामूर्मिरप्स्वन्तर्यजुष्यो देवयजन: ।
इदं तमति सृजामि तं माभ्यवनिक्षि ।
तेन तमभ्यतिसृजामि यो ऽस्मान् द्वेष्टि यं वयं द्विष्म: ।
तं वधेयं तं स्तृषीयानेन ब्रह्मणानेन कर्मणानया मेन्या।।२।।
यो व आपोपां वेगो अप्स्वन्तर्यजुष्यो देवयजन:
इदं तमति सृजामि तं माभ्यवनिक्षि ।
तेन तमभ्यति सृजामि यो ऽस्मान् द्वेष्टि यं वयं द्विष्म: ।
तं वधेयं तं स्तृषीयानेन ब्रह्मणानेन कर्मणानया मेन्या ।।३।।
यो व आपोपां विन्दुरप्स्वन्तर्यजुष्यो देवयजन:
इदं तमति सृजामि तं माभ्यवनिक्षि ।
तेन तमभ्यति सृजामि यो ऽस्मान् द्वेष्टि यं वयं द्विष्म: ।
तं वधेयं तं स्तृषीयानेन ब्रह्मणानेन कर्मणानया मेन्या ।।४।।
यो व आपोपां गर्भो अप्स्वन्तर्यजुष्यो देवयजन:
इदं तमति सृजामि तं माभ्यवनिक्षि ।
तेन तमभ्यति सृजामि यो ऽस्मान् द्वेष्टि यं वयं द्विष्म: ।
तं वधेयं तं स्तृषीयानेन ब्रह्मणानेन कर्मणानया मेन्या ।।५।।
यो व आपोपां वत्सो अप्स्वन्तर्यजुष्यो देवयजन:
इदं तमति सृजामि तं माभ्यवनिक्षि ।
तेन तमभ्यति सृजामि यो ऽस्मान् द्वेष्टि यं वयं द्विष्म: ।
तं वधेयं तं स्तृषीयानेन ब्रह्मणानेन कर्मणानया मेन्या ।।६।।

यो व आपोपां वृषभो अप्स्वन्तर्यजुष्यो देवयजन:
इदं तमति सृजामि तं माभ्यवनिक्षि ।
तेन तमभ्यति सृजामि यो ऽस्मान् द्वेष्टि यं वयं द्विष्म: ।
तं वधेयं तं स्तृषीयानेन ब्रह्मणानेन कर्मणानया मेन्या ।।७।।
यो व आपो अश्मा पृश्निर्दिव्योप्स्वन्तर्यजुष्यो देवयजन:
इदं तमति सृजामि तं माभ्यवनिक्षि ।
तेन तमभ्यति सृजामि यो ऽस्मान् द्वेष्टि यं वयं द्विष्म: ।
तं वधेयं तं स्तृषीयानेन ब्रह्मणानेन कर्मणानया मेन्या ।।८।
यो व आपोपां हिरण्यगर्भो अप्स्वन्तर्यजुष्या देवयजन:
इदं तमति सृजामि तं माभ्यवनिक्षि ।
तेन तमभ्यति सृजामि यो ऽस्मान् द्वेष्टि यं वयं द्विष्म: ।
तं वधेयं तं स्तृषीयानेन ब्रह्मणानेन कर्मणानया मेन्या ।।९।।
यो व आपोपामग्नयो अप्स्वन्तर्यजुष्या देवयजन:
इदं तमति सृजामि तां माभ्यवनिक्षि ।
तेन तमभ्यति सृजामि यो ऽस्मान् द्वेष्टि यं वयं द्विष्म: ।
तं वधेयं तं स्तृषीयानेन ब्रह्मणानेन कर्मणानया मेन्या।।१०।।

१६-१३०

यदर्वाचीनमेकहायनादनृतं किं चोदिम ।
आपो मा तस्मादेनसो दुरितात्पान्तु विश्वत: ।।१।।
अरिप्रा आपो अपरिप्रमस्मत् ।
प्रास्मोदेनो दुरितं सुप्रतीका: प्र दु:ष्वप्न्यं प्र मलं बहन्तु।।२।।
समुद्रं वो प्र सृजामि स्वां योनिमपीतन ।
अरिष्टा: सर्वहायसो मा च न: किं चनाममत् ।।३।।

१६-१३१

विष्णो: क्रमो ऽसि सपत्नहा पृथिवीसंशितो अग्नितेजा: ।
पृथिवीमनु वि क्रमेहं पृथिव्यास्तं निर्भजामो
यो ऽस्मान् द्वेष्टि यं वयं द्विष्म: ।
पूर्वजान् सपत्नान् ऽवैनान्वाधे अत्येनान्
क्रामान्वपाङ् अपनुत्त: सपत्न: ।।१।।
विष्णो: क्रमो ऽसि सपत्नहान्तरिक्षसंशितो वायुतेजा: ।
अन्तरिक्षमनु वि क्रमेहमन्तरिक्षात्तं निर्भजामो
यो ऽस्मान् द्वेष्टि यं वयं द्विष्म: ।
सहजान् सपत्नान् अवैनान्वाधे अत्येनान्
क्रामान्वपाङ् अपनुत्त: सपत्न: ।।२।।
विष्णो: क्रमो ऽसि सपत्नहाद्यौसंशित: सूर्यतेजा: ।
दिवमनु वि क्रमेहं दिवस्तं निर्भजामो
यो ऽस्मान् द्वेष्टि यं वयं द्विष्म: ।
अपरजान् सपत्नानवैनान्वाधे अत्येनान्
क्रामान्वपाङ् अपनुत्त: सपत्न: ।।३।।
विष्णो: क्रमो ऽसि सपत्नहादिक्संशितो वाततेजा: ।
दिशो अनु वि क्रमेहं दिग्भ्यस्तं निर्भजामो
यो ऽस्मान् द्वेष्टि यं वयं द्विष्म: ।।४।।
विष्णो: क्रमो ऽसि सपत्नहाशासंशितो मनस्तेजा: ।
आशा अनु वि क्रमेहमाशाभ्यस्तं निर्भजामो
यो ऽस्मान् द्वेष्टि यं वयं द्विष्म: ।।५।।
विष्णो: क्रमो ऽसि सपत्नहापसंशितो वरुणतेजा: ।
आपो अनु वि क्रमेहमद्भ्यस्तं निर्भजामो
यो ऽस्मान् द्वेष्टि यं वयं द्विष्म: ।।६।।

विष्णो: क्रमो ऽसि सपत्नह ऋक्संशितो सामतेजा: ।
ऋचो अनु वि क्रमेहमृग्भ्यस्तं निर्भजामो
यो ऽस्मान् द्वेष्टि यं वयं द्विष्म: ।।७।।
विष्णो: क्रमो ऽसि सपत्नहा यज्ञोसंशितो ब्रह्मतेजा: ।
यज्ञमनु वि क्रमेहं यज्ञात्तं निर्भजामो
यो ऽस्मान् द्वेष्टि यं वयं द्विष्म: ।।८।।
विष्णो: क्रमो ऽसि सपत्नहौषधीसंशित: सोमतेजा: ।
ओषधीरनु वि क्रमेहमोषधिभ्यस्तं निर्भजामो
यो ऽस्मान् द्वेष्टि यं वयं द्विष्म: ।।९।।
विष्णो: क्रमो ऽसि सपत्नहा कृषिसंशित: पुरुषतेजा: ।
कृषिमनु वि क्रमेहं कृष्यास्तं निर्भजामो
यो ऽस्मान् द्वेष्टि यं वयं द्विष्म: ।।१०।।
विष्णो: क्रमो ऽसि सपत्नहा प्राणसंशितोन्नतेजा: ।
दिशो अनु वि क्रमेहं प्राणात्तं निर्भजामो
यो ऽस्मान् द्वेष्टि यं वयं द्विष्म: ।।११।।

१६-१३२

अगमं स्वरगमं ज्योतिरभ्यष्ठां विश्वा: पृतना अराती: ।
यो ऽस्मान् द्वेष्टि यं वयं द्विष्मस्तस्येदं प्राणमायुर्नि
वेष्टयामीदमेनमधमं तमो गमयामसि ।।१।।
सूर्यस्यावृत मन्वावर्त्ते दक्षिणामन्वावृतम् ।
सा मे द्रविणं यच्छन्तु सा मे ब्राह्मणवर्चसम् ।। २ ।
दिशो ज्योतिष्मतीरभि पर्यावर्ते ।
ता मे द्रविणं यच्छन्तु ता मे ब्राह्मणवर्चसम् ।।३।।
सप्तऋषीनभि पर्यावर्त्ते ।
ता मे द्रविणं यच्छन्तु ता मे ब्राह्मणवर्चसम् ।४।।

ब्रह्माभि पर्यावर्त्ते ।
ता मे द्रविणं यच्छन्तु ता मे ब्राह्मणवर्चसम् ।।५।।
ब्राह्मणानभि पर्यावर्त्ते ।
ते मे द्रविणं यच्छन्तु ते मे ब्राह्मणवर्चसम् ।।६।।
यत्ते अन्नं भूवस्पत आक्षियेत पृथिवीमनु ।
तस्य नस्त्वं भूवस्पते संप्रयच्छ प्रजापते ।।७।।
यं वयं मृगयामहे तं वधै स्तृणवामहै ।
व्यात्ते परमेष्ठिनो ब्रह्मणापीपदाम तम् ।।८।।
वैश्वानरस्य दंष्ट्राभ्यां मृत्युस्तं समधादभि ।
इयं तं प्सात्वाहुति: समिद्देवी सहीयसी ।।९।।
राज्ञो वरुणस्य बन्धोसि
सो ऽमुमामुष्यायणममुष्या: पुत्रमन्ने प्राणे बधान ।
अपामस्मै वज्रं प्र हरामि चतुर्भृष्टिं शीर्षभिद्याय विद्वान् ।।१०।।
सो अस्यपर्वाणि प्र शृणातु सर्वा तन्मे देवाह्यनु जानन्तु विश्वे ।
यदग्ने तपसा तप उपप्रेक्षामहे वयम् ।
प्रिया: श्रुतस्य भूयाश्चायुष्मन्त: सुमेधस: ।। ११ ।

१६-१३३

विराड् वा इदमग्रे ऽजायत तस्या जाताया अबिभेत् सर्वम् ।
इयमेवेदं भविष्यति न वयमिति ।।१।।
सोदक्रामत् सा दक्षिणाग्नौ न्यक्रामत् ।
यज्ञर्त्तो वासतेयो भवति य एवं वेद ।।२।।
सोदक्रामत् सा गार्हपत्ये न्यक्रामत् ।
गृहमेधी गृहपतिर्भवति य एवं वेद ।।३।।
सोदक्रामत् साहवनीये न्यक्रामत् ।
यन्त्यस्य देवा देवहूतिं प्रियो देवानां भवति य एवं वेद ।।४।।

सोदक्रामत् सा सभायां न्यक्रामत् ।
यन्त्यस्य सभां सभ्यो भवति य एवं वेद ।।५।।
सोदक्रामत् सा समितौ न्यक्रामत् ।
यन्त्यस्य समितिं समित्यो भवति य एवं वेद ।।६।।
सोदक्रामत् सामन्त्रणे न्यक्रामत् ।
यन्त्वस्या मन्त्रणमामन्त्रणीयो भवति य एवं वेद ।।७।।
सोदक्रामत् सान्तरिक्षे चतुर्धा विक्रान्ता तिष्ठत्तां
देवमनुष्या अब्रुवन्नियं तद् वेद
यदुभय उपजीवेमेमामुप ह्वयामहा इति तामुपाह्वयन्त ।
ऊर्ज एहि स्वध एहि सुनृत एहीरावत्येहीति ।।८।।
तस्या अग्निर्वत्स आसीद् गायत्र्यविद्यान्यभ्रमूध: ।
तस्या वृहद्रथन्तरं च द्वौ स्तनावास्तां
यज्ञायज्ञियञ्च वामदेव्यं च द्वौ ।।९।।
ओषधीर्वै रथन्तरंदेवा अदुह्रन् व्यचो
वृहदपो वामदेव्यं यज्ञं यज्ञायज्ञियम् ।
ये ते वै विराज: कामधुगास्तना: ।
कामंकामं विराजं दुहे य एवं वेद ।।१०।।

१६-१३४

सा वनस्पतीनागच्छत्तां वनस्पतयोघ्नत सा संवत्सरे समभवत् ।
तस्मात्संवत्सरे वनस्पतीनां वृक्णमपि रोहति वृश्चतेस्याप्रियो
भ्रातृव्यो य एवं वेद ।।१।।
सा पितृनागच्छत्तां पितरोघ्नत सा मासे समभवत् ।
तस्मात् मासे पितृभ्यो ददति स्वधावान् पितृषु भवति
प्र पितृयाणं पन्थां जानाति य एवं वेद ।।२।।

सा देवानागच्छत्तां देवा अघ्नत सार्धमासे समभवत् ।
तस्मादर्धमासे देवेभ्यो जुहोति जुहोत्यग्निहोत्रं
प्र देवयानं पन्थां जानाति य एवं वेद ।।३।।
सा मनुष्यानागच्छत्तां मनुष्या अघ्नत सा सद्य: समभवत् ।
तस्मादुभयद्युर्मनुष्याणामुप हरन्त्युपास्य
गृहे हरन्ति य एवं वेद ।।४।।

१६-१३५

सोदक्रामत् सासुरानागच्छत्तामसुरा उपाह्वयन्त माय एहीति।। १।।
तस्या विरोचन: प्राह्लादिर्वत्स आसीदयस्पात्रं पात्रम् ।। २।।
तां द्विमूर्धात्व्योधोक् तां मायामधोक् ।। ३ ।।
तां मायामसुरा उप जीवन्त्युपजीवनीयो भवति य एवं वेद।।४।।
सोदक्रामत् सा पितृनागच्छत्तां पितर उपाह्वयन्त स्वध एहीति।।५।।
तस्य यमो वैवस्वतो वत्स आसीद्रजतपात्रं पात्रम् ।। ६ ।।
तामन्तको मार्त्यवोधोक् तां स्वधामधोक् ।। ७।।
तां स्वधां पितर उप जीवन्त्युपजीवनीयो भवति य एवं वेद ।।८।।
सोदक्रामत् सा मनुष्यान् आगच्छत्तां मनुष्या उपाह्वयन्तेरावत्येहीति।।९।।
तस्यामनुर्वैवस्वतो वत्स आसीत् पृथिवी पात्रम् ।।१०।।
तां पृथीवैन्योधोक् तां कृषिं च सस्यं चाधोक् ।।११।।
तां कृषिं च सस्यं च मनुष्या उप जीवन्त्युपजीवनीयो
भवति य एवं वेद ।।१२।।
सोदक्रामत् सा देवानागच्छत्तां देवा उपाह्वयन्तोर्ज एहीति।। १३ ।।
तस्या इन्द्रो वत्स आसीत् दारु पात्रं पात्रम् ।। १४ ।।
तां सविताधोक् तामूर्जामधोक् ।। १५ ।।
तामूर्जां देवा उप जीवन्त्युपजीवनीयो भवति य एवं वेद।।१६।।

सोदक्रामत् सा सप्तऋषीनागछत्तां
सप्तऋषय उपाह्वयन्त ब्रह्मण्वत्येहीति ।। १७ ।।
तस्या: सोमो वत्स आसीच्छन्द: पात्रम् ।। १८ ।।
तां बृहस्पतिराङ्गिरसोधोक् तां ब्रह्म च तपश्चाधोक् ।।१९।।
तद् ब्रह्म च तपश्च सप्तऋषय उप जीवन्ति ब्रह्मवर्च-
स्युपजीवनीयो भवति य एवं वेद ।।२०।।
सोदक्रामत् सा गन्धर्वाप्सरस आगच्छत्तां
गन्धर्वाप्सरस उपाह्वयन्त गृण्यगन्ध एहीति ।। २१ ।।
तस्याश्चित्ररथ: सौर्यवर्चसो वत्स आसीत् पुष्करपर्णं पात्रम् ।।२२।।
तां वसुरुचि: सौर्य वर्चसोधोक् तां पुण्य गन्धमधोक् ।।२३।।
तं पुण्यं गन्धं गन्धर्वाप्सरस उप जीवन्ति पुण्यगन्धिरुपजीवनीयो
भवति य एवं वेद ।।२४।।
सोदक्रामत् सा पुण्यजनानागच्छत्
तां पुण्यजना उपाह्वयन्ति तिरोध एहीति ।। २५।।
तस्या: कुबेरो वैश्रवणो वत्स आसीदाम पात्रं पात्रम् ।।२६।।
तां रजतनाभि: काबेरकोधक् तां तिरोधामधोक् ।। २७।।
तां तिरोधां पुण्यजना उप जीवन्ति तिरोधत्ते सर्वं पाप्मान-
मुपजीवनीयो भवति य एवं वेद ।।२८।।
सोदक्रामत् सा सर्पानागच्छत्तां सर्पा उपह्वयन्त विषवत्येहीति ।।२९।।
तस्यास्तक्षको वैशालेयो वत्स आसीदलाबुपात्रं पात्रम् ।।३०।।
तं धृतराष्ट्र ऐरावतोधोक् तां विषमधोक् ।।३१।।
तद्विषं सर्पा उप जीवन्त्युपजीवनीयो भवति य एवं वेद ।।३२।।
तस्माद्यस्या अलाबुनाभिषिञ्चेन्मनसा त्वा
प्रत्याहन्मित्येनं प्रत्याहन्यात् ।। ३३ ।।

यत् प्रत्याहन्ति विषं प्रत्याहन्ति
न च प्रत्याहन्ति विषमनुप्रषिच्यते ।। ३४ ।।
विषमस्या प्रियं भ्रातृव्यं हन्ति य एवं वेद ।। ३५।।

*(इति क्षुद्रकाण्डनामषोडशकाण्डे ऊनविंशो ऽनुवाक:)*

१६- १३६

अघायतामपि नह्या मुखानि सपत्नेषु वज्रमर्पयैतम् ।
इन्द्रेण दत्ता प्रथमाशतौदना भ्रातृव्यघ्नी यजमानाय गातु:।।१।।
वेदिष्टे चर्म भवतु बर्हिर्लोमानि यानि ते ।
एषा त्वा रशनाग्रहीद् ग्रावा त्वैषोधि नृत्यतु ।।२।।
बालास्ते प्रोक्षणी: सन्तु जिह्वा सं माष्ट्‌र्वघ्न्ये ।
शुद्धा त्वं यज्ञिया भूत्वा दिवं प्रेहि शतौदने ।।३।।
य: शतौदनां पचति काम प्रेण स कल्पते ।
प्रीता ह्यस्य ऋत्विज: सर्वे यन्ति यथा यथम् ।।४।।
ये ते देवी शमितार: पक्तारो ये च ते जना: ।
एते त्वा सर्वे गोप्स्यन्ति मैभ्यो भैषी: शतौदने ।।५।।
स स्वर्गमा रोहति यत्रादस्त्रिदिवं दिव: ।
हिरण्यज्योतिषं कृत्वा यो ददाति शतौदनाम् ।।६।।
स तांल्लोकान् समाप्नोति येषु देवा: समासते ।
अपूपनाभिं कृत्वा यो ददाति शतौदनाम् ।।७।।
वसवस्त्वा दक्षिणत उत्तरान् मरुतस्त्वा ।
आदित्या: पश्चाद् गोप्स्यन्ति साग्निष्टोममति द्रव ।।८।।
गन्धर्वाप्सरसो देवा रुद्राङ्गिरस्त्वा ।
एते त्वा सर्वे गोप्स्यन्ति सातिरात्रमति द्रव ।।९।।
अन्तरिक्षं दिवं भूमिमादित्यान् मरुतो दिश: ।
लोकान् सर्वानाप्नोति यो ददाति शतौदनाम् ।।१०।।

१६-१३७

घृतं प्रोक्षन्ती सुभगा देवान् देवी गमिष्यति ।
पक्तारमघ्न्ये मा हिंसीर्दिवं प्रेहि शतौदने ।।१।।
ये पितरो दिविषदो ऽन्तरिक्षसदश्च ये ये चेमे भूम्यामधि ।
तेभ्यस्त्वं धुक्ष्व सर्वदा क्षीरं सर्पीरथो मधु ।।२।।
यत्ते शिरो ये च शृङ्गे यौ कर्णौ यै च ते अक्षौ ।
आमिक्षां दुह्रतां दात्रे क्षीरं सर्पीरथो मधु ।।३।।
यत्ते मुखं या जिह्वा ये दन्ता ये च ते हनू ।
आमिक्षां दुह्रतां दात्रे क्षीरं सर्पीरथो मधु ।।४।।
यत्ते क्लोमा यद्धृदयं पुरीतत् सहकण्ठिका ।
आमिक्षां दुह्रतां दात्रे क्षीरं सर्पीरथो मधु ।।५।।
यत्ते यकृद् ये मतस्ने यान्यान्त्राणि याश्च ते गुदाः ।
आमिक्षां दुह्रतां दात्रे क्षीरं सर्पीरथो मधु ।।६।।
यस्ते प्लाशिर्यो वनिष्ठुर्यौ कुक्षी यच्च उदरम् ।
आमिक्षां दुह्रतां दात्रे क्षीरं सर्पीरथो मधु ।।७।।
यत्ते मज्जायान्यस्थीनि यन्मांसं यच्च लोहितम् ।
आमिक्षां दुह्रतां दात्रे क्षीरं सर्पीरथो मधु ।।८।।
यौ ते बाहू यौ ते अंसौ ये दोषणी या च ते ककुत् ।
आमिक्षां दुह्रतां दात्रे क्षीरं सर्पीरथो मधु ।।९।।
यत् ते स्कन्धा या ग्रीवा याः पृष्ठीर्याश्च पर्शवः ।
आमिक्षां दुह्रतां दात्रे क्षीरं सर्पीरथो मधु ।।१०।।

१६-१३८

यौ त उरू अष्ठीवन्तौ ये श्रोणी या च ते भसत् ।
आमिक्षां दुह्रतां दात्रे क्षीरं सर्पीरथो मधु ।।१।।

यत्ते पुच्छं ये ते बाला यदूधो ये च ते स्तनाः ।
आमिक्षां दुह्रतां दात्रे क्षीरं सर्पीरथो मधु ।।२।।
यास्ते जङ्घा याः कुष्ठिका हि ऋच्छरा ये च ते शफाः ।
आमिक्षां दुह्रतां दात्रे क्षीरं सर्पीरथो मधु ।।३।।
यत्ते चर्म शतौदने यानि लोमान्यघ्न्ये ।
आमिक्षां दुह्रतां दात्रे क्षीरं सर्पीरथो मधु ।।४।।
अयन्ते स्तन आमिक्षामयं सर्पीरथो मधु ।
अयन्ते सर्वकान् दुहां देवि शतौदने ।।५।।
क्रोडौ ते स्तां पुरोडाशावाज्येनाभिघारितौ ।
तौ पक्षौ देवि कृत्वा सा दातारं दिवं वह ।।६।।
उलूखले मुषले ये च चर्मणि यो वा शूर्पे तण्डुलाः कणाः।
यद्वा वातो मातरिश्वा ममाथाग्निष्टद्धोता सुहुतं कृणोतु ।।७।।
अपो देवीर्मधुमतीर्घृतश्चुतो ब्रह्मणां हस्तेषु प्रपृथक् सादयामि ।
यत्काम इदमभिषिञ्चामि वोहं तन्नो अस्तु
वयं स्याम पतयो रयीणाम् ।।८।।

१६-१३९

प्रजापतिश्च परमेष्ठी च शृङ्गे इन्द्रः शिरो अग्निर्ललाटं
यमः कृकाटं सोमोराजा मस्तिस्कः ।
सत्यं चक्षुर्ऋतं श्रोत्रे प्राणापानौ नासिके
द्यौरुत्तरहनुः पृथिव्यधर ।।१।।
अग्निरास्यं विद्युज्जिह्वा मरुतो दन्ताः पवमानः प्राणः ।
विश्वं वायुः कण्ठः स्वर्गोलोकः कृष्णद्रं विधरणी निवेष्यः।।२।।

रेवतीर्ग्रीवा: कृत्तिका स्कन्धा घर्मो वह:
श्येन: क्रोडो अन्तरिक्षं पाजस्यम् ।
मित्रश्च वरुणश्चांसौ त्वष्ठा चार्यमा च दोषणी ।।३।।
महादेवो बाहू बृहस्पति: कुकुद् बृहती: कीकसा: ।
देवानां पत्नी: पृष्टय उपसद: पर्शव: ।।४।।
इन्द्राणी भसद् वात: पुच्छं पवमानो बाला: ।
ब्रह्म च क्षत्रं च श्रोणी बलमुरू
धाता च सविता चाष्ठीवन्तौ ।।५।।
जङ्घा गन्धर्वाप्सरस: कुष्ठिका अदिति: शफा: ।
चेतो हृदयं यकृन्मेधा हरिमापितं व्रतं पुरीतत् ।।६।।
क्षुत् कृक्षिरिरा वनिष्ठु: पर्वता प्लाशिर्देवजना
गुदा मनुष्या आन्त्राण्यत्रा उदरमितरजना ऊबध्यं
रक्षांसि लोहितम् ।।७।।
क्रोधो वृक्कौ मन्युराण्डौ प्रजा शेप: ।
समुद्रो वस्तिर्नदी सूत्री स्तनयित्नुरूधो वर्षस्य पतय स्तना:।।८।।
विश्वव्यचाश्चर्मौषधयो लोमानि नक्षत्राणि रूपम् ।
अभ्रं पीबो मज्जा निधनम् ।
निधनं भूत्या: प्रजाया: पशूनां भवति य एवं वेद ।।९।।
इन्द्र: प्राङ् तिष्ठन् दक्षिणा तिष्ठन् यम:
प्रत्यङ् तिष्ठन् धातोदङ् तिष्ठन् सविता ।
तृणानि प्राप्त: सोमो राजा आवृत्त आनन्द: ।।१०।।
इक्षमाणो मित्रो युज्यमानो वैश्वदेवो युक्त:
प्रजापतिर्विमुक्त: सर्वम् ।
एतद्वै गोरूपम् ।
उपैनं रूपवन्त: पशवस्तिष्ठन्ति य एवं वेद ।।११।।

*(इति क्षुद्रकाण्डनामषोडशकाण्डे विंशति अनुवाक:)*

१६-१४०

श्रमेण तपसा सृष्टा ब्राह्मणा वित्तर्ते श्रिता ।।१।।

सत्येनावृता श्रिया प्रावृता यशसा परिवृता

स्वधया परिहिता श्रद्धया पर्यूढा दीक्षया

गुप्ता यज्ञे प्रतिष्ठिता लोको निधनम् ।।२।।

छन्दांसि रूपमङ्गिरस: सन्तापा

ब्रह्म पदवायं ब्राह्मणो ऽधिपति: ।।३।।

तामाददानस्य ब्राह्मगवीं जिनतो ब्राह्मणं क्षत्रियस्य ।।४।।

अप क्रामति सूनृता वीर्यं पुण्या लक्ष्मी: ।।५।।

१६-१४१

ओजश्च तेजश्च सहश्च बलं च ।

वाक् चेन्द्रियं च श्रीश्च धर्मश्च ।।१।।

ब्रह्म च क्षत्रं च राष्ट्रं च विशश्च ।

त्विषिश्च यशश्च वर्चश्च द्रविणं च ।।२।।

आयुश्च रूपं च नाम च कीर्त्तिश्च ।

पयश्च रसश्चान्नञ्चान्नाद्यञ्च ।।३।।

प्राणश्चापानश्च चक्षुश्च श्रोत्रं च ।

ऋतं च सत्यं चेष्टं च पूर्तं च प्रजा च पशवश्च ।।४।।

तानि सर्वाण्यप क्रामन्ति क्षत्रियस्य ब्रह्मगवीमाददानस्य ।।९।।

१६-१४२

सैषा भीमा ब्रह्मगव्यघविषा कृत्या कूल्बजमावृता।

सर्वाण्यस्यां क्रूराणि सर्वे च मृत्यव:

सर्वाण्यस्यां घोराणि सर्वे पुरुषवधा: ।।१।।

सा ब्रह्मज्यं ब्रह्मगव्यादीयमाना मृत्यो: पड्बिष आ द्यति ।।२।।

मेनि: शतवधा हि सा ब्रह्मज्यस्य क्षितिर्हि सा ।
तस्माद्वै ब्राह्मणानां गौर्दुराधर्षा विजानता ।।३।।
वैश्वानर उद्वीता महादेवोपेक्षमाणा वज्रो
धावन्ति हेति: सफानुत्खिदन्ती ।।४।।
क्षुरपविरीक्षमाणा मृत्युर्हिङ्कृण्वन्ती ।
वाश्यमानाविस्फूर्जन्ति ब्रह्मगवी ब्रह्मज्यम् ।।५।।

१६-१४३

उग्रो देव: पुच्छं पर्यस्यन्ती सर्वज्यानि कर्णौ वरीवर्जयन्ती
राजयक्ष्मो मेहन्ती मेनिर्दुह्यमाना शीर्षक्तिर्दुग्धा ।
सेदीरुपतिष्ठन्ती मिथोयोध: परामृष्टा
शरव्या मुखेपिनह्यमान ।।१।।
ऋतिर्हन्यमाना गृध्रा हिताघविषा निपतन्ती तमो निपतिता ।
अनुगच्छन्ती प्राणानुप दासयति ब्रह्मगवी ब्रह्मज्यस्य ।।२।।

१६-१४४

वैरं विकृत्यमाना पौत्राद्यं विभाज्यमाना
देवहेतिर्ह्रियमाणामतिर्हिता निर्ऋतिर्निहिता ।
पाप्माधिधीयमाना पारुष्यमवधीयमाना प्रयस्ता विहिता ।।१।।
घर्म: परिधीयमाना वैश्वानर: पर्याहिता
विषं प्रयस्यन्ती तक्मा प्रयस्ता ।
मूलबर्हणी पर्याक्रीयमाणा क्षिति: पर्याकृता ।।२।।
अघं पच्यमाना पराभूति: पक्वा ।
शुगुद्ध्रियमाणाशीविष उद्धृता असंज्ञा गन्धेन ।।३।।
अभूतिरुपह्रियमाणा पराभूतिरुपहृता ।
शर्व: क्रुद्ध: पिश्यमाणा शिमिदा पिंशिता ।।४।।

अवर्तिरश्यमाना निर्ऋतिरशिता ।
अशिता लोकाच्छिनत्ति ब्रह्मगवी ब्रह्मज्यमस्माच्चामुष्माच्च ।।५।।

१६-१४५

तस्या आहननं कृत्या मेनिराशसनं वलग उवध्यमस्वगता परिह्लुता।
अग्नि: क्रव्याद्भूत्वा ब्रह्मगवी ब्रह्मज्यं प्रविश्यात्ति ।।१।।
सर्वास्याङ्गामूलानि वृश्चति
छिनत्त्यस्य पितृबन्धून् परा भावयति मातृबन्धून् ।
विवाहां ज्ञातीन् सर्वानपि क्षापयति ब्रह्मगवी
क्षत्रियस्यापुनर्दीयमाना ।।२।।
अवास्तुमेनमस्वगमग्रजसं करोत्यपरापरणो भवति क्षीयते ।
य एवं विदुषो ब्राह्मणस्य क्षत्रियो गामादत्ते ।।३।।
क्षिप्रं वै तस्याहनने गृध्रा: कुर्वत ऐलबम् ।
क्षिप्रं वै तस्या दहनं परि नृत्यन्ति केशिनीराघ्नाना:
पाणिनोरसि कुर्वाणा: पापमैलबम् ।।४।।
क्षिप्रं वै तस्य वास्तुषु गङ्गणं कुर्वते वृका: ।
क्षिप्रं वै तस्य पृच्छन्ति यत्तदासीदिदं नु तात् ।।५।।

१६-१४६

छिन्ध्याछिन्ध्य प्र छिन्ध्यपि क्षापय क्षापय ।
आददानमाङ्गिरसि ब्रह्मज्यमुप दासय ।।१।।
वैश्वदेवी ह्युच्यसे कृत्या कूल्बजमावृता ।
ओषन्ती समोषन्ती ब्रह्मणो वज्र: ।।२।।
क्षुरपविर्मृत्युर्भूत्वा वि धाव त्वम् ।
आ दत्से जिनतां वर्च इष्टं च पूर्तं चाशिष: ।।३।।

आदाय जीतं जीताय लोके ऽमुष्मिन् प्र यच्छसि ।
अघ्न्ये पदवीर्भव ब्राह्मणस्याभिशस्त्या ।।४।।
मेनि: शरव्या भवाघादघविषा भव ।
अघ्न्ये प्र शिरो जहि ब्रह्मज्यस्य कृतागस: ।।५।।
त्वया प्रवृक्णं ऋदितमग्निर्दहतु दुष्कृतं । देवपीयुमराधसम् ।
वृश्च प्र वृश्च छिन्धि प्र छिन्धि -
कृन्त प्र कृन्त पिंश प्र पिंशौषसमोषो दह प्र दह ।
ब्रह्मज्यं देव्यघ्न्य आ मूलादनुसंदह ।। ६ ।

१६-१४७

यत्ते शीर्षणि दौर्भाग्यं शक्तं केशेषु निहितं ललाटे ।
अयं तद् विश्वभेषजो ऽपामार्गो ऽप लुम्पतु ।।१।।
यत्ते भ्रुवोर्दौर्भाग्यं कर्णयोरक्ष्णोर्हि तम् ।
अयं तद् विश्वभेषजो ऽपामार्गो ऽप लुम्पतु ।।२।।
यत्ते मुखे नासिकायां दौर्भाग्यं वाच्योष्ठयो: ।
अयं तद् विश्वभेषजो ऽपामार्गो ऽप लुम्पतु ।।३।।
यत्ते दत्सु दौर्भाग्यं जिह्वायां चुबुके हि तम् ।
अयं तद् विश्वभेषजो ऽपामार्गो ऽप लुम्पतु ।।४।।
यत् ते मनसि संकल्पे दौर्भाग्यं प्राण आ हि तम् ।
अयं तद् विश्वभेषजो ऽपामार्गो ऽप लुम्पतु ।।५।।
यत्ते हन्वोर्दौर्भाग्यं कण्ठे क्लोमसु विष्ठितम् ।
अयं तद् विश्वभेषजो ऽपामार्गो ऽप लुम्पतु ।।६।।
यत्ते स्कन्धेषु ग्रीवासु दौर्भाग्यं कीकसास्वनूक्ये ।
अयं तद् विश्वभेषजो ऽपामार्गो ऽप लुम्पतु ।।७।।
यत्ते दोष्णो दौर्भाग्यं अंसयोरुप पक्षयो: ।
अयं तद् विश्वभेषजो ऽपामार्गो ऽप लुम्पतु ।।८।।

यत्ते बाह्वोर्दौर्भाग्यमरत्न्यो: कल्मुषीरनु ।
अयं तद् विश्वभेषजो ऽपामार्गो ऽप लुम्पतु ।।९।।
यत्ते हस्तयोर्दौर्भाग्यं पाण्योरङ्गुलीरनु ।
अयं तद् विश्वभेषजो ऽपामार्गो ऽप लुम्पतु ।।१०।।

१६-१४८

यत्ते पृष्ठेषु दौर्भाग्यं जघने स्फिजोर्हितम् ।
अयं तद् विश्वभेषजो ऽपामार्गो ऽप लुम्पतु ।।१।।
यत्ते उरसि दौर्भाग्यं पार्श्वयो: स्तनयोर्हितम् ।
अयं तद् विश्वभेषजो ऽपामार्गो ऽप लुम्पतु ।।२।।
यत्ते हृदये दौर्भाग्यं नाभ्यां वक्षणा अनु ।
अयं तद् विश्वभेषजो ऽपामार्गो ऽप लुम्पतु ।।३।।
यत्ते पिह्न दौर्भाग्यं यद् वा यकनि वृक्कयो: ।
अयं तद् विश्वभेषजो ऽपामार्गो ऽप लुम्पतु ।।४।।
यत्ते गुदास्वन्त्रेषु दौर्भाग्यमुदरे हितम् ।
अयं तद् विश्वभेषजो ऽपामार्गो ऽप लुम्पतु ।।५।।
यत्ते वस्तौ दौर्भाग्यं वनिष्ठौ प्लाशावाहितम् ।
अयं तद् विश्वभेषजो ऽपामार्गो ऽप लुम्पतु ।।६।।
यत्ते भसदि दौर्भाग्यं यद् वायाशुषु मुष्कयो: ।
अयं तद् विश्वभेषजो ऽपामार्गो ऽप लुम्पतु ।।७।।
यत्ते श्रोण्योर्दौर्भाग्यमवचालूखयोर्हितम् ।
अयं तद् विश्वभेषजो ऽपामार्गो ऽप लुम्पतु ।।८।।
यत्ते उसति दौर्भाग्यमूर्वोर्जानुनोर्हितम् ।
अयं तद् विश्वभेषजो ऽपामार्गो ऽप लुम्पतु ।।९।।
यत्ते जंघयोर्दौर्भाग्यं स्थूरयो पाष्ण्योर्हितम् ।
अयं तद् विश्वभेषजो ऽपामार्गो ऽप लुम्पतु ।।१०।।

१६-१४९

यत्ते गुल्फयोर्दौर्भाग्यं पादयोरङ्गुलीरनु ।
अयं तद् विश्वभेषजोऽपामार्गोऽप लुम्पतु ।।१।।
यत्ते परुषु दौर्भाग्यं मांसे अस्थिषु मज्जसु ।
अयं तद् विश्वभेषजोऽपामार्गोऽप लुम्पतु ।।२।।
यत्ते किं च दौर्भाग्यमङ्गेष्वङ्गेषु प्रतिष्ठितम् ।
यद् वा लोमसु विष्ठितम् ।
अयं तद् विश्वभेषजोऽपामार्गोऽप लुम्पतु ।।३।।
यत्ते अक्षेषु दौर्भाग्यं प्राहायामधिदेवने ।
अयं तद् विश्वभेषजोऽपामार्गोऽप लुम्पतु ।।४।।
यत्ते पशुषु दौर्भाग्यं कृष्यामशनेर्हितम् ।
अयं तद् विश्वभेषजोऽपामार्गोऽप लुम्पतु ।।५।।
यातेलक्ष्मीर्भ्रूणहत्याथो या ते अपुत्रता ।
अयं तद् विश्वभेषजोऽपामार्गोऽप लुम्पतु ।।६।।
यत्ते ऽदृष्टं पितृषद्यमथो या ते अपत्यता ।
अयं तद् विश्वभेषजोऽपामार्गोऽप लुम्पतु ।।७।।
या ते का च पापी लक्ष्मीरथो या ते अपशुता ।
अयं तद् विश्वभेषजोऽपामार्गोऽप लुम्पतु ।।७।।
कण्ठदघ्ना महिमार्त्तिमृणां देवेभ्य: किल्विषं यद् बभूव ।
इमास्तदाप: प्र वहन्तु रिप्रं पुनातु मा शतधारं पवित्रम् ।।८।।
स्नाहि रिप्रं शमलं च सर्वं कृष्णे चेले सादयित्वा पापम् ।
हित्वावर्तिं निर्ऋतिं मृत्युपाशान् सूर्यज्योतिरभ्येह्यग्निम् ।।९।।
उद्यन्तो अस्मान्महत: समुद्रान् मुच्यमानो अंहस: पाप्मनश्च ।
पुनर्मन: पुनरायुर्नआगन् मा दभन् पणयो यातुधाना:।।१०।।

अवरिप्रमनिक्ष्ममह्यशस्तिमध्यात्मान: ।
वर्च आ धीयतां मयि तेज आ धीयतां मयि ।
प्राणापानौ मा मा हासिष्टं सर्वमायुरशीय ।।११।

१६-१५०

ब्रह्म यज्ञानं प्रथमं पुरस्ताद् वि षीमत: सुरुचो वेन आव: ।
स बुध्न्या उपमा अस्य विष्ठा: सतश्च योनिमसतश्च वि व:।।१।।
ब्रह्मभ्राजदुदगादन्तरिक्षं दिवं च ब्रह्मावाधूष्टामृतेन मृत्युम् ।
ब्रह्मोपद्रष्टा सुकृतस्य साक्षाद् ब्रह्मास्मदपहन्तु शमलं तमश्च ।।२।।
प्रतीचीरायतास्थिता वितता: पश्यामहै ।
समुद्रे अप्सुयाहिता: सुराणामयस्मयै ।।३।।
हरि: सुपर्णो दिवोमारुहोर्चिषा ये त्वा दिप्सन्ति दिवमुत्पतन्तम् ।
अव तां जहि हरसा जातवेदोबिभ्यदुग्रोर्चिषा दिवमा रोह सूर्य।।४।।
अयोजाला असुरा मायिनोयस्मयै: पाशैरङ्किनो ये चरन्ति ।
तां स्ते रन्धयामि हरसा जातवेद:
सहस्रभृष्टि: सपत्नान् प्रमृणन् याहि वज्र: ।।५।।
देवानामधिपा एति घर्म ऋतेन भ्राजन्नमृतं वि चष्टे ।
हिरण्यवर्णो नभसो देव सूर्य
घर्मो भ्राजं दिवो अन्तां पर्येषु विद्युता ।।६।।
वि द्योतन्ते विद्युतो अग्निजिह्वा
हिरण्यवर्णा अमृता अप्स्वन्त: समुद्रे ।
रुद्रस्य क्षिपण: स्तनयित्नोर्विद्युत्तस्य
वैश्वानरस्य हेति: परि णो वृणोक्तु ।।७।।
विद्युता भ्राजन् ह्रदं यात्यग्निर्व्याघ्रा अप्सुषदो यत्र भीमा: ।
विष्णो: क्रमै: स्तनयन्नेति रुद्रो नुदञ्छत्रून् विमृधो
वाधमानोसपत्ना: प्रदिशो मे कृणोतु ।।८।।

अपो वसान: समैत्यन्तरिक्षं दिवं च
समिद्धो अग्निर्दिव्योस्तपोधात् ।
वैश्वानर: शमय: शीतरूरे अपां सुपर्णो दिव एति पृष्ठे ।।९।।
वैश्वानर: समुद्रं पर्येति शुक्रो घर्मो भ्राजन् तेजसा रोचमान: ।
नुदञ्छत्रून् प्रदहन् मे सपत्नानादित्यो द्यामध्यरुक्षद् विपश्चित्।।१०।।

१६-१५१

वैश्वानर: संतप्यत्यन्तरिक्षं दिवं च समिद्धो अग्निर्दिव्योस्तपोधात् ।
शिक्षन्त्यस्मा अभिषुण्वन्ति सोममृतेन भ्राजन्नमृतं वस्ते अत्की।।१।।
ररह्येते नीलयते शीतरूरेतन्वावस्यभीमे ।
रूपाण्येति बहुधा वसानो ग्रहान् कृण्वानस्तन्व: पराची: ।।२।।
पञ्चारे चक्रे परिवर्तमाने समारोहन्ति भुवनानि विश्वा ।
तस्यनाक्षस्तप्यते भूरिभार: सनादेव न छिद्यते सनाभि: ।।३।।
पञ्चाभिस्तप्तस्तपत्येष एतत्सहस्र धामानि मनुतिष्ठन्त्येनम् ।
सप्त त्वा सूर्य हरितो वहन्ति ब्रह्मणादित्य स्त्रिवृता मुखेन ।।४।।
वि द्योतन्ते द्योतत आ च द्यतते अप्स्वन्तरमृतो घर्म उद्यन् ।
हन्ता वृत्रस्य हरितामनीकमनाधृष्टास्तन्व: सूर्यस्य ।।५।।
घर्म: पश्चादुतघर्म: पुरस्तादयोदंष्ट्राय द्विषतोपि दध्म: ।
वैश्वानर: शीतरूरे वसान: सपत्नान् मे द्विषतो हन्तु सर्वान् ।।६।।
ऋतूनृतुभि: श्रपयति ब्रह्मणैकवीरो घर्म: शुचान: समिधा समिद्ध:।
ब्रह्म त्वा तपति ब्रह्मणा तेजसा च ।।७।।
ब्रह्म यज्ञानं प्रथमं समाददे तज्जायमानं न विभिते न विद्यते ।
तदङ्गमानं पितरं व्याहन्ति तस्य नाड्यातता विततास्तता उता: ।। ८।।
असयज्जान: स्वराजभारो य इं जजान स्वजासु भर्त्ता ।
प्रजापति: प्रजाभि: सम्विदान: स्त्रिणि ज्योतीषिं दधते नपाक:।।९।।

प्रजापतिश्चरति गर्भे अन्त: स्वजायमानो बहुधा प्र जायते ।
तस्य पदमभि पश्यन्ति वेधसस्तस्मिन्नार्पिता भुवनानिविश्वा ।।१०।।

१६-१५२

यस्मिन्देवा: पितरो मनुष्या अरानाभाविव श्रिता: ।
अपां त्वा पुष्पं पृच्छामि यत्रतन्माययाहितम् ।।१।।
यत्रापां पुष्पं निहितं मायया निहितं गुहा ।
यो वै तद्विद्यात् प्रत्यक्षं स विद्याद् ब्राह्मणं महत् ।।२।।
मणिस्त्रिसूत्रो निहित: स्वर्यदूर्ध्वस्त्रियङ् विश एति प्रजानन् ।
स पुमान् पुंसो जनयन्नृतेन सर्वानन्तान् गच्छति सद्य एव ।।३।।
सर्वां रात्रिं सहोषत्वादित्यो जातवेदसा ।
अग्नेरधि दिवमारोहन्नायुषा समनक्तु मां वर्चसा सं सृजतुमाम् ।।४।।
घर्म: साहस्र: समिधा समिद्धोसपत्ना: प्रदिशो मे कृणोतु ।
सपत्नान् सर्वान् मे सूर्यो हन्तु वैश्वानरो हरि: ।।५।।
घर्मस्तप्त प्र दहतु भ्रातृव्यान् द्विषतो वृका ।
आदत्ताञ्छत्रूनादित्य उद्यन्सूर्य: पृतन्यत: ।।६।।
वैश्वानर: प्र दहतु भ्रातृव्यान् द्विषतो वृषा ।
उद्यन् मे शुक्र आदित्यो विमृधो हन्तु सूर्य: ।।७।।
शुक्रं सुवर्णं हरिं ब्रह्मभ्राजदजस्त्रं ज्योतिर्दिवमाततान ।
हरि: सुवर्ण: प्रमथिष्णुराशु: सपत्नान् हन्तु महता वधेन ।।८।।
हरि: सुवर्ण: सृजत्वभयंकरो हिरण्यवर्णो दुरितादाप आशु: ।
सपत्नान् सर्वान् मे सूर्य आदित्यं हन्तु रश्मिभि: ।।९।।
महान्तमर्थं परिसद्य एत्यहोरात्रे विततश्च्छुक्र उद्यन् ।
सपत्नान् सर्वान् मे सूर्यो हन्तु वैश्वानर दहन्।।१०।।

उद्यन्नद्य चित्रमहः सपत्नान् मेव जहि ।
दिवैनान् रश्मिभिर्जहि रात्र्यैणांस्तमसा वधीस्ते यन्त्वधमं तमः ।।११।।
तेजस्तपांसि मुखतो बिभर्ष्यानन्दं भूतं महसिः प्रतिष्ठाम् ।
पर्यूहमाणः श्रियमेषि सर्वतोमोघं सत्यं यश उद्यतं ते ।।१२।।

१६-१५३

ब्रह्मचारिष्णाश्चरति रोदसी उभे यस्मिन् देवाः संमनसो भवन्ति ।
स दाधार पृथिवींद्यामुतामुं स आचार्यं तपसा पिपर्तु ।।१।।
आचार्य उपनयमानो ब्रह्मचारिणं कृणुते गर्भमन्तः ।
तं रात्रीस्तिस्र उदरे बिभर्ति तं जातं द्रष्टुमभिसंयन्ति देवाः ।।२।।
ब्रह्मचारिणं पितरो मनुष्या देवजना गन्धर्वा एनमनुयन्ति सर्वे ।
त्रयस्त्रींशत् त्रिशताः षट्सहस्राः सर्वाङ् स देवांस्तपसा पिपर्त्ति ।।३।।
इयं समित् पृथिवी द्यौर्द्वितीयोतान्तरिक्षं समिधा पृणाति ।
ब्रह्मचारी समिधा मेखलावी श्रमेण लोकांस्तपसा पिपर्त्ति ।।४।।
पूर्वो जातो ब्रह्मणो ब्रह्मचारी घर्मं वसानस्तपसोदतिष्ठत् ।
तस्माज्जातं ब्राह्मणं ब्रह्म ज्येष्ठं देवाश्च सर्वे अमृतेन साकम्।।५।।
ब्रह्मचारी समिधा समिद्धः कार्ष्णं वसानो दीक्षितो दीर्घश्मश्रुः ।
स सद्य एति पूर्वादपरं समुद्रं लोकान् संगृभ्य मुहुराचरिक्रत्।।६।।
ब्रह्मचारी जनयन् ब्रह्मापो लोकान् प्रजापतिं परमेष्ठिनं विराजम् ।
गर्भो भूत्वामृतस्य योनाविन्द्रो भूत्वा असुरांस्ततर्हि ।।७।।
इमां भूमिं पृथिवीं ब्रह्मचारी भिक्षामा जभार प्रथमो दिवं च ।
ते ब्रह्म कृत्वा समिधावुपास्ते तयोरार्पिता भुवनानि विश्वा ।।८।।
आचार्यस्ततक्ष नभसी उभे उर्वी गम्भीरे पृथिवीं दिवं च ।
ते ब्रह्मचारी तपसाभि रक्षति तयोर्देवाः सदमादं मदन्ति ।।९।।

अर्वागन्य: परो अन्यो गुहा निधी निहितौ ब्राह्मणस्य ।
तौ ब्रह्मचारी तपसाभि रक्षति तत् केवलं कृणुते ब्रह्म विद्वान् ।।१०।।

१६-१५४

अर्वागन्यो दिवस्पृष्ठादितो ऽन्य: पृथिव्याग्नी समेतो नभसी अन्तरेमे ।
तयो: श्रयन्ते रश्मयोधि दृढास्ताना तिष्ठति तपसा ब्रह्मचारी।।१।।
अभिक्रन्दन्नरुण: शितिङ्गो बृहच्छेपोनु भूमौ जभार ।
ब्रह्मचारी सिञ्चति सानौ रेत: पृथिव्यां तेन जीवन्ति प्रदिशश्चतस्र:।।२।।
पर्जन्यो मृत्युर्वरुण: सोम ओषधय: पय: ।
जीमूता आसन् सत्वानस्तैरिदं स्वराभरन् ।।३।।
अग्नौ सूर्ये चन्द्रमसि मातरिश्वन् ब्रह्मचार्यप्सु समिधमा दधाति ।
तेषामर्चींषि पृथगभ्रे चरन्ति तेषामाज्यं पुरुषो वर्षमश्व: ।।४।।
अमा घृतं कृणुते केवलमाचार्यो भूत्वा वरुणो यद्यदैच्छत् प्रजापतौ।
तद् ब्रह्मचारी प्रायछत् स्वान् मित्रो अध्यात्मन: ।।५।।
आचार्यो ब्रह्मचारी ब्रह्मचारी प्रजापति: ।
प्रजापतिर्वि राजति विराडिन्द्रोभवद् वशी ।।६।।
ब्रह्मचर्येण तपसा राजा राष्ट्रं वि रक्षति ।
आचार्यो ब्रह्मचर्येण ब्रह्मचारिणमिच्छते ।।७।।
ब्रह्मचर्येण कन्या युवानं विन्दते पतिम् ।
अनड्वान् ब्रह्मचर्येणाश्वो घासं जिगीर्षति ।।८।।
ब्रह्मचर्येण तपसा देवा मृत्युमुपाजयन् ।
इन्द्रो ह ब्रह्मचर्येणामृतं स्वराभरत् ।।९।।
ओषधयो भूतभव्यमहोरात्रे वनस्पतय: ।
संवत्सर: सहर्तुभिस्तेजाता ब्रह्मचारिण: ।।१०।।

१६-१५५

पार्थिवा दिव्या: पशव आरण्या ग्राम्याश्च ये ।
अपक्षा: पक्षिणश्च ये ते जाता ब्रह्मचारीण: ।।१।।
पृथक् सर्वे प्राजापत्या: प्राणाङ् आत्मसु बिभ्रति ।
सर्वास्तान् ब्रह्म रक्षति ब्रह्मचारिण्याभृतम् ।।२।।
ब्रह्मचारी ब्रह्मभ्राजद् बिभर्ति तस्मिन् देवा अधि विश्वे समोता: ।
स स्नातो: बभ्रु: पिङ्गल: पृथिव्यां बहु रोचते ।।३।।
देवानामेतत् परिषूतमनभ्यारूढं चरति रोचमानम् ।
तस्मिन् सर्वे पशवस्तत्र यज्ञस्तस्मिन्नन्नं सह देवताभि:।।४।।
प्राणापानौ जनयन्नाद्व्यानं चक्षु: श्रोत्रं जनयन् ब्रह्म मेधाम् ।
वाचं श्रेष्ठां यशो अस्मासु धेहि ।।५।।
अन्नं रेतो लोहितमुदरं तानि कल्पम् ।
ब्रह्मचारी सलिलस्य पृष्ठे तपोतिष्ठत् तप्यमान: समुद्रे ।।६।।

*(इति क्षुद्रकाण्डनामषोडशकाण्डे द्वाविंशति अनुवाक:)*

*इत्यथर्ववेदे पैप्पलाद संहितायां क्षुद्रकाण्डनामषोडशकाण्ड: समाप्त:*

# अथ एकानृचनाम सप्तदशकाण्ड:

## १७–१

सत्यं बृहदृतमुग्रं दीक्षा तपो ब्रह्म यज्ञ: पृथिवीं धारयन्तु ।
सा नो भूतस्य भव्यस्य पत्न्युरुं लोकं पृथिवी न: कृणोतु ।।१।।
असंवाधं मध्यतो मानवेषु यस्या उद्वत: प्रवत: समं बहु ।
ननावीर्या ओषधीर्या बिभर्त्ति पृथिवी न: प्रथतां राध्यतां न: ।।२।।
यस्यां समुद्र उत सिन्धुरापो यस्यां देवा अमृतमन्वविन्दन् ।
या बिभर्ति बहुधा प्राणदेजत् सा नो भूमिर्गोष्वप्यन्ने कृणोतु।।३।।
यस्यां पूर्वे पूर्वजना विचक्रिरे यस्यां देवा असुरानभ्यवर्त्तयन् ।
यस्यामिदं जीन्वति विश्वमेजत् सा नो भूमि: पूर्वपेये दधातु ।।४।।
यस्याश्चतस्र: प्रदिश: पृथिव्या यस्यामन्नं कृष्टय: संबभूवु: ।
गवामश्वानां वयसश्च विष्ठा भगं वर्च: पृथिवी नो दधातु।।५।।
विश्वम्भरा वसुधानी प्रतिष्ठा हिरण्यवक्षा जगतो निवेशनी ।
वैश्वानरं बिभ्रती भूमिरग्निमिन्द्रऋषभा द्रविणे नो दधातु ।।६।।
यस्यामाप: परिचरा: समानीरहोरात्रे अप्रमादं क्षरन्ति ।
सा नो भूमिर्भूरिधारा पयो दुहामथो उक्षन्तु वर्चसा ।।७।।
यां रक्षन्त्यस्वप्ना विश्वदानीं देवा भूमिं पृथिवीमप्रमादम् ।
सा नो मधु प्रियं दुहामथो उक्षन्तु वर्चसा ।।८।।
यार्णवेधि सलिलमग्र आसीद्यां मायाभिरन्वचरन् मनीषिण: ।
यस्या हृदयं परमे व्योमन्सत्येनावृतममृतं पृथिव्या: ।
सा नो भूमिस्त्विषिं बलं राष्ट्रे दधातूत्तमे ।।९।।
यामश्विनावमिमातां विष्णुर्यस्यां विचक्रमे ।
इन्द्रो यां चक्र आत्मने अनमित्राञ्छचीपति: ।
सा नो भूमिर्वि सृजतां माता पुत्राय न: पय: ।।१०।।

१७–२

गिरयस्ते पर्वता हिमवन्तोरण्यं ते पृथिवि स्योनमस्तु न:।
बभ्रुं कृष्णां रोहिणीं विश्वरूपां ध्रुवां भूमिं पृथिवीमिन्द्रगुप्ताम्।
अजितोहतोक्षतो ऽध्यष्ठां पृथिवीमहम् ।।१।।
यत्ते मध्यं पृथिवि यच्च नभ्यं यास्त ऊर्यस्तन्व: संवभूबु:।
तासु नो धेह्यभि न: पवस्व माता भूमि: पुत्रो अहं पृथिव्या:।
पर्यन्य: पिता स उ न: पिपर्तु ।।२।।
यस्यां वेदिं परिगृह्णन्ति भूम्यां यस्यां यज्ञं तन्वते विश्वकर्माण:।
यस्यां मीयन्ते स्वरव: पृथिव्यामूर्ध्वा: शुक्रा आहुत्या: पुरस्तात्।
सा नो भूमिर्वर्धयद् वर्धमाना ।।३।।
यो नो द्वेषत् पृथिवि य: पृतन्याद् यो ऽभिमन्याते मनसा वधेन।
तं नो भूमे रन्धय पूर्वकृत्वरि ।।४।।
त्वज्जातास्त्वयि चरन्ति मर्त्यास्त्वं बिभर्षि द्विपदश्चतुष्पद:।
त्वयी मे पृथिवि पञ्च मानवा येभ्यो ज्योतिरमृतं मर्त्येभ्य
उद्यन् सूर्यो रश्मिभिरातनोति ।।५।।
ता न: प्रजा: सं दुह्रतां समग्रा वाचो मधु पृथिवि धेहि मह्यम्।
विश्वस्वं मातरमोषधीनां ध्रुवां भूमिं पृथिवीं धर्मणा धृताम्।
शिवां स्योनामनु चरेम विश्वहा ।।६।।
महत् सधस्थं महति बभूविथ महान् वेग एजथुर्वेपथुष्टे।
महांस्त्वेन्द्रो रक्षति वीर्येण सा नो भूमे प्र रोचय
हिरण्यस्येव संदृशि ।।७।।
अग्निर्भूम्यामग्निरोषधीष्वग्निमापो विभ्रत्यग्निरश्मसु।
अग्निरन्त: पुरुषेषु गोष्वश्वेष्वग्नय: ।।८।।

## १७–३

अग्निर्दिव आ तपत्यग्नेर्देवस्योर्व अन्तरिक्षम् ।
अग्निं मर्त्यास इन्धते हव्यवाहं घृतप्रियम् ।।१।।
अग्निवासा: पृथिव्यसितज्ञूस्त्विषीमन्तं संशितं मा कृणोतु ।
भूम्यां देवेभ्यो जुह्वति यज्ञं हव्यमरंकृतम् ।।२।।
भूम्यां मनुष्या जीवन्ति स्वधयान्नेन मर्त्या: ।
सा नो भूमि: प्राणमायुर्दधातु जरदष्टिं मा पृथिवी कृणोतु।।३।।
यस्ते गन्ध: पृथिवी संबभूव यं बिभ्रत्योषधयो यमाप: ।
यं गन्धर्वाप्सरसश्च भेजिरे यस्तेगामश्वमर्हति ।
तेनास्मान् सुरभिन् कृणु मा नो द्विक्षत कश्चन ।।४।।
यस्ते गन्ध: पुष्करमाविवेश यं संजभ्रु: सूर्याया विवाहे ।
अमर्त्या: पृथिवी गन्धमग्रे ।
तेनास्मान् सुरभिन् कृणु मा नो द्विक्षत कश्चन ।।५।।
यस्ते भूमे पुरुषेषु स्त्रीषु पुंसु भगो रुचिर्यो वधूषु वधूयुषु ।
यो गोष्वश्वेषु यो मृगेषूत हस्तिषु ।
कन्यायां वर्चो यद् भूमे तेनास्माङ् अधि सं सृज
मा नो द्विक्षत कश्चन ।।६।।
शिला भूमिरश्मा पांसुर्या भूमि: संधृता धृता ।
यस्यां वृक्षा वानस्पत्या ध्रुवास्तिष्ठन्ति विश्वहा ।
भूमिं हिरण्यवक्षसं धृतामच्छावदामसि ।।७।।
उदीराणा उतासीनास्तिष्ठन्त: प्रक्रामन्त: ।
पद्भ्यां दक्षिणसव्याभ्यां मा व्यथिष्महि भूम्याम् ।।८।।
विमृग्वरीं पृथिवीमा वदामि क्षमां भूमिं ब्रह्मणा वावृधानाम् ।
ऊर्जं पुष्टं बिभ्रतीमन्नभागं घृतं त्वाभि नि षीदामि भूमे।।९।।

शुद्धा म आपस्तन्वे: क्षरन्ति यो मे सेदुरप्रिये तं नि दध्म: ।
पवित्रेण पृथिवि मोत् पुनामि ।।१०।।
निधीन् बिभ्रती बहुधा गुहा वसु मणिं हिरण्यं पृथिवी ददातु न:।
वसूनि नो वसुदा रासमाना देवी दधातु सुमनस्यमाना।।११।।

१७–४

यास्ते प्राची: प्रदिशो या उदीचीर्यास्ते भूमे अधराद् याश्च पश्चात् ।
स्योनास्ता मह्यं चरते भवन्तु मा नि पप्तं भुवने शिश्रियाण:।।१।।
मा मा पश्चान्मापुरस्तान्नुदिष्ठा स्वस्ति भूमे मे कृणु ।
वरीयो यावया वधं मा विदन् परिपन्थिन:।।२।।
यावत् तेभि विपश्यामि भूमे सूर्येण मेदिना ।
तावन्मे चक्षुर्मा मेष्टोत्तरामुत्तरां समाम् ।।३।।
यत्ते भूमे विखनाम्योषं तदपि रोहतु ।
मा ते मर्म विमृग्वरि मा ते हृदयमर्पिपम् ।।४।।
यच्छयान: पर्यावर्ते दक्षिणं सव्यमभि भूमे पार्श्वम् ।
उत्तानास्त्वा प्रतीचीं पृष्ट्या यदधिशेमहे ।
मा हिंसीस्तत्रनो भूमे सर्वस्य प्रतिशीवरि ।।५।।
ग्रीष्मस्ते भूमे वर्षाणि शरद्धेमन्त: शिशिरो वसन्त: ।
ऋतवस्ते विहिता हायना अहोरात्रे पृथिवी नो दुहाताम् ।।६।।
याप सर्पन्नुदमाना विमृग्वरी यस्यामासन्नग्नयो अप्स्वन्त: ।।७।।
परा दस्युन् ददती देवपीयूनिन्द्रं वृणाना पृथिवी न वृत्रं
शक्राय दध्रे वृषभाय वृष्णे ।
सा नो भूमिरा दिशतु यद्धनं कामयामहे ।।८।।
भगो अनुप्रयुङ्क्तामिन्द्रो यातु पुरोगव: ।
यस्यां सदोहविर्धाने यूपो यस्यां निमीयते ।।९।।

ब्रह्माणो यस्यामर्चन्त्यृग्भिः साम्ना यजुर्विदः ।
युज्यन्ते यस्यामृत्विजः सोममिन्द्राय पातवे ।
सा नो भूमिर्दक्षिणायां सुशेवा यज्ञे दधातु सुमनस्यमाना।।१०।।
यस्यां पूर्वे भूतकृत ऋषयो गा उदानृचुः ।
सप्त सत्त्रेण वेधसो यज्ञेन तपसा सह ।।११।।
सा नः पशून् विश्वरूपां दधातु दीर्घमायुः सविता कृणोतु ।
यस्यामन्नं व्रीहियवौ यत्रेमाः पञ्च कृष्टयः ।
भूम्यै पर्जन्यपत्न्यै नमोस्तु वर्षमेदसे ।।१२।।

१७–५

यस्यां गायन्ति नृत्यन्ति जना मर्त्या व्यैलवाः ।
युध्यन्ते यस्यामाक्रन्दो यस्यां वदति दुन्दुभिः ।
सा नो भूमिः प्र णुदतां सपत्नान् यो नो द्वेष्ट्यधरं तं कृणोतु।।१।।
यस्यां पुरो देवकृताः क्षेत्रे यस्यां विकुर्वते ।
प्रजापतिः पृथिवीं विश्वगर्भामाशामाशां रण्यां नः कृणोतु ।।२।।
जनं बिभ्रती बहुधा विवाचसं नानाधर्माणं पृथिवी यथौकसम् ।
सहस्रं धारा द्रविणस्य नो दुहां ध्रुवेव धेनुरनपस्फुरन्ती।।३।।
यस्ते सर्पो वृश्चिकस्तृष्टदंशमा हेमन्तजब्धो ·मलो गुहा शये ।
क्रिमिर्जिन्वत् पृथिवि प्रावृषि यदेजति तत्रः मर्पन्मोप
सृपद् यच्छिवं तेन नो मृड ।।४।।
ये ते पन्थानो बहवो जनायना रथस्य ·र्त्मानसश्च यातवे ।
येभिश्चरन्त्युभये भद्रपापास्तं पन्थानं जयेमानमित्रमतस्करं
यच्छिवं तेन नो मृड ।।५।।
मल्वं बिभ्रती गुरुभृद् भद्रपापस्य निधनं तितिक्षुः ।
सूकरेण पृथिवी संविदाना वराहाय वि जिहीते मृगाय ।।६।।

ये त आरण्याः पशवो मृगा वने हिताः
सिंहा व्याघ्राः पुरुषादश्चरन्ति ।
उलं वृकं पृथिवि दुच्छुनामित ऋक्षीकां
रक्षो अप वाधयास्मत् ।।७।।
ये गन्धर्वा अप्सरसो ये चारायाः किमीदिनः ।
पिशाचान् सर्वा रक्षांसि तानस्मद् भूमे यावय ।।८।।
यां द्विपादः पक्षिणः संपतन्ति हंसाः सुपर्णाः शकुना वयांसि ।
यस्यां वात ईयते मातरिश्वा रजांसि कृण्वं श्च्यावयंश्च वृक्षान्।।९।।
वातस्य प्रवामुपवामनु वात्यर्चिः
यस्यां कृष्णमरुणं च संभृते अहोरात्रे विहिते भूम्यामधि ।
वर्षेण भूमिः पृथिवी वृतावृता
सा नो दधातु भद्रया प्रिये धामनिधामनि ।।१०।।

१७-६

द्यौश्च म इदं पृथिवी चान्तरिक्षं च मे व्यचः ।
अग्निः सूर्य आपो मेधां विश्वेदेवाश्च सं ददुः ।।१।।
अहमस्ति सहमान उत्तरो नाम भूम्याम् ।
अभीषाडस्मि विश्वाषाडाशामाशां विषासहिः ।।२।।
यददो देवी प्रथमानाः पुरस्ताद्देवैः सृष्टा व्यसर्पो महित्वम् ।
आ त्वा सुभूतमविशत्तदानीमकल्पयथाः प्रदिशश्चतस्त्रः ।।३।।
ये ग्रामा यान्यरण्यानि याः सभा अधि भूम्याम् ।
तेष्वहं देवि पृथिव्युद्वासं मधुमद् वचः ।।४।।
यद् वदामि मधुमत् तद् वदामि यदीक्षे तद् वनन्तु मा ।
त्विषीमानस्मि जूतिमानवान्यान् हन्मि दोधतः ।।५।।

अश्व इव रजो दुधुवे वि तान् जनान् य आक्षियन्
पृथिवीं यादजायत ।
मन्द्राग्रेत्वरी भुवनस्य गोपा वनस्पतीनां गृभिरोषधीनाम् ।।६।।
शन्तिवा सुरभि: स्योना कीलालोघ्नी पयस्वती ।
भूमिर्नो अधि ब्रवीतु पृथिवी पयसा सह ।।७।।
भूमे मातर्नि धेहि मां भद्रया सुप्रतिष्ठितम् ।
संविदाना दिवा त्वं श्रियां मा धेहि भूत्याम् ।।८।।
यामन्वैच्छद्धविषा विश्वकर्मा यस्यामासन्नग्नयो ऽप्स्वन्त: ।
भुजिष्यं पात्रं निहितं गुहासीदाविर्भोगैरभवन्मातृमद्भ्य: ।।९।।
त्वमस्यावपनी जनानामदिति: कामदुधा विश्वरूपा ।
यत्त ऊनं तत्त आ पूरयाति प्रजापति: प्रजाभि: संविदान: ।।१०।।

*(इति एकानृचनामसप्तदशकाण्डे प्रथमो ऽनुवाक:)*

१७-७

कस्मिन्नङ्गे तपो अस्याधि तिष्ठति कस्मिन्नङ्ग ऋतमस्याध्याहितम् ।
क्व व्रतं क्व श्रद्धास्य तिष्ठति कस्मिन्नङ्गे सत्यमस्य प्रतिष्ठितम् ।।१।।
क्व ब्रह्म क्व तिष्ठन्त्याप: कस्मिन्नङ्गे दिशो अस्य प्रतिष्ठिता: ।
कतमदङ्गमनु संचरेते अहोरात्रे संविदाने समानम् ।।२।।
कस्मिन्नङ्गे तिष्ठति भूमिरस्य कस्मिन्नङ्गे तिष्ठत्यन्तरिक्षम् ।
कस्मिन्नङ्गे तिष्ठत्याहिता द्यौ: कस्मिन्नङ्गे तिष्ठन्त्युत्तरं दिव: ।।३।।
कस्मादङ्गाद् दीप्यते ऽग्निरस्य कस्मादङ्गात् पवते मातरिश्वा ।
कस्मादङ्गाद् वि मिमीतेधि चन्द्रमा स्कम्भस्य महद् वि मिमानो अङ्गम् ।।४।।
क्व प्रेप्सन्दीप्यत ऊर्द्धो अग्नि: क्व प्रेप्सन् पवते मातरिश्वा ।
यत्र प्रेप्सन्तीरभियन्त्यावृत: स्कम्भं तं ब्रूहि कतम: स्विदेव स: ।।७।।
क्व प्रेप्सन्ती युवती विरूपे अहोरात्रे द्रवत: संविदाने ।
यत्र प्रेप्सन्तीरभियन्त्याप: स्कम्भं तं ब्रूहि कतम: स्विदेव स: ।।८।।

क्वार्धमासा: क्व यन्ति मासा: संवत्सरेण सह संविदाना: ।
यत्र यन्त्यृतवो यत्रार्तवा: स्कम्भं तं ब्रूहि कतम: स्विदेव स: ।।९।।
यस्मिन् स्तब्ध्वा प्रजापतिर्लोकान् सर्वाङ् अधारयत् ।
स्कम्भं तं ब्रूहि कतम: स्विदेव स: ।।१०।।
यत् परमं यच्च मध्यमं प्रजापति: ससृजे विश्वरूपम् ।
कियता स्कम्भ: प्र विवेश तत्र यन्न प्राविशत् कियत्तद् बभूव ।।११।।
कियता स्कम्भ: प्र विवेश भूतं कियद् भविष्यदन्वाशयेस्य ।
एकं यदङ्गमकृणोत् सहस्रधा कियता स्कम्भ: प्र विवेश तत्र।।१२।।

## १७-८

यत्र लोकांश्च कोशांश्च ब्रह्म यत्र जना विदु: ।
असच्च यत्र सच्चान्त:
स्कम्भं तं ब्रूहि कतम: स्विदेव स: ।।१।।
यत्र तप: पराक्रम्य ऋतं धारयत्युत्तरम् ।
व्रतं च यत्र श्रद्धा च ब्रह्मापः समाहिता:
स्कम्भं तं ब्रूहि कतम: स्विदेव स: ।।२।।
यस्मिन् भूमिरन्तरिक्षं द्यौर्यस्मिन्नध्याहिता ।
यत्राग्निश्चन्द्रमा: सूर्यो वातस्तिष्ठन्त्यार्पिता:
स्कम्भं तं ब्रूहि कतम: स्विदेव स: ।।३।।
यस्य त्रयस्त्रिंशद् देवा अङ्गे सर्वे समाहिता:
स्कम्भं तं ब्रूहि कतम: स्विदेव स: ।।४।।
यत्र ऋषयो भूतकृत ऋच: साम यजुर्मही ।
एकर्षिर्यस्मिन्नार्पित:
स्कम्भं तं ब्रूहि कतम: स्विदेव स: ।।५।।

यस्य चतस्र: प्रदिशो नाड्यस्तिष्ठन्ति प्रथमा: ।
यज्ञो यस्मिन् पराक्रान्त:
स्कम्भं तं ब्रूहि कतम: स्विदेव स: ।।६।।
यत्रामृतं च मृत्युश्च पुरुषश्च समाहिता: ।
समुद्रो यस्य नाड्य:
स्कम्भं तं ब्रूहि कतम: स्विदेव स: ।।७।।
ये पुरुषे ब्रह्म विदु: ते स्कम्भ मनुसं विदु: ।
यो वेद परमेष्ठिनं यश्च वेद प्रजापतिम् ।
ज्येष्ठं ये ब्राह्मणं विदुस्ते स्कम्भमनुसंविदु: ।।८।।
यस्य शिरो वैश्वानरश्चक्षुरङ्गिरसोभवन् ।
अङ्गानि यस्य यातव:
स्कम्भं तं ब्रूहि कतम: स्विदेव स: ।।९।।
यस्य ब्रह्म मुखमाहुर्जिह्वां मधुकशामुत ।
विराजं यस्योध आहु
स्कम्भं तं ब्रूहि कतम: स्विदेव स: ।।१०।।

१७-९

यस्मादृचो अपातक्षन् यजुर्यस्मादपाकषन् ।
छन्दांसि यस्य लोमानि
स्कम्भं तं ब्रूहि कतम: स्विदेव स: ।।१।।
असच्छाखां प्रतिष्ठन्तीं परममिव जना विदु: ।
उतो सन्मन्यन्तेवरे यस्य शाखामुपासते ।।२।।
यत्रादित्याश्च रुद्राश्च वसवश्च समाहिता: ।
स्कम्भं तं ब्रूहि कतम: स्विदेव स: ।।३।।
यस्य त्रयस्त्रिंशद् देवा निधिं रक्षन्ति सर्वदा ।
निधिं तमद्य को वेद यं देवा अभिरक्षथ ।।४।।

यत्र देवा ब्रह्मविदो ब्रह्म जेष्ठमुपासते ।
यो वै तद्ब्रह्मणो वेद तं वै ब्रह्मविदो विदु: ।।५।।
बृहन्तो नाम ते देवा असतस्परि यज्ञिरे ।
एकं तदङ्गं स्कम्भस्यासदाहु: परो जना: ।।६।।
यत्र स्कम्भ: प्रजनयन् पुराणं व्यवर्तयत् ।
एकं तदङ्ग स्कम्भस्य पुराणमनुसंविदु: ।।७।।
यस्य त्रयस्त्रिंशद् देवा अङ्गे गात्राणि भेजिरे ।
तान् वै त्रयस्त्रिंशद्देवानेके ब्रह्म विदो विदु: ।।८।।
हिरण्यगर्भं परममनत्युद्यं जना विदु: ।
स्कम्भस्तदग्रे प्रासिञ्चद्धिरण्यं लोके अन्तरा ।।९।।
स्कम्भे लोका: स्कम्भे तप: स्कम्भेध्यृतमाहितम् ।
स्कम्भं त्वा विद्म प्रत्यक्षमिन्द्रे सर्वं समाहितम् ।।१०।।

१७-१०

इन्द्रे लोका इन्द्रे तप इन्द्रेध्यृतमाहितम् ।
इन्द्रं त्वा विद्म प्रत्यक्षं स्कम्भे सर्वं समाहितम् ।।१।।
नाम नाम्ना जोहवीमि पुरा सूर्यात् पुरोषस: ।
यदज: प्रथमं संबभूव स ह तत्
स्वराज्यं जगाम यस्मान्न: परमस्ति भूतम् ।।२।।
यस्य भूमि: प्रमान्तरिक्षमुतोदरम् ।
दिवं यश्चक्रे मूर्धानं तस्मै ज्येष्ठाय ब्रह्मणे नम: ।।३।।
यस्य सूर्यश्चक्षुश्चन्द्रमाश्च पुनर्नव: ।
अग्निं यश्चक्र आस्यं तस्मै ज्येष्ठाय ब्रह्मणे नम: ।।४।।
यस्य वात: प्राणापानौ चक्षुरङ्गिरसोभवन् ।
दिशो यश्चक्रे प्रज्ञानीस्तस्मै ज्येष्ठाय ब्रह्मणे नम: ।।५।।

य: श्रमात्तपसो जातो लोकान् सर्वान् समानसे ।
सोमं यश्चक्रे केवलं तस्मै ज्येष्ठाय ब्रह्मणे नम: ।।६।।
स्कम्भो दाधार पृथिवीं द्यामुतामूं
स्कम्भो दाधारोर्वन्तरिक्षम् ।
स्कम्भो दाधार प्रदिश: षडुर्वी:
स्कम्भ इदं विश्वं भुवनमा विवेश ।।७।।
कथं वातो नेलयति कथं न रमते मन: ।
किमाप: सत्यं प्रेप्सन्ती: प्र चक्रमिति सर्वदा ।।८।।
महद्यक्षं भुवनस्य मध्ये तपसि क्रान्तं सलिलस्य पृष्ठे ।
तस्मिञ्छ्रयन्ते य उ के च देवा वृक्षस्य
स्कन्ध: परित इव शाखा: ।।९।।
यस्मै हस्ताभ्यां पादाभ्यां वाचा श्रोत्रेण चक्षुषा ।
यस्मै देवा: सदा वलिं प्रयच्छन्ति विमितेमितं
स्कम्भं तं ब्रूहि कतम: स्विदेव स: ।।१०।।

१७-११

अप तस्य तमो हतं व्यावृत्त: स पाप्मना ।
सर्वाणि तस्मिन् ज्योतींषि यानि त्रीणि प्रजापतौ ।।१।।
यो वेतसं हिरण्ययं तिष्ठन्तं सलिले वेद ।
स वै गुह्य: प्रजापति: ।।२।।
न प्रजापतिमत्येति नात्येति परमेष्ठिनम् ।
उतोत तत्र नो ब्रूत यज्ज्येष्ठं परो अत्ययत् ।।३।।
अस्ति वै तत् परो भूमेरस्मि वै तत् परो दिव: ।
लोका वै तस्मिन् संप्रोता: यस्मिन्होता: प्रजा इमा: ।।४।।

*(इति एकानृचनामसप्तदशकाण्डे द्वितीयो ऽनुवाक:)*

१७-१२

अन्तः पात्रे रेरिहतीं दुःशे दुर्निहितैषिणीम् ।
दुरण्डे अभिचंक्रमेवक्म के वस्तवासिनीम् ।।१।।
सर्वासां भण्वावः साकं नामधेयानि विद्मसि ।
यानि जातानि वर्तति नश्यतेतः सदान्वाः ।।२।।
कर्णादृश द्रथामहमुलुकीं केशिनीं क्रकूम् ।
खड्डुरिमबर्हिष्यं नाशयामः सदान्वाः ।।३।। श्रि ।।
पण्डुगिरां फालजतीमसौसूक्ता निगारिणीम् ।
आमाताः सर्वा वो ब्रूमो नश्यतेतः सदान्वाः ।।४।।
याः शयानं जम्भयन्त नक्तमिच्छन्त्यातुरम् ।
अथोदनस्य सुप्तस्य सुखहस्ता नि प्र लियन्ते ।
तत् सदुदकमनोहिताः ता इतो नाशयामसि ।।५।।
आपतन्नीर्वक्षणाना वस्तगन्धाः सदान्वाः ।
भण्वासि न हतोश्छामि तीक्ष्ण शृङ्ग इवर्षभः ।।६।।
सदान्वाः सादान्वेया स्त्रीपुंसान् उभयान् सह ।
सहे सहस्वान् सासह विमृधो हन्मि रक्षसः ।।७।।
चतुर्द्रंष्ट्रान् कुम्भमुस्कान् दीर्घकेशाङ् असृङ्मुखान् ।
अलावुगन्धीनुन्दुरान्दुर्न्नाम्नो नाशयामसि ।।८।।
स्तम्भे जाता अधिपालेरोदाकाङ् रुदन्तीं त्वत् ।
दुर्णाम्नीः सर्वाः सन्तोका नाशयामः सदान्वाः ।।९।।
यासां जातानि क्रोशन्ति हृश्छं तत् वने ज्वलत् उपवृक्षेषु शेरते।
दुर्णाम्नीः सर्वाः सन्तोका नाशयामः सदान्वाः ।।१०।।
या वाताभ्र उत्पतन्ति ते च त्वा वर्षेण विद्युताः -
शाला इच्छन्ति सत्त्वरम् ।
दुर्णाम्नीः सर्वाः सन्तोका नाशयामः सदान्वाः ।।११।।

१७-१३

या धान्यात् संभवन्ति क्षेत्रादृप्ताव्यर्पितात् ।
कृतादभि प्राहार्या नश्यतेत: सदान्वा: ।।१।।
या: पुरुषा: पापगंन्धा: सदारुक्षा विसृक्पदी ।
ता वज्रेण समर्पयन् तिरोजेत: शचीपते: ।।२।।
उत्तिष्ठत: निर्द्रवत न वेहास्ति न्यञ्चनम् ।
इन्द्रो व: सर्वासां साकं गर्भानाण्डानि भेत्स्यति ।।३।।
इन्द्र जहि स्थूरशङ्कुं मृणीहि दुर्णिशीं कुहम् ।
अरायां शकधूम्यं नाशयाम: सदान्वा: ।।४।।
किमा सुताध्वग्निह्वयमजमायुं च निघ्नती: ।
विटिटिङ्गा: प्रतोदिनीर्नाशयाम: सदान्वा: ।।५।।
यस्यां सुतं रन्धयद्ध्वेयुं यं भण्वा: सदान्वा: ।
त्रिष्ठं कृणुतांण्डरं यदारसेन तृप्यतामसुरामवमेहथ ।।६।।
तस्या: पीत्वावमन्यते ऽथो शीर्षक्त्याशये ।
ता एतान्न दूषणीं नाशयाम: सदान्वा: ।।७।।
अपारोगाञ्छकधूमान् वृक्षाणां यान्ति सत्वरम् ।
अथो दुर्हार्दसो गृहं प्र मृणन्त्वराया: ।।८।।
तासामेकात्मवृका शकावङ्का वने क्रुकुहि शनीका कनिक्रदा ।
सर्वासां भण्वाव: साकं नामधेयानि विद्मसि ।
यानि जातानि दस्युभ्यो नश्यतेत: सदान्वा: ।।९।।
सहस्वतीं प्र हरामीमां त्वां विषासहिम् ।
सदान्वाघ्नीमोषधीं जैत्रानच्छावदामसि ।।१०।।

१७-१४

दुश्शङ्काशे भीमचक्षोनग्ने भण्वे सदान्वे ।
ध्राजि त्विषिं शुचिमग्निमरायि किमिहेक्षसे ।
धूममाभि प्र गाह्यनिस्तूषामि सदान्वे ।।१।।
कङ्कैका: पृषदेका: किमुच्छ्रयन्त्यभिश्रिया ।
चरन्ति नक्तं दुर्णाम्नो रायी सूतकीष्यस्ता
इतो नाशयामसि।।२।।
अपक्रातामभिश्रयामानृत्यन्ती कुतूहलम् ।
कुशूलियं रसभञ्जनीङ्खलाज्जातास्त्रिवूक्यस्ता
इतो नाशयामसि ।।३।।
या विकेशीरुन्मदित्योरना घोरचक्षव: ।
शीर्षाण्यान्यान्यासां वितावन्तीरिवासते ।
सदान्वा ब्रह्मणस्पते पदो भ्रूणान्यर्पय ।।४।।
यासां गन्धो नानारूप: प्रयैति पुरुषं पति ।
ता अग्नि: सहतामितो जातवेदा: सदान्वा:
ता इतो नाशयामसि ।।५।।
या: पुरुषं दाह्यमानं शून्यमग्नौ जिघत्सन्ति ।
भण्वानिष्कुष्ठनामांसि मुष्टाग्रेण सदान्वा:
ता इतो नाशयामसि ।।६।।
या दुचिता आ वपने शुष्कं खदन्ति वष्मुषाम् ।
वडवा गर्दभीरिव नाशयाम: सदान्वा: ।।७।।
गर्भानेक: प्रतिमृशन् या अदन्ति सदान्वा: ।
उचितस्तन्वो स्त्रीया गावो आ रोहिणीरिव ता
इ तो नाशयामसि ।।८।।

या: पित्र्यात्संभवन्तीन्द्रजा न: सदान्वा: ।
अपमृत्युमिवाभृतं पुनस्ता प्रति दध्मसि ।।९।।
आमादिनी: क्रूरादिनीरनग्निगन्ध्यादिनी: ।
अमुं परेभ्यो हुतं शवमत्त सदान्वा: ।
शव: केवल आचार: किमुशालास्युच्छ्रित: ।।१०।।

१७-१५

या: कुमारीर्यास्थवीरा युवतीर्या: सदान्वा: ।
सर्वा यन्तु कुरूटिनी: कुलिना थेनु सर्पत्वरायी रषिभा हिता: ।।१।।
ताभ्यो रुद्रो वि सृजत्विषिमध्यघघात्विनी ।
तास्ता हन्तु विद्युता वज्रेणानपराधिना ।
तासां त्वं शक्र मोच्छिष इन्द्र भण्वा: फलीकुरु: ।।२।।
कुमारानेका स्थवीरान् या अदन्ति प्रघातिनी: ।
ता इन्द्रो हन्तु वृत्रहा यो देवो विश्वाद्रक्षांसि सेधति ।।३।।
याश्च दासीरसुराणां मनुष्येभ्यश्च या: कृता: ।
उभयीस्ता: परा यन्तु परावतो नवतिं नाव्या अति ।।४।।
यासां घोषा: संगतानां वृकाणामिव गङ्गण: ।
प्रचं कशामयिवारं प्रयच्छन्तीं प्रतिग्रहा नाशयाम: सदान्वा: ।।५।।
या निशां यथास्थामाद्रात्री यक्षाणी प्रेरते ।
अग्निष्ट्वा सर्वा साहन्त्यो विश्वाद्रक्षांसि सेधतु ।।६।।
या रुक्षीका: कलिलान्ताप्सु जाता: पुरीकया: ।
गोपा आसामेको वेद यतो याता: सदान्वास्ता
इतो नाशयामसि ।।७।।
गुरुछाया मूर्द्धार्य शिशुमाकां प्रतिश्रुका ।
अति दुह्या विचलन्तीं वितुलिमाम् ।
सर्वांश्चण्डसनप्त्यो नाशयाम: सदान्वा: ।।८।।

आवदन्तीं नामहूकां त्वं स्तनीकां वृङ्न्धपदीम् ।
उग्रिदन्तीमनामिकां नाशयाम: सदान्वा: ।।९।।
वावदाकामल्भगासां विजव्रां लव्रूं बव्रुम् ।
अरायीं वातमेजयान् नाशयाम: सदान्वा: ।।१०।।

*(इति एकानृचनामसप्तदशकाण्डे तृतीयो ऽनुवाक:)*

१७-१६

ददामीत्येव ब्रूयादनुचैनामभूत्सत ।
वशां ब्रह्मभ्यो याचद्भ्यस्तत् प्रजावदपत्यवत् ।।१।।
प्रजया स वि क्रीणीते पशुभिश्चोप दस्यति ।
य आर्षेयेभ्यो याचद्भ्यो देवानां गां न दित्सति ।।२।।
कुटयास्य सं शीर्यन्ते श्लोणया काटमर्दति ।
बण्डया दह्यन्ते गृहा: काणया दीयते स्वम् ।।३।।
विलोहितो अधिष्ठानाच्छक्नो विन्दति गोपतिम् ।
तथा वशाया: संविद्यं दुरदभ्ना ह्युच्यसे ।।४।।
यो अस्या: कर्णावास्कुनोत्या स देवेषु वृश्चते ।
लक्ष्म कुर्व इति मन्यते कनीय: कृणुते स्वम् ।।५।।
पदोरस्या अधिष्ठानाद् विक्लिन्दुर्नाम विन्दति ।
अनामनात् सं शीर्यन्ते या मुखेनोपजिघ्रति ।।६।।
यदस्या गोपतौ सत्या लोम ध्वाङ्क्षो अजीहिडत् ।
तत: किशोरा म्रियन्ते वत्सांश्च घातुको वृक: ।।७।।
यदस्या: कस्मै चिद् भोगाय बालान् कश्चित् प्रकृन्तति ।
तत: कुमारा म्रियन्ते यक्ष्मश्चरत्यनामनात् ।।८।।
यदस्या: पल्पूलनाय शकृद् दासी समस्यति ।
ततो ऽपरूपं जायते तस्मादव्येष्यदेनस: ।।९।।

जायमानाभि जायते देवान् त्सब्राह्मणान् वशा ।
तस्माद् ब्रह्मभ्यो देयैषा तदाहु: स्वस्य गोपनम् ।।१०।।

१७-१७

य एनां वनिमायन्ति तेषां देवकृता वशा ।
ब्रह्मज्येयं तदब्रुवन् य एनां निप्रियायते ।।१।।
य एनां याचद्भ्यो आर्षेयेभ्यो न दित्सति ।
आ स देवेषु वृश्चते ब्राह्मणानां च मन्यवे ।।२।।
यस्यान्यस्याद् वशाभोगो अन्यामिच्छेत तर्हि स: ।
हिंस्याददत्ता गोपतिं याचितां च न दित्सति ।।३।।
यथा शेवधिर्निहितो ब्राह्मणानां तथा वशा ।
तामेतदायन्ति यस्मिन् कस्मिंश्च जायते ।।४।।
स्वमेतदायन्ति यद् वशां ब्राह्मणा अभि ।
यथैतानन्यज्जिनीयादेवास्या निरोधनम् ।।५।।
चरेदेवा त्रैहायनादविज्ञातगदा सती ।
वशां च विद्यान्नारद ब्राह्मणास्तर्ह्येष्या: ।।६।।
य एनामवशामाह देवानां निहितं निधिम् ।
उभौ तस्मै भवाशर्वौ परिक्रम्येषुमस्यत: ।।७।।
दूरदभ्नैनमा शये याचितां च न दित्सति ।
नास्मै कामा: समृध्यन्ते यामदत्त्वा चिकीर्षति ।।८।।
यो अस्या ऊधो न वेदाथो अस्या स्तनानुत ।
उभयेनैवास्मै दुहे दातुं चेदशकद् वशाम् ।।९।।
देवा वशां याचन्तिं मुखं कृत्वा ब्राह्मणम् ।
तेषां सर्वेषामददद्धेडं न्येति मानुष: ।।१०।।

१७-१८

हेडं पशूनां न्येति ब्राह्मणेभ्योददद् वशाम् ।
देवानां निहितं भागं मर्त्त्यश्चेन्निप्रियायते ।।१।।
यदन्ये शतं याचेयुर्ब्राह्मणा गोपतिं वशाम् ।
अथैतां देवा अब्रुवन्नेवं ह विदुषो वशा ।।२।।
य एवं विदुषेदत्त्वाथान्यस्मै ददद् वशाम् ।
दुर्गा तस्मा अधिष्ठाने पृथिवी सहदेवता ।।३।।
देवा वशामयाचन् यस्मिन्नग्रे अजायत ।
तामेतां विद्यान्नारद: सह देवैरुदाजत ।।४।।
अनपत्यमल्पपशुं वशा कृणोतु पुरुषम् ।
ब्राह्मणैश्च याचितामथैनान्निप्रियायते ।।५।।
अग्नीषोमाभ्यां कामाय मित्राय वरुणाय च ।
तेभ्यो याचन्ति ब्राह्मणास्तेभ्यो आ वृश्चतेददत् ।।६।।
यावदस्या गोपतिर्नोपश्रुणुयादृच: स्वयम् ।
चरेदस्य तावद् गोषु नास्य श्रुत्वा गृहे स्यात् ।।७।।
यो अस्या ऋचो उपश्रुत्याथ गोष्वचीचरत् ।
आयुश्च तस्य भूतिं च देवा वृश्चन्ति हीडिता: ।।८।।
वशा चरन्ति बहुधा देवानां निहितो निधि: ।
आविष्कृणुष्व रूपाणि यदा स्थाम जिघांसति ।।९।।
आविरात्मानं कृणुते यदा स्थाम जिघांसति ।
अथो ह ब्रह्मभ्यो वशा याञ्च्याय कृणुते मन: ।।१०।।

१७-१९

मनसां सं कल्पयति तद्देवाङ् अपि गच्छति ।
अथो ह ब्रह्माणो वशामुपप्रयन्ति याचितुम् ।।१।।

स्वधाकारेण पितृभ्यो यज्ञेन देवताभ्य: ।
दानेन राजन्यो वशाया मातुर्हेडं न गच्छति ।।२।।
वशा राजन्य ते माता तथा संभूतमग्रश: ।
तस्या आहुरनर्पणं यद् ब्रह्मभ्य: प्रदीयते ।।३।।
यदाज्यं प्रतिगृहीतमालुम्पेत् स्रुचो अग्नये ।
एवा ह ब्रह्मभ्यो वशामग्नये वृश्चतेददत् ।।४।।
पुरोडाशवत्सा सुदुघा लोके अस्योप तिष्ठति ।
सास्मै सर्वान् कामान् दुहे वशा प्रददुषे वहून् ।।५।।
सर्वान् कामान् यमराज्ये वशा प्रददुषे दुहे ।
अथाहुर्नारकं लोकं निरुन्धानस्य याचिताम् ।।६।।
प्रवीयमाना चरति क्रुद्धा गोपतये वशा ।
वेहतं मा मन्यमानो मृत्यो: पाशेषु बध्यताम् ।।७।।
यो वेहतं मन्यमानो गृहेषु पचते वशाम् ।
अप्यस्य पुत्रान् पौत्रांश्च याचयते बृहस्पति: ।।८।।
महदेषाव तपति चरन्ती गोषु गौरपि ।
अथो ह गोपतये वशा ददुषे विषं दुहे ।।९।।
प्रियं पशूनां भवति यद् ब्रह्मभ्य: प्रदीयते ।
अथो वशायास्तत् प्रियं यद्देवत्रा हवि: स्यात् ।।१०।।

१७-२०

या वशा उदकल्पयन् देवा यज्ञादुदेत्य ।
तासां विलिप्त्यं भीमामुदाकुरुत नारद: ।।१।।
तां देवा अमीमांसन्त वशेयामवशेति ।
तामब्रवीन्नारद एषा वशानां वशतमा ।।२।।
कति नु वशा नारद यास्त्वं वेत्थ मनुष्यजा: ।
कतमासां भीमतमा कस्या नाश्नीयादब्राह्मण: ।।३।।

विलिप्त्या बृहस्पते या च सूतवशा वशा ।
तासां नाश्नीयादब्राह्मणो य आशंसेत भूत्याम् ।।४।।
नमस्ते अस्तु नारदानुष्ठु विदुषे वशा ।
कतमासां भीमतमा यामदत्त्वा पराभवेत् ।।५।।
विलिप्त्या बृहस्पते या च सूतवशा वशा ।
या: प्र यच्छेद् ब्रह्मभ्य: य आशंसेत भूत्याम् ।।६।।
त्रीणि वै वशाजातानि विलिप्ती सूतवशा वशा ।
ता: प्र यच्छेद् ब्रह्मभ्य: सोनाव्रस्क: प्रजापतौ ।।७।।
एतद् वो ब्राह्मणा हविरिति मन्वीत याचित: ।
वशां चेदेनं याचेयुर्या भीमाददुषो गृहे ।।८।।
देवा वशामुपावदन् नोदादिति हीडिता: ।
एताभिर्ऋग्भिर्भेदस्य तस्माद् वै स पराभवत् ।।९।।
उतैतां भेदो नाददाद् वशामिन्द्रेण याचित: ।
तस्मात् तं देवा एनसोवृश्चन्नहमुत्तरे ।।१०।।
ये वशाया अदानाय वदन्ति परिरापिण: ।
इन्द्रस्य मन्यवे जाल्मा आ वृश्चन्ते अचित्त्या ।।११।।
ये गोपतिं पराणीयाथाहुर्मा ददा इति ।
रुद्रस्यास्तां हेतिं ते परि यन्त्यचेतस: ।।१२।।
यदि हुतां यद्यहुताममा च पचते वशाम् ।
देवान् सब्राह्मणानृत्वा जिह्मो लोकान्निर्ऋच्छति ।।१३।।

*(इति एकानृचनामसप्तदशकाण्डे चतुर्थो ऽनुवाक:)*

१७-२१

असृङ्मांसं त्वचं पेष्ट्रं संभरणमंसान् शरीरम् ।
अग्नि: क्रव्यादत्त्वमुष्यामुष्यायणस्यामुष्या: पुत्रस्य ।।१।।

प्रातर्यावद्भ्यो: देवेभ्य: सायं यावद्भ्यो देवेभ्यो
विश्वदानी यावद्भ्यो देवेभ्य: ।
अमुमामुष्यायणममुष्या: पुत्रमा वृश्चामि ।।२।।
वैश्वानराय क्षिप्रधन्वने
अमुमामुष्यायणममुष्या: पुत्रमा वृश्चामि ।।३।।
क्षिप्रधन्वन: क्षिप्रहस्तामुमामुष्यायणममुष्या:
पुत्रस्य हृदयं यकृन्मातस्थे प्रविध्य ।।४।।
इन्द्राग्निभ्यां प्रजापतये परमेष्ठिने सोमाय राज्ञे वरुणाय राज्ञे ।
पूष्णे धात्रे सवित्रे त्वष्ट्रे अमुमामुष्यायणममुष्या: पुत्रमा वृश्चामि।।५।।
उषसे अह्ने रात्रये सुर्यायामुमामुष्यायणममुष्या: पुत्रमा वृश्चामि।।६।।
वीरुद्भ्यो ओषधीभ्यो वनस्पतिभ्यो वानस्पत्येभ्यो
अमुमामुष्यायणममुष्या: पुत्रमा वृश्चामि ।।७।।
अद्भ्यो: मातरिश्वने द्यावापृथिवीभ्यां
अमुमामुष्यायणममुष्या: पुत्रमा वृश्चामि ।।८।।
इदावत्सराय परिवत्सराय संवत्सराय बृहते
विश्वरूपायामुमामुष्यायणममुष्या: पुत्रमा वृश्चामि ।।९।।
माद्भ्य: संवत्सरायामुमामुष्यायणममुष्या: पुत्रमा वृश्चामि ।।१०।।

१७-२२

दिग्भ्यो अन्तर्देशेभ्य आशाभ्य आशापालेभ्यमु-
मामुष्यायणममुष्या: पुत्रमा वृश्चामि ।।१।।
ऋतुभ्यो आर्तवेभ्यो अधिपतिभ्य आधिपत्येभ्योमु-
मामुष्यायणममुष्या: पुत्रमा वृश्चामि ।। २ ।।
ऋषिभ्य आर्षेयेभ्यो अङ्गिरोभ्य अङ्गिरसेभ्यो ऽथर्वेभ्य
आथर्वणेभ्यमुमामुष्यायणममुष्या: पुत्रमा वृश्चामि।।३।।

वसुभ्यो रुद्रेभ्य: आदित्येभ्य: साध्येभ्य आप्तेभ्योमु-
मामुष्यायणममुष्या: पुत्रमा वृश्चामि ।।४।।
मरुद्भ्योऽश्विभ्यां ब्रह्मणे ब्रह्मणस्पत्येमु-
मामुष्यायणममुष्या: पुत्रमा वृश्चामि ।।५।।
ये अम्भश्चक्रुर्ये अम्बरजिष्णवस्तेभ्य: स्वकृद्भ्य:
स्वकारेभ्यो: अमुमामुष्यायणममुष्या: पुत्रमा वृश्चामि ।
ते स्वकृत: स्वकारा अमुमामुष्यायणममुष्या:
पुत्रं परा भावयन्तु ।।६।।
ये तपश्चक्रुर्ये तपोजिष्णवस्तेभ्य: तपस्कृद्भ्य:
तपस्कारेभ्यो अमुमामुष्यायणममुष्या: पुत्रमा वृश्चामि ।
ते तपस्कृतस्तपस्कारा अमुंमामुष्यायणमुष्या:
पुत्रं परा भावयन्तु ।।७।।
ये ब्रह्मचक्रुर्ये ब्रह्मजिष्णव: तेभ्यो ब्रह्मकृद्भ्यो
ब्रह्मकारेभ्यो अमुमामुष्यायणममुष्या: पुत्रमा वृश्चामि ।
ते ब्रह्मकृतो ब्रह्मकारा अमुमामुष्यायणममुष्या:
पुत्रं परा भावयन्तु ।।८।।
अघारिणीममूमघविद्धां विकेशीमुप प्रतिमा सोक्तान् देवमनुष्या:
पश्यन्तु अमुमामुष्यायणममुष्या: पुत्रं रु रुदुषीम् ।।९।।
अलिक्लवा गृध्रा: कङ्का: सुवर्णा: श्वापदा: पतत्रिण:।
वयांसि शकुनयो ऽमुमामुष्यायणस्यामुष्या: पुत्रस्यादहने चरन्तु ।।१०।।

१७-२३

एतदाप: प्र वहतावद्यं च मलं च यत् ।
यद् दुष्वप्न्यमारिमा यदृचा नृतमूदिम ।
आप: सप्त स्रवन्तीस्ता नो मुञ्चन्त्वंहस: ।।१।।

मुञ्चन्तु मा शपथ्यादथो वरुण्यादुत ।
अथो यमस्य पड्वीषाद् विश्वस्माद्येव दुष्कृतात् ।।२।।
यामिशंसाद् दुष्वप्न्याद् द्रुहो मा मुञ्चन्तु वरुणाय पाशात् ।
मह्यमिन्द्रो वरुणो बृहस्पति: सविता वर्चो आदधन् ।।३।।
भ्रातृव्यहं सपत्नहमसौ मे भ्रातृव्योसौ सपत्न: ।
तं हन्मि तं दुष्वप्नेन विध्यामि तं उना इष्टायावेन विध्यामि
तं क्षीतायवेन विध्यामि तमधराञ्च मृत्युपथ अभ्यपनुदामि।।४।।

१७-२४

विद्मते स्वप्न जनित्रं पाप्मन: पुत्रो अस्यभूत्या
अधिजातो यमस्य करण: ।
तं त्वा स्वप्न तथा विद्म ।
यो ऽभद्र: स्वप्न: स्वप्नमय: पापस्तं द्विषते प्र हिण्म:।।१।।
तमस्मै गमयामस्तेनैनं विध्यामोभूत्यैनं विध्यामो निर्भूत्यैनं
विध्याम: पराभूत्यैनं विध्यामो ग्राह्यैनं विध्यामस्तमस्यैनं
विध्यामोग्निनैनं क्रव्यादा वृश्चामो देवानामेनं घोरै: क्रूरै:
प्रेष्यैरभिप्रेष्यामो वैश्वानरस्यैनं दंष्ट्रयोरपिदध्म: ।।२।।
विद्मते स्वप्न जनित्रं ग्राह्या पुत्रो ऽसि निर्ऋत्या
अधिजातो यमस्य करण: ।
तं त्वा स्वप्न तथा विद्म ।
यो ऽभद्र: स्वप्न: स्वप्नमय: पापस्तं द्विषते प्र हिण्म: ।।४।।
विद्मते स्वप्न जनित्रं वरुणस्य पुत्रो ऽसि वरुणान्या
अधिजातो यमस्य करण: ।
तं त्वा स्वप्न तथा विद्म ।
यो ऽभद्र: स्वप्न: स्वप्नमय: पापस्तं द्विषते प्र हिण्म: ।।५।।

विद्मते स्वप्न जनित्रमह्नः पुत्रो ऽसि रात्र्या
अधिजातो यमस्य करणः ।
तं त्वा स्वप्न तथा विद्म ।
यो ऽभद्रः स्वप्नः स्वप्नमयः पापस्तं द्विषते प्र हिण्मः ।।६।।
विद्मते स्वप्न जनित्रं दिवस्पुत्रो ऽसि भूम्या
अधिजातो यमस्य करणः ।
तं त्वा स्वप्न तथा विद्म ।
यो ऽभद्रः स्वप्नः स्वप्नमयः पापस्तं द्विषते प्र हिण्मः ।।७।।
विद्मते स्वप्न जनित्रं वनस्पतीनां
पुत्रो ऽस्योषधिभ्योधिजातो यमस्य करणः ।
तं त्वा स्वप्न तथा विद्म ।
यो ऽभद्रः स्वप्नः स्वप्नमयः पापस्तं द्विषते प्र हिण्मः ।।८।।
विद्मते स्वप्न जनित्रं वानस्पत्यानां पुत्रो ऽसि वीरुद्भ्यो
अधिजातो यमस्य करणः ।
तं त्वा स्वप्न तथा विद्म ।
यो ऽभद्रः स्वप्नः स्वप्नमयः पापस्तं द्विषते प्र हिण्मः ।।९।।
विद्मते स्वप्न जनित्रं तन्द्रियाः पुत्रो ऽसि कोटय्या
अधिजातो यमस्य करणः ।
तं त्वा स्वप्न तथा विद्म ।
यो ऽभद्रः स्वप्नः स्वप्नमयः पापस्तं द्विषते प्र हिण्मः ।।१०।।
विद्मते स्वप्न जनित्रं रक्षसां पुत्रो ऽस्युद्भवेभ्यो
अधिजातो यमस्य करणः ।
तं त्वा स्वप्न तथा विद्म ।
यो ऽभद्रः स्वप्नः स्वप्नमयः पापस्तं द्विषते प्र हिण्मः ।।११।।

विद्मते स्वप्न जनित्रं गन्धर्वाणा पुत्रो ऽस्यप्सरोभ्यो
अधिजातो यमस्य करण: ।
तं त्वा स्वप्न तथा विद्म ।
यो ऽभद्र: स्वप्न: स्वप्नमय: पापस्तं द्विषते प्र हिण्म: ।।१२।।
।। तं त्वा स्वप्नेति त्रीणि ।।
तमस्मै गमयामस्तेनैनं विध्यामोभूत्यैनं विध्यामो निर्भूत्यैन
विध्याम: पराभूत्यैनं विध्यामो ग्राह्यैनं विध्यामस्तमस्यैनं
विध्यामोग्निनैनं क्रव्यादा वृश्चामो देवानामेनं घोरै: क्रुरै:
प्रेष्यैरभिप्रेष्यामो वैश्वानरस्यैनं दंष्ट्रयोरपिदध्म: ।।१३।।

१७-२५

द्यावापृथिवी अहोरात्रे नक्षत्र एष: ।
इदमहममुष्मिन्नामुष्यायणेमुष्या: पुत्रे दुष्वप्न्यं व्रजेत् ।
यदस्मास्वित्याष्टादशकी ।।१।।
मा प्र गाम पथो वयं मा यज्ञादिन्द्र सोमिन: ।
मान्त: स्थुर्नो अरातय: ।।२।।
यो यज्ञस्य प्रसाधनस्तन्तुर्देवेष्वातत: ।
तमाहुतमशीमहि ।।३।।
नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतं सपर्यत ।
दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शंसत ।।४।।
सा मा सत्योक्ति: परि पातु विश्वतो द्यावा च तत्र ततनन्नहानि च।
विश्वमन्यन्नि विशते यदेजति विश्वाहापो विश्वाहोदेति सूर्य ।।५।।
न ते अदेव: प्रदिवो वि वासति यदेतशेभि: प्रतरै रथर्यसि ।
प्राचीनमन्यदनुवर्तते रज उदन्येन ज्योतिषा यासि सूर्य ।।६।।

येन सूर्य ज्योतिषा बाधसे तमो जगच्च विश्वमभियर्षि भानुना ।
तेनास्मद्विश्वामनिराममनाहुतिमपामीवामप दुष्ष्वप्न्यं सुव ।।७।।
विश्वामनिराममीवामनाहुतिममुष्यामुष्यायणायामुष्याः पुत्राय प्रहिण्मः।।८।।

१७-२६

द्यावापृथिवी वहतं दुष्ष्वप्न्यं परा वहतं दुष्ष्वप्न्यम् ।
अमुष्यामुष्यायणायामुष्याः पुत्राय प्रहिण्मः ।।१।।
वाता पवमानौ वहतं दुष्ष्वप्न्यं परा वहतं दुष्ष्वप्न्यम् ।
अमुष्यामुष्यायणायामुष्याः पुत्राय प्रहिण्मः ।। २ ।।
इन्द्राग्नी वहतं दुष्ष्वप्न्यं परा वहतं दुष्ष्वप्न्यम् ।
अमुष्यामुष्यायणायामुष्याः पुत्राय प्रहिण्मः ।। ३ ।।
मित्रावरुणौ वहतं दुष्ष्वप्न्यं परा वहतं दुष्ष्वप्न्यम् ।
अमुष्यामुष्यायणायामुष्याः पुत्राय प्रहिण्मः ।। ४ ।।
भवाशर्वौ वहतं दुष्ष्वप्न्यं परा वहतं दुष्ष्वप्न्यम् ।
अमुष्यामुष्यायणायामुष्याः पुत्राय प्रहिण्मः ।। ५ ।।
देवाश्विना वहतं दुष्ष्वप्न्यं परा वहतं दुष्ष्वप्न्यम् ।
अमुष्यामुष्यायणायामुष्याः पुत्राय प्रहिण्मः ।। ६ ।।
देवा मरुतो वहत दुष्ष्वप्न्यं परा वहत दुष्ष्वप्न्यम् ।
अमुष्यामुष्यायणायामुष्याः पुत्राय प्रहिण्मः ।। ७ ।।
देवाः पितरो वहत दुष्ष्वप्न्यं परा वहत दुष्ष्वप्न्यम् ।
अमुष्यामुष्यायणायामुष्याः पुत्राय प्रहिण्मः ।। ८ ।।
देव सूर्य वह दुष्ष्वप्न्यं परा वह दुष्ष्वप्न्यम् ।
अमुष्यामुष्यायणायामुष्याः पुत्राय प्रहिण्मः ।। ९ ।।
देव चन्द्रमो वह दुष्ष्वप्न्यं परा वह दुष्ष्वप्न्यम् ।
अमुष्यामुष्यायणायामुष्याः पुत्राय प्रहिण्मः ।। १० ।।

देवा नक्षत्राणि वहत दुष्ष्वप्न्यं परा वहत दुष्ष्वप्न्यम् ।
अमुष्यामुष्यायणायामुष्याः पुत्राय प्रहिण्मः ।। ११ ।।
देवीरापो वहत दुष्ष्वप्न्यं परा वहत दुष्ष्वप्न्यम् ।
अमुष्यामुष्यायणायामुष्याः पुत्राय प्रहिण्मः ।। १२ ।।
देव विष्णो वह दुष्ष्वप्न्यं परा वह दुष्ष्वप्न्यम् ।
अमुष्यामुष्यायणायामुष्याः पुत्राय प्रहिण्मः ।। १३ ।।
देव त्वष्टर्वह दुष्ष्वप्न्यं परा वह दुष्ष्वप्न्यम् ।
अमुष्यामुष्यायणायामुष्याः पुत्राय प्रहिण्मः ।। १४ ।।
देव धातर्वह दुष्ष्वप्न्यं परा वह दुष्ष्वप्न्यम् ।
अमुष्यामुष्यायणायामुष्याः पुत्राय प्रहिण्मः ।। १५ ।।
देव सवितर्वह दुष्ष्वप्न्यं परा वह दुष्ष्वप्न्यम् ।
अमुष्यामुष्यायणायामुष्याः पुत्राय प्रहिण्मः ।। १६ ।।
देव पूषन् वह दुष्ष्वप्न्यं परा वह दुष्ष्वप्न्यम् ।
अमुष्यामुष्यायणायामुष्याः पुत्राय प्रहिण्मः ।। १७ ।।
देव बृहस्पते वह दुष्ष्वप्न्यं परा वह दुष्ष्वप्न्यम् ।
अमुष्यामुष्यायणायामुष्याः पुत्राय प्रहिण्मः ।। १८ ।।
देव प्रजापते वह दुष्ष्वप्न्यं परा वह दुष्ष्वप्न्यम् ।
अमुष्यामुष्यायणायामुष्याः पुत्राय प्रहिण्मः ।। १९ ।।
देव परमेष्ठिन् वह दुष्ष्वप्न्यं परा वह दुष्ष्वप्न्यम् ।
अमुष्यामुष्यायणायामुष्याः पुत्राय प्रहिण्मः ।। २० ।।
अहोरात्रे वहतं दुष्ष्वप्न्यं परा वहतं दुष्ष्वप्न्यम् ।
अमुष्यामुष्यायणायामुष्याः पुत्राय प्रहिण्मः ।। २१ ।।

*(इति एकानृचनामसप्तदशकाण्डे पञ्चमो ऽनुवाको )*

१७-२७

इन्द्रो वज्रमसिञ्चत वृत्राय हन्तवे ।
त्वष्टावज्रमसिञ्चत वृत्राय हन्तवे ।। १ ।।
यो वज्र: सो विश्वानरो यत् ते अग्नेर्वीर्यं
स विश्वाषाड् यन्ति आरम्भणं स वैश्वानर: ।। २ ।।
एतद् वा इदं सर्वं यत् एतानि त्रीणि ।। ३ ।।
विश्वानरो वैश्वानरो विश्वाषाट् ।। ४ ।।
सर्वाण्येव पुण्याल्लोकानवरुन्द्धे सर्वाश्च देवता
य एवं विद्वाननडुहो व्रतं बिभर्त्ति ।। ५ ।।

१७-२८

तमादत्त तमुदैङ्गयत् तमुपामिमीत प्र भराणीति ।
सोम्यहस्तादमुच्यत दैवो वज्र: क्षुर: पवि: सहस्रपृष्टिर्दिवस्पृश: ।।२।।
स संसिजानोतिष्ठद्धरुहरा भवन्नेतदिच्छन् ।। ३ ।।
स समुद्रं प्राविशत् स समुद्रमदहत् ।। ४ ।।
तस्मात् समुद्रो दुर्गरपि व वैश्वानरेण हि दग्ध: ।। ५ ।।
स शक्र उदक्रामत् सोध्यायदसौ वज्रै: आसुरै:
सपद्यदेवासुरक्षति व्रतं चराणीति स व्रतमचरत् ।। ६ ।।
सो ऽणु: कृशो भवति तस्मादणु: कृशो व्रतचारी
भवत्यवडुयि कृशो भूत्वेन्द्रो असुरानुपावृङ्क्त ।। ७ ।।
स परमेष्ठिन् उपाधावत् । स प्रजापतिम् उपाधावत् ।
स विष्णुम् उपाधावत् । स गृहपतिम् उपाधावत् ।
स विराजम् उपाधावत् । स स्वराजम् उपाधावत् ।
स सम्राजम् उपाधावत् । सो ऽहरात्रे उपाधावत् ।
सो ऽर्धमासान् उपाधावत् । स मासान् उपाधावत् ।
स ऋतून् उपाधावत् । स आर्त्तवान् उपाधावत् ।

स ऋषीन् उपाधावत् । स आर्षेयान् उपाधावत् ।
सो ऽङ्गिरसान् उपाधावत् । सो आङ्गिरसान् उपाधावत् ।
सो अथर्वणम् उपाधावत् । सो आथर्वणान् उपाधावत् ।।८।।
विश्वान्देवान् मरुद्गणान् तमन्दसान्दवं स्तोम प्रथमोथेन्द्राग्नी ।
तमुपामन्त्रयेते पुण्यया वाचा क्रूरया वाचा हहिष्या वाचा स
सावित्न्यन् । अथैषा मोपचामे निष्यसीति । स उपशाम्यत् ।
तस्माद् यो ब्रह्म वेदोतापस्स तं शमयति दोहयत् एवैनाम् ।।९।।
तमृक्सामाभ्यां उत्तभितो यजुषा यज्ञेन गायत्रेण वामदेव्येन च।।१०।।
एतद् वा इदं सर्वं यद् ऋक्सामौ एताविन्द्रस्य बाहू ।
तमादत्त तं परूंष्या धत्ते । प्रजा वै समृद्धिमक्षतिं पशव: परूंषि ।
प्रजामेव समृद्धिमक्षतिमव रुन्द्धे य एवं वेद ।। ११ ।।

१७-२९

स दिक्षु प्रत्यतिष्ठत् ।। १ ।।
दिश एवानु प्रति तिष्ठति य एवं वेद ।। २ ।।

१७-३०

स विश्वामाह्यक्रमत ।
एष वै विश्वाषाड्द्यौरेवासौ ।। १ ।।
एते वै सर्वे पुण्यलोका: सर्वाश्च देवता: स नाधारयत् ।। २ ।।
सर्वानेव पुण्याल्लोकानवरुन्द्धे ।। ३ ।।
सर्वाश्च देवता य एवं वेद ।। ४ ।।

१७-३१

स विश्वानरे ऽक्रमत ।। १ ।।
एष वै विश्वानरो यदन्तरिक्षं समुद्र: ।। २ ।।
एते वै पथयो देवयानान् य: सूर्यस्य रश्मय: ।। ३ ।।

स: पथिषु देवयानेषु श्रीयते
प्र पथो देवयानान् जानाति य एवं वेद ।। ४ ।।

१७-३२

स वैश्वानरे ऽक्रमत ।। १ ।।
एष वै वैश्वानर उदयन् पवमान: ।। २ ।।
एते वै सर्वानुप्रसारो द्रुह्यते । स नाधारयत् ।। ३ ।।
ध्रियन्ते ऽस्मिन् प्राणा य एवं वेद ।। ४ ।।

१७-३३

स वृत्रे ऽक्रमत ।। १ ।।
तस्य वृत्रस्याङ्गा पर्वाणि शरीराण्यभिद्यन्त ।
एतानि वै वृत्रस्याङ्गा: पर्वाणि शरीराणि
यदीमे पर्वता: ।। २ ।।
स यत्र हृदा मनसा कामयेति इह मे राध्यन्ते
तदस्मै राध्यते ।। ३ ।।
अस्यामेव प्रतिष्ठामायतनं विन्दते य एवं वेद ।। ४ ।।

१७-३४

स देवानागच्छत्तं देवा अब्रुवन्नाशं सामेक्तन्मे तद् व्रतम् ।
आ हिरण्येषु पशुषु ग्राम्येष्वत्येति ।। १ ।।
सो ऽनड्वाहम् उपाधावत् ।
तमनड्वानब्रवीत् किं मे प्रतीवाहो भविष्यसीति वरं वृणीष्वेति
स वरं अवृणीत ।। २ ।।
बुध्नलोको ऽसानि बुध्नस्य विष्टपे श्रिया इति ।। ३ ।।
षोडशो वा इत ऊर्ध्वो लोको ऽयद् बुध्नस्य विष्टप: ।। ४ ।।
बुध्नोलोको भवति बुध्नस्य विष्टपे श्रीयते य एवं वेद ।।५।।

१७-३५

अथाहीन आश्वत्थादब्रवीत् ।। १ ।।

न अब्राह्मण निद्यानि यादेनमश्रृणुन् ये जुष्टपूर्तेनं व्यभवानीति कृता वा एषा मनुष्येषु तरति यदनड्वान् यदनड्व्रतीन् ।।२।।

य एवं विदुषो साधुकीर्तयतीष्टमेवास्य पूर्तिमायां सं वृङ्क्ते।।३।।

इन्द्रो वाग्रे ऽसुरेष्वनड्वान्व्रतमचरत्त्वेषामिष्टपूर्तिमायां सं वृक्तानिन्द्रं ह्येनम् ।। ४ ।।

सो ऽनडुहोवहेक्रमत सर्वाल्लोकान् प्राजानात् ।।५।।

यावस्य पूर्वपादौ तौ पूर्वपक्षौ यावपरपादौ तावपरपक्षौ ।।६।।

यावस्यौष्ठौ तौ पुरोडासौ ये नासिके तौ स्रुवौ ये अस्याक्षौ तौ सूर्याचन्द्रमसौ ये निमेषस्तावहोरात्रे यानि वक्ष्णानि ते सूर्यस्य रश्मय: स:।।७।।

द्रोणकलश: शिर: सोमो राजा मस्तिष्क: ।।८।।

ये ऽस्य श्रृङ्गे तद् ऋतं सत्यम् ।। ९ ।।

ध्रुवं वा ऋतं सत्यम् ।। १० ।।

तस्माद् एते ध्रुवे ।। ११ ।।

ध्रुवमेव ऋतं सत्यमनु प्रति तिष्ठति य एवं वेद ।।१२।।

१७-३६

यावस्य कर्णौ सा श्रद्धा ।। १ ।।

चरा ऽचरा वै श्रद्धा तस्मात्कर्णौ मुहुर्वरीवर्जयति ।। २ ।।

श्रद्धते ऽस्मै श्रद्धानी यो भवति य एवं वेद ।। ३ ।।

१७-३७

यास्य दक्षिणा हनु: सा जुहूर्या ददर्यासम् ।।१।।

या सव्या सोपभृद् य: कण्ठ: सा ध्रुवा ।। २ ।।

अग्निरास्यं विद्युज्जिह्वा मरुतो दन्ता: पवमान: प्राण: ।।३।।

एषा वै मायामाहुर्वसोर्धारिति यदन्त्रगुदम् ।
वसोरेव धारां समृद्धिमक्षितिमवरुन्द्धे य एवं वेद ।। ४ ।।

१७-३८

यदस्य चर्म तदभ्रं यानि लोमानि तानि नक्षत्राणि ।। १ ।।
स्वेदो वर्षमूष्माणि ह्रारो यदोषधयश्च वनस्पतयश्चोवध्वम्।।२ ।।
यो ऽस्य दक्षिणोर्धोस्तौ शारदौ मासौ या: सव्यास्तौ हैमन्तौ ।।३ ।।
यो ऽस्य जघनार्ध: तौ शैशिरौ मासौ य: पूर्वार्धस्तौ वासन्तौ।।४ ।।
यदस्य पृष्ठं तौ ग्रैष्मौ मासौ यन्मध्यं तौ वार्षिकौ ।। ५ ।।
संवत्सरो वा एष संभृतो येनानड्वान् येननडद्वुतीन् ।।६ ।।
कल्पन्ते अस्माऋतवोनर्तूष्वा वृश्चत
ऋतूनां प्रिय भवति य एवं वेद ।।७ ।।

१७-३९

तपश्च वरश्च महश्च यशश्च
यदस्मिन्नन्तर्ऋच: सामानि यजूंषि ब्राह्मणं ।। १ ।।
ब्रह्म चैव लोकं चावरुन्द्धे
ब्राह्मणवर्चसी भवति य एवं वेद ।। २ ।।

१७-४०

अथयदस्मिन्नन्त: ।

शतं श्राद्धा: शतं दीक्षा शतं यज्ञा: शतं दक्षिणा: ।।१ ।।
शतं भूतय: शतं पुष्टय: शतं प्रभूतय: शतं समृद्धय: ।। २ ।।
शतं अभूतय: शतं निर्भूतय: शतं पराभूतय: शतमसमृद्धय: ।।३ ।।
शतं सिम्ध्यानि शतं अब्गणानि शतं तमांसि शतं रुधिराणि।।४ ।।
य एवं विदुषो साधुकीर्तय त्येतैरेवैनं तमोभि: प्रोर्णोति ।।५ ।।
यदस्यप्राचीनं नाभ्यास्तेन द्विषन्तमाविशति ।।६ ।।
अथ यदस्य प्रतीचीन नाभ्यास्तेन मृत्युं नाष्ट्रामवर्त तरति प्र पथो
देवयानां जानाति य एवं वेद ।। ७ ।।

१७-४१

यथ यदस्मिन्नन्त: ।

शतमर्धमासा: शतं मासा: शतमृतव: शतं आर्तवा: ।। १ ।।
शतमिदावत्सरा: शतमनुवत्सरा: शतं परिवत्सरा: शतं संवत्सरा:।।२।।
शतं ब्रह्माणि शतं कर्माणि शतं ज्योतींषि शतममृतानि ।।३।।
शतं प्राणा: शतमपाना: शतं व्याना: शतं समाना: ।।४।।
ज्योग् जीवति सर्वमायुरेति न पुरा जरस: प्र मीयते य एवं वेद।।५।।

१७-४२

अथ यदस्मिन्नन्त: ।।१।।

शतं गायत्रा: शतं साह्ला: शतं त्रिरात्रा: शतं अतिरात्रा:।।२।।
शतं अग्निष्टोमा: शतं द्वादशाहा: शतं षडशिन: शतं सर्वपृष्टा:।।३।।
शतं राजसूया: शतं वाजपेया: शतं कामप्रा: सहस्रं सत्रायणानि।।४।।
एष बा अनड्वान् सर्वाङ्ग: सर्वात्मा सर्वपरु: सर्वपान् मध्यत:
प्रत्यतिष्ठात् ।।५।।
ऋक्सामभ्यामुत्तभितो यजुषा यज्ञेन गायत्रेण ब्रह्मणा प्रथत उपरिष्ठात्।
प्रथते प्रजया पशुभिर्गृहै र्धनेन य एवं वेद ।। ७ ।।

१७-४३

इन्द्रो बलेनासि परमेष्ठी व्रतेन येन गौस्तेन वैश्वदेव: ।।१।।
यो ऽस्माद्वेष्टी यं च वयं द्विष्मस्तस्य प्राणान् सं बर्ह
तस्य प्राणान् वि बर्ह ।।२।।
इन्द्रोसीन्द्रस्य रूपमसि प्रजापतिरसि परमेष्ठिरसि ।
स्वरसि स्वर्गोसि स्वर्गोलोकोसि स्वर्गं मा लोकं गमय।
येनास्यवहस्तेन यज्ञो येन वहन्ति तेन लोक: ।।३।।
येनैनं पश्यति तेन विश्वो येनैनं गमयति तेन सर्व: ।।४।।

ये ऽस्य पादा: सा प्रतिष्ठा ।
प्रति तिष्ठसि प्रजया पशुभिर्गृहैर्धनेन
य एवं विद्वाननडुहो व्रतं बिभर्ति ।। ५ ।।

*(इति एकानृचनामसप्तदशकाण्डे षष्ठो ऽनुवाको)*

१७-४४

नडमा रोह न ते अत्र लोक इदं सीसं भागधेयं त एहि ।
यो गोषु यक्ष्म: पुरुषेषु यक्ष्मस्तेन त्वं साकमधराङ् परेहि ।।१।।
अघशंसदु:शंसौ करेणानुकरेण च ।
मृत्युंश्च सर्वांस्तेनेतो यक्ष्मांश्च निरजामसि ।। २ ।।
निरितो मृत्युं निर्ऋतिं निर्यक्ष्ममजामसि ।
यो नो द्वेष्टि तमद्ध्यग्ने: ऽक्रव्याद् यं द्विष्मस्तं ते प्रसुवाम: ।। ६ ।।
यद्यग्नि: क्रव्याद् यदि वा व्याघ्र इमं गोष्ठमन्योका आ विवेश ।
तं माषाज्यं कृत्वा प्र हिणोमि दूरं स गच्छत्वप्सुषदोप्यग्नीन् ।। ४ ।।
यत् त्वा क्रुद्धा: प्रचक्रुर्मन्युना पुरुषे मृते ।
सुकल्पमग्ने तत्त्वया पुनस्त्वोद्दीपयामसि ।। ५ ।।
पुनस्त्वादित्या रुद्रा वसव: पुनर्ब्रह्मा वसुनीतिरग्ने ।
पुनस्त्वा ब्रह्मणस्पतिराधाद् दीर्घायुत्वाय शतशारदाय ।। ६ ।।
यो अग्नि: क्रव्यात् प्रविवेश नो गृहमिमं पश्यन्नितरं जातवेदसम् ।
तं हरामि पितृयज्ञाय दूरं स घर्ममिन्धां परमे सधस्थे ।। ७ ।।
क्रव्यादमग्निं प्र हिणोमि दूरं यमराज्ञो गच्छतु रिप्रवाह: ।
इहैवायमितरो जातवेदा देवो देवेभ्यो हव्यं वहतु प्रजानन् ।।८।।
क्रव्यादमग्निमिषितो हरामि जनान् दृंहन्तं वज्रेण मृत्युम् ।
नि तं शास्मि गार्हपत्येन विद्वान् पितृणां लोके अपि भागो अस्य ।।९।।
क्रव्यादमग्निं शशमानमुक्थ्यं प्र हिणोमि पथिभि: पितृयाणै: ।
मा देवयानै: पथिभिरा गा अत्रैवैधि पितृषु जागृहि त्वम् ।।१०।।

१७-४५

समिन्धते संकसुकं स्वस्तये शुद्धा भवन्त: शुचय: पावका: ।
जहाति रिप्रमत्येन एति समिद्धो अग्नि: सुपुना पुनातु ।।१।।
देवो अग्नि: संकसुको दिवस्पृष्ठान्यारुहत् ।
मुच्यमानो निरंहसो मोह्यस्माङ् अशस्त्या: ।। २ ।।
अस्मिन् वयं संकसुके अग्नौ रिप्राणि मृज्महे ।
अभूम यज्ञिया: शुद्धा: प्र ण आयूंषि तारिषत् ।। ३ ।।
संकसुको विकसुको निर्ऋथो यश्च निस्वर: ।
ते ते यक्ष्मं सवेदसो दूराद् दूरमुचुच्युवु: ।। ४ ।।
अन्येभ्यस्त्वा पुरुषेभ्य: गोभ्यो अश्वेभ्यस्त्वा ।
क्रव्यादं निर्णुदामस्यग्निं जीवितयोपनम् ।। ५ ।।
यो नो अश्वेषु वीरेषु यो गोषु यो अजाविषु ।
क्रव्यादं निर्णुदामस्यग्निर्यो जनयोपन: ।। ६ ।।
समिद्धो अग्नि आहुत स नो माभ्यपक्रमी: ।
अत्रैव दीदिहि द्यवि ज्योक् च सूर्याय दृशे ।। ७ ।।
यस्मिन् देवा अमृजत यस्मिन् मनुष्या उत ।
तस्मिन् घृतस्तावो मृष्ट्वा त्वमग्ने दिवं रुह ।। ८ ।।
सीसे मृड्ढ्वं नडे मृड्ढ्वमग्नि: संकसुकश्च य: ।
अथो अव्यां रामायां शीर्षक्तिमुपबर्हणे ।। ९ ।।
सीसे मलं सादयित्वा शीर्षक्तिमुपबर्हणे ।
अव्यामसिक्न्यां मृष्ट्वा शुद्धा भवन्तु यज्ञिया: ।। १० ।।

१७-४६

परं मृत्यो अनु परेहि पन्थां यस्त एष इतरो देवयानात् ।
चक्षुष्मते शृण्वते ते ब्रवीमीहेमे वीरा बहवो भवन्तु ।। १ ।।

इमे जीवा वि मृतैराववृत्रन्नभूद् भद्रा देवहूतिर्नो अद्य ।
प्राञ्चो अगाम नृतये हसाय सुवीरासो विदथमा वदेम ।। २ ।।
इमं जीवेभ्य: परिधिं दधामि मैषां नु गादपरो अर्थमेतम् ।
ज्योग्जीवन्त: शरद: पुरूचीस्तिरो मृत्युं दधतां पर्वतेन ।। ३ ।।
यथाहान्यनुपूर्वं भवन्ति यथर्तव ऋतुभिर्यन्ति साकम् ।
यथा नु पूर्वमपरो जहात्येवा त्वष्टरायूंषि कल्पयैषाम् ।। ४ ।।
आ रोहतायुर्जरसं वृणाना अनुपूर्वं यजमाना यति स्थ ।
तान् वस्त्वष्टा सुजनिमा सजोषा: सर्वमायुर्नयतु जीवनाय।। ५ ।।
अश्मन्वती रीयते सं रभध्वं वीरयध्वं प्र तरता सखाय: ।
अत्रा जहीत ये असन्दुरेवा अनमीवानुत्तरेमाभि वाजान् ।। ६ ।।
उत्तिष्ठता प्र तरता सखायोश्मन्वती स्यन्दते नदीयम् ।
अत्रा जहीत ये असन्नशिवा: शिवान् स्योनानुत्तरेमाभि वाजान् ।। ७।।
वैश्वदेवीं सूनृतामा रभध्वं शुद्धा भवन्त: शुचय: पावका: ।
अतिक्रामन्तो दुरितानि विश्वा शतं हिमा: सर्ववीरा मदेम।। ८ ।।
उदीचीनै: पथिभिर्वायुमद्भिरतिक्रामन्तोवरान् परेभि: ।
त्रि: सप्त: कृत्व ऋषय: परेता मृत्युं प्रत्यौहन् पदयोपनेन।।९।।
मृत्यो: पदं योपयन्त एत द्राघीय आयु: प्रतरं दधाना: ।
आसीना मृत्युं नुदता सधस्थे ऽथ जीवासो विदथमा वदेम ।।१०।।

१७-४७

इमा नारीरविधवा: सुपत्नीराञ्जनेन सर्पिषा सं विशन्तु ।
अनश्रवो अनमीवा: सुरत्ना आ रोहन्तु जनयो योनिमग्रे ।। १ ।।
इमे वीरा अविधवा: सुजानय आञ्जनेन सर्पिषा सं स्पृशंताम् ।
अनश्रवोऽनमीवा: सुरत्ना: स्योनाद्योनेरधि तल्पं रुहेयु: ।। २ ।।
व्याकरोमि हविषाहमेतौ तौ ब्रह्मणा व्यहं कल्पयामि ।
स्वधां पितृभ्यो अजरां कृणोमि दीर्घेणायुषा समिमान्सृजामि।।३।।

यो नो अग्नि: पितरो हृत्स्वन्तराविवेशामृतो मर्त्येषु ।
मय्यहं तं प्ररि गृह्णामि देवं मा सो अस्मान् द्विक्षत मा वयं तम्।।४।।
अपावृत्याग्निं गार्हपत्यं क्रव्यादा: प्रेत दक्षिणा: ।
प्रियं पितृभ्य आत्मने ब्रह्मणे कृणुत प्रियम् ।। ५ ।।
द्विभागधनमादाय प्र क्षिणात्यवर्त्या ।
अग्नि: पुत्रस्य ज्येष्ठस्य य: क्रव्यादनिराहित: ।। ६ ।।
यत् कृषते यद् वनुते यच्च वस्नेन विन्दते ।
सर्वं मर्त्यस्य तन्नास्ति क्रव्याच्चेदनिराहित: ।। ७ ।।
अयज्ञियो हतवर्चा भवति नैनेन हविरत्तवे ।
छिनत्ति कृषिं गां धनं यं क्रव्यादनुवर्त्तते ।। ८ ।।
मुहुर्गृध्यै: प्र वदत्यार्तिं मर्त्यो नीत्य च ।
क्रव्यादमग्निरन्तिकादनुविद्वान् वितावति ।। ९ ।।
ग्राह्या गृहा: सं सृज्यन्ते यत् स्त्रिया म्रियते पति: ।
ब्रह्मैव विद्वानेष्यो य: क्रव्यादं निरादधत् ।। १० ।।

१७-४८

यद् रिप्रं दुरितं चकृम यच्च दुष्कृतम् ।
आपो मा तस्माच्छुन्धन्त्वग्ने: संकसुकाच्च यत् ।। १ ।।
ता अधरादुदीचीराववृत्रन् प्रजानती: पथिभिर्देवयानै: ।
पर्वतस्य ऋषभस्याधि पृष्ठे नवाश्चरन्ति सरित: पुराणी: ।
अग्ने अक्रव्यान् निष्क्रव्यादं नुदा: देवयजनं वह ।। २ ।।
इमं क्रव्यात् प्रविवेशायं क्रव्यादमन्वगात् ।
व्याघ्रौ कृत्वा नानानं तं हरामि शिवापरम् ।। ३ ।।
अन्तर्धिर्देवानां परिधिर्मनुष्याणामग्निर्गार्हपत्य उभयानन्तरा श्रित:।
जीवानामग्ने प्र तिर दीर्घमायु: पितृणां लोकमुपयन्तु ये मृता: ।।४।।

सुगार्हपत्यो वितपन्नरातीरुषामुषा श्रेयसीं श्रेयसीं दधत् ।
सर्वानग्ने सहमान: सपत्नानैषामूर्जं रयिमस्मासु धेहि ।। ५ ।।
इममिन्द्रं वह्निं पप्रिमन्वारभध्वं स वो निर्विद्वान् विजहाति मृत्युम् ।
तेनाप हत शरुमापतन्तं तेन रुद्रस्य परि पातास्ताम् ।। ६ ।।
अहोरात्रे अन्वेषि बिभ्रत् क्षेम्यस्तिष्ठन् प्रतरण: सुवीर: ।
अनातुरा: सुमनसस्तल्प बिभ्रज्ज्योगेव न: पुरुषगन्धिरेधि ।। ७ ।।
ते देवेष्वा वृश्चन्ते पापं जीवन्ति सर्वदा ।
क्रव्याद् यमग्निरन्तिकादनुविद्वान्वितावति ।। ८ ।।
प्रेव मनसा पतति मुहुरा वर्तते पुन: ।
क्रव्याद्यमग्निरान्तिकादश्व इवानुवपते नडम् ।। ९ ।।

१७-४९

ये ऽश्रद्धया धनकाम्या क्रव्यादा समासते ।
ते वा अन्येषां कुम्भीं पर्जादधतु सर्वदा ।। १ ।।
इषीकां जरतीं इष्ट्वा तिल्पिञ्जं दण्डनं नडम् ।
तानिन्द्र इध्मं कृत्वा यमस्याग्निं निरादधौ ।। २ ।।
अवि: कृष्णा भागधेयं पशूनां सीसं क्रव्यादुत चन्द्रं त आहु: ।
माषा: पिष्टा भागधेयं हव्यं ते अरण्यान्या गह्वरं सचस्व ।। ३ ।।
प्रत्यञ्चमर्कं प्रत्यर्पयित्वा प्रविद्वान् पन्थां वि ह्याचकार ।
परामीषामसून् दिदेश दीर्घेणायुषा समधादिहेमाम् ।। ४ ।।
अनड्वाहं प्लवमन्वारभध्वं स वो निर्वक्षद् दुरितादवद्यात् ।
आ रोहत सवितुर्नावं हिरण्यै: षड्भिरुर्वीभिरमतिं तरेम ।। ५ ।।
गोभिष्टरेमामतिं दुरेवां यवेन क्षुधं पुरुहूत विश्वान् ।
वयं राजान: प्रथमा धनानामरिष्टासो वृजनीभिस्तरेम ।। ६ ।।
पूर्णं नारि प्र हराभि कुम्भमपां रसमोषधीनां घृतस्य ।
इमान् पातॄनमृतेना समङ्ग्धि स्थिरावीरा: सुमनसो भवन्तु ।। ७ ।।

*(इति एकानृचनामसप्तदशकाण्डे सप्तमो ऽनुवाक:)*

१७-५०

पुमान् पुंसो अधि तिष्ठ चर्म तत्र ह्वयस्व यतमा प्रिया ते ।
यावन्तावग्रे प्रथमं समेयथुस्तद्वां वयो यमराज्ये समानम् ।। १ ।।
तावद्वां तेजस्तति वीर्याणि तावच्चक्षुस्ततिधा वाजिनानि ।
अग्नि: शरीरं सचते यदैधो अधा पक्वान् मिथुना सं भवाथ: ।। २ ।।
समस्मिंल्लोके समु देवयाने सं स्मा समेतं यमराज्येषु ।
पूतौ पवित्रैरुप तदु ह्वयेथां यद्यद्रेतो अधि वां संबभूव ।। ३ ।।
आप: पुत्रासो अभि सं विशध्वमिमं जीवं जीवधन्या: समेत्य ।
तासां भजध्वममृतं यमाहुर्यमोदनं पचति वो जनित्री ।। ४ ।।
यं व: पिता पचति यं च माता रिप्रान्निर्मुक्त्यै शमलाच्च वाच:।
स ओदन: शतधार: स्वर्ग उभे व्याप नभसी महित्वा ।। ५ ।।
उभे नभसी उभयांश्च लोकान् ये यज्वनामभिजिता: स्वर्गा: ।
तेषां ज्योतिष्मान् मधुमान् यो अग्रे तस्मिन् पुत्रैर्जरसि सं श्रयेथाम्।।६।।
प्राचींप्राचीं प्रदीशमा रभेथामेतं लोकं श्रद्दधाना: सचन्ते ।
मिमाथां पात्रं तद्वां पूर्णमस्तु स वां पक्व: पितृयाणेन्यायत् ।।७।।
दक्षिणां दिशमभि नक्षमाणौ पर्यावर्तेथामभि पात्रमेतत् ।
तस्मै वां यम: पितृभि: संविदान: पक्वाय शर्म बहुलं नि यच्छात्।।८।।
प्रतीची दिशामियमिद् वरं वां यस्यां सोमो अधिपा मृडिता च ।
तस्यां मिमाथां सुकृत: परेथामधा पक्वेन सह सं भवेम ।। ९ ।।
उत्तरं राष्ट्रं प्रजयोत्तरावद् दिशामुदीची कृणवन्नो अग्रम् ।
पाङ्क्तं छन्द: परुषो बभूव विश्वैर्विश्वाङ्गै: सह सं भवेम ।।१०।।

१७-५१

ध्रुवेयं विराण्नमो अस्त्वस्यै शिवा पुत्रेभ्य उत मह्यमस्तु ।
सा नो देव्यदिते विश्ववार इर्य इव गोपा अभि रक्ष पक्वम् ।।१ ।।

पितेव पुत्राङ् अभिसं स्वजस्व न: शिवा नो वाता उप वान्तु शग्मा: ।
यमोदनं पचतो देवते इह तं नस्तप उत सत्यं च वेत्तु ।। २ ।।
यद्यत् कृष्ण: शकुन एह गत्वा त्सरं विषक्तं बिल आससाद ।
दासी वा यदार्द्रहस्ता त्समङ्क्त अलूखलं मुसलं शुम्भताप: ।।३ ।।
अयं ग्रावा पृथुबुध्नो वयोधा: पूत: पवित्रैरप हन्तु रक्ष: ।
आ रोह चर्म महि शर्म यच्छ मा दंपती पौत्रमघं नि गाताम् ।।४।।
वनस्पति: सह देवैर्न आगन् रक्ष: पिशाचाङ् अपबाधमान: ।
स उच्छ्रयातै: प्र वदाति वाचं तेन लोकाङ् अभि सर्वान् जयेम ।।५।।
सप्त मेधान् पशव: पर्यगृह्णन् य एषां मेधस्वानुतयश्चकर्श ।
त्रयस्त्रिंशद् देवतास्तान् सचन्ते स न: स्वर्गमभि नेष लोकम्।।६।।
स्वर्गं लोकमभि नो नयासि सं जायया सह पुत्रै: स्याम ।
गृह्णामि हस्तमन्वैत्वत्र मा नस्तारीन्निर्ऋतिर्मो अराति: ।। ७ ।।
ग्राहिं पाप्मानमति ताङ् अयाम तमो व्यस्य प्र वदासि वल्गु ।
वानस्पत्य: उद्यतो मा जिहिंसीर्मा तण्डुलं वि शरीर्देवयन्तम्।।८।।
विश्वव्यचा घृतपृष्ठो भविष्यन् सयोनिर्लोकमुप याहि विद्वान् ।
वर्षवृद्धमुप यच्छ शूर्पं तुषं पलावान् अप तद् विनक्तु ।। ९ ।।
त्रयो लोका: संमिता ब्रह्मणेन द्यौरेवासौ पृथिव्यन्तरिक्षम् ।
अंशून् गृभीत्वानु संरभेथामा प्यायन्तां पुनरा यन्तु शूर्पम् ।।१०।।

## १७-५२

पृथग्रूपाणि बहुधा पशूनामेकरूपो भवति सं समृद्ध्या ।
एतां त्वचं लोहिनीं तां नुदेथां ग्रावा शुन्धाति मलग इव वस्त्रा।।१।।
जनित्रीव प्रति हर्यासि सूनुं सं त्वा दधामि पृथिवीं पृथिव्या ।
उखा: कुम्भीर्वेद्यां सं चरन्तां यज्ञायुधैराज्येनातिषक्ता ।। २ ।।
भूम्यां त्वा भूमिमधिधारयामि तनू: समानी विकृता त एषा ।
यद्यद् द्युत्तं लिखितमर्पणं च तेन मा सुस्त्रोरपि तद् वपामि।।३।।

अग्नि: पचन् रक्षतु त्वा पुरस्तादिन्द्रो अस्माद् दक्षिणतो मरुत्वान् ।
सोमस्त्वा दृंहाद्धरुणे प्रतीच्या उत्तरात्त्वा वरुण: सं ददातै ।। ४ ।।
आ यन्तु दिव: पृथिवीं सचन्ते भूम्या: सचन्ते उर्वन्तरिक्षम् ।
शुद्धा: सतीस्ता उत शुन्धन्त एव ता न: स्वर्गमभि लोकं नयन्तु।।५।।
पूता: पवित्रै: पवन्ते अभ्राद् दिवं च यन्ति पृथिवीं च लोकान् ।
ता जीवला जीवधन्या: प्रतिष्ठा: पात्र आसीक्ता: पर्यग्निरेनाम्।।६।।
उतेव प्रभ्वीरुत संमितास उत शुक्रा: शुचयश्चामृतास: ।
ता ओदनं दंपतिभ्यां प्रशिष्टा आप: शिक्षन्ती: प्रवता सुनाथा:।।७।।
उद्योधन्त्यभि वल्गन्ति तप्ता: फेनमस्यन्ति बहुलाञ्च बिन्दून् ।
योषेव दृष्ट्वा पतिमृत्वियायैतैस्तण्डुलैर्भवता समाप: ।। ८ ।।
संख्याता स्तोका: पृथिवीं सचन्ते प्राणापानै: संमिता ओषधीभि:।
असंख्याता ओप्यमाना: सुवर्णा: सर्वं समापं शुचय: शुचित्वम्।।९।।
उत्थापय सीदतो बुध्न एनानद्भिरात्मानमपि सं सृजन्ताम् ।
अमासि पात्रैरुदकं यदेतन्मितास्तण्डुला: प्रदिशो यदीमा:।।१०।।

१७-५३

प्र यच्छ पर्शुं त्वरया हरन्त्वहिंसन्त ओषधीर्दान्तु पर्वन् ।
सोमो यासां परि राज्यं बभूवामन्युता वीरुधो मे भवन्तु ।। १ ।।
नवं वर्हिरोदनाय स्तृणीत प्रियं हृदश्चक्षुषो वल्गवस्तु ।
तत्र देवा: सह दैवीर्विशन्त्विमं प्राश्नन्तु दक्षिणतो निषद्य ।।२।।
वनस्पते स्तीर्णमा सीद बर्हिरग्निष्टोमै: संमितो देवताभि: ।
त्वष्ट्रेव रूपं सुकृतं स्वधित्यैना एहा: परि पात्रे ददृश्राम् ।। ३ ।।
धर्ता ध्रियस्व धरुणे पृथिव्या अच्युतं त्वा देवताश्च्यावयन्तु ।
तं दंपती जीवन्तौ जीवपुत्रौ उद्वासयात: पर्यग्निधानात् ।। ४ ।।
षष्ठ्या शरद्भि: परि दध्म एतं स्व: पक्वेनाभ्यश्नवातै: ।
उपैनं पुत्रा पितरश्चसीदानिमं स्वर्गं गमयान्तमग्ने: ।। ५ ।।

सर्वान् समागा अभिजित्य लोकान् यावन्त: कामा: समतीतृपस्तान् ।
वि गाहेथामायवनं च दर्विरेकस्मिन् पात्रे अध्युद्धरैनम् ।। ६ ।।
उप स्तृणीहि प्रथया पुरस्ताद् घृतेन पात्रमभि धारयेदम् ।
वाश्रेवोस्रा तरुणं स्तनस्युमिमं देवासो अभिहिंकराथ ।। ७ ।।
उपास्तरीरकरो लोकमेतमुरु: प्रथतामसम: स्वर्ग: ।
तस्मिन् सुपर्णो महिषच्छ्रयाते देवा एनं देवताभ्य: प्र यच्छान् ।। ८ ।।
यद्यज्जाया पचति त्वत् पर:पर: पतिर्वा जाये त्वत् तिर: ।
सं तत् सृजेथां सह वां तदस्तु संराधयन्तौ सह लोकमेतम्।।९।।
यावन्तो अस्या: पृथिवीं सचन्ते अस्मत् पुत्रा: परि ये संबभूवु: ।
सर्वांस्तान् उप पात्रे ह्वयेथां नाभिं जानाना: शिशव: समायान्।।१०।।

१७-५४

वसोर्या धारा मधुना समक्ता घृतेन मिश्रा अमृतस्य नाभय: ।
सर्वास्ता अव रुन्धे स्वर्ग: षष्ट्यां शरत्सु निधिपा अभीच्छात् ।। १ ।।
निधिं निधिपा अभ्येनमिच्छादनीश्वरा अभित: सन्त्वन्ये ।
अस्माभिर्दत्तो निहित: स्वर्गस्त्रिभि: काण्डैस्त्रीन्स्वर्गानरुक्षत् ।। २ ।।
अग्नी रक्षस्तपतु यद् विदेवं क्रव्यात् पिशाच इह मा प्र पास्त ।
नुदाम एनमव रुध्मो अस्मदादित्या नो अङ्गिरस: सचन्ताम् ।। ३ ।।
आदित्येभ्यो अङ्गिरोभ्यो मध्विदं घृतेन मिश्रं प्रति वेदयाम: ।
शुद्धहस्तौ ब्राह्मणस्यानिहत्यैनं स्वर्गं सुकृतामयैनम् ।। ४ ।।
इदं काण्डमुत्तमं प्रापमस्य यस्माल्लोकात् परमेष्ठी समाप ।
आ सिञ्च सर्पिर्घृतवत् समङ्ग्ध्येष भागो अङ्गिरसो नो अत्र।।५।।
सत्याय च तपसे देवताभ्यो निधिं शेवधिं परि दध्म एतम् ।
मा नो द्युतेव गान्मा समित्यां मा स्मान्यस्मा उत्सृजता पुरा मत् ।। ६ ।।

न किल्विषमत्र नाधारो अस्ति न यन्मित्रै: सममममान एति ।
पक्तारं पक्व: पुनरा विशास्यनूनं पात्रं निहितं न अस्तु ।। ७ ।।
अहं पचाम्यहमिद्ददामि ममेदु कर्मन् करुणेषि जाया: ।
कौमारो लोको अजनिष्ट पुत्रोन्वारभेथां वय उत्तरावत् ।। ८ ।।
प्रियं प्रियाणां कृणवाम या तत् तमस्ते यन्तु यतमे द्विषन्ति ।
धेनुरनड्वान् वयो आयदन्यत् पौरुषेयमप मृत्युं नुदन्तु ।। ९ ।।
समग्नयो विदुरन्यो अन्यं य ओषधी: सचते यश्च सिन्धून् ।
यावन्तो देवा दिव्यातपन्ति हिरण्यं योतिर्दधतो बभूव ।। १० ।।

१७-५५

एषा त्वचां पुरुषे सं बभूवानग्ना: सर्वे पशवो ये अन्ये ।
क्षत्रेणात्मानं परि धापयाथोमोतं वासो मुखमोदनस्य ।। १ ।।
यदक्षेषु वदति यत् समित्यां यद्वा धने अनृतं वित्तकाम्या ।
समानं तन्तुं सह संविदानौ तस्मिन् सर्वं शमलं सादयाथ:।।२।।
वर्षं वनुष्वापि गच्छ देवांस्त्वचो धूमं पर्युत्पातयासि ।
विश्वव्यचा विश्वकर्मा स्वर्ग: सयोनिर्लोकमुप याह्येतम् ।। ३ ।।
तन्वं स्वर्गो बहुधा वि चक्रे यथा विद आत्मन्नन्यवर्णाम् ।
अपाजैत्कृष्णां रुशतीं पुनानो या लोहिनी तां ते अग्नौ जुहोमि।।४।।
प्राच्यै दिशे अग्नयेधिपतयेसिताय रक्षित्र आदित्यायेषुमते एतं परि दध्म:।
तं नो गोपायन्त्वास्माकमैतो: दिष्टं नो अत्र जरसे नि नेषत् ।
जरा मृत्यवे परि णो दधात्वधा पक्वेन सह सं भवेम ।। ५ ।।
दक्षिणायै दिश इन्द्रायाधिपतये तिरश्चिराजये रक्षित्रे
वसुभ्य इषुमद्भ्य एतं परि दध्म: ।
तं नो गोपायन्त्वास्माकमैतो: दिष्टं नो अत्र जरसे नि नेषत् ।
जरा मृत्यवे परि णो दधात्वधा पक्वेन सह सं भवेम । ६ ।।

प्रतीच्यै दिशे वरुणायाधिपतये पृदाकवे रक्षित्रे
मित्रायेषुमत एतं परि दध्म: ।
तं नो गोपायन्त्वास्माकमैतो: दिष्टं नो अत्र जरसे नि नेषत् ।
जरा मृत्यवे परि णो दधात्वधा पक्वेन सह सं भवेम ।। ७ ।।
उदीच्यै दिशे सोमायाधिपतये स्वजाय रक्षित्रे
वातायेषुमत एतं परि दध्म: ।
तं नो गोपायन्त्वास्माकमैतो: दिष्टं नो अत्र जरसे नि नेषत् ।
जरा मृत्यवे परि णो दधात्वधा पक्वेन सह सं भवेम ।। ८ ।।
ध्रुवायै दिशे विष्णवेधिपतये कल्माषग्रीवाय रक्षित्रे
वीरुद्भ्य इषुमद्भ्य एतं परि दध्म: ।
तं नो गोपायन्त्वास्माकमैतो: दिष्टं नो अत्र जरसे नि नेषत् ।
जरा मृत्यवे परि णो दधात्वधा पक्वेन सह सं भवेम ।। ९ ।।
ऊर्ध्वायै दिशे बृहस्पतयेधिपतये श्वित्राय रक्षित्रे
अशनिभ्य इषुमतीभ्य एतं परि दध्म: ।
तं नो गोपायन्त्वास्माकमैतो: दिष्टं नो अत्र जरसे नि नेषत् ।
जरा मृत्यवे परि णो दधात्वधा पक्वेन सह सं भवेम ।। १० ।।

*(इति एकानृचनामसप्तदशकाण्डे अष्टमो ऽनुवाक:)*

*इत्यथर्ववेदे पैप्पलादसंहितायां एकानृचनामसप्तदशकाण्ड: समाप्त:*

# अथ महत् काण्डनाम अष्टादशकाण्ड:

## १८–१

सत्येनोत्तभिता भूमि: सूर्येणोत्तभिता द्यौ: ।
ऋतेनादित्यास्तिष्ठन्ति दिवि सोमो अधि श्रित: ।।१।।
सोमेनादित्या बलिन: सोमेन पृथिवी मही ।
अथो नक्षत्राणामेषामुपस्थे सोम आहित: ।।२।।
सोमं मन्यते पपिवान् यत् संपिंषन्त्योषधिम् ।
सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति पार्थिव: ।।३।।
आच्छद्विधानैर्गुपितो बार्हतै: सोम रक्षित: ।
ग्राव्णामिच्छृण्वन् तिष्ठसि न ते अश्नाति पार्थिव: ।।४।।
चित्तिरावत् उपबर्हणं चक्षुरावदभ्यञ्जनम् ।
द्यौर्भूमि: कोश आसीद्यदयात् सूर्या पतिम् ।।५।।
रैभ्यासीदनुदेयी नाराशंसी न्योचनी ।
सूर्याया भद्रमिद् वासो गाथयैति परिष्कृता ।।६।।
स्तोमा आसन् प्रतिधय: कुरीरं छन्द ओपश: ।
सूर्याया अश्विना वराग्निरासीत् पुरोगव: ।।७।।
सोमो वधूयुरभवदश्विनास्तामुभा वरा ।
सूर्यां यत् पत्ये शंसन्तीं मनसा सवितादद‌ात् ।।८।।
मनो अस्या अन आसीद् द्यौरासीदुत च्छदि: ।
शुक्रावनड्वाहावास्तां यदयात् सूर्या पतिम् ।।९।।
ऋक्सामाभ्यामभिहितौ गावौ ते सामनावैताम् ।
श्रोत्रे ते चक्रे आस्तां दिवि पन्थाश्चराचर: ।।१०।।

## १८–२

शुची ते चक्रे यात्या व्यानो अक्ष आहत: ।
अनो मनस्मयं सूर्यारोहत् प्रयती पतिम् ।।१।।
सूर्याया वहतु: प्रागात् सविता यमवासृजत् ।
मघासु हन्यन्ते गाव: फल्गुनीषु व्युह्यते ।।२।।
यदश्विना पृच्छमानावयातं त्रिचक्रेण वहतुं सूर्याया: ।
क्वैकं चक्रं वामासीत् क्व देष्ट्राय तस्थथु: ।।३।।
यदयातं शुभस्पती वरेयं सूर्यामुप ।
विश्वे देवा अनु तद् वामजानन्
पुत्र: पितरावव‍ृणीत पूषा ।।४।।
द्वे ते चक्रे सूर्ये ब्रह्माण ऋतुथा विदु: ।
अथैकं चक्रं यद् गुहा तदद्धातय इद् विदु: ।।५।।
प्र त्वा मुञ्चामि वरुणस्य पाशाद् येन त्वाबध्नात् सविता सुशेवा:।
ऋतस्य योनौ सुकृतस्य लोके स्योनं ते अस्तु सहपत्यै वधु।।६।।
अर्यमणं यजामहे सुबन्धुं पतिवेदनम् ।
उर्वारुकमिव वन्धनादितो मुञ्चन्तु मामुत: ।।७।।
प्रेतो मुञ्चन्तु मामुत: सुबद्धाममुतस्करत्।
यथेयमिन्द्र मीढूव: सुपुत्रा सुभगासति ।।८।।
भगस्त्वेतो नयतु हस्तगृह्याश्विना त्वा प्र वहतां रथेन ।
गृहान् गच्छ गृहपत्नी यथासो वशिनी त्वं विदथमा वदासि।।९।।
इह प्रियं प्रजायै ते समृध्यतामस्मिन् गृहे गार्हपत्याय जागृहि।
एना पत्या तन्वं सं स्पृशस्वाथ जिर्विर्विदथमा वदासि ।।१०।।

## १८–३

इहैव स्तं मा वि यौष्टं दीर्घमायुर्व्यश्नुतम् ।
क्रीडन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वे गृहे ।।१।।

पूर्वापरं चरतो माययैतौ शिशू क्रीडन्तौ परि यातो अध्वरम् ।
विश्वान्यन्यो भुवना विचष्ट ऋतूंरन्यो विदधज्जायते नव: ।।२।।
नवोनवो भवति जायमानोह्नां केतुरुषसामेत्यग्रम् ।
भागं देवेभ्यो वि दधात्यायन् प्र चन्द्रमास्तिरते दीर्घमायु: ।।३।।
परा देहि शामुल्यं ब्रह्मभ्यो वि भजा वसु ।
कृत्यैषा पद्वती भूत्वा जाया विशते पतिम् ।।४।।
नीललोहितं भवति कृत्यासक्तिर्व्यज्यते ।
एधन्ते अस्या ज्ञातय: पतिर्बन्धेषु बध्यते ।।५।।
अश्लीला तनूर्भवति रुशती पापयामुया ।
पतिर्यद् वध्वो वासस: स्वमङ्गमभ्यूर्णुते ।।६।।
आशसनं विशसनमथो अधिविकर्तनम् ।
सूर्याया: पश्य रूपाणि तानि ब्रह्मोत शुन्धति ।।७।।
तृष्टमेतत् कटुकमपाष्ठवद् विषवन्नैतदत्तवे ।
सूर्यां यो ब्रह्मा वेद स इद् वाधूयमर्हति ।।८।।
स वै तत् स्योनं हरति ब्रह्मा वास: सुमङ्गलम् ।
प्रायश्चित्तिं यो अध्येति येन जाया न रिष्यति ।।९।।
युवं भगं सं भरत: समृद्धमृतं वदन्तावृतोद्येन ।
ब्रह्मणस्पते पतिमस्यै रोचयामुं
चारु संभलो वदतु वाचमेताम्।।१०।।

१८–४

इहेदसाथ न परो गमाथेमं गाव: प्रजया वर्धयाथ ।
शुभं यतीरुस्त्रिया:सोमवर्चसो विश्वे देवा:क्रन्निह वो मनांसि।।१।।
इमं गाव: प्रजया सं विशध्वमयं देवानां न मिनाति भागम् ।
अस्मै व: पूषा मरुतश्च सर्वे अस्मै व धाता सविता सुवाति ।।२।।

अनृक्षरा ऋजव: सन्तु पन्थानो येभि: सखायो यन्ति नो वरेयम्।
सं भगेन समर्यम्णा सं धाता सृजतु वर्चसा न: ।।३।।
येन महानघ्न्या जघनमश्विना येन वा सुरा ।
येनाक्षा अभ्यषिच्यन्त तेनेमां वर्चसावतम् ।।४।।
यद् वर्चो अक्षेषु सुरायां च यदाहितम् ।
यद् गोष्वश्विना वर्चस्तेनेमां वर्चसावतम् ।।५।।
यो अनिध्मो दीदायाप्स्वन्तर्यं विप्रास ईडते अध्वरेषु ।
अपां नपान् मधुमतीरपो दा याभिरिन्द्रो वावृधे वीर्यावान् ।।६।।
इदमहं रुशन्तं ग्राभं तनूदूषिमप नुदामि ।
य: शिवो भद्रो रोचनस्तमुदचामि ।।७।।
आस्यै हरन्तु स्नपनीर्ब्राह्मणा अवीरघ्नीरुदजन्त्वाप: ।
अर्यम्णो अग्निं पर्येतु क्षिप्रं प्रतीक्षन्ते श्वशुरा देवरश्च ।।८।।
शं ते हिरण्यं शमु सन्त्वाप: शं मेथिर्भवतु शं युगस्य तर्द्म ।
शं त आप: शतपवित्रा भवन्तु शं पत्या तन्वं सं स्पृशस्व।।९।।
यथा सिन्धुर्नदीनां साम्राज्यं सुषुवे वृषा ।
एवा त्वं साम्राज्ञेधि पत्युरस्तं परेत्य ।।१०।।

१८–५

सम्राज्ञेधि श्वशुरेषु सम्राज्ञुत श्वश्रुवाम् ।
ननान्दु: सम्राज्ञेधि सम्राज्ञुत देवृषु ।।१।।
या अकृन्तन्नवयन् याश्च तत्निरे या देवीरन्ताँ अभितोददन्त।
तास्त्वा जरसे सं व्ययन्त्वायुष्मतीदं परि धत्स्व वास:।।२।।
जीवं रुदन्ति वि नयन्त्यध्वरं दीर्घामनु प्रसितिं दीध्युर्नर:।
वामं पितृभ्यो य इदं समीरिरे मय: पतिभ्यो जनये परिष्वजे।।३।।
ध्रुवं स्योनं प्रजायै ते धारयाम्यश्मानं देव्या: पृथिव्या उपस्थे ।
तमा रोहानुमाद्या सुवीरा दीर्घं त आयु: सविता कृणोतु।।४।।

देवस्ते सविता हस्तं गृह्णातु सोमो राजा सुप्रजसं कृणोतु ।
अग्नि: सुभगां जातवेदा: पत्ये पत्नीं जरदष्टिं कृणोतु ।।५।।
गृह्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथास: ।
भगो अर्यमा सविता पुरंधिर्मह्यं त्वादुर्गार्हपत्याय देवा: ।।६।।
येनाग्निरस्या भूम्या हस्तं जग्राह दक्षिणम् ।
तेन गृह्णामि ते हस्तं मा व्यथिष्ठा मया सह ।।७।।
धाता ते हस्तमग्रहीत् सविता हस्तमग्रहीत् ।
भगस्ते हस्तमग्रहीदर्यमा हस्तमग्रहीत् ।
पत्नी त्वमसि धर्मणाहं गृहपतिस्तव ।।८।।
ममेयमस्तु पोष्या मह्यं त्वादाद् बृहस्पति: ।
मया पत्या प्रजावति सं जीव शरद: शतम् ।।९।।
त्वष्टा वासो व्यदधाच्छुभे कं बृहस्पते: प्रशिषा कवीनाम् ।
तेनेमां नारीं सविता भगश्च सूर्यामिव परि धत्तां प्रजया ।।१०।।

१८-६

गृहास्त्वा प्रोर्णुवन्त वर्चसा भगेन
ज्योतिष्मतीदं प्रति मुञ्चस्व वपु: ।
उषा इव सूर्यस्य संदृशि ।। १ ।।
इन्द्राग्नी द्यावापृथिवी ह पूषा मित्रावरुणा भगो अश्विनोभा ।
बृहस्पतिर्मरुतो ब्रह्म सोम इमां नारीं प्रजया वर्धयन्तु ।।२।।
बृहस्पति: प्रथम: सूर्याया: शीर्षे केशाङ् अकल्पयत् ।
तेनेमामश्विना नारीं पत्या सं शोभयामसि ।। ३ ।।
इदं तद्रूपं यदवस्त योषा जायां जिज्ञासे मनसा चरन्तीम् ।
तामन्वर्तिष्ये सखिभिर्नवग्वै: क इमं विद्वान् वि चचर्त पाशम् ।।४।।

अहं वि ष्यामि मयि रूपमस्या वेददित् पश्यन् मनस: कुलायम् ।
नस्तेयमद्मि मनसोदमुच्ये स्वयं श्रथ्नानो वरुणस्य पाशम् ।। ५ ।।
इमं वि ष्यामि वरुणस्य पाशं येन त्वाबध्नात् सविता सुशेवा: ।
ऊरुं लोकं सुगमत्र पन्थां कृणोमि तुभ्यं सहपत्न्यै वधु ।। ६ ।।
उद्यच्छध्वमप रक्षो हनाथेमां नारीं सुकृते दधात ।
धाता विपश्चित् पतिमस्यै विवेद भगो राजा पुर एतु प्रजानम् ।। ७ ।।
भगस्ततक्ष चतुर: पदो भगस्ततक्ष चत्वार्युष्पलानि ।
त्वष्टा पिपेश मध्यतो वध्रान् सा नो अस्तु सुमङ्गली ।। ८ ।।
येनाज्येन हविषा प्रजायै च वरेण्यम् ।
पशुभ्य: चक्षुषे च कंसमग्निं समिधीमहि ।। ९ ।।
सुकिंशुकं वहतुं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रम् ।
आ रोह सूर्ये अमृतस्य लोकं स्योनं पतिभ्यो वहतुं कृणु त्वम् ।।१०।।
मा हिंसिष्टं कुमार्यं स्थूणे देवकृते पथि ।
शालाया देव्या द्वारं स्योनं कृण्मो वधूपथम् ।। ११ ।।
ब्रह्मापरं युज्यतां ब्रह्म पूर्वं ब्रह्मान्ततो मध्यतो ब्रह्म सर्वत: ।
अनाव्याधां देवपुरां प्रपद्य शिवा स्योना पतिलोके वि राज ।। १२।।

*(इति महत् काण्डनामअष्टादशकाण्डे प्रथमो ऽनुवाक:)*

## १८-७

तुभ्यमग्रे पर्यवहन् सूर्यां वहतुना सह ।
स न: पतिभ्य जायां दा अग्ने प्रजया सह ।। १ ।।
पुन: पत्नीमग्निरदादायुषा सह वर्चसा ।
दीर्घायुरस्या य: पतिर्जीवाति शरद: शतम् ।। २ ।।
सोमस्य जाया प्रथमं गन्धर्वस्तेपर: पति: ।
तृतीयो अग्निष्टे पतिस्तुरीयो मनुष्यजा: ।। ३ ।।

सोम ददद् गन्धर्वाय गन्धर्वो दददग्नये ।
रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ।। ४ ।।
आ वामगन्सुमतिर्वाजिनीवसू न्यश्विना हृत्सु कामा अंरसत ।
अभूतं गोपा मिथुना शुभस्पती प्रिया अर्यम्णो दुर्यां अशीमहि ।।५ ।।
सा मन्दसाना मनसा शिवेन रयिं धेहि सर्ववीरं वचस्यम् ।
सुगं तीर्थं सुप्रपाणं शुभस्पती स्थाणुं प्रथिष्टामप दुर्मतिं हतम् ।।६ ।।
अप रक्षांस्यप दुर्मतिं हतं शुभस्पती वहतोर्यातो अस्मात् ।
पुरोगवो जनयन् रक्षांस्यग्ने क्षेत्र वि पूर्वो वि मृधो नुदस्व ।।७ ।।
या ओषधयो या नद्यो यानि क्षेत्राणि या वना ।
ते त्वा वधु प्रजावतीं पत्ये रक्षन्तु रक्षसः ।। ८ ।।
एमं पन्थामगन्म सुगं स्वस्तिवाहनम् ।
यत्र वीरो न रीष्यत्यन्येषां विन्दते वसु ।। ९ ।।
इदं सु मे नरः शृणुत ययाशिषा दंपती वाममश्नुतः ।
ये गन्धर्वा अप्सरसश्च देवीरेषु वानस्पत्येष्वध्या तस्थुः ।
स्योनास्ते अस्यै वध्वै भवन्तु मा हिंसिषुर्वहतुमुह्यमानम् ।।१० ।।

१८-८

ये वध्वश्चन्द्रं वहतुं यक्ष्मा यन्तु जनाङ् अनु ।
पुनस्तान् यज्ञिया देवा नयन्तु यत आगताः ।। १ ।।
मा विदन् पर्यायिणो य आसीदन्ति दंपती ।
सुगेन दुर्गमतीतामप द्रान्त्वरातयः ।। २ ।।
सं काशयामि वहतुं ब्रह्मणा गृहैरघोरेण चक्षुषा मित्रियेण ।
पर्याणद्धं विश्वरूपं यदस्मिन् स्योनं पतिभ्यः सविता कृणोतु तत् ।।३ ।।
शिवा नारीयमस्तमागन्निमं धाता लोकमस्यै विवेद ।
तामर्यमा भगो अश्विनोभाः प्रजापतिः प्रजया वर्धयन्तु ।। ४ ।।

आत्मन्वत्युर्वरा नारीयमागन् तस्यां नरो वपत बीजमस्याम् ।
सा वः प्रजां जनयद् वक्षणाभ्यो बिभ्रती दुग्धमृषभस्य रेतः ।। ५ ।।
प्रति तिष्ठ विराडसि विष्णुरिवेह सरस्वती ।
दुर्वेवेन्द्र प्र जायतां भगस्य सुमतावसत् ।। ६ ।।
उद् वाम् ऊर्मिः शम्या हन्त्वापो योक्त्राणि मुञ्चन्तु ।
मा दुस्कृतौ व्येनसावध्न्यावशूनमारताम् ।। ७ ।।
अघोरचक्षुरपतिघ्नी स्योना शग्मा सुशेवा सुयमा गृहेषु ।
प्रजावती वीरसूर्देवृकामेममग्निं गार्हपत्यं सपर्य ।। ८ ।।
अदेवृघ्न्यपतिघ्नीहैधि स्योना पशुभ्यः सुमनाः सुवीराः ।
वीरसुर्देवृकामा स्योना सं त्वयैधिषीमहि सुमनस्यमाना ।।९।।
उत्तिष्ठेतः किमिच्छन्तीदमागा अहं त्वेडे अभिभूः स्वाद् गृहात् ।
शून्यैषी निर्ऋते याजगन्थोत्तिष्ठाराते प्र पत मातिं रंस्थाः ।।१०।।

१८-९

यदा गार्हपत्यमसपर्यैत् पूर्वमग्निं वधूरियम् ।
अधा सरस्वत्यै नारि पितृभ्यश्च नमस्कुरु ।। १ ।।
शर्म वर्मैतदा हरास्यै नार्या उपस्तरे ।
सिनीवाली प्र जायतां भगस्य सुमतावसत् ।। २ ।।
उप स्तृणीहि वल्वजमधि चर्मणि रोहिते ।
तत्रोपविश्य सुप्रजा इममग्निं सपर्यतु ।। ३ ।।
यं वल्वजं न्यस्यथ चर्म चोपस्तृणीथन ।
तदा रोहतु सुप्रजा या कन्या विन्दते पतिम् ।। ४ ।।
आ रोह चर्मोप सीदाग्निमेष देवो हन्तु रक्षांसि सर्वा ।
सुमङ्गल्युप सीदेममग्निं सपत्नी प्रति भूषेह देवान् ।। ५ ।।
प्र जायन्तां मातुरस्या उपस्थान् नानारूपाः पशवो जायमानाः ।
इह प्रजां जनय पत्ये अस्मै सुज्यैष्ठ्यो भवतु ते पुत्र एषः ।।६।।

सुमङ्गली प्रतरणी गृहाणां सुशेवा पत्ये श्वशुराय शंभूः ।
स्योना श्वश्र्वैः प्र गृहान् विशेमान् प्रजावती जरदाष्टिर्यथासः ।।७।।
सुमङ्गलीरियं वधूरिमां समेत पश्यत ।
सौभाग्यमस्यै दत्त्वा दौर्भाग्येन परेतना ।। ८ ।।
या दुर्हार्दो युवतयो याश्चेह जरतीरपि ।
वर्चो ह्यस्यै सं दत्ताथास्तं विपरेतन ।। ९ ।।
ऋक्मप्रस्तरणं वह्यं विश्वारूपाणि बिभ्रतम् ।
आरोहत् सूर्या सावित्री बृहते सौभगाय कम् ।। १० ।।

१८-१०

आ रोह तल्पं सुमनस्यमानेह प्रजां जनय पत्ये अस्मै ।
इन्द्राणीव सुबुधा बुध्यमाना ज्योतिरग्रा उषसः प्रति जागरः ।।१।।
देवा अग्रे न्यपद्यन्त पत्नीः समस्पृशन्त तन्वस्तनूभिः ।
सूर्येव नारि विश्वरूपा महित्वा प्रजावती पत्या सं भवाति ।।२।।
उदीर्ष्वातः पतिवती ह्येषा विश्वावसुं मनसा गीर्भिरीडे ।
जामिमिच्छ पितृषदं न्यक्तां स ते भागो जनुषा तस्य विद्धि ।। ३ ।।
या अप्सरसः सधमादं मदन्त्यन्तरा हविर्धानं सूर्यं च ।
तास्ते जनित्रमभि ताः परेहि नमस्ते गन्धर्वर्तुना कृणोमि ।। ४ ।।
नमो गन्धर्वस्य नमसे नमो भामाय चक्षुषे च कृण्मः ।
विश्वावसो नमो ब्रह्मणा ते कृणोम्यभि जाया अप्सरसः परेहि ।। ५ ।।
राया वयं सुमनसः स्यामोदितो गन्धर्वमावीवृताम ।
अगन्स देवः परमं सधस्थमगन्म वयं प्रतिरन्त आयुः ।। ६ ।।
सं पितरावृत्त्विये सृजेथां पिता माता च रेतसो भवाथः ।
मर्यो योषामधिरोहयैनां प्रजां कृण्वाथामिह मोदमानौ ।। ७ ।।
आ वां प्रजां जनयतु प्रजापतिरहोरात्राभ्यां समनक्त्वर्यमा ।
अदुर्मङ्गली पतिलोकमा विशेमं शं नो भव द्विपदे शं चतुष्पदे ।। ८ ।।

तान् पूषं छिवतमामेरयस्व यस्यां बीजं मनुष्या वपन्ति ।
या न ऊरू उशती विश्रयाति यस्यामुशन्त: प्रहरेम शेप: ।।९।।
आ रोहोरुमुप धत्स्व हस्तं परि ष्वजस्व जायां सुमनस्यमान:।
प्रजां कृण्वाथामिह पुष्यतं रयिं दीर्घं वामायु: सविता कृणोतु ।।१०।।

१८-११

यं नो ददुर्ब्रह्मभागं वधूयोर्वासो वध्वश्च वस्त्रम् ।
युवं ब्रह्मणेनुमन्यमानौ बृहस्पते साकमिन्द्रश्च दत्तम् ।। १ ।।
देवैर्दत्तं मनुना साकमेतद् वाधूयं वध्वो वासो अस्या: ।
यो ब्रह्मणे चिकितुषे ददाति स इद्रक्षांसि तल्प्यानि हन्ति ।। २ ।।
स्योनाद्योनेरधि बुध्यमानौ हसामुदौ महसा मोदमानौ ।
सुगू सुपुत्रौ सुगृहौ तराथो जीवावुषसो विभाती: ।। ३ ।।
नवं वसान: सुरभि: सुवासा उदागां जीव उषसो विभाति: ।
आण्डात् पतत्रीवामुक्षि विश्वस्मादेनसस्परि ।। ४ ।।
शुंभनी द्यावापृथिवी अन्तिशुम्ने महिव्रते ।
आप: सप्त स्रवन्तीस्ता नो मुञ्चन्त्वंहस: ।। ५ ।।
सुर्यायै देवेभ्यो मित्राय वरुणाय च ।
ये भूतस्य प्रचेतसस्तेभ्योहमकरं नम: ।। ६ ।।
य ऋते चिदभिश्रिष: पुरा जत्रुभ्य आतृद: ।
संधाता संधिं मघवा पुरूवसुर्निष्कर्त्ता विह्रुतं पुन: ।। ७ ।।
अपास्मत् तम उछतु नीलं पिशङ्गमुत लोहितं यत् ।
निर्दहनी या पृषातक्यस्मिन् तां स्थाणावध्या सृजामि ।। ८ ।।
यावती: कृत्या उपवासने यावन्तो राज्ञो वरुणस्य पाशात् ।
व्यृद्धयो या असमृद्धयश्चास्मिन् ता स्थाणौ प्रति मुञ्चामि सर्वा:।।९।।
ये अन्ता यावती: सिचो ओतवो ये च तन्तव: ।
वासो यत् पत्नीभिरुतं तन्मा स्योनमुप स्पृशात् ।।१०।।

## १८-१२

उशती: कन्यला इमा: पितृलोकात् पतिं यती: ।
अव दीक्षामसृजत स्वाहा ।। १ ।।
बृहस्पतिनावसृष्टां विश्वे देवा अधारयन् ।
वर्चो गोषु प्रविष्टं यत् तेनेमां सं सृजामसि ।। २ ।।
बृहस्पतिनावसृष्टां विश्वे देवा अधारयन् ।
तेजो गोषु प्रविष्टं यत् तेनेमा सं सृजामसि ।। ३ ।।
बृहस्पतिनावसृष्टां विश्वे देवा अधारयन् ।
पयो गोषु प्रविष्टं यत् तेनेमा सं सृजामसि ।। ४ ।।
बृहस्पतिनावसृष्टां विश्वे देवा अधारयन् ।
यशो गोषु प्रविष्टं यत् तेनेमा सं सृजामसि ।। ५ ।।
बृहस्पतिनावसृष्टां विश्वे देवा अधारयन् ।
भगो गोषु प्रविष्टं यत् तेनेमा सं सृजामसि ।। ६ ।।
यदसौ दुहिता तव विकेश्यरुदद्बहु रोदेन कृण्वत्यघम् ।
अग्निष्ट्वा तस्मादेनस: सविता च प्र मुञ्चताम् ।। ७ ।।
यदमी केशिनो जना गृहे ते समनर्तिषू रोदेन कृण्वन्तोघम् ।
अग्निष्ट्वा तस्मादेनस: सविता च प्र मुञ्चताम् ।। ८ ।।
यज्जामयो यद्युवतयो गृहे ते समनर्तिषू रोदेन कृण्वतीरघम् ।
अग्निष्ट्वा तस्मादेनस: सविता च प्र मुञ्चताम् ।। ९ ।।
यदमू दंपती उभौ विवाहे अघमारुतो रोदेन कृण्वन्तावघम् ।
अग्निष्ट्वा तस्मादेनस: सविता च प्र मुञ्चताम् ।। १० ।।

## १८-१३

यत्ते प्रजायां पशुषु यद् वा गृहेषु निष्ठितमघकृद्भिरघं कृतम्।
अग्निष्ट्वा तस्मादेनस: सविता च प्र मुञ्चताम् ।। १ ।।

इयं नार्युप ब्रूते पूल्यान्यावपन्तिका ।
दीर्घायुरस्तु मे पतिरेधन्तां पितरो मम ।। २ ।।
इहेमाविन्द्र सं नुद चक्रवाकेव दंपती ।
प्रजावन्तौ स्वस्तकौ दीर्घमायुर्व्यश्नुताम् ।। ३ ।।
यदासन्द्यामुपधाने यद् वोपवासने कृतम् ।
विवाहे कृत्यां यां चक्रुरास्नाने तां निदध्मसि ।। ४ ।।
यद् दुष्कृतं यच्छमलं विवाहे वहतौ च यत् ।
तत् संभलस्य कम्बले मृज्महे दुरितं वयम् ।। ५ ।।
सम्भले मलं सादयित्वा कम्बले दुरितं वयम् ।
अभूम यज्ञियाः शुद्धाः प्र ण आयुंषि तारिषत् ।। ६ ।।
या मे प्रियतमा तनूः सा मे बिभाय वाससः ।
तस्याग्रे त्वं वनस्पते नीविं कृणुष्व मा वयं रिषाम ।। ७ ।।
कृत्रिमः कङ्कतः शतदन् य एषः ।
अपास्याः केश्यं मलमप शीर्षण्यं लिखात् ।। ८ ।।
अङ्गादङ्गाद् यूयमस्या अप यक्ष्मं नि धत्तन ।
तन्मा प्रापत् पृथिवीं मोत देवान् दिवं मा प्रापदुर्वन्तरिक्षम् ।
अपो मा प्रापन्मलमेतदग्ने यमं मा प्रापत् पितॄंश्च सर्वान् ।।९।।
सं त्वा नह्यामि पयसा पृथिव्याः सं त्वा नह्यामि पयसौषधीनाम् ।
सं त्वा नह्यामि प्रजया धनेन सा संनद्धा सनुहि वाजमेमम् ।।१०।।

१८-१४

अमोहमस्मि सा त्वं द्यौरहं पृथिवीत्वम् ।
मनोहमस्मिवाक्त्वं ताविह सं भवाव प्रजामा जनयावहै।।१।।
जनियन्ति नो अग्रवः पुत्रियन्ति सुदानवः ।
अरिष्टासः सचेमहि बृहते वाजसातये ।। २ ।।

ये पितरो वधूदर्शा इमं वहतुमागमन् ।
ते अस्यै वध्वै संपत्न्यै प्रजावच्छर्म यच्छन्तु ।। ३ ।।
येदं पूर्वागन् रशनायमाना प्रजामस्यै द्रविणं चेह दत्त्वा ।
तां वहन्त्वगतस्याभि पन्थां विराडियं सुप्रजा अत्यजैषीत्।।४।।
प्र बुध्यस्व सुबुधा बुध्यमाना दीर्घायुत्वाय शतशारदाय ।
गृहान् प्रेहि सुमनस्यमाना दीर्घं त आयुः सविता कृणोतु।।५।।
वि ते मुञ्चामि रशनां वि रश्मीन् वि योक्त्राणि परिचर्त्तनानि च।
अरिष्टास्मिन् ज्योतिषि शिवा गृहपतौ भव ।। ६ ।।
स्योना भव श्वसुरेभ्यः स्योना पत्ये गृहेभ्यः ।
स्योनास्यै सर्वस्यै दृशे स्योना पुष्टायैषां भव ।। ७ ।।

*(इति महत् काण्डनामअष्टादशकाण्डे द्वितीयो ऽनुवाकः)*

## १८-१५

उदेहि वाजिन् यो अप्स्वन्तरिदं राष्ट्रं प्र विश सुनृतावत् ।
यो रोहितो विश्वमिदं जजान स त्वा राष्ट्राय सुभृतं पिपर्तु ।।१।।
उद् वाज आ गन् यो अप्सन्तर्विश आ रोह त्वद्योनयो याः ।
सोमं दधानोप ओषधीर्गाश्चतुष्पदो द्विपद आ वेशयेह ।। २ ।।
यूयमुग्रा मरुतः पृश्निमातर इन्द्रेण युजा प्र मृणीत शत्रून् ।
आ वो रोहितः शृणवत् सुदानवस्त्रिषप्तासो मरुतः स्वादुसंमुदः।।३।।
रुहो रुरोह रोहित आ रुरोह गर्भो जनीनां जनुषामुपस्थम् ।
ताभिः संरब्धो अन्वविन्दत् षडुर्वी गातुं प्रपश्यन्निह राष्ट्रमाहाः ।।४ ।।
आ ते राष्ट्रमिह रोहितोहार्मृधो व्यास्थदभयं ते अभूत् ।
तस्मै ते द्यावापृथिवी रेवतीभिः कामं दुहातामिह शक्वरीभिः ।।५।।
रोहितो द्यावापृथिवी जजान तत्र तन्तुं परमेष्ठी ततान ।
तत्र शिश्रियेज एकपादोदृंहद् द्यावापृथिवी बलेन ।। ६ ।।

रोहितो द्यावापृथिवी अदृंहत् तेन स्वस्तभितं तेन नाकः ।
तेनान्तरिक्षं विमिता रजांसि तेन देवा अमृतमन्वविन्दम् ।। ७ ।।
वि रोहितो अमृशद् विश्वरूपं समाकृण्वानः प्ररुहो रुहश्च ।
दिवं रूढ्वा महता महिम्ना सं ते राष्ट्रमनक्तु पयसा घृतेन।।८।।
यास्ते रुहः प्ररुहो यास्त आरुहो याभिरापृणासि दिवमन्तरिक्षम् ।
तासां ब्रह्मणा पयसा वावृधानो विशि राष्ट्रे जागृहि रोहितस्य ।। ९ ।।
यास्ते विशस्तपसः संबभूवुर्वत्सं गायत्रीमनु ता इहागुः ।
तास्त्वा विशन्तु मनसा शिवेन संमाता वत्सो अभ्येतु रोहितः।।१०।।

१८-१६

उर्ध्वो रोहितो अधिनाके अस्थाद् विश्वारूपाणि जयनन् युवा कविः।
तिग्मेनाग्निर्ज्योतिषा वि भाति तृतीये चक्रे रजसि प्रियाणि।।१।।
सहस्रशृङ्गो वृषभो जातवेदा घृताहुतः सोमपृष्ठः सुवीरः ।
मा मा हासीन्नाथितो नेत्त्वा जहानि गोपोषं च मे वीरपोषं च धेहि।।२।।
रोहितो यज्ञस्य जनिता मुखं च रोहिताय वाचा श्रोत्रेण मनसा जुहोमि।
रोहितं देवा यन्ति सुमनस्यमानाः स मा रोहैः सामित्यै रोहयाति।।३।।
रोहितो यज्ञं व्यदधाद् विश्वकर्मणे तस्मात् तेजांस्युप मेमान्यागुः ।
वोचेयं ते नाभिं भुवनस्याधि मज्मानि ।। ४ ।।
आ त्वा रुरोह बृहत्युत पङ्क्तिरा ककुद् वर्चसा विश्ववेदः ।
आ त्वा रुरोहोष्णिहाक्षरो वषट्कार आ त्वा रुरोह रोहित रेतसा सह।।५।।
अयं वस्ते गर्भं पृथिव्यां दिवं वस्तेयमन्तरिक्षम् ।
अयं ब्रध्नस्य विष्टपः स्वर्लोकान् समानशे ।। ६ ।।
वाचस्पते पृथिवी नः स्योना योनिस्तल्पा सुशेवा ।
इहैव प्राणः सख्ये नो अस्तु तं त्वा
परमेष्ठिन् पर्यग्निर्वर्चसा दधातु।।७।।

वाचस्पत ऋतव: पञ्च ये नौ वैश्वकर्मणा परि ये बभूवु: ।
इहैव प्राण: सख्ये नो अस्तु तं त्वा
परमेष्ठिन् परि रोहित वर्चसा दधातु।।८।।
वाचस्पते सौमनसं मनश्च गोष्ठे नो गा रमय योनिषु प्रजाम् ।
इहैव प्राण: सख्ये नो अस्तु तं त्वा
परमेष्ठिन् पर्यहं वर्चसा दधामि ।। ९ ।।
परि त्वा धात् सविता देवो अग्निर्वर्चसा मित्रावरुणावभि त्वा ।
सर्वा अरातीरपक्रामन्नेहीदं राष्ट्रं कृणुहि सूनृतावत् ।। १० ।।

१८-१७

यं त्वा पृषती रथे प्रष्टिर्वहति रोहित । शुभा यासि रिणन्नप: ।
तेनेमं ब्रह्मणस्पते रोहं रोहयोत्तमम् ।। १ ।।
अनुव्रता रोहिणी रोहितस्य सूरि: सुवर्णा बृहती सुवर्चा: ।
त्वया वाजान् विश्वरूपां जयेम तया विश्वा: पृतना अभि ष्याम ।।२।।
इदं सदो रोहिणी रोहितस्यासौ पन्था: पृषती येन याति ।
तां गन्धर्वा: कश्यपा उन्नयन्ति तां रक्षन्ति कवयोप्रमादम् ।।३।।
सूर्यस्याश्वा हरय: केतुमन्त: सदा वहन्त्यमृता: सुखं रथम् ।
घृतपावा रोहितो भ्राजमानो दिवं देव: पृषतीमा विवेश ।। ४ ।।
यो रोहितो वृषभस्तिग्मशृङ्ग: पर्यग्निं परि सूर्यं बभूव ।
यो विष्टभ्नाति पृथिवीं दिवं च तस्माद् देवा अधि सृष्टी: सृजन्ते ।।५।।
रोहितो दिवमारुहन् महत: पर्यर्णवात् ।
सर्वा रुरोह रोहितो रुह: ।। ६ ।।
वि मिमीष्व पयस्वतीं घृताचीं देवानां धेनुरनपस्पृगेषा ।
इन्द्र: सोमं पिबतु क्षेमो अस्त्वग्नि: प्र स्तौतु वि मृधो नुदस्व ।।७।।
समिद्धो अग्नि: समिधानो घृतोवृद्धो घृताहुत: ।
अभिषाड् विश्वाषाडग्नि: सपत्नान् हन्तु ये मम ।। ८ ।।

हन्त्वेनान् प्र दहत्वरिर्यो न: पृतन्यति ।
क्रव्यादाग्निना वयं सपत्नान् प्र दहामसि ।। ९ ।।
अग्ने सपत्नमधरं पादयास्मद् व्यथया सजातमुत्पिपानं बृहस्पते ।
इन्द्राग्नी मित्रावरुणावधरे पद्यन्तामप्रतिमन्युयमाना: ।।१०।।

१८-१८

अवाचीनानव जहीन्द्र वज्रेण बाहुमान् ।
अधा सपत्नान् मामकानग्नेस्तेजोभिरादधे ।। १ ।।
उद्यंस्त्वं देव सूर्य सपत्नान् मे धरां कृणु ।
अवैनानश्मना जहि ते यन्त्वधमं तम: ।। २ ।।
वत्सो विराजो वृषभो मतीनामा रुरोह शुक्रपृष्ठोऽन्तरिक्षम् ।
घृतेनार्कमभ्यर्चन्ति वत्सं ब्रह्म सन्तं ब्रह्मणा वर्धयन्तु ।। ३ ।।
दिवं च रोह पृथिवीं च रोह राष्ट्रं च रोह द्रविणं च रोह ।
प्रजां च रोहामृतं च रोह रोहितेन तन्वं सं स्पृशस्व ।।४।।
ये देवा राष्ट्रभृतो अभितो यन्ति सूर्यम् ।
तेभिष्टे रोहित: संविदानो राष्ट्रं दधातु सुमनस्यमान: ।।५।।
उत् त्वा यज्ञा ब्रह्मपूता वहन्त्वध्वगतो हरयस्त्वा वहन्तु ।
तिर: समुद्रमति रोचसेर्णवम् ।। ६ ।।
रोहिते द्यावापृथिवी अधि श्रिते वसुजिति
गोजिति संजिति संधनाजिति ।
सहस्रं यस्य द्रविणानि सप्त च वोचेयं
ते नाभिं भुवनस्याधि मज्मनि ।। ७ ।।
यशा यासि प्रदिशो अनु यशा: पशूनामुत चर्षणीनाम् ।
यशा: पृथिव्या अदित्या उपस्थेहमस्मि सवितेव चारु: ।।८।।
अमुत्र सन्निह वेत्थेत: संस्तानि पश्यति ।
इत: पश्यन्ति रोचनं दिवि सूर्यं विपश्चितम् ।। ९ ।।

देवो देवान् मर्चयत्यन्तश्चरत्यर्णवे ।
समानमग्निमिन्धते तं विदु: कवय: परे ।। १० ।।

१८-१९

अव: परेण पर एनावरेण पदा वत्सं बिभ्रती गौरुदस्थात् ।
सा कद्रीची कं स्विदर्धं परागात् क्व स्वित्सूते नहि युथे अस्मिन् ।।१।।
एकपदी द्विपदी सा चतुस्पद्यष्टापदी नवपदी बभूवुषी ।
सहस्राक्षरा भुवनस्य पङ्क्तिस्तस्या:
समुद्रा अधि वि क्षरन्ति ।। २।।
आरोहन् द्याममृत: प्राव मे वच
उत् त्वा यज्ञा ब्रह्मपूता वहन्ति ।
घृतं पिबन्तं हरयस्त्वा वहन्ति ।। ३ ।।
वेद तत् ते अमर्त्य यत् त आक्रमणं दिवि ।
यत् ते सधस्थं परमे व्योमन् ।। ४ ।।
सूर्यो द्यां सूर्य: पृथिवीं सूर्य आपोति पश्यति ।
सूर्य भूतस्यैकं चक्षुरा रुरोह दिवं महीम् ।। ५ ।।
उर्वीरासन् परिधयो वेदिर्भूमिरकल्पत ।
तत्रैतावग्नि आधत्त हिमं घ्रंसं च रोहित: ।। ६ ।।
हिमं घ्रंसं चाधाय यूपान् कृत्वा पर्वतान् ।
वर्षाज्यावग्नी ईजाते रोहितस्य स्वर्विद: ।। ७ ।।
स्वर्विदो रोहितस्य ब्रह्मणाग्नि: समाहित: ।
तस्माद् घ्रंसस्तस्माद्धिमस्तस्माद् यज्ञो अजायत ।। ८ ।।
ब्रह्मणाग्नि: संविदानो ब्रह्मवृद्धो ब्रह्माहुत: ।
ब्रह्मेद्धावग्नी ईजाते रोहितस्य स्वर्विद: ।। ९ ।।
अप्स्वन्य: समाहित: सत्ये अन्य: समाहित: ।
ब्रह्मेद्धावग्नी ईजाते रोहितस्य स्वर्विद: ।। १० ।।

यं वातो: परि शुम्भति यमिन्द्रो ब्रह्मणस्पति: ।
ब्रह्मेद्धावग्नी ईजाते रोहितस्य स्वर्विद: ।। ११ ।।

१८-२०

वेदिं भूमिं कल्पयित्वा दिवं कृत्वा दक्षिणाम् ।
घ्रंसं तदग्निं कृत्वा चकार विश्वमात्मन्वद् वर्षेणाज्येन रोहित:।।१।।
वर्षमाज्यं घ्रंसो अग्निर्वेदिर्भूमिरकल्पत ।
तत्रैतान् पर्वताङ् अग्निर्गीर्भिरुर्द्ध्वांङ् अकल्पयत् ।। २ ।।
गीर्भिरूर्ध्वान् कल्पयित्वा रोहितो भूमिमब्रवीत् ।
त्वयिदं सर्वं जायतां यद् भूतं यच्च भाव्यम् ।। ३ ।।
स: यज्ञ: प्रथमो भूतो भव्यो अजायत ।
तस्माद्ध यज्ञेदं सर्वं यत् किं चेदं
विरोचत्ते रोहितेन ऋषिणाभृतम् ।। ४ ।।
उदस्य केतवो दिवि शुक्रा भ्राजन्त ईरते ।
आदित्यस्य नृचक्षसो महिव्रतस्य मीढुष: ।। ५ ।।
दिशां प्रज्ञानं स्वरयन्तमर्चिषा सुपक्षमाशुं पतयन्तमर्णवे ।
स्तवाम सूर्यं भुवनस्य गोपां यो
रश्मिभिर्दिशो आभाति सर्वा: ।। ६ ।।
यत् प्राङ् प्रत्यङ् स्वधया यासि शीभं
नानारूपे अहनी कर्षि मायया ।
तदादित्य महि तत् ते महि श्रवो
यदेको विश्वं परि भूम जायसे ।। ७ ।।
विपश्चितं तरणिं भ्राजमानं वहन्ति यं हरित: सप्त बह्वी: ।
स्रुताद् यमत्त्रिर्दिवमुन्निनाय तं त्वा पश्येम परियान्तमाजिम्।।८।।

मा त्वा दभन् परियान्तमाजिं सुगेन दुर्गमति याहि शीभम् ।
दिवं च सूर्य पृथिवीं च देवीमहोरात्रे विमिमानो यदेषि ।।९।।
स्वस्ति ते सूर्य चरसे रथाय येनोभावन्तौ परियासि सद्यः ।
यं ते वहन्ति हरितो वहिष्ठास्तमारोह सुखमा स्वश्व्यम्।।१०।।

१८-२१

सुखं सूर्य रथमंशुमन्तं स्योनं सुवह्निमधि तिष्ठ वाजिनम् ।
यं ते वहन्ति हरितो वहिष्ठाः शतमश्वा यदि वा सप्त बह्वीः।।१।।
सप्त सूर्यो हरितो यातवे रथे हिरण्यत्वचसो बृहतीरयुक्त ।
अमोची शुक्रो रजसः परस्ताद् विधूय देवस्तमो दिवमारुहत् ।।२।।
उत् केतुना बृहता देव आगन्नपावृक्तमोभि ज्योतिरश्रैत् ।
दिव्यः सुपर्णः स वीरो व्यख्यददितेः पुत्रो भूवनानि विश्वा ।।३।।
उद्यन् रश्मीना तनूषे प्रजाः सर्वा वि पुष्यसि ।
उभा समुद्रैः क्रतुना वि भाति सर्वांल्लोकान् परिभूर्भ्राजमानः।।४।।
पूर्वापरं चरतो माययैतौ शिशु क्रीडन्तौ परि यातो अर्णवम् ।
विश्वान्यन्यो भुवना भिवस्ते हैरण्यैरन्य हरितो वहन्ति।।५।।
दिवि त्वात्त्रिरधारयत् सूर्या मासाय कर्तवे ।
स एषिः सुघृतस्तपन् बिश्वा भूतावचाकशत् ।। ६ ।।
उभावन्तौ समर्षति वत्सः संमातराविव ।
नन्वेतदितः पुरा ब्रह्म देवा अमी विदुः ।। ७ ।।
यत् समुद्रमनु श्रितं तत् सिषासति सूर्यः ।
अध्वास्य विततो महान् पूर्वश्चापरश्च यः ।। ८ ।।
तं समाप्नोति जूतिभिः स्तस्मानाप चिकित्सति ।
तेनामृतस्य भक्षं देवानां नाव रुन्धते ।। ९ ।।
उदु त्यं जातवेदसं देवं वहन्ति केतवः ।
दृशे विश्वाय सूर्यम् ।। १० ।।

## १८-२२

अप त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः ।
सूराय विश्व चक्षसे ।। १ ।।
अदृश्रन्नस्य केतवो वि रश्मयो जनाँङ् अनु ।
भ्राजन्तो अग्नयो यथा ।। २ ।।
तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्यः ।
विश्वमा भासि रोचनः ।। ३ ।।
प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि मानुषी ।
प्रत्यङ् विश्वं स्वर्दृशे ।। ४ ।।
येना पावक चक्षषा भुरण्यन्तं जनाँङ् अनु ।
त्वं वरुण पश्यसि ।। ५ ।।
वि द्यामेषि रजस्पृथ्वहर्मिमानो अक्तुभिः ।
पश्यन् यन्मानि सूर्य ।। ६ ।।
सप्त त्वा हरितो रथे वहन्ति देव सूर्य ।
शोचिष्केशं विचक्षणम् ।। ७ ।।
अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्यः ।
ताभिर्याति स्वयुक्तिभिः ।। ८ ।।
अभि मा वर्चसा गिरः सिञ्चतीराचरण्यवः ।
अभि वत्सं न धेनवः ।। ९ ।।
ता अर्षन्तु शुभ्रियः पृञ्चन्तीर्वर्चसा प्रियः ।
जातं जात्रीर्यथा हृदा ।। १० ।।

## १८-२३

वज्रायेवसाध्य यः कीर्तिं श्रेयमाणमावहान् ।
मह्यमायुर्घृतं पयः ।। १ ।।

रोहितो दिवमाक्रमान्तपसा तपस्वी ।
स योनिमैति स उ जायते पुन: स देवानामधिपतिर्बभूव।।२।।
यो विश्वचर्षणिरुत विश्वतोमुखो विश्वतस्पाणिरुत विश्वतस्पृथ:।
सं बाहुभ्यां धमति सं पतत्रैर्द्यावापृथिवी जनयन् देव एक:।।३।।
एकपाद् द्विपदो भूयो वि चक्रमे द्विपात् त्रिपादमभ्येति पश्चात् ।
द्विपाद्ध षट्पदो भूयो वि चक्रमे त एकपदस्तन्वं मां समासते ।।४ ।।
अतन्द्रो यास्यन् हरितो यदास्थाद् दिवि रूपं कृणुते रोचमान:।
केतुमाङ् उद्यन्सहमानो रजांसि विश्वा आदित्य प्रवतो वि भासि ।।५।।
वण्महाङ् असि सूर्य बडादित्य महाङ् असि ।
महांस्ते महतो महिम्ना त्वमादित्य महाङ् असि ।।६।।
रोचसे दिवि रोचसे अन्तरिक्षे
पतङ्ग पृथिव्यां रोचसे रोचसे अप्स्वन्त: ।
उभा समुद्रौ रुच्या व्यापिथ देवो देवासि महिष: स्वर्वित् ।।७।।
अर्वाङ् परस्तात् वियतो व्यध्व आशुर्विपश्चित् पतयन् पतङ्ग:।
विष्णुर्विचित्त: शवसाधितिष्ठन् प्र केतुना सहते विश्वमेजत् ।।८।।
तिग्मो विभ्राजन् तन्वं शिशानोरंगमास: प्रवतो रराण: ।
ज्योतिष्मान् पक्षी महिषो वयोधा विश्वा
आस्थात् प्रदिश: कल्पमान: ।। ९ ।।
चित्रश्चिकित्वान् महिष: सुपर्ण आरोचयन् रोदसी अन्तरिक्षम् ।
अहोरात्रे परि सूर्यं वसाने प्रास्य विश्वा तिरतो वीर्याणि।। १० ।।

१८-२४

चित्रं देवानां केतुरनीकं ज्योतिष्मान् प्रदिश: सूर्य उद्यन् ।
दिवाकरो अति द्युम्नैस्तमांसि विश्वातारीद् दुरितानि शुक्र:।।१।।
चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्ने: ।
आप्राङ् द्यावापृथिवी अन्तरिक्षं महित्वा सूर्य आत्मा जगतस्तस्थुषश्च।।२।।

उच्चा पतन्तमरुणं सुपर्णं मध्ये दिवस्तरणिं भ्राजमानम् ।
पश्येम त्वा सवितारं यमाहुरजस्रं ज्योतिर्यदविन्ददत्त्रि: ।। ३ ।।
दिवस्पृष्ठे धावमानं सुपर्णमदित्या: पुत्रं नाथकाम उप यामि भीत: ।
स न: सूर्य प्र तिर दीर्घमायुर्मा रिषाम सुमतौ ते स्याम ।। ४ ।।
आहोरात्राणि विदधत् कृण्वान: पार्थिवं रज: ।
नवं नवं सखीभवं कृणुषे देवसूर्य ।। ५ ।।
सहस्राह्णयं वियतावस्य पक्षौ हरेर्हंसस्य पतत: स्वर्गम् ।
स विश्वान् देवानुरस्युपदद्य संपश्यन् याति भुवनानि विश्वा ।। ६ ।।
रोहितो कालो अभवद् रोहितो अग्रे प्रजापति: ।
रोहितो यज्ञानां मुखं रोहितो ज्योतिरुच्यते ।। ७ ।।
रोहितो भूतो अभवद् रोहितो भव्यमाभरत् ।
रोहितो यज्ञानां मुखं रोहित: स्वराभरत् ।। ८ ।।
रोहित: लोको अभवद् रोहितोत्यतपद् दिवम् ।
रोहितो रश्मिभिर्भूमिं समुद्रमनु सं चरत् ।। ९ ।।
सर्वा दिश: सं चरति रोहितो अधिपतिर्दिव: ।
दिवं समुद्रमाद् भूमिं सर्वांल्लोकान् वि रक्षतु ।। १० ।।

## १८-२५

विभर्त्यंशुं प्रति मुञ्चते स्रजो मुहूर्ते रश्मीनंशुं बृहन्तम् ।
दिवाकर: पश्यति यत् परात् परं प्राह्णं प्रवृष्मणाद्
विश्वमाप्राङ् हिरण्ययो हरित केतुरुद्यन् ।। १ ।।
आरोहन् शुक्रो बृहतीरतन्द्रो मर्त्य: कृणुते वीर्याणि ।
दिव्य: सुपर्णो महिषो वातरंहा यत्
सर्वांल्लोकाङ् अभियद् विभाति ।। २ ।।
अभ्यन्यदेति पर्यन्यदस्यतेहोरात्राभ्यां महिष: कल्पमान: ।
सूर्यं वयं रजसि क्षियन्तं गातुविदं हवामहे नाथकामा: ।। ३ ।।

पृथिवीप्रो महिषो नाधमानस्य गातुरदब्धचक्षुः परि सर्वं बभूव ।
विश्वं संपश्यन् सुविदत्रो यजत्रः शिवायानस्तन्वा शर्म यच्छात्।।४।।
पर्यस्य महिमा पृथिवीं समुद्रं ज्योतिषा विभ्राजन् परि द्यामन्तरिक्षम्।
अहोरात्राभ्यां सह संविदान उषा न आयुः प्रतरादाविष्टम् ।।५।।
अबोध्याग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम् ।
यह्वा इव प्र वयामुज्जिहानाः प्र भानवः सिस्रते नाकमच्छ ।।६।।
कुमारं माता युवतिर्गर्भमन्तर्गुहा बिभर्त्ति न ददाति पित्रे ।
अनीकमस्य न मिनज्जनासः पुरः पश्यन्ति निहितमरतौ ।। ७ ।।
तमेतं त्वं युवते कुमारं पेषी विभर्षि महीषी जजान ।
पूर्विर्हि गर्भः शरदो ववर्धापश्यं जातं यमसूत माता ।। ८ ।।
यस्य तिस्रो वित्ति न एकधा सतो यस्मै बलिं देवजना हरन्ति।
तस्यासौ द्यौः पृथिव्यन्तरिक्षं गुहातिष्ठन्ति वसुना समक्ता ।।९।।
नव दिवो देवजनेन गुप्ता नवान्तरिक्षाणि नव भूमय इमाः ।
यस्मिन्निदं सर्वमोतं प्रोतं यस्मादन्यन् न परं किं चनास्ति ।।१०।।

## १८-२६

न तस्मात् पूर्वं नपरं न्वस्ति न भूतं नोत भव्यं यदासीत् ।
सहस्रपादेकमूर्धाद्वैयात्मा स एवेदमावरीवर्ति भूतम् ।। १ ।।
एकैकं ये अपतं सुपतं सुपर्णाः सोमं दिप्सन्तो ह्यानिवाढाः ।
कस्तेषां वेद पितरं मातरं च को निदानं क आत्मानमेषाम् ।। २ ।।
योभिर्वात इषितः प्रवाति ये ददन्ते पञ्च दिशः सध्रीचीः ।
य आहुतिमत्यमन्यन्त देवा अपां नेतारः कतमे त आसन् ।।३।।
इमामेषां पृथिवीं वस्त एको अन्तरिक्षं पर्येको बभूव ।
दिवमेषां ददते यो विधर्त्ताः सर्वा दिशो रक्षत्येक एषाम् ।। ४ ।।

*(इति महत् काण्डनामअष्टादशकाण्डे चतुर्थोऽनुवाकः)*

१८-२७

व्रात्यो वा इदमग्र आसीदीयमान एव स प्रजापतिं समैरयत् ।
स प्रजापतिरात्मन: सुपर्णमपश्यत् ।। १ ।।
तदेकमभवत् तल्ललाममभवत् तन्महदभवत् तज्ज्येष्ठमभवत् ।
तद् सत्यमभवत् तद् ब्रह्माभवत् तेन प्राजायत ।। २ ।।
सोवर्धत स महानभवत् समहादेवोभवत् स ईषानोभवत्
स देवानामीशां गच्छेत् स देवानामेकव्रात्योभवत् ।। ३ ।।
सधनुरादत्त तदिन्द्रधनुरभवत् ।
नीलमस्योदर लोहितमस्य पृष्ठम् ।। ४ ।।
नीलेनाप्रियं भ्रातृव्यं प्रोर्णोति लोहितेन द्विषन्तं
विध्यतीति ब्रह्मवादिनो वदन्ति ।। ५ ।।

१८-२८

स प्राचीं दिशमनु व्यचलत् ।। १ ।।
तं बृहच्च रथन्तरं च विश्वे च देवा आदित्याश्चानु व्यचलन् ।। २ ।।
वृहतश्च वै स रथन्तरस्य च विश्वेषां च देवानामादित्यानां च
प्रियं धाम भवति य एवं वेद ।। ३ ।।
वृहते च वै स रथन्तराय विश्वेभ्यश्च देवेभ्य आदित्येभ्यश्चा
वृश्चते य एवं विद्वांसं व्रात्यमुपवदति । तस्य प्राच्यां दिशि ।।४।।
श्रद्धा पुंश्चलो मित्रो मागधो विज्ञानं वासोहरुष्णीषं
रात्री केशा हरितौ प्रवर्तौ कल्मलिर्मणि: ।। ५ ।।
भूतं च भव्यं च परिष्कन्दौ मनो विपथम्
मातरिश्वा च पवमानश्च विपथबाहो वात: सारथी रेष्मा प्रतोद:
कीर्तिश्च यशश्च पूर:सरावैनं कीर्तिगच्छत्यैनं
यश: गच्छति य: एवं वेद ।। ६ ।।

स दक्षिणां दिशमनु व्यचलत् ।
तं यज्ञायज्ञियं च वामदेव्यं च
यज्ञश्च यजमानश्च पशवश्चानु व्यचलन् ।। ७ ।।
यज्ञायज्ञियस्य च वै स वामदेव्यस्य च
यज्ञस्य च यजमानस्य च पशूनां च प्रियं धाम भवति य एवं वेद ।
यज्ञायज्ञियाय च वै स वामदेव्याय च यज्ञाय च
यजमानाय च पशुभ्यश्चा वृश्चते य एवं विद्वांसं व्रात्यमुपवदति ।
तस्य दक्षिणायां दिशि ।। ८ ।।
उषा: पूंश्चली मन्त्रो मागधो विज्ञानं वासोहरुष्णीषं
रात्री केशा हरितौ प्रवर्तौ कल्मलिर्मणि: ।। ९ ।।
अहश्च रात्री च परिष्कन्दौ मनो विपथम् ।
मातरिश्वा च पवमानश्च विपथबाहौ वात: सारथी: रेष्मा प्रतोद:
कीर्तिश्च यशश्च पुर:सरावैनं कीर्तिर्गच्छत्यैनं
यश गच्छति य एवं वेद ।। १० ।।
स प्रतीचीं दिशमनु व्यचलत् ।
तं वैरूपं च वैराजं च वरूणश्च राजापश्चानु व्यचलन् ।।११।।
वैरूपस्य च वै स वैराजस्य च वरूणस्य चापं च राज्ञ:
प्रियं धाम भवति य एवं वेद ।
वैरूपाय च वै स वैराजाय च वरूणाय च राज्ञेभ्यश्चा
वृश्चते य एवं विद्वांसं व्रात्यमुपवदति । तस्य प्रतीच्यां दिशि।।१२।।
इरा पुंश्चली हसो मागधो विज्ञानं वासोहरुष्णीषं रात्री केषा
हरितौ प्रवर्तौ कल्मलिर्मणि: ।
पौर्णमासी चामावास्या च परिष्कन्दौ मनो विपथम् ।
मातरिश्वा च पवमानश्च विपथबाहौ वात: सारथी: रेष्मा प्रतोद:

कीर्तिश्च यशश्च पुर:सरावैनं कीर्तिर्गच्छत्यैनं
यशो गच्छति य एवं वेद ।। १३ ।।
स उदीचीं दिशमनु व्यचलत् ।
तं श्यैतं च नौधसं च सोमश्च राजा सप्तर्षयश्चानु व्यचलन् ।
श्यैतस्य च वै स नौधसस्य च सोमस्य राज्ञ: सप्तर्षीणां च
प्रियं धाम भवति य एवं वेद ।। १४ ।।
श्यैताय च वै स नौधसाय च सोमाय च राज्ञे सप्तर्षिभ्यश्चा
वृश्चते य एवं विद्वांसं व्रात्यमुपवदति । तस्योदीच्यां दिशि ।।१५।।
विद्युत् पुंश्चली स्तनइत्नुर्मागधो विज्ञानं वासोहरुष्णीषं रात्री
केशा हरितौ प्रवर्तौ कल्मलिर्मणि: ।
श्रुतं च विश्रुतं च परिष्कन्दौ मनो विपथम् ।
मातरिश्वा च पवमानश्च विपथबाहौ वात: सारथी रेष्मा प्रतोद:
कीर्तिश्च यशश्च पुर:सरावैनं कीर्तिर्गच्छत्यैनं
यशोगछति य एवं वेद ।। १६ ।।

१८-२९

स संवत्सरमूर्ध्वोतिष्ठत् तं देवा अब्रुवन् व्रात्य किं नु तिष्ठतीति ।
सोऽब्रवीदासन्दी मे सं भरन्त्विति ।
तस्मै आसन्दीं समभरन् ।। १ ।।
तस्या वसन्तश्च ग्रीष्मश्च पूर्वौ पादावास्तां वर्षाश्च शरच्चापरौ ।
तं वृहच्च रथन्तरं चानुच्ये आस्तां
यज्ञायज्ञियं च वामदेव्यं च तिरश्च्ये ।। २ ।।
ऋच: प्राञ्चस्तन्तवो यजूंषि तिर्यञ्च: ।
वेद आस्तरणं ब्रह्मोपबर्हणं
सामासाद उद्गीथोपश्रय: तामासीदत् ।। ३ ।।

तस्य संकल्या: प्राहाय्या आसन्देवजना: परिष्कन्दा
अप्सरस: पत्नी विश्वानि भूतान्युपसद: ।
ऐनं विश्वानि भूतानि गच्छन्ति प्रियो विश्वेषां भूतानां
भवति य एवं वेद ।। ४ ।।

१८-३०

तस्मै प्राच्या दिश: ।
वासन्तौ मासौ गोप्तारावकुर्वन् वृहच्च रथन्तरं चानुष्ठातारौ ।
वसन्तावेनं मासौ प्राच्या दिशो गोपायतो
वृहच्च रथन्तरं चानु तिष्ठतो य एवं वेद ।। १ ।।
तस्मै दक्षिणाया दिश: ।
ग्रैष्मौ मासौ गोप्तारावकुर्वन् यज्ञायज्ञियं च वामदेव्यं चानुष्ठातारौ ।
ग्रैष्मावेनं मासौ दक्षिणाया दिशो गोपायतो यज्ञायज्ञियं च
वामदेव्यं चानु तिष्ठतो य एवं वेद ।। २ ।।
तस्मै प्रतीच्या दिश: ।
वार्षिकौ मासौ गोप्तारावकुर्वन् वैरुपं च वैराजं चानुष्ठातारो ।
वार्षिकावेनं मासौ प्रतीच्या दिशो गोपायतो वैरुपं च वैराजं
चानु तिष्ठतो य एवं वेद ।। ३ ।।
तस्मा उदीच्या दिश: ।
शारदौ मासौ गोप्तारावकुर्वञ्छ्यैतं च नौधसं चानुष्ठातारौ ।
शारदावेनं मासावुदीच्या दिशो गोपायत: श्यैतं च नौधसं
चानु तिष्ठतो य एवं वेद ।। ४ ।।
तस्मै ध्रुवाया दिश: ।
हैमनौ मासौ गोप्तारावकुर्वन् भूमि चाग्निं चानुष्ठातारौ ।
हैमनावेनं मासौ ध्रुवाया दिशो गोपायतो भूमिश्चाग्निचानु
तिष्ठतो य एवं वेद ।। ५ ।।

तस्मा ऊर्ध्वाया दिशः ।
शैशिरौ मासौ गोप्तारावकुर्वन् दिवं चादित्यं चानुष्ठातारौ ।
शैशिरावेनं मासौ ऊर्ध्वाया दिशो गोपायतो द्यौश्चादित्यश्चानु
तिष्ठतो य एवं वेद ।। ६ ।।

१८-३१

तस्मै प्राचीनादन्तर्देशाद् भवमिष्वासमनुष्ठातारमकुर्वन् ।
भव एनमिष्वासः प्राचीनादन्तर्देशादनुष्ठातानु तिष्ठति
नैनं शर्वो न भवो नेशानः ।
नास्य पशून् न समानान् हिनस्ति य एवं वेद ।। १ ।।
तस्मै दक्षिणादन्तर्देशाच्छर्वमिष्वासमनुष्ठातारमकुर्वन् ।
शर्व एनमिष्वासो दक्षिणादन्तर्देशादनुष्ठातानु तिष्ठति
नैनं शर्वो न भवो नेशानः ।
नास्य पशून् न समानान् हिनस्ति य एवं वेद ।। २ ।।
तस्मै प्रतीचीनादन्तर्देशादुग्र देवमिष्वासमनुष्ठातारमकुर्वन् ।
उग्रं एनमिष्वासो प्रतीचीनादन्तर्देशादनुष्ठातानु तिष्ठति
नैनं शर्वो न भवो नेशानः ।
नास्य पशून् न समानान् हिनस्ति य एवं वेद ।। ३ ।।
तस्मा उदीचीनादन्तर्देशात् पशुपतिमिष्वासमनुष्ठातारमकुर्वन् ।
पशुपतिरेनमिष्वास उदीचीनादन्तर्देशादनुष्ठातानु तिष्ठति
नैनं शर्वो न भवो नेशानः ।
नास्य पशून् न समानान् हिनस्ति य एवं वेद ।। ४ ।।
तस्मै ध्रुवाया अन्तर्देशादुद्रं देवमिष्वासमनुष्ठातारमकुर्वन् ।
रुद्रं एनं देवमिष्वासो ध्रुवादन्तर्देशादनुष्ठातानु तिष्ठति
नैनं शर्वो न भवो नेशानः ।
नास्य पशून् न समानान् हिनस्ति य एवं वेद ।। ५ ।।

तस्मा उर्ध्वाया अन्तर्देशान्महादेवमिष्वासमनुष्ठातारमकुर्वन् ।
महादेव एनमिष्वास उर्ध्वाया अन्तर्देशादनुष्ठातानु तिष्ठति
नैनं शर्वो न भवो नेशान: ।
नास्य पशून् न समानान् हिनस्ति य एवं वेद ।। ६ ।।
तस्मै सर्वेभ्यो अन्तर्देशेभ्य ईशानमिष्वासमनुष्ठातारमकुर्वन् ।
ईशान एन मिष्वास: सर्वेभ्यो अन्तर्देशेभ्योनुष्ठातानु तिष्ठति
नैनं शर्वो न भवो नेशान: ।
नास्य पशून् न समानान् हिनस्ति य एवं वेद ।। ७ ।।

१८-३२

स ध्रुवां दिशमनु व्यचलत् ।
तं भूमिश्चाग्निश्चौषधयश्च वनस्पतयश्च
वीरुधश्च वानस्पत्याश्चानुव्यचलन् ।
भूमेश्च वै सोग्नेश्चौषधीनां च वनस्पतीनां च वीरुधां च
वानस्पत्यानां च प्रियं धाम भवति य एवं वेद ।
भूमये च वै सोग्नये चौषधीभ्यश्च वनस्पतिभ्यश्च वीरुद्भ्यश्च
वानस्पत्येभ्यश्चा वृश्चते य एवं विद्वांसं व्रात्यमुपवदति ।।१।।
स ऊर्ध्वां दिशमनु व्यचलत् ।
तमृतं च सत्यं च सूर्यश्च चन्द्रमाश्चानु व्यचलन् ।
ऋतस्य च वै स सत्यस्य च सूर्यस्य च चन्द्रमसश्च ।
ऋताय च वै स सत्याय च सूर्याय च चन्द्रमसे चा
वृश्चते य एवं विद्वांसं व्रात्यमुपवदति ।।२।।
स बृहती दिशमनु व्यचलत् ।
तमृचश्च सामानि च यजुंषि च ब्रह्म चानु व्यचलन् ।
ऋचां च वै सा साम्नां च यजुषां च ब्रह्मणश्च
प्रियं धाम भवति य एवं वेद ।

ऋग्भ्यश्च वै स सामभ्यश्च यजुर्भ्यश्च ब्रह्मणे चा
वृश्चते य एवं विद्वांसं व्रात्यमुपवदति ।। ३ ।।
स उत्तमां दिशमनु व्यचलत् ।
तमितिहासश्च पुराणं च गाथाश्च नाराशंसीश्चानुव्यचलन् ।
इतिहासस्य च वै स पुराणस्य च गाथानां च नाराशंसीनां
च प्रियं धाम भवति य एवं वेद ।
इतिहासाय च वै पुराणाय च गाथाभ्यश्च नाराशंसीभ्यश्चा
वृश्चते य एवं विद्वांसं व्रात्यमुपवदति ।। ४ ।।
तं परमां दिशमनु व्यचलत् ।
तमृतवश्चार्तवाश्च लोकाश्च लौक्याश्चानुव्यचलन् ।
ऋतुनां च वै स आर्तवानां च लोकानां च लौक्यानां च
प्रियं धाम भवति य एवं वेद ।
ऋतुभ्यश्च वै स आर्तवेभ्यश्च लोकेभ्यश्च लौकेभ्यश्चा
वृश्चते य एवं विद्वांसं व्रात्यमुपवदति ।। ५ ।।
सो कद्रीचीं दिश मनुव्यचलत्
ततो नावत्स्र्यन्नमन्यत ।
तं विराडनु व्यचलन् । सर्वे च देवा: सर्वाश्च देवता: ।
विराजश्च वै स सर्वेषां च देवानां सर्वासां च
देवतानां च प्रियं धाम भवति य एवं वेद ।
विराजे च वै स सर्वेभ्यश्च देवेभ्य: सर्वाश्च देवताभ्यो
आवृश्चते य एवं विद्वांसं व्रात्यमुपवदति ।। ६ ।।
सोनादिष्टां दिशोमनु व्यचलत् ।
तमाहवनीयश्च गार्हपत्यश्च दक्षिणाग्निश्च
यज्ञश्च यजमानश्च पशवश्चानुव्यचलन् ।

दक्षिणाग्नेश्च वै स गार्हपत्यस्य चाहवनीयस्य यज्ञस्य च
यजमानस्य च पशूनां च प्रियं धाम भवति य एवं वेद ।
दक्षिणाग्नये वै स गार्हपत्याय चाहवनीयाय च यज्ञाय च
यजमानाय च पशूभ्यश्चा वृश्चते
य एवं विद्वांसं व्रात्यमुपवदति ।। ७ ।।
तं दितिश्चादितिश्चेडा चेन्द्राणी चानुव्यचलन् ।
दितेश्च वै सोदितेश्चेडायाश्चेन्द्राण्याश्च
प्रियं धाम भवति य एवं वेद ।।
दितये च वै सोदितये चेडायै चेन्द्राण्यै चा
वृश्चते य एवं विद्वांसं व्रात्यमुपवदति ।। ८ ।।
स दिशोनु व्यचलत् ।
तं प्रजापति च परमेष्ठी च पिता च पितामहश्चानुव्यचलन् ।
प्रजापतेश्च वै स परमेष्ठिनश्च पितुश्च पितामहस्य च
प्रियं धाम भवति य एवं वेद ।
प्रजापतये च वै स परमेष्ठीने च पित्रे च पितामहायचा
वृश्चते य एवं विद्वांसं व्रात्यमुपवदति ।। ९ ।।

*(इति महत् काण्डनामअष्टादशकाण्डे पञ्चमो ऽनुवाक:)*

१८-३३

स महिमा सद्रुर्भुत्वान्तं भूम्याअगच्छत् स समुद्रोभवत् ।
तं प्रजापतिश्च परमेष्ठीचापश्च श्रद्धा च वर्षं च
भूत्वानुव्यवर्तयन्त ।। १ ।।
तं यज्ञश्च लोकश्चान्नश्चान्नाद्यं च भूत्वाभिपर्यावर्तन्त ।। २ ।।
ऐनमापो गच्छत्यैनं वर्षं गच्छत्यैनं श्रद्धा गच्छत्यैनं
दीक्षा गच्छत्यैनं यज्ञो गच्छत्यैनं लोको गच्छत्यैनमन्नं
गच्छत्यैनमन्नाद्यं गच्छति य एवं वेद ।। ३ ।।

१८-३४

सोरज्यत तस्माद्रज्यमानाद्राजन्यो अजायत ।
स विश: सबन्धूनन्नमन्नाद्यञ्चभ्युदतिष्ठत् ।
विशां च वै स सबन्धूनां चान्नस्य चान्नाद्यस्य च
प्रियं धाम भवति य एवं वेद ।
विशाभ्यश्च वै स सबन्धूभ्यश्चान्नाय चान्नाद्याय चा
वृश्चते य एवं विद्वांसं व्रात्यमुपवदति ।। १ ।।

१८-३५

स विशोनु व्यचलत् ।
तं सभा च समितिश्च सेना च सुरा चानुव्यचलन् ।।
सभायाश्च वै स समितेश्च सेनायाश्च सुरायाश्च
प्रियं धामो भवति य एवं वेद ।
सभायै च वै समित्यै च सेनायै च सुरायै चा वृश्चते
य एवं विद्वांसं व्रात्यमुपवदति ।। १ ।।

१८-३६

यस्यैवं विद्वान् व्रात्यो राज्ञोतिथिर्गृहमागच्छेत् ।
श्रेयांसमेनमात्मनो मानयेत् तथा राष्ट्राय ना वृश्चते
तथा क्षत्राय ना वृश्चते तथा ब्रह्मणे ना वृश्चते ।। १ ।।
ततो वै ब्रह्म च क्षत्रं चोदतिष्ठतां ते अब्रूतां कं प्र विशावेति।।२।।
ते प्रजापतिरब्रवीत् बृहस्पतिमेव ब्रह्म प्राविशदिन्द्रं क्षत्रमिति ।
ततो वै बृहस्पतिमेव ब्रह्म प्रा विशदिन्द्रं क्षत्रम् ।। ३ ।।
इयं वा उ भूमिर्बृहस्पतिरसौ द्यौरिन्द्र: ।
अयं वा उ अग्निर्ब्रह्मासावादित्य: क्षत्रम् ।। ४ ।।
ऐनं क्षत्रं गच्छतीन्द्रियावान् भवति
य आदित्यं क्षत्रं दिवमिन्द्रं वेद ।

ऐनं ब्रह्म गच्छति ब्रह्मवर्चसी भवति ।
योग्निं ब्रह्म बृहस्पतिं भूमिं वेद ।। ५ ।।

१८-३७

यस्योद्धृतेष्वग्निष्वहुते अग्निहोत्रे
एवं विद्वान् व्रात्योऽतिथिर्गृहानागच्छेत् ।
स्वयमेनमभ्युदेत्य ब्रूयाद् व्रात्य क्वाऽवात्सीरिति
व्रात्योदकमिति व्रात्य तर्पयन्त्विति ।। १ ।।
यदाह व्रात्य क्वाऽवात्सीरिति पथ एव तेन देवयानानव रुन्द्धे ।
व्रात्योदकमित्यप एव तेनाव रुन्द्धे ।। २ ।।
यदाह व्रात्य तर्पयन्त्विति प्राणमेव तेन वर्षियांसं कृणुते ।
पुराग्निहोत्रस्य हवनादुपांशु कृण्वीत ।। ३ ।।
व्रात्य यथा ते प्रियं तथास्त्विति
व्रात्य यथा ते निकामस्तथास्त्विति
व्रात्य यथा ते वशस्तथास्त्विति ।। ४ ।।
यदाह व्रात्य यथा ते प्रियं तथास्त्विति प्रियमेव तेनाव रुन्द्धे
प्रिये प्रियस्य भवत्यैनं प्रियं गच्छति य एवं वेद ।। ५ ।।
यदाह व्रात्य ते निकामस्तथास्त्विति निकाममेव तेनाव रुन्द्धे
निकामे निकामस्य भवत्यैनं निकामो गच्छति य एवं वेद ।।६।।
यदाह व्रात्य यथा ते वशस्तथास्त्विति वशमेव तेनाव रुन्द्धे
वशी वशिनां भवत्यैनं वशो गच्छति य एवं वेद ।। ७ ।।

१८-३८

यस्यधिश्रिते अग्निहोत्र एवं विद्वान् व्रात्योऽतिथिर्गृहमागच्छेत् ।
स्वयमेनमभ्युदेत्य ब्रुयाद् व्रात्याति सृज होष्यामीति ।। १ ।।

स अति च सृजेज्जुहुयान्न चातिसृजेन्न जुहुयात् ।
यो वा एवं विदुषा व्रात्येनातिसृष्टो जुहोति ।। २ ।।
प्र देवयानं पन्थां जानाति न पितृयाणमा देवेषु
वृश्चते हुतमस्य भवति ।
यो वा एवं विदुषा व्रात्येनातिसृष्टो जुहोति ।। ३ ।।
न देवयानं पन्थां जानाति न पितृयाणं पर्यस्यास्मिंल्लोक
आयतनं शिष्यते य एवं विदुषा व्रात्येनातिसृष्टो जुहोति ।।४।।

१८-३९

यस्यैवं विद्वान् व्रात्य एकां रात्रिमतिथिर्गृहे वसति ।
ये पृथिव्यां पुण्या लोकास्तानेवैनानव रुन्द्धे ।। १ ।।
यस्यैवं विद्वान् व्रात्यो द्वितीयां रात्रिमतिथिर्गृहे वसति ।
ये अन्तरिक्षे पुण्या लोकास्तानेवैनानव रुन्द्धे ।। २ ।।
यस्यैवं विद्वान् व्रात्योस्तृतीयां रात्रिमतिथिर्गृहे वसति ।
ये दिवि पुण्या लोकास्तानेवैनानव रुन्द्धे ।। ३ ।।
यस्यैवं विद्वान् व्रात्यश्चतुर्थीं रात्रिमतिथिर्गृहे वसति ।
सर्वानेवनेन पुण्या लोकास्तानेव तेनाव रुन्द्धे ।। ४ ।।
यस्यैवं विद्वान् व्रात्योपरिमिता रात्रिरतिथिर्गृहे वसति ।
य एवापरिमिता: एवैनेन पुण्या लोकान् तेनाव रुन्द्धे ।। ५ ।।

१८-४०

यस्याव्रात्यो व्रात्यब्रुवो नाम बिभ्रती गृहानतिथिरागच्छेत् ।
कर्षेदेनं न चैनं कर्षेत् ।। १ ।।
एतस्यै देवताया उदकं याचामीत्यस्मा उदकं याचेत् ।
एतां देवतां परिवेवेष्मीत्येनं परि वेविष्यात् ।। २ ।।
एतस्यामेवास्य तद् देवतायां हुतमिष्टं भवति य एवं वेद ।।३।।

## १८-४१

यत् प्राचीं दिशमनु व्यचलदिन्द्रो
भूत्वानुव्यचलन् मनोन्नादं कृत्वा ।
मनसान्नादेनान्नमत्ति य एवं वेद ।। १ ।।
यद् दक्षिणां दिशमनु व्यचलन् मारुतं शर्धो
भूत्वानुव्यचलन् मन्युमन्नादं कृत्वा ।
मन्युनान्नादेनान्नमत्ति य एवं वेद ।। २ ।।
यत् प्रतीचीं दिशमनु व्यचलद् वरुणो राजा
भूत्वानु व्यचलदपोन्नादी: कृत्वा ।
अद्भिरन्नादीभिरन्नमत्ति य एवं वेद ।। ३ ।।
यदुदीचीं दिशमनु व्यचलत्
सोमो राजा भूत्वानु व्यचलत् सप्तर्षिभिर्हुत
आहुतिमन्नादीं कृत्वा ।
आहुत्यान्नाद्यान्नमत्ति य एवं वेद ।। ४ ।।
यद् ध्रुवां दिशमनु व्यचलद्
विष्णुर्भूत्वानुव्यचलद् विराजमन्नादीं कृत्वा ।
विराजान्नाद्यान्नमत्ति य एवं वेद ।। ५ ।।
यदूर्ध्वां दिशमनु व्यचलद् बृहस्पतिर्भूत्वानु व्यचलद्
वषट्कारमन्नादं कृत्वा ।
वषट्कारेणान्नादेनान्नमत्ति य एवं वेद ।। ६ ।।
यत् पशूननु व्यचलद् रुद्रो भूत्वानु
व्यचलदोषधीभिरन्नादी: कृत्वा ।
ओषधीभिरन्नादीभिरन्नमत्ति य एवं वेद ।। ७ ।।

यद् देवाननु व्यचलदीशानो भूत्वानु
व्यचलद् बलमन्नादं कृत्वा ।
बलेनान्नादेनान्नमत्ति य एवं वेद ।।८ ।।
यन् मनुष्या ननु व्यचलदग्निर्भूत्वानु
व्यचलत् स्वाहाकारमन्नादं कृत्वा ।
स्वाहाकारेणान्नादेनान्नमत्ति य एवं वेद ।। ९ ।।
यत् पितृननु व्यचलद् यमो राजा
भूत्वानुव्यचलत् स्वधाकारमन्नादं कृत्वा ।
स्वधाकारेणान्नादेनान्नमत्ति य एवं वेद ।। १० ।।
यत् प्रजा अनु व्यचलत् प्रजापतिर्भूत्वानु
व्यचलत् प्राणमन्नादं कृत्वा ।
प्राणेनान्नादेनान्नमत्ति य एवं वेद ।। ११ ।।
यदन्तर्देशाननु व्यचलद् वायुर्भूत्वानु
व्यचलत् वातमन्नादं कृत्वा ।
वातेनान्नादेनान्नमत्ति य एवं वेद ।। १२ ।।
यद् दिशोनु व्यचलत् परमेष्ठी भूत्वानु
व्यचलद् ब्रह्मान्नादं कृत्वा ।
ब्रह्मणान्नादेनान्नमत्ति य एवं वेद ।।१३ ।।श्री।।विष्णुरिति।।

१८-४२

तस्य सप्त प्राणा: सप्तपाना: सप्त व्याना: ।
यो ऽस्य प्रथम: प्राण उर्द्ध्वो नाम सोयमग्नि: ।। १ ।।
यो ऽस्य द्वितीय: प्राण: प्रौढो नामा सोसावादित्य: ।
यो ऽस्य तृतीय: प्राणो ऽभ्यूढो नामासौ स चन्द्रमा:।।२।।
यो ऽस्य चतुर्थ: प्राणो विभूर्नाम सोयं पवमान: ।
यो ऽस्य पञ्चम: प्राणोपरिमितो नाम त इमे पशव:।।३।।

यो ऽस्य षष्ठः प्राणः प्रियो नाम ता इमाः प्रजाः ।
यो ऽस्य सप्तमः प्राणो योनिर्नाम ता इमा आपः ।। ४ ।।

१८-४३

यो ऽस्य प्रथमो ऽपानः । सा पौर्णमासी ।। १ ।।
यो ऽस्य द्वितीयो ऽपानः । सा अष्टका ।। २ ।।
यो ऽस्य तृतीयो ऽपानः । सामावास्या ।। ३ ।।
यो ऽस्य चतुर्थो ऽपानः । सा श्रद्धा ।। ४ ।।
यो ऽस्य पञ्चमो ऽपानः । सा दीक्षा ।। ५ ।।
यो ऽस्य षष्ठो ऽपानः । स यज्ञः ।। ६ ।।
यो ऽस्य सप्तमो ऽपानः । स वषट्कारः ।। ७ ।।
यो ऽस्य प्रथमो व्यानः । सेयं भूमिः ।। ८ ।।
यो ऽस्य द्वितीयो व्यानः । तदन्तरिक्षम् ।। ९ ।।
यो ऽस्य तृतीयो व्यानः । सा द्यौः ।। १० ।।
यो ऽस्य चतुर्थो व्यानः । तानि नक्षत्राणि ।। ११ ।।
यो ऽस्य पञ्चमो व्यानः । त ऋतवः ।। १२ ।।
यो ऽस्य षष्ठो व्यानः । त आर्तवा ।। १३ ।।
यो ऽस्य सप्तमो व्यानः । स संवत्सरः ।। १४ ।।

समानमर्थं परि यन्ति देवा इति संवत्सरं वा एतदृतवोनुपरियन्ति ।
यदादित्यमभिसंविशन्तीति पौर्णमासीं चैव
तदमावास्यां च अभिसंविशन्ति।।१४।।
तदेकं रूपममृतत्वमेषामित्याहुतिरेव ।
रूपं रूपं तपसा वर्धमाना इत्यहोरात्र एव ।। १५ ।।
यो ऽस्य दक्षिण कर्णः सो ऽयमग्निर्यः सव्यः सो ऽयं पवमानः।।१६।।
यदस्य दक्षिणमक्ष्यसावादित्यो यत् सव्यं तदसौ स चन्द्रमाः।।१७।।

दितिश्चादितिश्च शीर्षकपाले संवत्सर: शिरो ऽहोरात्रे नासिके ।
रात्र्या प्राङ् अह्ना प्रत्यङ् नमो व्रात्याय ।। १८ ।।

*(इति महत् काण्डनामअष्टादशकाण्डे षष्ठो ऽनुवाको)*

१८-४४

अतिसृष्टो अपां वृषभो अतिसृष्टा अग्नयो दिव्या: ।
रुजं परिरुजं मृणं प्रमृणं
म्रोको मनोहा खनो निर्दाह आत्मदूषिस्तनूदूषि:।। १ ।।
इदं तानति सृजामि तां माभ्यवनिक्षि ।
तैस्तमभ्यति सृजामि यो ऽस्मान् द्वेष्टि यं वयं द्विष्म:।। २ ।।
अपामग्रमसि समुद्रं त्वाभ्यवसृजामि ।
यो अप्स्वग्नयो ऽति तां सृजामि म्रोकं खनिं तनूदूषिम् ।। ३ ।।
यो व आपो ऽग्निराविवेश स एष यद् वो घोरं तदेतत् ।
इन्द्रस्यैन्द्र्येणाभि षिञ्चेत् अरिप्रा आपो अप रिप्रमस्मत् ।
प्रैनो वहतु प्र दुष्ष्वप्न्यम् ।। ४ ।।
शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोप स्पृशत त्वचं मे ।
शिवानग्नीनप्सुषदो हवामहे मयि क्षत्रं वर्च आ धत्त देवी:।।५।।

१८-४५

निर्दुरर्मण्य ऊर्जा मधुमती वाङ् मधुमती स्थ ।
मधुमतीं वाचमुदेयं वाचोहं मा यवम् ।। १ ।।
अदब्धो मे गोपा अदब्धो गोपीथ: ।
सुश्रुतौ कर्णौ भद्रश्रुतौ कर्णौ भद्रं श्लोकं श्रूयासम् ।।२।।
उपश्रुतिश्च मानुश्रुतिश्च मा हाशिष्टां सौपर्णं चक्षुरजस्रं ज्योति: ।
ऋषीणां प्रस्तरोसि नमो दैवाय प्रस्तराय ।
मूर्धाहं रयीणां मूर्धा समानानां भूयासम् ।। ३ ।।

## १८-४६

रुजश्च मा वेनश्च मा हासिष्टामुर्वश्च मा चमसश्च
मा हासिष्टां विमोकश्च मार्द्रपविश्च मा हाशिष्टामार्द्रदानुश्च
मा मातरिश्वा च मा हासिष्टां मूर्धा च मा विधर्मा च
मा हासिष्टां धर्ता च मा धरुणश्च मा हासिष्टां
मृधश्च मा वैमृधश्च मा हासिष्टाम् ।। १ ।।
बृहस्पतिर्म आत्मा नृमणा नाम ।
हृदयाजरसं मा मा हासीरसंतापं मे हृदयमस्तु ।। २ ।।
उर्वी गव्युति: समुद्रो अस्मि विधर्मणा ।
नाभिरहं रयीणां नाभि: समानानां भूयासम् ।। ३ ।।

## १८-४७

स्वासदसि सूषा अमृतो मर्त्येष्वा ।
मा मां प्राणोवहाय परा गान्मा मां अपानोवहाय परा गात्।।१।।
सूर्यो माह्न: पात्वग्नि: पृथिव्या वायुरन्तरिक्षाद्यमो
मनुष्येभ्य: सरस्वती पार्थिवेभ्य: ।
प्राणापानौ मा मा हासिष्टं मा जने प्र मेषि ।
स्वस्त्यद्योषसो दोषसश्च सर्व आप: सर्वगणो अशीय ।।२।।

## १८-४८

सु भूरसि रश्मिरस्यायुर्द्धास्यायुर्मयि धेहि ।
सु भूरसि रश्मिरसि वर्चोधा असि वर्चो मयि धेहि ।। १ ।।
सु भूरसि रश्मिरसि तेजोधासि तेजो मयि धेहि ।
सूर्यो मे वर्चोधा वर्चो दधात्विन्द्रियमसीन्द्रियं मयि धेहि।
वर्चोसि वर्चो मयि धेहि ।।२।।

शक्वरी स्थ पशवो मोप स्थेषुर्मित्रावरुणौ मे
प्राणापानावग्निर्मे दक्षं दधातु ।। ३ ।।

*(इति महत् काण्डनामअष्टादशकाण्डे सप्तमो ऽनुवाक:)*

१८-४९

विद्म ते स्वप्न जनित्रं पाप्मन: पुत्रोसि यमस्य करण: ।
स न: स्वप्न सुष्वप्न्यात् पाहि ।। १ ।।
विद्म ते स्वप्न जनित्रं ग्राह्या: पुत्रोसि यमस्य करण: ।
स न: स्वप्न सुष्वप्न्यात् पाहि ।। २ ।।
विद्म ते स्वप्न जनित्रं निर्ऋत्या: पुत्रोसि यमस्य करण: ।
स न: स्वप्न सुष्वप्न्यात् पाहि ।। ३ ।।
विद्म ते स्वप्न जनित्रं अभूत्या: पुत्रोसि यमस्य करण: ।
स न: स्वप्न सुष्वप्न्यात् पाहि ।। ४ ।।
विद्म ते स्वप्न जनित्रं निर्भूत्या: पुत्रोसि यमस्य करण: ।
स न: स्वप्न सुष्वप्न्यात् पाहि ।। ५ ।।
विद्म ते स्वप्न जनित्रं पराभूत्या: पुत्रोसि यमस्य करण: ।
स न: स्वप्न सुष्वप्न्यात् पाहि ।। ६ ।।
विद्म ते स्वप्न जनित्रं देवजामीनां पुत्रोसि यमस्य करण: ।
स न: स्वप्न सुष्वप्न्यात् पाहि ।। ७ ।।

१८-५०

अजैष्माद्यासनामाद्याभूमानागसो वयम् ।
उषो यस्माद् दुष्वप्न्यादभैष्माप तदुच्छतु ।। १ ।।
द्विषते तत् परा वह शपते तत् परा वह ।
यं द्विष्मो यच्च नो द्वेष्टि तस्मा एनद् गमयाम: ।। २ ।।
उषा देवी वाचा संविदाना वाग्देव्युषसा संविदाना ।
उषस्पतिर्वाचस्पतिना संविदानो वाचस्पतिरुषस्पतिना संविदान: ।।३ ।।

ते ऽमुष्मै परा वहन्त्वरायान् दुर्णाम्न: सदान्वारक्षांसि ।
कुम्भीका दूषीका: पीयकान् ।। ४ ।।
जाग्रद् दुष्ष्वप्न्यं स्वप्न्येदुष्वप्न्यम् ।
अनागमिष्यतो वरानवित्ते: संकल्पानमुच्या द्रुह: पाशान् ।।५।।
तदमुष्माग्ने परा वहन्तु देवा: वाध्रिर्यथासद् विथुरो न साधु: ।
तदस्मै गमयाम इति ।। ६ ।।

१८-५१

एवानेवाव सा गरत् ।
असौ मां द्वेष्टि स आत्मानं द्वेष्टु यो ऽस्मान् द्वेष्टि तमात्मा द्वेष्टु ।।१।।
निर्द्विषन्तं दिवो निष्पृथिव्या निरन्तरिक्षात् भजाम। सुयामंश्चाक्षुष।।२।।
इदमहममुमामुष्यायणेमुष्या: पुत्रे दुष्वप्न्यादव दये ।
यददोअदो अभ्यगच्छन् यद् दोषा यत्पूर्वाङ् रात्रिम् ।
यद् दिवा यन्नक्तं यज्जाग्रतो यत् स्वपन्त: ।। ३ ।।
यदहरह: दुष्ष्वप्न्यमभिगच्छामि तस्मादेनमव दये ।
तं जहि तेन मन्दस्व तस्य पृष्ठीरपि शृणीहि तं प्राणो जहातु ।
स वि प्राणो अस्तु स प्र मीयतां सततो मा जीवित् ।। ४ ।।

१८-५२

जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं
स्वरस्माकं यज्ञोस्माकं पशवोस्माकं वीरा अस्माकं प्रजा अस्माकम्।
तस्मान्निर्भजामोमुमामुष्यायणममुष्या: पुत्रम् ।
स ग्राह्या: पाशान्मा मोचि ।
तस्येदं प्राणमायुर्नि वेष्टयामीदमेनमधमन्तमो गमयामि ।। १ ।।
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं
स्वरस्माकं यज्ञोस्माकं पशवोस्माकं वीरा अस्माकं प्रजा अस्माकम्।
तस्मान्निर्भजामोमुमामुष्यायणममुष्या: पुत्रम् ।

स निर्ऋत्याः पाशान्मा मोचि ।
तस्येदं प्राणमायुर्नि वेष्टयामीदमेनमधमं तमो गमयामि ।। २ ।।
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं
स्वरस्माकं यज्ञोस्माकं पशवोस्माकं वीरा अस्माकं प्रजा अस्माकम्।
तस्मान्निर्भजामोमुमामुष्यायणममुष्याः पुत्रम् ।
सोभूत्याः पाशान्मा मोचि ।
तस्येदं प्राणमायुर्नि वेष्टयामीदमेनमधमं तमो गमयामि ।। ३ ।।
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं
स्वरस्माकं यज्ञोस्माकं पशवोस्माकं वीरा अस्माकं प्रजा अस्माकम्।
तस्मान्निर्भजामोमुमामुष्यायणममुष्याः पुत्रम् ।
स निर्भूत्याः पाशान्मा मोचि ।
तस्येदं प्राणमायुर्नि वेष्टयामीदमेनमधमं तमो गमयामि ।। ४ ।।
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं
स्वरस्माकं यज्ञोस्माकं पशवोस्माकं वीरा अस्माकं प्रजा अस्माकम्।
तस्मान्निर्भजामोमुमामुष्यायणममुष्याः पुत्रम् ।
स पराभूत्याः पाशान्मा मोचि ।
तस्येदं प्राणमायुर्नि वेष्टयामीदमेनमधमं तमो गमयामि ।। ५ ।।
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं
स्वरस्माकं यज्ञोस्माकं पशवोस्माकं वीरा अस्माकं प्रजा अस्माकम्।
तस्मान्निर्भजामोमुमामुष्यायणममुष्याः पुत्रम् ।
स देवयामीनां पाशान्मा मोचि ।
तस्येदं प्राणमायुर्नि वेष्टयामीदमेनमधमं तमो गमयामि ।। ६ ।।
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं
स्वरस्माकं यज्ञोस्माकं पशवोस्माकं वीरा अस्माकं प्रजा अस्माकम्।
तस्मान्निर्भजामोमुमामुष्यायणममुष्याः पुत्रम् ।

स ऋषीणां पाशान्मा मोचि ।
तस्येदं प्राणमायुर्नि वेष्टयामीदमेनमधमं तमो गमयामि ।। ७ ।।
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं
स्वरस्माकं यज्ञोस्माकं पशवोस्माकं वीरा अस्माकं प्रजा अस्माकम्।
तस्मान्निर्भजामोमुमामुष्यायणममुष्या: पुत्रम् ।
स आर्षेयाणां पाशान्मा मोचि ।
तस्येदं प्राणमायुर्नि वेष्टयामीदमेनमधमं तमो गमयामि ।। ८ ।।
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं
स्वरस्माकं यज्ञोस्माकं पशवोस्माकं वीरा अस्माकं प्रजा अस्माकम्।
तस्मान्निर्भजामोमुमामुष्यायणममुष्या: पुत्रम् ।
सो ऽङ्गिरसां पाशान्मा मोचि ।
तस्येदं प्राणमायुर्नि वेष्टयामीदमेनमधमं तमो गमयामि ।। ९ ।।
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं
स्वरस्माकं यज्ञोस्माकं पशवोस्माकं वीरा अस्माकं प्रजा अस्माकम्।
तस्मान्निर्भजामोमुमामुष्यायणममुष्या: पुत्रम् ।
स आङ्गिरसानां पाशान्मा मोचि ।
तस्येदं प्राणमायुर्नि वेष्टयामीदमेनमधमं तमो गमयामि ।। १० ।।
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं
स्वरस्माकं यज्ञोस्माकं पशवोस्माकं वीरा अस्माकं प्रजा अस्माकम्।
तस्मान्निर्भजामोमुमामुष्यायणममुष्या: पुत्रम् ।
स अथर्वणां पाशान्मा मोचि ।
तस्येदं प्राणमायुर्नि वेष्टयामीदमेनमधमं तमो गमयामि ।। ११ ।।
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं
स्वरस्माकं यज्ञोस्माकं पशवोस्माकं वीरा अस्माकं प्रजा अस्माकम्।
तस्मान्निर्भजामोमुमामुष्यायणममुष्या: पुत्रम् ।

स आथर्वणानां पाशान्मा मोचि ।
तस्येदं प्राणमायुर्नि वेष्टयामीदमेनमधमं तमो गमयामि ।। १२ ।।
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं
स्वरस्माकं यज्ञोस्माकं पशवोस्माकं वीरा अस्माकं प्रजा अस्माकम्।
तस्मान्निर्भजामोमुमामुष्यायणममुष्याः पुत्रम् ।
स ऋतूनां पाशान्मा मोचि ।
तस्येदं प्राणमायुर्नि वेष्टयामीदमेनमधमं तमो गमयामि ।। १३ ।।
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं
स्वरस्माकं यज्ञोस्माकं पशवोस्माकं वीरा अस्माकं प्रजा अस्माकम्।
तस्मान्निर्भजामोमुमामुष्यायणममुष्याः पुत्रम् ।
स आर्तवानां पाशान्मा मोचि ।
तस्येदं प्राणमायुर्नि वेष्टयामीदमेनमधमं तमो गमयामि ।। १४ ।।
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं
स्वरस्माकं यज्ञोस्माकं पशवोस्माकं वीरा अस्माकं प्रजा अस्माकम्।
तस्मान्निर्भजामोमुमामुष्यायणममुष्याः पुत्रम् ।
स ओषधीनां पाशान्मा मोचि ।
तस्येदं प्राणमायुर्नि वेष्टयामीदमेनमधमं तमो गमयामि ।। १५ ।।
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं
स्वरस्माकं यज्ञोस्माकं पशवोस्माकं वीरा अस्माकं प्रजा अस्माकम्।
तस्मान्निर्भजामोमुमामुष्यायणममुष्याः पुत्रम्।
स वीरुधां पाशान्मा मोचि ।
तस्येदं प्राणमायुर्नि वेष्टयामीदमेनमधमं तमो गमयामि ।। १६ ।।
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं
स्वरस्माकं यज्ञोस्माकं पशवोस्माकं वीरा अस्माकं प्रजा अस्माकम्।
तस्मान्निर्भजामोमुमामुष्यायणममुष्याः पुत्रम्।

स वनस्पतीनां पाशान्मा मोचि ।
तस्येदं प्राणमायुर्नि वेष्टयामीदमेनमधमं तमो गमयामि ।। १७ ।।
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं
स्वरस्माकं यज्ञोस्माकं पशवोस्माकं वीरा अस्माकं प्रजा अस्माकम्।
तस्मान्निर्भजामोमुमामुष्यायणममुष्या: पुत्रम् ।
स वानस्पत्यानां पाशान्मा मोचि ।
तस्येदं प्राणमायुर्नि वेष्टयामीदमेनमधमं तमो गमयामि ।। १८ ।।
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं
स्वरस्माकं यज्ञोस्माकं पशवोस्माकं वीरा अस्माकं प्रजा अस्माकम्।
तस्मान्निर्भजामोमुमामुष्यायणममुष्या: पुत्रम् ।
स इदावत्सरस्य पाशान्मा मोचि ।
तस्येदं प्राणमायुर्नि वेष्टयामीदमेनमधमं तमो गमयामि ।। १९ ।।
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं
स्वरस्माकं यज्ञोस्माकं पशवोस्माकं वीरा अस्माकं प्रजा अस्माकम्।
तस्मान्निर्भजामोमुमामुष्यायणममुष्या: पुत्रम् ।
स परिवत्सरस्य पाशान्मा मोचि ।
तस्येदं प्राणमायुर्नि वेष्टयामीदमेनमधमं तमो गमयामि ।। २० ।।
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं
स्वरस्माकं यज्ञोऽस्माकं पशवोस्माकं वीरा अस्माकं प्रजा अस्माकम्।
तस्मान्निर्भजामोऽमुमामुष्यायणममुष्या: पुत्रम् ।
स संवत्सरस्य पाशान्मा मोचि ।
तस्येदं प्राणमायुर्नि वेष्टयामीदमेनमधमं तमो गमयामि ।। २१ ।।
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं
स्वरस्माकं यज्ञोस्माकं पशवोस्माकं वीरा अस्माकं प्रजा अस्माकम्।
तस्मान्निर्भजामोमुमामुष्यायणममुष्या: पुत्रम् ।

सोऽहोरात्रयो: पाशान्मा मोचि ।
तस्येदं प्राणमायुर्नि वेष्टयामीदमेनमधमं तमो गमयामि ।। २२ ।।
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं
स्वरस्माकं यज्ञोऽस्माकं पशवोस्माकं वीरा अस्माकं प्रजा अस्माकम्।
तस्मान्निर्भजामोऽमुमामुष्यायणममुष्या: पुत्रम् ।
सोह्नो: संयतो: पाशान्मा मोचि ।
तस्येदं प्राणमायुर्नि वेष्टयामीदमेनमधमं तमो गमयामि ।। २३ ।।
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं
स्वरस्माकं यज्ञोस्माकं पशवोस्माकं वीरा अस्माकं प्रजा अस्माकम्।
तस्मान्निर्भजामोमुमामुष्यायणममुष्या: पुत्रम् ।
स इन्द्राग्न्यो: पाशान्मा मोचि ।
तस्येदं प्राणमायुर्नि वेष्टयामीदमेनमधमं तमो गमयामि ।। २४ ।।
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं
स्वरस्माकं यज्ञोस्माकं पशवोस्माकं वीरा अस्माकं प्रजा अस्माकम्।
तस्मान्निर्भजामोमुमामुष्यायणममुष्या: पुत्रम् ।
स बृहस्पते: पाशान्मा मोचि ।
तस्येदं प्राणमायुर्नि वेष्टयामीदमेनमधमं तमो गमयामि ।। २५ ।।
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं
स्वरस्माकं यज्ञोस्माकं पशवोस्माकं वीरा अस्माकं प्रजा अस्माकम्।
तस्मान्निर्भजामोमुमामुष्यायणममुष्या: पुत्रम् ।
स प्रजापते: पाशान्मा मोचि ।
तस्येदं प्राणमायुर्नि वेष्टयामीदमेनमधमं तमो गमयामि ।। २६ ।।
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं
स्वरस्माकं यज्ञोस्माकं पशवोस्माकं वीरा अस्माकं प्रजा अस्माकम्।
तस्मान्निर्भजामोमुमामुष्यायणममुष्या: पुत्रम् ।

स परमेष्ठिन: पाशान्मा मोचि ।
तस्येदं प्राणमायुर्नि वेष्टयामीदमेनमधमं तमो गमयामि ।। २७ ।।
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं
स्वरस्माकं यज्ञोस्माकं पशवोस्माकं वीरा अस्माकं प्रजा अस्माकम्।
तस्मान्निर्भजामोमुमामुष्यायणममुष्या: पुत्रम् ।
स राज्ञो वरुणस्य पाशान्मा मोचि ।
तस्येदं प्राणमायुर्नि वेष्टयामीदमेनमधमं तमो गमयामि ।। २८ ।।
जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं
स्वरस्माकं यज्ञोस्माकं पशवोस्माकं वीरा अस्माकं प्रजा अस्माकम्।
तस्मान्निर्भजामोमुमामुष्यायणममुष्या: पुत्रम् ।
स मृत्यो: पड्बीशात् पाशान्मा मोचि ।
तस्येदं प्राणमायुर्नि वेष्टयामीदमेनमधमं तमो गमयामि ।। २९ ।।

## १८-५३

जितमस्माकमुद्भिन्नमस्माकमभ्यष्ठां विश्वा: पृतना अराती: स्वरभ्यावर्त्ते।
सूर्यस्यावृतमन्वावर्त्ते दक्षिणामन्वावृतम् ।। १ ।।
तदग्निराह तदु सोम आह: पूषा मा धात् सुकृतस्य लोके ।
अगन्म स्व: स्वरगन्म सं सूर्यस्य ज्योतिषामागन्म ।
वस्योभूयाय वसुमान् यज्ञो वसु वंशिषीय वसुमान् भूयासम्।।२।।

*(इति महत् काण्डनामअष्टादशकाण्डे अष्टमो ऽनुवाक:)*

## १८-५४

विषासहिं सहमानं सासहानं सहीयांसं सहमानं सहोजितम् ।
विश्वजितं स्वर्जितमभिजितं वसुजितं गोजितं संजितं संधनाजितम् ।
इड्यं नाम ह्व इन्द्रमायुष्मान् भूयासम् ।। १ ।।

विषासहिं सहमानं सासहानं सहीयांसं सहमानं सहोजितम् ।
विश्वजितं स्वर्जितमभिजितं वसुजितं गोजितं संजितं संधनाजितम् ।
ईक्ष्यं नाम ह्व इन्द्रं देवानां प्रियो भूयासम् ।। २ ।।
विषासहिं सहमानं सासहानं सहीयांसं सहमानं सहोजितम् ।
विश्वजितं स्वर्जितमभिजितं वसुजितं गोजितं संजितं संधनाजितम् ।
ईक्ष्यं नाम ह्व इन्द्रं प्रजानां प्रियो भूयासम् ।। ३ ।।
विषासहिं सहमानं सासहानं सहीयांसं सहमानं सहोजितम् ।
विश्वजितं स्वर्जितमभिजितं वसुजितं गोजितं संजितं संधनाजितम् ।
ईक्ष्यं नाम ह्व इन्द्रं पशूनां प्रिय भूयासम् ।। ४ ।।
विषासहिं सहमानं सासहानं सहीयांसं सहमानं सहोजितम् ।
विश्वजितं स्वर्जितमभिजितं वसुजितं गोजितं संजितं संधनाजितम् ।
ईक्ष्यं नाम ह्व इन्द्रं समानानां प्रिय भूयासम् ।। ५ ।।

१८-५५

उदिह्युदिहि सूर्य वर्चसा माभ्युदिहि ।
द्विषंश्च मह्यं रध्यतु मा चाहं द्विषते रधं तवेद् विष्णो बहुधा वीर्याणि।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः स्वधायां नो धेहि परमे व्योमन्।।१।।
अदिह्युदिहि सूर्य वर्चसा माभ्युदिहि ।
यांश्च पश्यामि यांश्च न तेषु मा सुमतिं कृधि तवेत् विष्णो बहुधा वीर्याणि।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः स्वधायां नो धेहि परमे व्योमन्।।२।।
मा त्वा दभन् सलिले अप्स्वन्तर्ये पाशिन उपतिष्ठन्त्यत्र ।
हित्वाशस्तिं दिवमारुक्ष एतां स नो मृड सुमतौ ते स्याम
तवेद् विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः स्वधायां नो धेहि परमे व्योमन्।।३।।

त्वं न इन्द्र महते सौभगायादब्धेभि: परि पाह्यक्तुभिस्तवेद्
विष्णो बहुधा वीर्याणि ।
त्वं न: पृणीहि पशुभिर्विश्वरूपै: स्वधायां नो धेहि परमे व्योमन्।।४।।
त्वं न इन्द्रोतिभि: शिवाभि: शन्तमो भव ।
आरोहंस्त्रिदिवं दिवो गृणान: सोमपीतये प्रियधामा स्वस्तये
तवेद् विष्णो बहुधा वीर्याणि ।
त्वं न: पृणीहि पशुभिर्विश्वरूपै: स्वधायां नो धेहि परमे व्योमन्।।५।।
त्वमिन्द्रासि विश्वजित् सर्ववित् पुरुहूतस्त्वमिन्द्रेमं सुहवं स्तोममेरयस्व।
शिवाभिस्तनूभिरभि न: सजस्व तवेद् विष्णो बहुधा वीर्याणि ।
त्वं न: पृणीहि पशुभिर्विश्वरूपै: स्वधायां नो धेहि परमे व्योमन्।।६।।
अदब्धो दिवि पृथिव्यामुतासि न त आपुर्महिमानमन्तरिक्षे ।
अदब्धेन ब्रह्मणा वावृधान: स त्वं न इन्द्र दिवि षञ्छर्म यच्छ
तवेद् विष्णो बहुधा वीर्याणि ।
त्वं न: पृणीहि पशुभिर्विश्वरूपै: स्वधायां नो धेहि परमे व्योमन्।।७।।
या त इन्द्र तनूरप्स्वन्तर्यान्तरग्नौ या पृथिव्यां
या त इन्द्र पवमाने स्वर्विदि ।
ययेन्द्र तन्वा ऽन्तरिक्षं समापिथ तया त इन्द्र तन्वा सं शिसाधि
तवेद विष्णो बहुधा वीर्याणि ।
त्वं न: पृणीहि पशुभिर्विश्वरूपै: स्वधायां नो धेहि परमे व्योमन्।।८।।
त्वामिन्द्र ब्रह्मणा वर्धयन्त: सत्रं नि षेदुर्ऋषयो नाधमानास्तवेद्
विष्णो बहुधा वीर्याणि ।
त्वं न: पृणीहि पशुभिर्विश्वरूपै: स्वधायां नो धेहि परमे व्योमन्।।९।।

त्वं रक्षसे प्रदिशश्चतस्त्रस्त्वं शोचिषा नभसी वि भासि ।
ऋतस्य पन्थामन्वेषि विद्वांस्तमिमा विश्वा भुवनानु तिष्ठसि
तवेद् विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः स्वधायां नो धेहि परमे व्योमन्।।१०।।

१८-५६

सप्तभि पराङ् तपस्येकयार्वाङ् अशस्तिमेषि सुदिने वाधमानः ।
त्वं तृतं त्वं पर्येष्युत्सं सहस्त्रधारं विदथं स्वर्विदं
तवेद् विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः स्वधायां नो धेहि परमे व्योमन्।।१।।
त्वमिन्द्रस्त्वं महेन्द्रस्त्वं विष्णुस्त्वं प्रजापतिः ।
तुभ्यं यज्ञो वि तायते तुभ्यं जुह्वति जुह्वतस्तवेद्
विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः स्वधायां नो धेहि परमे व्योमन्।।२।।
असति सत् प्रतिष्ठितं सति भूतं प्रतिष्ठितम् ।
भूतं ह भव्य आहितं भव्यं भूते समाहितं
तवेद् विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः स्वधायां नो धेहि परमे व्योमन्।।३।।
शुक्रो ऽसि भ्राजो ऽसि ।
स यथा त्वं भ्राजता भ्राजोस्येवाहं भ्राजता भ्राज्यासम् ।। ४ ।।
रुचिरोसि रोचो ऽसि ।
स यथा त्वं रुच्या रोचोस्येवाहं प्रजया
पशुभिर्ब्राह्मणवर्चसेन रुचिषीय ।। ५ ।।
उद्यते नम उदायते नम उदिताय नमः ।
विराजे नमः स्वराजे नमः सम्राजे नमः ।। ६ ।।

अस्तंयते नमोस्तमेष्यते नमोस्तमिताय नम: ।
विराजे नम: स्वराजे नम: सम्राजे नम: ।। ७ ।।
आदित्या नाव मारुक्ष: शतारित्रां स्वस्तये ।
अहर्नो अत्यपीपरो रात्रिं सत्राति पारय ।। ८ ।।
सूर्य नावमारुक्ष: शतारित्रां स्वस्तये ।
रात्रिं नो अत्यपीपरोह: सत्राति पारय ।। ९ ।।
प्रजापतेरावृतो ब्रह्मणा वर्मणाहं कश्यपस्य ज्योतिषा वर्चसा च ।
जरदष्टि: कृतवीर्यो विहाया: सहस्रायु: सुकृतश्चरेयम् ।। १० ।।
ऋतेन गुप्त ऋतुभिश्च सर्वैर्भूतेन गुप्त उत भव्येन चाहम् ।
मा मा प्रापन्निषवो दैव्या या मा मानुषीरवसृष्टा वधाय ।। ११ ।।
परिवृतो ब्रह्मणा वर्मणाहं कश्यपस्य ज्योतिषा वर्चसा च ।
मा मा प्रापत् पाप्मा मोत मृत्युरन्तर्दधेहं सलिलेन वाच:।।१२।।
अग्निर्मा गोपा: परि पातु विश्वतो व्युच्छन्तीरुषस: पर्वता ध्रुवा:।
उद्यन् सूर्यो नुदतां मृत्युपाशान् सहस्रं प्राणा मयिते रमन्ताम् ।।१३।।

*(इति महत् काण्डनामअष्टादशकाण्डे नवमो ऽनुवाक:)*

*।। महत्काण्डे द्वितीयखण्ड: समाप्त: ।।*

# अथ महत् काण्डे मङ्गला खण्डम्

१८-५७

ओ चित् सखायं सख्या ववृत्यां तिरः पुरू चिदर्णवं जगन्वान् ।
पितुर्नपातमा दधीत वेधा अधि क्षमि प्रतरं दीध्यानः ।। १ ।।
न ते सखा सख्यं वष्ट्येतत् सलक्ष्मा यद् विषुरूपा भवाति ।
महस्पुत्रासो असुरस्य वीरा दिवो धर्तार उर्विया परि ख्यन् ।। २ ।।
उशन्ति घा ते अमृतास एतदेकस्य चित् त्यजसं मर्त्यस्य ।
नि ते मनो मनसि धाय्यस्मे जन्युः पतिस्तन्वमा विविश्याः ।। ३ ।।
न यत् पुरा चकृमा कद्ध नूनमृतं वदन्तो अनृतं रपेम ।
गन्धर्वो अप्स्वप्या च योषा सा नो नाभिः परमं जामि तन्नौ ।। ४ ।।
गर्भे नू नौ जनिता दंपती कर्देवस्त्वष्टा सविता विश्वरूपः ।
नकिरस्य प्र मिनन्ति व्रतानि वेद नावस्य पृथिवी उत द्यौः ।। ५ ।।
को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून् ।
आसन्निषून् हृत्स्वसो मयोभून् य एषां भृत्यामृणधत् स जीवात् ।। ६ ।।
को अस्य वेद प्रथमस्याह्नः क ईं ददर्श क इह प्र वोचत् ।
बृहन्मित्रस्य वरुणस्य धाम कदु ब्रव आहनो वीच्या नृन् ।।७।।
यमस्य मा यम्यं काम आगन् त्समाने योनौ सहशेय्याय ।
जायेव पत्ये तन्वं रिरिच्यां वि चिद् वृहेव रथ्येव चक्रा ।।८।।
न तिष्ठन्ति न नि मिषन्त्येते देवानां स्पश इह ये चरन्ति ।
अन्येन मदाहनो याहि तूयं तेन वि वृह रथ्येव चक्रा ।। ९ ।।
रात्रीभिरस्मा अहभिर्दशस्येत् सूर्यस्य चक्षुर्मुहरुन्मिमीयात् ।
दिवा पृथिव्या मिथुना सबन्धू यमीर्यमस्य विवृहादजामि ।।१०।।

१८-५८

आ घा ता गच्छानुत्तरा युगानि यत्र जामयः कृणवन्नजामि ।
उप बर्बृहि वृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मत् ।। १ ।।

किं भ्रातासद्यदनाथं भवाति किमु स्वसा यन् नेर्ऋतिर्निगच्छात् ।
काममूता बह्वेतद् रपामि तन्वा मे तन्वं सं पिपृग्धि ।। २ ।।
न वा उ ते तन्वा तनूं सं पपृच्यां पापमाहुर्य: स्वसारं निगच्छात् ।
अन्येन मत् प्रमुद: कल्पयस्व न ते भ्राता सुभगे वष्ट्येतत् ।। ३ ।।
न ते नाथं यम्यत्राहमस्मि न ते तनूं तन्वा सं पपृच्याम् ।
असंयदेतन्मनसो हृदो मे भ्राता स्वसु: शयने यच्छयीय ।। ४ ।।
बतो बतासि यम नैव ते मनो हृदयं चाविदाम ।
अन्या किल त्वां कक्ष्येव युक्तं परि ष्वजाते लिबुजेव वृक्षम् ।।५।।
तस्य वा त्वं मन इच्छा स वा तवाधा कृणुष्व संविदं सुभद्राम् ।
अन्यमू षु त्वं यम्यन्य उ त्वां परि ष्वजाते लिबुजेव वृक्षम् ।।६।।
त्रीणि च्छन्दांसि कवयो वि येतिरे पुरुरूपं दर्शतं विश्वचक्षणम् ।
वाता आपो ओषधयस्तान्येकस्मिन् भुवनार्पितानि ।।७।।
वृषा वृष्णे दुदुहे दोहसा दिव: पयांसि यह्वो अदितेरदाभ्य: ।
विश्वं स वेद वरुणो यथा धिया स यज्ञियो
यजति यज्ञियान् ऋतून् ।। ८ ।।
रपद् गन्धर्वीरप्या च योषणा नदस्य नादे परि पातु नो मन: ।
इष्टस्य मध्ये अदितिर्नि धातु नो भ्राता
नो ज्येष्ठ: प्रथमो वि वोचति ।। ९ ।।
सो चिन्नु भद्रा क्षुमती यशस्वत्युषा उवास मनवे स्वर्वती ।
यदीमुशन्तमुशतामनु क्रतुमग्निं होतारं विदथायजीजनन् ।। १० ।।

१८-५९

अध त्यं द्रप्सं विभ्वं विचक्षणं विराभरदिषिर: श्येनो अध्वरे ।
यदी विशो वृणते दस्ममार्या अग्निं होतारमध धीरजायत ।।१।।
सदासि रण्वो यवसेव पुष्यते होत्राभिरग्ने मनुष: स्वध्वर: ।
विप्रस्य वा यच्छशमान उक्थ्यं वाजं ससवाङ् उपयाहि भूरिभि: ।।२।।

उदीरय पितरा जार आ भगमियक्षति हर्यतो हृत्त इष्यति ।
विवक्ति वह्निः स्वपस्यते मखस्तविष्यते असुरो वेपते मती।।३।।
यस्ते अग्ने सुमतिं मर्तो अख्यत् सहसः सूनो ऽति स प्र शृण्वे ।
इषं दधानो वहमानो अश्वैरा स द्युमाङ् अमवान् भूषति द्युन्।।४।।
श्रुधी नो अग्ने सदने सधस्थे युक्ष्वा रथममृतस्य द्रवित्नुम् ।
आ नो वह रोदसी वेदपुत्रे माकिर्देवानामप भूरिह स्याः ।।५।।
यदग्न एषा समितिर्भवाति देवी देवेषु यजता यजत्र ।
रत्ना च यद् विभजासि स्वधावो भागं नो अत्र वसुमन्तं वीतात् ।।६।।
प्रत्यग्निरुषसामग्रमख्यत् प्रत्यहानि प्रथमो जातवेदाः ।
प्रति सूर्यस्य पुरुधा च रश्मीन् प्रति द्यावापृथिवी आ ततान ।।७।।
अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः ।
अनु सूर्यस्य पुरुधा च रश्मीननु द्यावापृथिवी आ ततान ।।८।।
द्यावा ह क्षामा प्रथमे ऋतेनाभि ऽश्रावे भवतः सत्यवाचा ।
देवो यन् मर्तान् यजथाय कृण्वन्त्सीदद्धोता प्रत्यङ् स्वमसुं यन् ।। ९।।
देवो देवान् परिभूर्ऋतेन वहा नो हव्यं प्रथमश्चिकित्वान् ।
धूमकेतुः समिधा भाऋजीको मन्द्रो होता नित्यो वाचा यजीयान् ।।१०।।

## १८-६०

अर्चामि वां वर्धायापो घृतस्नू द्यावाभूमी शृणतं रोदसी मे ।
अहा यद् देवा असुनीतिमायन् मध्वा नो अत्र पितरा शिशीताम् ।।१।।
स्वावृग्देवस्यामृतं यदी गोरतो जातासो धारयन्त उर्वी ।
विश्वे देवा अनु तत् ते यजुर्गुर्दुहे यदेनी दिव्यं घृतं वाः ।। २ ।।
किं स्विन्नो राजा जगृहे कदस्याति व्रतं चकृमा को वि वेद ।
मित्रश्चिद्धि ष्मा जुहुराणो देवाञ्छ्लोको न यातामपि वाजो अस्ति।।३।।

दुर्मन्त्वत्रामृतस्य नाम सलक्ष्मा यद् विषुरूपा भवाति ।
यमस्य यो मनवते सुमन्त्वग्ने तमृष्व पाह्यप्रयुच्छन् ।। ४ ।।
यस्मिन् देवा विदथे मादयन्ते विवस्वत: सदने धारयन्ते ।
सूर्ये ज्योतिरदधुर्मास्यक्तून् परि द्योतनिं चरतो अजस्रा ।। ५ ।।
यस्मिन् देवा मन्मनि संचरन्त्यपीच्ये न वयमस्य विद्म ।
मित्रो नो अत्रादितिरनागान् सविता देवो वरुणाय वोचत् ।।६।।
सखाय आ शिषामहे ब्रह्मेन्द्राय वज्रिणे ।
स्तुष ऊ षु नृतमाय धृष्णवे ।। ७ ।।
शवसा ह्यसि श्रुतो वृत्रहत्येन वृत्रहा ।
मघैर्मघोनो अति शूर दाशसि ।। ८ ।।
स्तेगो न क्षामत्येषि पृथिवीं मही नो वाता इह वान्तु भूमौ ।
मित्रो नो अत्र वरुणो युज्यमानो अग्निर्वने न व्यसृष्ट शोकम्।।९।।
स्तुहि श्रुतं गर्तसदं जनानां राजानं भीममुपहत्नुमुग्रम् ।
मृडा जरित्रे रुद्र स्तवानो अन्यमस्मत् ते नि वपन्तु सेन्यम्।।१०।।

१८-६१

सरस्वतीं देवयन्तो हवन्ते सरस्वतीमध्वरे तायमाने ।
सरस्वतीं सुकृतो हवन्ते सरस्वती दाशुषे वार्यं दात् ।। १ ।।
सरस्वतीं पितरो हवन्ते दक्षिणा यज्ञमभिनक्षमाणा: ।
आसद्यास्मिन् बर्हिषि मादयध्वं अनमीवा इष आ धेह्यस्मे ।। २ ।।
सरस्वति या सरथं ययाथोक्थै: स्वधाभिर्देवि पितृभिर्मदन्ती ।
सहस्रार्घमिडो अत्र भागं रायस्पोषं यजमानाय धेहि ।। ३ ।।
उदीरतामवर उत् परास उन्मध्यमा: पितर: सोम्यास: ।
असुं य ईयुरवृका ऋतज्ञास्ते नोवन्तु पितरो हवेषु ।। ४ ।।

आहं पितृन् सुविदत्राङ् अवित्सि नपातं च विक्रमणं च विष्णोः।
बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहागमिष्ठाः।।५।।
इदं पितृभ्यो नमो अस्त्वद्य ये पूर्वासो ये ऽपरासः परे ईयुः ।
ये पार्थिवे रजस्या निषत्ता ये वा नूनं सुवृजनासु दिक्षु ।।६।।
मातली कवैर्यमो अङ्गिरोभिर्बृहस्पतिर्ऋक्वभिर्वावृधानः ।
यांश्च देवा वावृधुर्ये च देवान् त्स्वाहान्ये स्वधयान्ये मदन्ति ।।७।।
स्वादुष्किलायं मधुमाङ् उतायं तीव्रः किलायं रसवाङ् उतायम् ।
उतो न्वस्य पपिवाङ्समिन्द्रं न कश्चन सहत आहवेषु ।। ८ ।।
परेयिवासं प्रवतो महीरिनु बहुभ्यः पन्थामनुपस्पशानम् ।
वैवस्वतं सङ्गमनं जनानां यमं राजानं हविषा दुवस्य ।। ९ ।।
यमो नो गातुं प्रथमो विवेद नैषा गव्युतिरपभर्तवा उ ।
यत्रा नः पुर्वे पितरः परेयुरेना यज्ञानाः पथ्या अनु स्वाः ।।१०।।

१८-६२

बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम् ।
त आ गतावसा शंतमेनाधा नः शं योररपो दधात् ।। १ ।।
आच्या जानु दक्षिणतो निषद्येमं यज्ञमभि गृणीत विश्वे ।
मा हिंशिष्ट पितरः केन चिन्नो यद् व आगः पुरुषता कराम।।२।।
त्वष्टा दुहित्रे वहतुं कृणोतीतीदं विश्वं भुवनं समेति ।
यमस्य माता पर्युह्यमाना महो जाया विवस्वतो ननाश ।। ३ ।।
प्रेहि प्रेहि पथिभिः पूर्व्येभिर्यत्रा ते पूर्वे पितरः परेताः ।
उभा राजानौ स्वधया मदन्तौ यमं पश्यासि वरुणं च देवम्।।४।।
अपेत वीत वि च सर्पतातोऽस्मा एतं पितरो लोकमक्रन् ।
अहोभिरद्भिरक्तुभिर्व्यक्तं यमो ददात्यवसानमस्मै ।। ५ ।।
उशन्तस्त्वा नीधीमह्युशन्तः समिधीमहि ।
अशन्नुशत आ वह पितृन् हविषे अत्तवे ।। ६ ।।

द्युमन्तस्त्वा नीधीमहि द्युमन्तः समिधीमहि ।
द्युमान् द्युमत आ वह पितृन् हविषे अत्तवे ।। ७ ।।

*(इति महत् काण्डनामअष्टादशकाण्डे दशमो ऽनुवाकः)*

१८-६३

अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः ।
तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ।। १ ।।
अङ्गिरोभिर्यज्ञियैरा गहीह यम वैरूपैरिह मादयस्व ।
विवस्वन्तं हुवे यः पिता ते अस्मिन् यज्ञे बर्हिष्या निषद्य:।।२।।
इमं यमः प्रस्तरमा हि सीदाङ्गिरोभिः पितृभिः संविदानः ।
आ त्वा मन्त्राः कविशस्ता वहन्त्वेना राजन् हविषो मादयस्व।।३।।
यमाय सोमं सुनुत यमाय जुहुता हविः ।
यमं ह यज्ञो गच्छत्यग्निदूतो अरंकृतः ।। ४ ।।
यमाय घृतवद्धविर्जुहोत प्र च तिष्ठत ।
स नो जीवेष्वा यमेद् दीर्घमायुष्प्रजीवसे ।। ५ ।।
यमाय मधुमत्तमं राज्ञे हव्यं जुहोतन ।
इदं नमो ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः ।। ६ ।।
त्रिकद्रुकेभिः पतति षडुर्वीरेकमिद् बृहत् ।
त्रिष्टुब् गायत्री छन्दांसि सर्वा ता यम आर्पिता ।। ७ ।।
मैनमग्ने वि दहो माभि शूशुचो मास्य त्वचं चिक्षिपो मा शरीरम् ।
यदा शृतं कृणवो जातवेदो ऽथेमेनं प्र हिणुतात् पितृभ्यः ।। ८ ।।
शृतं यदा करसि जातवेदो ऽथेमेनं परि दत्तात् पितृभ्यः ।
यदा गच्छात्यसुनीतिमेतामथा देवानां वशनीर्भवाति ।। ९ ।।
सूर्यं चक्षुर्गच्छतु वातमात्मना दिवं च गच्छ पृथिवीं च धर्मणा ।
आपो वा गच्छ यदि तत्र ते हितमोषधीषु प्रति तिष्ठाः शरीरैः।।१०।।

## १८-६४

अजो भागस्तपसस्तं तपस्व तं ते शोचिस्तपतु तं ते अर्चिः ।
यास्ते शिवास्तन्वो जातवेदस्ताभिर्वहैनं सुकृतामु लोकम् ।। १ ।।
यास्ते शोचयो रंहयो जातवेदस्तन्वः क्रुराः पर्यङ्क्याते ।
अजं यन्तमनु तास्ते समृण्वतामथेतराभिः शिवतमाभिः शृतं कृधि।।२।।
अव सृज पुनरग्ने पितृभ्यो यस्त आहुतश्चरति स्वधाभिः ।
आयुर्वसान उप यातु शेषः सं गच्छतां तन्वा सुवर्चाः ।। ३ ।।
अति द्रव सारमेयौ श्वानौ चतुरक्षौ शबलौ साधुना पथा ।
अधा पितृन् त्सुविदत्राङ् उपेहि यमेन ये सधमादं मदन्ति ।। ४ ।।
यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसा ।
ताभ्यामेनं परि धेहि राजन् स्वस्ति चास्मा अनमीवं च धेहि।।५।।
उरूणसावसुतृपावुदुम्बलौ यमस्य दूतौ चरतो जनाङ् अनु ।
तावस्मभ्यं दृशये सूर्याय पुनर्दातामसुमद्येह भद्रम् ।। ६ ।।
सोम एकेभ्यः पवते घृतमेक उपासते ।
येभ्यो मधु प्रधावति तांश्चिदेवापि गच्छतात् ।। ७ ।।
ये च पूर्वे ऋतसाता ऋतजाता ऋतायवः ।
पितृन् तपस्वतो यम तपोजाङ् अपि गच्छतात् ।। ८ ।।
तपसा ये अनाधृष्यास्तपसा ये स्वर्ययुः ।
तपो ये चक्रिरे महस्तांश्चिदेवापि गच्छतात् ।। ९ ।।
सहस्रणीथाः कवयो ये गोपायन्ति सूर्यम् ।
ऋषीन् तपस्वतो यम तपोजाङ् अपि गच्छतात् ।। १० ।।

## १८-६५

ये युध्यन्ते प्रधनेषु शूरासो ये तनूत्यजः ।
ये वा सहस्रदक्षिणास्तांश्चिदेवापि गच्छतात् ।। १ ।।

सोनास्मै पृथिवी भवानृक्षरा निवेशनी ।
यच्छास्मै शर्म सप्रथा: ।। २ ।।
असंबाधे पृथिव्या उरौ लोके नि धीयते ।
स्वधा याश्चकृषे जीवन् तास्ते सन्तु मधुश्चुत: ।। ३ ।।
ह्वयामि ते मनसा मन इमान् गुहान् उप जुजुषाण एहि ।
सं गच्छस्व पितृभिर्यच्च दत्तं स्योनास्त्वा
वाता उप वान्तु शग्मा: ।। ४ ।।
आ त्वा वहन्तु मरुत उदवाहा उदप्लुत: ।
अजेन कृण्वन्त: शीतं वर्षेणोक्षन्तु बालिति ।। ५ ।।
उदह्वमायुरायुषे क्रत्वे दक्षाय जीवसे ।
स्वान् गच्छतु ते मनो अधा पितृन् उप द्रव: ।। ६ ।।
मा ते मनो मासोर्माङ्गानां मा रसस्य ते ।
मा ते हास्त तन्व: किं चनेह ।। ७ ।।
मा त्वा वृक्ष: सं बाधिष्ट मा देवी पृथिवी मही ।
लोकं पितृषु वित्त्वैधस्व यमराजसु ।। ८ ।।
यत् ते अङ्ग विनिहतं पराचैरपान: प्राणो य उ ते परेत: ।
तत् ते संगत्य पितर: सनीडा घासे घासमा सादयन्तु ।। ९ ।।
अपेमं जीवा अरुधन् गृहेभ्यस्तं निर्वहत परि ग्रामादित: ।
मृत्युर्यमस्यासीद् दूत: प्रचेता असून् पितृभ्यो गमयां चकर्थ।।१०।।

## १८-६६

ये दस्यव: पितृषु प्रविष्टा ज्ञातिमुखा अहुतादश्चरन्ति ।
परापुरो निपुरो ये हरन्ति तानस्माद्यज्ञात् प्र धमन्तु देवा: ।। १ ।।
सं विशन्त्विह पितर: स्वा न: स्योनं कृण्वन्त प्रतिरन्त आयु: ।
तेभ्य: शकेम हविषा नक्षमाणा ज्योग् जीवन्त: शरद: पुरुची:।।२।।

यां ते धेनुं निपृणामि यं वा ते क्षीर ओदनं ।
तेना जनस्यासो भर्ता योत्रासदजीवनः ।। ३ ।।
अश्वावतीं प्र तर या शुशेवा ऋक्षाकं वा प्रतरं नवीयः ।
यस्त्वा जघान वध्यः सो अस्तु मा सो अन्यद् विदत भागधेयम् ।।४।।
यमः परोस्तादवरो विवस्वान् ततः परं नाति पश्याम्यन्यत् ।
यमे अध्वरो अधि मे निविष्टो भुवो विवस्वानन्वाततान ।। ५ ।।
अपागूहन्नमृतां मर्त्येभ्यः कृत्वा सवर्णामदधुर्विवस्वते ।
उताश्विनावभरद् यत् तदासीदजहादु द्वा मिथुना सरण्यूः।। ६ ।।
ये निखाता ये परोप्ता ये दग्धा ये चोद्धिताः ।
सर्वांस्तानग्न आ वह पितॄन् हविषे अत्तवे ।। ७ ।।
ये चेह पितरो ये च नेह याङ्श्च विद्म याङ् उ च न प्रविद्म ।
त्वं वेत्थ यदि ते जातवेदः स्वधाभिर्यज्ञं सुकृतं जुषन्ताम् ।।८।।
शं तप माति तपो अग्ने मा तन्वं तपः ।
वनेषु शुष्मो अस्तु ते पृथिव्यामस्तु यद्धरः ।। ९ ।।
ददाम्यस्मा अवसानमेतद् य एष आगन् मम चेदभूदिह ।
यमश्चिकित्वान् प्रत्येतदाह ममैष राय उप तिष्ठतामिह ।। १० ।।

१८-६७

प्रेमां मात्रां मिमीमहे यथा परं न मासातै ।
शते शरत्सु नो पुरा ।। १ ।।
उदिमां मात्रां मिमीमहे यथा परं न मासातै ।
शते शरत्सु नो पुरा ।। २ ।।
अपेमां मात्रां मिमीमहे यथा परं न मासातै ।
शते शरत्सु नो पुरा ।। ३ ।।
वीमां मात्रां मिमीमहे यथा परं न मासातै ।
शते शरत्सु नो पुरा ।। ४ ।।

निरिमां मात्रां मिमीमहे यथा परं न मासातै ।
शते शरत्सु नो पुरा ।। ५ ।।
अमासि मात्राङ् स्वरगामायुष्मान् भूयासम् ।
यथापरं न मासातै शते शरत्सु नो पुरा ।। ८ ।।
प्राणो अपानो उत वा व्यान आयुश्चक्षुर्दृशये सूर्याय ।
अपरिपरेण पथा यमराज्ञ: पितृन् गच्छ ।। ९ ।।
ये न: पितु: पितर ये पितामहा य आविविशुरुर्वन्तरिक्षम् ।
य आक्षियन्ति पृथिवीमुत द्यां तेभ्यो पितृभ्यो नमसा विधेम।।१०।।
ये अग्रव: शशमाना: परेयुर्हित्वा द्वेषांस्यनपत्यवन्त: ।
ते द्यामुदित्याविदन्त लोकं नाकस्य पृष्ठे अधि दीध्याना: ।।११।।
उदन्वती द्यौरवमा पीलुमतीति मध्यमा ।
तृतीया ह प्रद्यौरिति यस्यां पितर आसते ।। १२ ।।
इदमिद् वा उ तमं दिवि पश्यति सूर्यम् ।
माता पुत्रं यथा सिचाभ्येनं भूम ऊर्णुहि ।। १३ ।।

## १८-६८

इदमिद् वा उ नापरं जरस्यत उतापरम् ।
जाया पतिमिव वाससाभ्येनं भूम ऊर्णुहि ।। १ ।।
अभि त्वोर्णोमि पृथिव्या मातुर्वस्त्रेण भद्रया ।
जीवेषु भद्रं तन्मयि स्वधा पितृषु सा तव ।। २ ।।
अग्नीषोमा पथिकृता स्योनं देवभ्यो रत्नं दधथुर्वि लोकम् ।
उप प्रेष्यन्तं पूषणं यो वहात्यञ्जोयानै: पथिभिस्तत्र गच्छतु ।। ३।।
पूषा त्वेतश्च्यावयतु प्र विद्वाननष्टपशुर्भुवनस्य गोपा: ।
स त्वैतेभ्य: परि ददत् पितृभ्यो अग्निर्देवेभ्य: सुविदत्रियेभ्य:।।४ ।।
आयुर्विश्वायु: परि पातु त्वा पूषा त्वा पातु प्रपथे पुरस्तात् ।
यत्रासते सुकृतो यत्र त ईयुस्तत्र त्वा देव: सविता दधातु ।। ५।।

इदं त्वा वासः प्रथमं न आगन्नपैतदूह यदिहाबिभः पुराः ।
इष्टापूर्तमनुसंक्राम विद्वान् यत्र ते दत्तं बहुधा तत्रगच्छतु ।। ६ ।।
इमौ जुनज्मि ते वह्नी असूनीताय नेतवे ।
ताभ्यां यमस्य सादनं समितिं चोप गच्छतात् ।। ७ ।।
अग्नेर्वर्म परि गोभिर्व्ययस्व सं प्रोर्णुष्व पीवसा मेदसा च ।
नेत् त्वा धृष्णुर्हरसा जर्हृषाणो दधृग् विधक्षन् परीङ्खयातै ।। ८ ।।
धनुर्हस्तादाददानो मृतस्य सह क्षत्रेण वर्चसा बलेन ।
अत्रैव त्वमिह वयं सुवीरा विश्वा मृधो अभिमातीर्जयेम ।। ९ ।।
दण्डं हस्तादाददानो मृतस्य सह श्रोत्रेण वर्चसा बलेन ।
समागृभाय वसु भूरि पुष्टमर्वाङ् त्वमेह्यभि जीवलोकम् ।। १० ।।
इयं नारी पतिलोकं वृणाना नि पद्यत उप त्वा मर्त्य प्रेतम् ।
धर्मं पुराणमनुपालयन्ती तस्यै प्रजां द्रविणं चेह धेहि ।। ११ ।।
उदीर्ष्व नार्यभि जीवलोकं गतासुमेतमुप शेष एहि ।
हस्तग्राभस्य दिधिषोस्तवेदं पत्युर्जनित्वमभि सं बभूथ ।। १२ ।।

*(इति महत् काण्डनामअष्टादशकाण्डे एकादशो ऽनुवाकः)*

## १८-६९

अपश्यं युवतिं नीयमानां जीवां मृतेभ्यः परिणीयमानाम् ।
अन्धेन यत् तमसा प्रावृतासीत् प्राक्तो अपाचीमनयं तदेनाम् ।। १ ।।
प्रजानत्यघ्न्ये जीवलोकं भरन्ति देवानां पन्थामनुसंचरन्ती ।
एष ते गोपतिस्तं जुषस्व स्वर्गं लोकमधि रोहयैनम् ।। २ ।।
उप द्यामुप वेतसमवत्तरो नदीनाम् ।
अग्ने पित्तमपामसि ।। ३ ।।
यं त्वमग्ने समदहस्तमु निर्वापया पुनः ।
क्याम्बूरत्र रोहतु शाण्डदूर्वा व्यल्कशा ।। ४ ।।

इदं त एकं पर ऊ त एकं तृतीयेन ज्योतिषा सं विशस्व ।
संवेशने तन्वा चारुरेधि प्रियो देवानां परमे सधस्थे ।। ५ ।।
उत्तिष्ठ प्रेहि प्र द्रवौक: कृणुष्व सलिले सधस्थे ।
तत्र त्वं पितृभि: संविदान: सं सोमेन मदस्व सं स्वधाभि:।।६ ।।
प्र च्यवस्व तन्वं सं भरस्व मा ते गात्रा वि हायि मो शरीरम् ।
मनो निविष्टमनुसंविशस्व यत्र भूमेर्जुषसे तत्र गच्छ ।। ७ ।।
वर्चसा मां पितर: सोम्यासो अञ्जन्तु देवा मधुना घृतेन ।
चक्षुषे मा प्रतरं तारयन्तो जरसे मा जरदष्टिं वर्धयन्तु ।। ८ ।।
वर्चसा मां समनक्त्वग्निर्मेधां मे विष्णुर्न्यनक्त्वासन् ।
रयिं मे विश्वे नि यच्छन्तु देवा: शुद्धा आप: पवनैर्मा पुनन्तु ।।९।।
मित्रावरुणा परि मामधातामादित्या मा स्वरवो वर्धयन्तु ।
वर्चो म इन्द्रो न्यनक्तु हस्तयोर्जरदष्टिं मा सविता कृणोतु ।।१०।।

१८-७०

यो ममार प्रथमो मर्त्यानां य: प्रेयाय प्रथमो लोकमेतम् ।
वैवस्वतं संगमनं जनानां यमं राजानं हविषा दुवस्य ।। १ ।।
परा यात पितर आ च यातायं वो यज्ञो मधुना समक्त: ।
दत्तो अस्मभ्यं द्रविणेह भद्रं रयिं च न: सर्ववीरं दधात ।। २ ।।
कण्व कक्षीवान् पुरुमीढो अगस्त्य श्यावाश्व: सोभर्यर्चनाना: ।
विश्वामित्रोयं यमदग्निर्वसिष्ठऽवन्तु न: कश्यपो वामदेव: ।। ३ ।।
विश्वामित्र जमदग्ने वसिष्ठ भरद्वाज गोतमो वामदेव ।
शर्दिर्नो अत्रिरग्रभीन्नमोभि: सुसंशास: पितरो मृडता न: ।। ४ ।।
कस्ये मृजाना अति यन्ति रिप्रमायुर्दधाना: प्रतरं नवीय: ।
आप्यायमाना: प्रजया धनेन शुद्धा भवन्त: शुचय: पावका:।।५।।

यद् वो मुद्रं पितर: सोम्यं च तेनो सचध्वं स्वयशसो हि भूत ।
ते अर्वाण: कवय आ शृणोत सुविदत्रा विदथे हूयमाना: ।। ६ ।।
ये अत्रयो अङ्गिरसो नवग्वा इष्टावन्तो रातिषाचो दधाना: ।
दक्षिणावन्त: सुकृतो य उ स्थासद्यास्मिन् वर्हिषि मादयध्वम्।।७।।
अधा यथा न: पितर: परास: प्रत्नासो अग्ने ऋतमाशशाणा: ।
शुचिदयन् दीधितिमुक्थशास: क्षामा भिन्दन्तो अरुणीरप व्रन् ।।८।।
सुकर्माण: सुरुचो देवयन्तो ऽयो न देवा जानिमा धमन्त: ।
शुचन्तो अग्निं ववृधन्त इन्द्रमुर्वीं गव्यां वर्हिषदं नो अक्रन् ।।९।।
आ यूथेव क्षुमति पश्वो अख्यद् देवानां यज्जनिमान्त्युग्र: ।
मर्तानां चिदुर्वशीरकृप्रन् वृधे चिदर्थ उपरस्यायो: ।। १० ।।

१८-७१

अकर्म ते स्वपसो अभूम ऋतमवस्रन् नुषसो विभाती: ।
विश्वं तद् भद्रं यदवन्ति देवा बृहद् वदेम विदथे सुवीरा: ।।१।।
इन्द्रो मा मरुत्वान् प्राच्या दिश: पातु बाहुच्युता पृथिवीं द्यामिवोपरि ।
लोककृत: पथिकृतो यजामहे ये देवानां हुतभागा इहा स्थ ।।२।।
धाता मा निर्ऋत्या दक्षिणाया दिश: पातु बाहुच्युता पृथिवीं द्यामिवोपरि।
लोककृत: पथिकृतो यजामहे ये देवानां हुतभागा इहा स्थ ।।३।।
अदितिर्मादित्यै: प्रतीच्या दिश: पातु बाहुच्युता पृथिवीं द्यामिवोपरि।
लोककृत: पथिकृतो यजामहे ये देवानां हुतभागा इहा स्थ ।।४।।
आदित्योर्मादित्यै विश्वैर्देवैरुदिच्या दिश: पातु बाहुच्युता पृथिवीं द्यामिवोपरि।
लोककृत: पथिकृतो यजामहे ये देवानां हुतभागा इहा स्थ ।।५।।
धर्त्ता ह त्वा धरुणो धारयाता ऊर्ध्वं भानुं सविता द्यामिवोपरि ।
लोककृत: पथिकृतो यजामहे ये देवानां हुतभागा इहा स्थ ।।६।।

प्राच्यां त्वा दिशि पुरा संवृत: स्वधायामा
दधामि बाहुच्युता पृथिवी द्यामिवोपरि।
लोककृत: पथिकृतो यजामहे ये देवानां हुतभागा इहा स्थ ।।७।।
दक्षिणायां त्वा दिशि पुरा संवृत: स्वधायामा
दधामि बाहुच्युता पृथिवी द्यामिवोपरि ।
लोककृत: पथिकृतो यजामहे ये देवानां हुतभागा इहा स्थ ।।८।।
प्रतीच्यां त्वा दिशि पुरा संवृत: स्वधायामा
दधामि बाहुच्युता पृथिवी द्यामिवोपरि ।
लोककृत: पथिकृतो यजामहे ये देवानां हुतभागा इहा स्थ ।।९।।
उदीच्यां त्वा दिशि पुरा संवृत: स्वधायामा
दधामि बाहुच्युता पृथिवी द्यामिवोपरि ।
लोककृत: पथिकृतो यजामहे ये देवानां हुतभागा इहा स्थ।।१०।।

१८-७२

धृवायां त्वा दिशि पुरा संवृत: स्वधायामा
दधामि बाहुच्युता पृथिवी द्यामिवोपरि ।
लोककृत: पथिकृतो यजामहे ये देवानां हुतभागा इहा स्थ ।।१।।
उर्ध्वायां त्वा दिशि पुरा संवृत: स्वधायामा
दधामि बाहुच्युता पृथिवी द्यामिवोपरि ।
लोककृत: पथिकृतो यजामहे ये देवानां हुतभागा इहा स्थ ।।२।।
धृवोसि धरुणोसि वंसगोसि ।
उदपूरसि घृतपूरसि ऋतपूरसि मधुपूरसि वातपूरसि ।। ३।।

१८-७३

इतश्च मामुतश्चावतां यमे इव यतमाने यदैतम् ।
प्र वां भरन् मानुषा देवयन्त: ।।१।।

आ सीदतां स्वमु लोकं विदाने स्वासस्थे भवतमिन्दवे नः।
युजे वां ब्रह्म पूर्व्यं नमोभिर्वि श्लोक एति पथ्येव सूरेः ।।२।।
शृण्वन्तु विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः।
त्रीणि पदानि रुपो अन्वरोहं चतुष्पदीमन्वेमी व्रतेन ।
अक्षरेण प्रति मिमीते अर्कमृतस्य नाभावभि सं पुनामि ।। ३ ।।
देवेभ्यः कमवृणीत मृत्युं प्रजायै कममृतं नावृणीत ।
बृहस्पतिर्यज्ञमकृण्वत ऋषिः प्रियां यमस्तन्वं प्रारिरेच ।। ४ ।।
त्वमग्न ईळितो जातवेदो ऽवाड्ढव्याणि सुरभीणि कृत्वा ।
प्रादाः पितृभ्यः स्वधया ते अक्षन्नद्धि त्वं देव प्रयता हवींषी ।।५।।
आसीनासो अरुणीनामुपस्थे रयिं धत्त दाशुषे मर्त्याय ।
पुत्रेभ्यः पितरस्तस्य वस्वः प्र यच्छत त इहोर्जं दधात ।। ६ ।।
अग्निष्वात्ताः पितर एह गच्छत सदःसद सदत सुप्रणीतयः ।
अत्तो हवींषि प्रयतानि बर्हिषि रयिं च नः सर्ववीरं दधात ।। ७ ।।
उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु ।
त आ गमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु तेवन्त्वस्मान् ।। ८ ।।
ये नः पूर्वे पितरः सोम्यासो अनूजहिरे सोमपीथं वसिष्ठाः।
तेभिर्यमः संरराणो हवींष्युशन्नुशद्भिः प्रतिकाममत्तु ।। ९ ।।
ये तातृषुर्देवत्रा जेहमाना होत्राविद स्तोमतष्टासो अर्कैः ।
आग्ने याहि सुविदत्रेभिरर्वाङ् सत्यैः कव्यैः पितृभिर्घर्मसद्भिः ।।१०।।

१८-७४

ये सत्यास्यो हविरदो हविष्पा इन्द्रेण देवैः सरथं दधानाः ।
अग्ने याहि सहस्रं देववन्दैः परैः पूर्वैः पितृभिर्घर्मसद्भिः ।। १ ।।
उप सर्प मातरं भूमिमेतामुरुव्यचसं पृथिवीं सुशेवाम् ।
ऊर्णम्रदा पृथिवी दक्षिणावत एषा त्वा पातु निर्ऋतेरुपस्थात् ।।२।।

उच्छ्वञ्चस्व पृथिवी मा नि बाधथा: सूपायनास्मै भव सूपवञ्चना ।
माता पुत्रं यथा सिचा ऽभ्येनं भूम ऊर्णुहि ।। ३ ।।
उच्छ्वञ्चमाना पृथिवी सु तिष्ठतु सहस्त्रं मित उप हि श्रयन्ताम् ।
ते गृहासो घृतश्चुत: स्योना विश्वाहास्मै शरणा: सन्त्वत्र ।। ४ ।।
उत् ते स्तभ्नाति पृथिवीं त्वत् परीमं लोगं निदधन्मो अहं रिषम्।
एतां स्थूणां पितरो धारयन्त्यत्रा यम: सादना ते कृणोतु ।।५।।
अथर्वा पूर्णं चमसं यमिन्द्रायाबिभर्वाजिनीवते ।
तस्मिन् कृणोतु सुकृतस्य भक्षं तस्मिन्निन्दु: पवते विश्वदानीम्।।६।।
अमुमग्ने चमसं मा वि जिह्वर: प्रियो देवानामुत सोम्यानाम् ।
एष यश्चमसो देवपानस्तस्मिन् देवा अमृता मादयन्ते ।। ७ ।।
यत् ते कृष्ण: शकुन आतुतोद पिपील: सर्प उत वा श्वापद: ।
अग्निष्टद् विश्वादापृणातु विद्वान् सोमश्च यो ब्राह्मणाङ् आविवेश।।८।।
पयस्वतीरोषधय: पयस्वन्मामकं पय: ।
अथो पयस्वदित् पयस्तेन मा सह जिन्वथ ।। ९ ।।
इमा नारीरविधवा: सुपत्नीराञ्जनेन सर्पिषा सं विशन्तु ।
अनश्रवो अनमीवा: सुरत्ना आ रोहन्तु जनयो योनिमग्रे ।। १०।।

१८-७५

सं गच्छस्व पितृभि: संविदानेष्टापूर्तेन परमे व्योमन् ।
हित्वावद्यं पुनरस्तमेहि सं गच्छस्व तन्वा सुवर्चा: ।। १ ।।
ये अग्निदग्धा ये अनग्निदग्धा मध्ये दिव: स्वधया मादयन्ते ।
तेभ्य: स्वराडसुनितिमेतां यथावशं तन्व: कल्पयाति ।। २ ।।
आ रभस्व जातवेदस्तेजस्वद्धरो अस्तु ते ।
शरीरमस्य सं दहाथैनं धेहि सुकृतामु लोके ।। ३ ।।

पुनर्देहि वनस्पते य एष निहितस्त्वयि ।
यथा यमस्य सादन आसातै विदथा वदन् ।। ४ ।।
शं ते निहारो भवतु शं ते प्रुष्वाव शीयताम् ।
शीतिके शीतिकावति ह्लादिके ह्लादिकावति ।
मण्डूक्याप्सु शं भुव इमं स्वग्निं शमय ।। ५ ।।
विवस्वान् नो अभयं कृणोतु परैतु मृत्युरमृतं न ऐतु ।
इहेमे वीरा बहवो भवन्त्वश्ववन् गोमन्मय्यस्तु पुष्टम् ।। ६ ।।
विवस्वान् नो अमृतत्वे दधातु यः सुत्रामा जिरदानुः सुदानुः ।
इमान् रक्षः पुरूषाना जरिम्णो मो ष्वेषामसवो यमं गुः ।। ७ ।।
यो दध्रे अन्तरिक्षे न मह्ना पितृणां कविः प्रमतिर्मतीनाम् ।
तमर्चत विश्वमित्रा हविर्भिः स नो यमः प्रतरं जीवसे धात् ।। ८ ।।
आ रोहत दिवमुत्तमामृषोयो मा बिभीतन ।
सोमपाः सोमपायिन इदं वः क्रियते हविरगन्म ज्योतिरुत्तमम् ।।९।।
प्र केतुना बृहता भात्यग्निरा रोदसी वृषभो रोरवीति ।
दिवश्चिदन्ताङ् उपमुदानडपामुपस्थे महिषो ववर्ध ।। १० ।।
नाके सुपर्णमुप यत् पतन्तं हृदा वेनन्तो अभ्यचक्षत त्वा ।
हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम् ।। ११ ।।
इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा ।
शिक्षा णो अस्मिन् पुरुहूत वाजिनि जीवा ज्योतिरशीमहि ।।१२।।
ये ते पूर्वे परागता अपरे पितरश्च ये ।
तेभ्यो घृतस्य कुल्यैतु शतधारा व्युन्दती ।। १३ ।।

*(इति महत्काण्डनाम अष्टादशकाण्डे एकादशोऽनुवाकः)*

१८-७६

आ रोहत जनित्रीं जातवेदसः पितृयाणैः सं वो आ रोहयामि ।
अवाड्ढव्येषितो हव्यवाह ईजानं युक्ताः सुकृतां धत्त लोके ।।१।।

देवा यज्ञमृतवः कल्पयन्ति हविः पुरोडाशं स्रुचो यज्ञ आयुधानि ।
तेभिर्याहि पथिभिर्देवयानैर्यैरीजानाः स्वर्गं यन्ति लोकम् ।। २ ।।
ऋतस्य पन्थामनु पश्य साध्वङ्गिरसः सुकृतो येन यन्ति ।
बुध्नस्य विष्टप्यधिविक्रयस्व यत्रादित्या अमृत भक्षयन्ति ।।३।।
त्रयः सुपर्णा उपरस्या सखाय नाकस्य पृष्ठे अधि विष्टपि श्रिताः।
स्वर्गा लोका अमृतेन विष्ठा कामंकामं यजमानाय दुह्राम् ।।४।।
जुहूर्दाधार द्यामुपभृदन्तरिक्षं ध्रुवा दाधार पृथिवीं प्रतिष्ठाम् ।
प्रतिष्ठां लोकानां घृतपृष्ठाः प्र पीनां स्वधामूर्जं यजमानाय दुह्राम्।।५।।
ध्रुव आ रोह पृथिवीं विश्ववेदसमन्तरिक्षमुपभृदा क्रमस्व ।
जुहु द्यां गच्छ यजमानेन साकं स्रुवेण वत्सेन दिशः प्रपीनाः
सर्वा धुक्ष्वा अहृणीयमानः ।। ६ ।।
तीर्थैस्तरन्ति प्रवतो महीरनु यज्ञकृतः सुकृतो येन यन्ति ।
अत्राभजं यजमानाय लोकं दिशो भूतानि यदकल्पयन्त ।। ७ ।।
अङ्गिरसामयनं पूर्वो अग्निरादित्यानामयनं गार्हपत्यो
दक्षिणानामयनं दक्षिणाग्निः ।
महिमानमग्नेर्विहितस्य ब्रह्मणा समङ्ग सर्व उप याहि शग्मः ।।८।।
पूर्वो अग्निष्ट्वा तपतु शं पुरस्ताच्छं पश्चात् तपतु गार्हपत्यः ।
दक्षिणाग्निष्टे तपतु शर्म वर्मोत्तरतो मध्यतो अन्तरिक्षाद्
दिशोदिशो अग्ने परि पाहि घोरात् ।। ९ ।।
यूयमग्ने शंतमाभिस्तनूभिरीजानं अभि लोकं स्वर्गम् ।
अश्वा भूत्वा पृष्टिवाहो वहाथ यत्र देवैः सधमादं मदन्ति ।।१०।।

१८-७७

शमग्ने पश्चात् तप शं पुरस्ताच्छमधरात् तप शं जातवेदः ।
एकस्त्रेधा विहितो जातवेदः सम्यगेनं धेहि सुकृतामु लोके ।।१।।

शमग्नय: समिद्धा आ रभन्तां प्राजापत्यं मेध्यं जातवेदस: ।
शृतं कृण्वन्त इह माव चिक्षिपन् ।। २ ।।
यज्ञ एति वितत: कल्पमान ईजानो ऽभि लोकं स्वर्गम् ।
तमग्नय: सर्वहुतं जुषन्तां तमस्मिंदेवा जानतां भागधेयम् ।। ३ ।।
ईजानश्चितमारुक्षदग्निं नाकस्य पृष्ठाद् दिवमुत्पतिष्यन् ।
तस्मै प्र भाति नभसो ज्योतिषीमान्स्वर्ग: पन्था: सुकृतो देवयान:।।४।।
अग्निर्होताध्वर्युष्टे बृहस्पतिरिन्द्रो ब्रह्मा दक्षिणतस्ते अस्तु ।
हुतोयं संस्थितो यज्ञ एतु यत्र पुर्वमयनं हुतानाम् ।। ५ ।।
अपूपवान् क्षीरवांश्चरुरेह सीदतु त्रिभूवन् पृथिवीं द्यामिवोपरि ।
लोककृत: पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ।। ६।।
अपूपवान् दधिवांश्चरुरेह सीदतु त्रिभूवन् पृथिवीं द्यामिवोपरि ।
लोककृत: पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ।। ७।।
अपूपवान् द्रप्सवांश्चरुरेह सीदतु त्रिभूवन् पृथिवीं द्यामिवोपरि ।
लोककृत: पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ।।८।।
अपूपवान् घृतवांश्चरुरेह सीदतु त्रिभूवन् पृथिवीं द्यामिवोपरि ।
लोककृत: पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ।।९।।
अपूपवान् मांसवांश्चरुरेह सीदतु त्रिभूवन् पृथिवीं द्यामिवोपरि ।
लोककृत: पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ।।१०।।

## १८-७८

अपूपवान् मधुमांश्चरुरेह सीदतु त्रिभूवन् पृथिवीं द्यामिवोपरि ।
लोककृत: पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ।।१।।
अपूपवानन्नवांश्चरुरेह सीदतु त्रिभूवन् पृथिवीं द्यामिवोपरि ।
लोककृत: पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ।।२।।

अपूपवान् रसवांश्चरुरेह सीदतु त्रिभूवन् पृथिवीं द्यामिवोपरि ।
लोककृत: पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ।।३।।
अपूपवानपवांश्चरुरेह सीदतु त्रिभूवन् पृथिवीं द्यामिवोपरि ।
लोककृत: पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ।।४।।
अपूपापिहितान् कुम्भान् यांस्ते देवा अधारयन् ।
ते ते सन्तु स्वधावन्तो मधुमन्तो घृतश्चुत: ।। ५ ।।
यास्ते धाना अनुकिरामि तिलमिश्रा: स्वधावती: ।
तास्ते सन्तुद्भ्वी: प्रभ्वीस्तास्ते राजानु मन्यतां यमो ।
अक्षितिं भूयसीम् ।।६।।
द्रप्सश्चस्कन्द प्रथमामनु द्यामिमं च योनिमनु यश्च पूर्व: ।
ऋतस्य योनिमनु संचरन्तं द्रप्सं जुहोम्यनु सप्त होत्रा: ।। ७ ।।
शतधारं वायुमर्कं स्वर्विदं नृचक्षसस्ते अभि चक्षते रयिम् ।
ये पृणन्ति सर्वदा ते दुह्रते दक्षिणां सप्तमातरम् ।। ८ ।।
उत्सं दुहन्ति कलशं चतुर्बिलमिडां धेनुं मधुमतीं स्वस्तये ।
ऊर्जं मदन्तीमदितिं जनेष्वग्ने मा हिंसी: परमे व्योमन् ।। ९ ।।

१८-७९

एतत् ते देव: सविता वासो ददाति भर्तवे ।
तत् त्वं यमस्य राज्ये वसानस्तार्प्यं चर ।। १ ।।
धाना धेनुरभवद् वत्सो अस्यास्तिलोभवत् ।
तां त्वं यमस्य राज्ये अक्षितामुप जीवति ।। २ ।।
एतास्ते असौ धाना: कामदुधा भवन्तु ।
एनी: श्येनीर्विरूपा स्वरुपास्तिलवत्सा उप तिष्ठन्तु त्वात्र ।।३।।
एनीर्धाना हरिणी: श्येनीरस्य कृष्णा धाना रोहिणीर्धेनवस्ते ।
तिलवत्सा ऊर्जमसै दुहाना विश्वाहा सन्त्वनपस्फुरन्ती ।। ४ ।।

वैश्वानरे हविरिदं जुहोम्येतं साहस्रं शतधारमुत्सम् ।
स बिभर्ति पितरं पितामहान् प्रपितामहान् बिभर्ति पिन्वमान:।।५।।
सहस्रधारं उत्सं शतधारमक्षितं व्यच्यमानं सलिलस्य पृष्ठे ।
ऊर्जं दुहाना अनपस्फुरन्तमुपासतां सुकृतां यत्र लोक: ।। ६ ।।
इदं कसाम्बु चयनेन चितं तत् सजाता अव पश्यतेत ।
मर्त्योयममृतत्वमेति तस्मै लोकं कृणुत यावत्सबन्धु: ।। ७ ।।
इहैवैधि धनसनिरिहचित्त इहक्रतु: ।
इहैधि वीर्यवत्तरो वयोधा अपराहत: ।। ८ ।।
पुत्रान् पौत्रानभितर्पयन्तीरापो मधुमतीरिमा: ।
स्वधां पितृभ्यो अमृतं दुहाना आपो देवीरुभयांस्तर्पयन्तु ।। ९ ।।
आपो अग्निं प्र हिणुतेम यज्ञं पितरो नो जुषन्ताम् ।
आसीनामूर्जमुप ये सचन्ते ते नो रयिं सर्ववीरं नि यच्छान्।।१०।।

१८-८०

समिन्धते अमर्त्यं हव्यवाहं घृतप्रियम् ।
स वेद निहितान् निधीन् पितृन् परावतो गतान् ।। १ ।।
यं ते मन्थं यां कलम्भं यमोदनं यन्मासं निपृणामि ते ।
ते ते सन्तु स्वधावन्तो मधुमन्तो घृतश्चुत: ।। २ ।।
सरस्वतीं यां सुकृतो हवन्ते दक्षिणा यज्ञमभिनक्षमाणा: ।
सहस्रा यौ मैनानत्रपरादा दीर्घमेषामायुष्कृणु विश्वरूपे ।। ३ ।।
इदं पूर्वमपरं नियानं येना ते पूर्वे पितर: परेता: ।
पुरोगवा ये अभिशाचो अस्य ते त्वा वहन्तु सुकृतामु लोकम्।।४।।
पृथिवीं त्वा पृथिव्यामा वेशयामि देवो नो धाता प्र तिरात्यायु:।
परापरैता वसुविद् वो अस्त्वधा मृतै: पितर: सं भवाथ ।। ५ ।।

एयमगन् दक्षिणा भद्रतो नो अनेन दत्ता सुदुघा वयोधा: ।
यौवने जीवाङ् अपि पृञ्चती जरा पितृभ्य उपसंपराणयात् ।। ६ ।।
आ प्र च्यवेथामप तन्मृजेथां यद् वामभिभा अत्रोचु: ।
अर्वाञ्चावेतमघ्न्यौ तद् वशीयो पात्रे पितृष्विहभोजनौ मम ।। ७ ।।
इदं पितृभ्य: प्र भरामि बर्हिर्जीवं देवेभ्य उत्तरं स्तृणामि ।
तदा रोह पुरुषो मेध्यो भवन् प्रति त्वा जानन्तु पितर: परेतम् ।। ८ ।।
एदं बर्हिरसदो मेध्योभू: प्रति त्वा जानन्तु पितर: परेतम् ।
यथापरु तन्वं सं भरस्व गात्राणि ते ब्रह्मणा कल्पयामि ।। ९ ।।
पर्णो राजापिधानं चरूणामूर्जो बलं सह ओजो न आगन् ।
आयुर्जीवेभ्यो विदधद् दीर्घायुत्वाय शतशारदाय ।। १० ।।

१८-८१

ऊर्जो भागो य इदं जजानाश्मान्नानामधिपतिर्बभूव ।
तमर्चत विश्वमित्रा हविर्भि: स नो यम: प्रतरं जीवसे धात् ।। १ ।।
यथा यमाय हर्म्यमवपन् पञ्च मानवा: ।
एवा वपामि हर्म्यं यथा मे भूरयोसत ।। २ ।।
इदं हिरण्यं बिभृहि यत् ते पिताबिभ: पुरा ।
स्वर्गं यत: पितुर्हस्तं निर्मृड्ढि दक्षिणम् ।। ३ ।।
ये च जीवा ये च मृता ये जाता ये च यज्ञिया ।
तेभ्यो घृतस्य कुल्यैतु शतधारा व्युन्दती ।। ४ ।।
वृषा मतीनां पवते विचक्षण: सूरो अह्नां प्रतरीतोषसां दिव: ।
प्राण: सिन्धूनां कलशां अचिक्रददिन्द्रस्य हार्दिमाविशन्मनीषया ।। ५ ।।
त्वेषस्ते धूम ऊर्णोति दिवि षंच्छुक आतत: ।
सूरो न हि द्युता त्वां कृपा पावक रोचसे ।। ६ ।।

प्र वा एतीन्दुरिन्द्रस्य निष्कृतिं सखा सख्युर्न प्र मिनाति संगिर:।
मर्य इव योषा: समर्षसे सोम: कलशे शतयामना पथा ।। ७ ।।
आ यात पितर: सोम्यासो गम्भीरै: पथिभि: पितृयाणै: ।
प्रजामस्मभ्यं दधत रयिं च दीर्घायुत्वाय शतशारदाय ।। ८ ।।
परा यात पितर: सोम्यासो गम्भीरै: पथिभि: पितृयाणै: ।
अधा मासि पुनरा यात नो गृहान् हविरत्तूं सुप्रजस: सुवीरा:।।९।।
अक्षन्नमीमदन्ताव प्रियान् अधूषत: ।
अस्तोषत स्वभानव: परेतु पितरो गृहान् ।। १० ।।

१८-८२

यद् वो अग्निरजहादेकमङ्ग पितृलोकं गमयं जातवेदा: ।
तद् व एतत् पुनरा वेशयामि साङ्गा: सर्गे पितरो मादयध्वम्।।१।।
असौ हा इह ते मन: ।
ककुत्सलमिव जामयोऽभ्येनं भूम उर्णुहि ।। २ ।।
रमध्वं मा विभीतन अस्मिन् गोष्ठे करीषिण: ।
ऊर्जं दधाना सुकृत: शुचिव्रता गृहाजीवन्त उप व: सदेम ।।३।।
ऊर्जं मे देवा अदधुरूर्जं मनुष्या उत ।
ऊर्जं पितृभ्योहार्षमूर्जष्वन्तो गृहान् मम ।। ४ ।।
पयो मे देवा अदधु: पयो मनुष्या उत ।
पय: पितृभ्य आहार्षं पयस्वन्तो गृहान् मम ।। ५ ।।
उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय ।
अधादित्य व्रते वयं तवानागसो अदितये स्याम ।। ६ ।।
ये ते शतं वरुण ये सहस्रं यज्ञिया: पाशान् वितता महान्त: ।
तेभ्यो अस्मान् वरुण: सोम इन्द्रो विश्वे मुञ्चन्तु मरुत: स्वर्का: ।।७।।

प्रास्मत् पाशान् वरुण मुञ्च सर्वान् यैः समामे बध्यते यैर्व्यामे ।
अथ जीवेम शरदं शतानि त्वया राजन् गुपिता रक्षमाणाः ।।८।।
अव ते हेळ इमहे नमोभिरव यज्ञेभिरीमहे हविर्भिः ।
यदस्मद् वरुण प्रचेता राजन्नेनांसि शिश्रथः कृतानि ।। ९ ।।
चन्द्रमा अप्स्वन्तरा सुपर्णो धावते दिवि ।
न वो हिरण्यनेमयः पदं विन्दति विद्युतो
वित्तं मे अस्य रोदसी ।। १० ।।

*(इति महत् काण्डनामअष्टादशकाण्डे द्वादशो ऽनुवाकः)*

षड्विंशति कण्डिका मङ्गला इति ख्याता

*इत्यथर्ववेदे पैप्पलादशाखासंहितायां महत् काण्डनाम अष्टादशकाण्डः समाप्तः*

# अथ त्र्यृचनामऊनविंशति काण्ड:

## १९–१

दोषो गाय बृहद् गाय द्युमद् गाय आथर्वण ।
स्तुहि देवं सवितारम् ।।१।।
तमु स्तुहि यो अन्त: सिन्धुं सूनुं सत्यस्य युवानम् ।
अद्रोघवाचं सुशेवम् ।।२।।
स घा नो देव: सविता साविषद् वसुपतिर्वसूनि ।
उभे सुष्टुती सुगातुम् ।।३।।
इन्द्राय सोममृत्विज: सुनोतु नाव धावत ।
स्तोतुर्यो हवं श्रृणवद्धवं च न: ।।४।।
सुनोता सोमपाव्ने सोममिन्द्राय वज्रिणे ।
युवा जेतेशान: स पुरुष्टुत: ।।५।।
आ त्वा विशन्त्वीन्दवो वयो न वृक्षमन्धस: ।
विरप्शिन् वि मृधो जहि रक्षस्विनी: ।।६।।
आरे ऽसावस्मदस्तु हेतिर्देवासो असत् ।
आरे मर्त्तानामशस्ति: ।।७।।
सखैव नो रातिरस्तु सखेन्द्र: सखा सविता ।
सखा भग: सत्य धर्मा नो अस्तु ।।८।।
अभि नो देवीरवसा महश्शर्मणा नृपत्नी: ।
अच्छिन्नपत्रा: सचन्ताम् ।।९।।

इडे अग्निं भवं शर्वं रक्ष उपव्ज दर्हि ।
बलासमुत सेधि मुग्राम् ।।१०।।
आरे अस्मद् दधते दैव्यं भयं सुवीर्यम् ।
मरुत: शर्म यच्छत ।।११।।
ईडे द्यावापृथिवी पर्वतां अपश्च सूर्यमुर्वन्तरिक्षम् ।
वनस्पतीनोषधीर्गा उतर्च ऋतस्य न: पतयो मृडयन्तु।।१२।।
हुवे विष्णुं पूषणं ब्रह्मणस्पतिं भगं नु शंसं सवितारमूतये।
इह सोमो वरुणो वायुरग्निर्भग उग्रा अवसे नो गमन्तु ।।१३।।
पातं न इन्द्रापूषणा वरुण: पान्तु मरुत: ।
अपां नपात् सिन्धव: सप्त पातन
पातु नो विष्णुरुत द्यौ:।।१४।।
पातां नो द्यावापृथिवी अभिष्टये पातु ग्रावा
पातु सोमो नो अंहस: ।
पातु नो देवी सुहवा सरस्वती पात्वग्निर्ये
शिवा अस्य पायव: ।।१५।।
पातां नो देवाश्विना सुदंससोषासानोक्तोत न उरुष्यताम् ।
अपां नपादविह्वृती कयस्य तच्चिद्देवो
मूर्धं नदिते शर्मयच्छन: ।।१६।।

१९–२

त्वष्टा मे दैव्यं वच: पर्यन्यो ब्रह्मणस्पति: ।
पुत्रैर्भ्रातृभिरदितिर्नु पातु नो दुष्टरं त्रामणे शव: ।।१।।
अंशो भगो वरुणो मित्रो अर्यमादिति: पात्वंहस: ।
अप तस्य द्वेषो गमेदविहृतो यावयच्छत्रुमन्तितम् ।।२।।

देवत्वष्टर्वर्धय सर्वतातये धिये समुश्रिये प्रावतां नः ।
उरुष्या न उरुतरः प्रयुच्छन् द्यौष्पितर्यावय दुच्छुनामितः।।३।।
यो नो वचो ऽभिरुदति सनाभिस्तंनः सोम पलिता अप यन्ति ।
नीचैस्तान् वृश्चन् यथा विरुक्षन् मा ते दृशन्
सूर्यमुच्चरन्तम्।।४।।
त्वयेष्टया त्वया सोम धन्वना त्वया
मुष्टिघ्ना शाशद्महे वयम् ।
तं त्वा वृश्च य इदं न आदृशा कत्वं
ह नामदण्डै रुदितं सनाभिः ।।५।।
पदेन तान् पदव्य नयन्तु वधैरेनान् पितरो दोषयन्तु ।
यथा न जीवाति कतमश्चनैषाम् ।।६।।
येन समादितिः पथा मित्रा वा यन्त्यद्रुहः ।
तेना नोविता भुवः ।।७।।
यो नः सोम सुशंसिनो दुःशंसो अभिदासति ।
वज्रेणास्य मुखे जहि स संपिष्टो अपायति ।।८।।
यो नः सोमाभिदासति सनाभिर्यश्च निष्ट्यः ।
अप तस्य बलं तिर महीव द्यौर्वधत्मना ।।९।।
पुनरघमघकृतमेतु देवाः पुनरेनै नमस्कृतं विजानत् ।
पुनः पुत्रः पितरमेतु विद्वान् हुतमुताद्यदस्यश्नमस्ति ।।१०।।
येन चासौ शपति येन चैनं शपामसि ।
उभौ सं वृज्यतौ तस्मादन्तिकाद्धेतिमस्यताम् ।।११।।
ये पार्थिवासः शपथा य उरावन्तरिक्षे ।
ये वातस्य प्रभर्मणि तेभिष्टं वर्त्तयामसि
यो ऽस्मान् द्वेष्टि यं वयम् दिष्मः ।।१२।।

योस्मान् परि मा सृप: कुल्लिपयानि बिभ्रत: ।
उद्देवस्तेषां वृश्चतु मूलमुर्वार्वा यथा ।।१३।।
योदेवा अघधामघमन्यस्मिन्नशे संगति ।
भारो अघस्य दु:सह प्रत्यक् कर्त्तारमृच्छतु ।।१४।।
पुनरेवाघधामघं द्युम्नमिवैतु वर्षतु ।
आदित्या दुर्यमाहिषी महीं सिन्धोरिवावर्नि: ।।१५।।

१९–३

शश्वद् विद्युत् क्रीयमाणा प्रतीचीन हि पप्त च ।
प्रत्यक् कर्त्तारमृच्छतु ।।१।।
शश्वन्तमिच्छसदानमन्यस्मा ईषूर्दिहानम् ।
प्रतीची: शरुर्ऋच्छतु ।।२।।
यदेतद्धूरिशासद प्रतीचीनमुपोहसे ।
विषादिव विषमद्धितत् ।।३।।
नमस्ते प्रवतो नपाद्यतस्तप: समूहसे ।
मृडया नस्तनूभ्य: शं नस्तोकेभ्यष्कृधि ।।४।।
प्रवतो नपान्नमो अस्तु तुभ्यं नमस्ते हेतये तपुष्यै: ।
विद्म ते धाम परमं गुहा यत् समुद्रे अन्तर्निहितासि नाभि: ।।५।।
यां त्वा देवा अजनयन्त विश्व इषुं कृण्वाना असनाय धृष्णुम् ।
सा नो मृड विदथे गृणाना मित्रस्य च वरुणस्य प्रसृष्टौ ।।६।।
यूयं न: प्रवतो नपान् मरुत: सूर्यत्वचस: ।
शर्म यच्छाथ सप्रथा: ।।७।।
सुमृडत सुषूदत मृडया नो अघ्नाभ्य: ।
स्तोकाय तन्वे च ।।८।।

नमस्ते अस्तु विद्युते नमस्ते स्तनयित्नवे ।
नमस्ते अस्त्वश्मने येना दूडाशे अस्यसि ।।९।।
यो ऽस्मान् ब्रह्मणस्पतेदेवो अभिदासति ।
सर्वं तं रीरधासि नः ।।१०।।
येभिः सोमः साहन्त्यासुरान् रन्धयासि ।
तेभिर्नोविता भुवः ।।११।।
येन देवा असुराणामोजांस्यवृणीध्वम् ।
तेभिर्नो अधि वोचत ।।१२।।
उदेनमुत्तरं नयाग्ने घृतेभिराहुतः ।
समेनं वर्चसा सृज देवानां भागधा असत् ।।१३।।
इन्द्रेमं प्रतरं कृधि सजातानामसद् वशी ।
रायस्पोषेण सं सृज प्रजया च बहुं कृधि ।।१४।।
यस्य कृण्मो गृहे हविस्तमग्ने वर्धया त्वम् ।
तस्मै सोमो अधि ब्रवदयं च ब्रह्मणस्पतिः ।।१५।।

१९–४

ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम् ।
अजस्रं घर्ममीमहे ।।१।।
स इदं प्रति यः पृथग् यज्ञस्य स्वरुत्तिरन् ।
ऋतूंरुत् सृजते वशी ।।२।।
अग्निः प्रियेषु धामसु कामो भूतस्य भव्यस्य ।
सम्राडेको वि राजति ।।३।।
परि द्यामिव सूर्योहीनां जनिमागमम् ।
रात्री जगदिवान्यद्धंसादवारीरिमं विषम् ।।४।।

यद् ब्रह्मभिर्यदृषिभिर्यद् देवैरुदितं पुरा ।
यद् भूतं भव्यमासन्वत् तेन ते वारये विषम् ।।५।।
मधुना पृञ्चे नद्य: पर्वता गिरयो मधु ।
मधु परुष्णी शीपाला शमास्ने अस्तु शं हृदे ।।६।।
यथेयमूर्वी पृथिवी दाधार विष्टितं जगत् ।
एवा ते ध्रियतां गर्भो अनु सूतुं सवितवे ।।७।।
यथेयमूर्वी पृथिवी दाधारेमान् वनस्पतीन् ।
एवा ते ध्रियतां गर्भो अनु सूतुं सवितवे ।।८।।
यथेयमूर्वी पृथिवी दाधार पर्वताङ् अप: ।
एवा ते ध्रियतां गर्भो अनु सूतुं सवितवे ।।९।।
सस्रुषीस्तदपसो दिवा नक्तं च सस्रुषी: ।
वरेण्यक्रतुरहमपो देवीरुप ब्रुवे ।।१०।।
ओता आप: कर्मण्या मुञ्चन्त्वित: प्रणीतये ।
सद्यो भवन्त्वेतवे ।।११।।
देवस्य सवितु: सवे कर्म कृण्वन्ति मानुषा: ।
शं नो भवन्त्वप ओषधीरिमा: ।।१२।।
शतस्य ते धमनीनां सहस्रस्य हिराणाम् ।
अस्थुर्मध्यमा या: साकमन्ता अरंसत ।।१३।।
परि व: सिकतामयी धनूस्थिराश्चिदस्थिरम् ।
तिष्ठतेलयता सु कम् ।।१४।।
अमूर्या यन्ति यामय: सर्वा लोहितवासस: ।
अभ्रातर इव योषितस्तिष्ठन्ति हतवर्चस: ।।१५।।
तिष्ठावरे तिष्ठ पर उत त्वं तिष्ठ मध्यमे ।
कनिष्ठिका च तिष्ठाति तिष्ठादिद्धमनिर्मही ।।१६।।

*(इत्यृचनाम ऊनविंशतिकाण्डे प्रथमोऽनुवाक:)*

## १९–५

नमो देववधेभ्यो नमो राजवधेभ्य: ।
अथो ये विश्यानां वधास्तेभ्यो मृत्यो नमो ऽस्तु ते ।।१।।
नमस्ते अधिवाकाय परावाकाय ते नम: ।
सुमत्यै मृत्यो ते नमो दुर्मत्यै त ईदं नम: ।।२।।
नमस्ते यातुधानेभ्यो नमस्ते भेषजेभ्य: ।
मूलेभ्यो मृत्यो ते नमो ब्राह्मणेभ्य ईदं नम: ।।३।।
नव च या नवतिश्च संयन्ति मन्या अभि ।
ईतस्ता: सर्वा नश्यन्तु वाका अपचितामिव ।।४।।
सप्त च या: सप्ततिश्च संयन्ति स्कन्ध्या अभि ।
ईतस्ता: सर्वा नश्यन्तु वाका अपचितामिव ।।५।।
पञ्च च या: पञ्चाशच्च संयन्ति ग्रैव्या अभि ।
ईतस्ता: सर्वा नश्यन्तु वाका अपचितामिव ।।६।।
आबयो अनाबयो रसस्त उग्र आबयो ।
आ ते करम्भमद् इमहि ।।७।।
स हिन त्वमसि यस्त्वमात्मानमाबय: ।
बभ्रुश्च बभ्रुकर्णश्च नीलागलसाला: शिव: पश्य ।।८।।
तौ विलिकेवेलयावायमैलब ऐलयीत् ।
वीहि स्वामाहुतिं जुषाणो मनसा स्वाहा ।।९।।
स्वाहा मनसा यदिदं कृणोमि
यस्यास्त आसनि जुहोमि घोरे ।
एषां बद्धानामवसर्जनाय कम् ।।१०।।
भूमिरिति त्वाभिप्रमन्वते जना निर्ऋतिरिति
त्वाहं परि वेद विश्वत: ।
भूते हविष्मत्यस्यैष ते भागस्तेन ते विधेयं स्वाहा ।।११।।

एवो ष्वस्मत्त्वं निर्ऋते विश्ववारे अयस्मयान्
प्र मुमुग्धि पाशान् ।
यमेन त्वं यम्या संविदानो यो ऽस्मान् द्वेष्टि यं वयं द्विष्म
स्तस्मिन् तान् पाशान् प्रति मुञ्चन्तु सर्वान् ।।१२।।
उत्तमो अस्योषधीनां तव वृक्षा उपस्तय: ।
उपस्तिरस्माकं भूयाद् यो अस्माङ् अभिदासति।।१३।।
सबन्धुश्चासबन्धुश्च यो अस्माङ् अभिदासति।
सबन्धुन् सर्वांस्तीर्त्वाहं भूयासमुत्तम: ।।१४।।
यथा सोम ओषधीनामुत्तमं हविरुच्यते ।
एवात्वमिव वृक्षाणामहं भूयासमुत्तम: ।।१५।।

१९-६

वरणो वारयाता अयं देवो वनस्पति: ।
यक्ष्मो यो अस्मिन्नाविष्टस्तमु देवा अवीवरन् ।। १ ।।
इन्द्रस्य वचसा वयं मित्रस्य वरुणस्य च ।
देवानां सर्वेषां वाचा यक्ष्मं ते वारयामहे ।। २ ।।
यथा वृत्र इमा आपस्तस्तम्भ विश्वधा यती: ।
एवा ते अग्निना यक्ष्मं वैश्वानरेण वारये ।। ३ ।।
ध्रुवं ध्रुवेण हविषाभि सोमं मृशामसि ।
अत्रा त इन्द्र: केबलीर्विशो बलिहृतस्करत् ।। ४ ।।
आ त्वाहार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलत् ।
विशस्त्वा सर्वा आ यन्तु मा त्वद्राष्ट्रमधि भ्रशत् ।। ५।।
इहैवैधि माप च्योष्ठा: पर्वत इवाविचाचलि ।
इन्द्रेह ध्रुवस्तिष्ठेह राष्ट्रं नि धारय ।। ६ ।।
इन्द्र एतमदीधरद् ध्रुवं ध्रुवेण हविषा ।
तस्मै सोमो अधि ब्रवदयं च ब्रह्मणस्पति: ।। ७ ।।

ध्रुवं ते देव: सविता ध्रुवं देवो बृहस्पति: ।
ध्रुवं त इन्द्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवम् ।। ८ ।।
ध्रुवा द्यौर्ध्रुवा पृथिवी समुद्रा: पर्वता ध्रुवा: ।
देवा ह धर्मणा ध्रुवा ध्रुवो राजा विशामयम् ।। ९ ।।
वृषेन्द्रस्य वृषा दिवो वृषा पृथिव्या अयम् ।
वृषा विश्वस्य भूतस्य त्वमेकोवृषो भव ।। १० ।।
समुद्र ईशे स्रवतामग्नि: पृथिव्या वशी ।
सूर्यो नक्षत्राणामीशे त्वमेकवृषो भव ।। ११ ।।
सम्राडस्यसुराणां ककुन्मनुष्याणाम् ।
देवानामर्धभागसि त्वमेकोवृषो भव ।। १२ ।।
परि वर्त्मान्येषामिन्द्र: पूषा चं सस्रतु: ।
मुह्यन्त्वद्यामू: सेना अमित्राणां परस्तराम् ।। १३ ।।
मुग्धा अमित्राश्चरत आशीर्षाण इवाहय: ।
अथैषामग्निरुद्धानामिन्द्रो हन्तु वरंवरम् ।। १४ ।।
ऐषु नह्य वृषाजिनं हरिणस्य भियं कृधि ।
पराङ् अमित्र एषत्वर्वाची गौरुपेषतु ।। १५ ।।

१९-७

संसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ ।
इडस्पदे समिध्यसे स नो वसून्या भर ।। १ ।।
सं जानीध्वं सं पृच्यध्वं सं वो मनांसि जानताम् ।
देवा भागं यथा पूर्वे संजानाना उपासते ।। २ ।।
समानो मन्त्र: समिति: समानी समानं चित्तं सह वो मनांसि ।
समानेन वो हविषा जुहोमि यथा संमनसो स थ ।।३।।

समानो मन्त्र: समिति: समानी समानं मन: सह चित्तमेषाम् ।
समानं मन्त्रमभिमन्त्रये व: समानमेषां हविषा जुहोमि ।।४।।
उत् सूर्यो दिव एति पुरो विश्वा निजूर्वन् ।
आदित्य: पर्वताङ् अभि विश्वदृष्टो अदृष्टहा ।। ५ ।।
आयुर्विदं विपश्चितं श्रुतां कण्वस्य वीरुधम् ।
आहार्षं विश्वभेषजीमस्यादृष्टान् नि शमयत् ।। ६ ।।
नि गावो गोष्ठे असदन् नि मृगासो अविक्षत ।
नि केतवो जनानां न्यदृष्टा अलिप्सत ।। ७ ।।
हिमवत: प्र स्रवत ता: सिन्धुमपि गच्छत ।
आपो घ मह्यं तद् देवीर्ददन् हृद्द्योतभेषजम् ।। ८ ।।
यदक्षीभ्यामादिद्योत पार्ष्णिभ्यां हृदयेन च ।
आपस्तत् सर्वं निष्करन् त्वष्टारिष्टमिवानशत् ।। ९ ।।
सिन्धुराज्ञे: सिन्धुपत्नी: सर्वा या नद्य स्थन: ।
दत्त नस्तस्य भेषजं तेन वो भूनजामहै ।। १० ।।
पुनन्तु मा देवजना: पुनन्तु मनवो धिया ।
पुनन्तु विश्वा भूतानि पवमान: पुनातु मा ।। ११ ।।
पुनातु मा पवमान: क्रत्वे दक्षाय जीवसे ।
ज्योक् च सूर्यं दृशे ।। १२ ।।
उभाभ्यां देव सवित: पवित्रेण सवेन च ।
अस्मान् पुनीहि चक्षसे ।। १३ ।।
ईर्ष्याया ध्राजिं प्रथमामधमामुत्तमामुत ।
मन्युं हृदय्यं शोकं तं ते निर्मन्त्रयामहे ।। १४ ।।
एतद्यत्ते हृदि श्रितं मनस्कं पतयिष्णुकम् ।
ततस्त ईर्ष्यां मुञ्चामि निरूष्माणं दृतेरिव ।। १५ ।।

यथा भूमिर्मृतमना मृतान्मृतमनस्तरा ।
यथोत मम्रुषो मन एवेर्ष्योर्मृतं मन: ।। १६ ।।

१९-८

द्यौश्च मा पृथिवी च प्रचेतसौ शुक्रो बृहन् दक्षिणा मा पिपर्तु ।
अनु स्वधा चिकितां सोमो अग्निर्वायुर्मा पातु सविता भगश्च।।१।।
पुनर्मन: पुनरायुर्न आगन् पुनश्चक्षु: पुनराकूतिरागन् ।
वैश्वानरो नो अदब्धस्तनूपा अन्तस्तिष्ठाति दुरितादवद्यात्।।२।।
सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सं शिवेन ।
त्वष्टा सुदत्रो वरिव: कृणोत्वनु नो मार्ष्टु तन्वो विरिष्टम्।।३।।
इदं तद्युज उत्तरं येनेन्द्रं शुम्भाम्यष्टये ।
अस्य क्षत्रं श्रियं महीं वृष्टिरिव वर्धया तृणम् ।। ४ ।।
अस्य क्षत्रमग्नीषोमावस्य वर्धयतं रयिम् ।
इमं राष्ट्रस्याभीवर्गे कृणुतं युज उत्तरम् ।। ५ ।।
सबन्धुश्चासबन्धुश्च यो जातो यश्च निष्ट्य: ।
यजमानाय शुन्धते सर्वं तं रीरधासि न: ।। ६ ।।
यशो बृहद् वर्धतामिन्द्रजूतं सहस्रभृष्टि: सुकृतं सहस्वत् ।
प्रसर्स्राणमनु दीर्घाय जीवसे हविष्मन्तं वर्धय सर्वतातये।।७।।
यशा इन्द्रो यशा अग्निर्यशा: सोमो अजायत ।
यशा विश्वस्य भूतस्याहमस्मि यशस्तम: ।। ८ ।।
वयं ते अग्ने यशसो यशोभिर्यशस्विनो हविषैना विधेम ।
स नो देहि राष्ट्रमिन्द्रजूतं तव ते रातौ अधिवाके स्याम।।९।।
अव ज्यामिव धन्वनो मन्युं तनोमि ते हृद: ।
यथा संमनसौ भूत्वा सखिकेव सचावहै ।। १० ।।
वि ते मन्युं नयामसि सखिकेव सचावहै ।
अधस्ते अश्मना मन्युं गुरुणापि नि दध्मसि ।। ११ ।।

अभि तिष्ठामि ते मन्युं पार्ष्णिभ्यां प्रपदाभ्याम् ।
परा ते दंष्ट्रिणं बधं परा मन्युं सुवामि ते ।। १२ ।।
हिरण्मय: पन्था आसीदरित्राणि हिरण्मया ।
नावो हिरण्मयीरासन् याभि: कुष्ठं निरावहन् ।। १३ ।।
सुपर्णसुवने गिरौ जातं हिमवतस्परि ।
धनैरभि श्रुतं यन्ति कुष्ठे हि तक्मनाशन ।। १४ ।।
यो गिरिषु जायसे वीरुधां बलवत्तम: ।
कुष्ठेहि तक्मनाशन तक्मानं नाशयन्नित: ।। १५ ।।

*(इति त्र्यृचनामऊनविंशतिकाण्डे द्वितीयो ऽनुवाक:)*

## १९-९

इदावत्सराय परिवत्सराय संवत्सराय कृणुता बृहन्नम: ।
तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ।। १ ।।
इहैव पन्था बहवो देवयाना अनु द्यावापृथिवी संचरन्ति ।
तेषामज्यानिं जतमो न आवहत्तस्मै नो देवा: परि धत्तेह सर्वे।।२।।
शरद्धेमन्त: शिशिरो वसन्तो ग्रीष्मो वर्षा: स्विते नो दधात ।
आ नो गोषु भजतौषधीषु निवात इद् व: शरणे स्याम ।।३।।
वैश्वानर: न ऊतय आ प्र यातु परावत: ।
अग्निरुक्थैर्नो अंहस: ।। ४ ।।
वैश्वानरो नो आगमदिमं यज्ञं सजू: ।
उपेमं सुष्टुतिं मम ।। ५ ।।
वैश्वानरो नो अङ्गिरोभिस्तोमं यज्ञं च चाक्लृपत् ।
ऐषु द्युम्नं स्वर्यमत् ।। ६ ।।
अजैषं त्वा संलिखितमजैषमुत संरुधम् ।
अविं वृको यथा मथदेवा मथ्नामि ते कृतम् ।। ७ ।।

यथा वृक्षमशनिर्विश्वाहा हन्त्यप्रति ।
एवाहममुं कितवमक्षैर्बध्यासमप्रति ।। ८ ।।
तुराणामतुराणां विशां देवयतीनाम् ।
समैतु विश्वतो भागो अन्तर्हस्तं कृतं ममः ।। ९ ।।
यावद्यौर्यावत् पृथिवी यावदाभाति सूर्यः ।
तावत्सृजामि ते विषं यावदर्षन्ति सिन्धवः ।। १० ।।
उच्छ्वसन्त उदीरते गावो अवसथादिव ।
अहीनां पश्यता विषमपवक्ता न विद्यते ।। ११ ।।
आ जघान पृथग्धनुः सङ्ग्थे धमनीनाम् ।
मूर्धन्यं विषमास्कद्याङ्गानि व्यसिस्त्रसत् ।। १२ ।।
मा नो देवा अहिर्वधीत् सतोकान्सहपूरुषान् ।
संयतं न वि ष्वरद् व्यात्तं न सं यमत् ।। १३ ।।
सं ते ददामि दद्भिर्दतः सं ते हन्वा हनू ।
सं ते जिह्वया जिह्वां संत्वास्नाह आस्यम् ।। १४ ।।
नमो ऽहये असिताय नमस्तिरश्चिराजये ।
स्वजाय बभ्रवे नमो नमो देवजनेभ्यः ।। १५ ।।

१९-१०

मनसे चेतसे धिय आकूतय उत चित्तये ।
मत्यै श्रुताय चक्षसे विधेम हविषा वयम् ।। १ ।।
प्राणायपानाय व्यानाय भूरिरेतसे ।
सरस्वत्या उरुव्यचे विधेम हविषा वयम् ।। २ ।।
मानो हासिषुर्ऋषयो दैव्यासस्तनूपावानः शूचयस्तपोजाः ।
अमर्त्या मर्त्याङ् अभि नः सचध्वमायुर्नः प्रतरं जीवसे धुः ।।३।।
इदमिद् वा उ भेषजमिदं रुद्रस्य भेषजम् ।
येनेषुमेकतेजनां शतशल्यामपब्रुवत् ।। ४ ।।

जालाषेणाभि षिञ्चत जालाषेणोप षिञ्चत ।
जालाषे भद्रं भेषजं तस्य नो धत्त जीवसे ।। ५ ।।
शं च नो मयश्च नो मा च न: किं चनाममत् ।
क्षमा रपो विश्वं नो ऽस्तु भेषजम् ।। ६ ।।
यशसं मेन्द्रो मघवान् कृणोतु यशसं सोमो वरुणो वायुरग्नि: ।
यशसं मा देव: सविता कृणोतु प्रियो दातुर्दक्षिणाया स्यामहम् ।।७।।
यथेन्द्रो द्यावापृथिव्योर्यशस्वान् यथाप ओषधीषु ।
यथा विश्वेषु देवेष्वेवा देवेषु यशस: स्याम ।। ८ ।।
अच्छा वयमिन्द्रं यशसं यशोभिर्यशस्विनो हविषैना विधेम ।
स नो दधद्राष्ट्रमिन्द्रजूतं तस्य राते अधिवाके स्याम ।। ९ ।।
एह यातु वरुण: सोम अग्निर्बृहस्पतिर्वसुभिरेह यातु ।
अस्य श्रियमभिसंजात सर्व उग्रस्य चेत: संमनस: सजाता: ।।१०।।
एह यातु माप याताध्यस्मत् पूषा व: परस्तादपथं कृणोतु ।
वास्तोष्पतिरनु वो ऽयमह्वन् मयि सजाता रमतिर्वो अस्तु ।।११।।
यो व: शुष्मो हृदयेष्वन्तर्या आकूतिर्मनसि प्रविष्टा ।
तान्त्सीवयामि हविषा धृतेन मयि सजाता रमतिर्वो अस्तु ।।१२।।
मम चित्त: प्रयव मन्युते हेन्द्राग्न्योरिव हवमेत सर्वे ।
बृहस्पतिर्वो नि युनक्तु मह्यं मम वाचमेकचित्ता: सचध्वम् ।।१३।।
अहं गृह्णामि मनसा मनांसि मम चित्तमुप चित्तेभिरेत ।
मम वशे हृदयं व: कृणोमि मम यातमनुवर्त्मान एत ।।१४।।
मां वश्चक्षुर्गच्छतु मां प्राणो धाता पदमनुवर्त्म व: कृणोतु ।
ये वो महान्त उत ये कुमारा मम यातमनु यातेभिरेत ।।१५।।

## १९-११

अश्वत्थो देव सदनस्तृतीयस्यामितो दिवि ।
तत्रामृतस्य चक्षणं तत: कुष्ठो ऽजायत ।। १ ।।

देवेभ्यो ऽधिजातो ऽसि सोमस्य सखा हितः ।
स प्राणायपानाय चक्षुषे ऽस्य मृड ।। २ ।।
अयस्मये द्रुपदे बेधिषे यदभिहितो मृत्युभिर्ये सहस्रम् ।
यमो मह्यं पुनरित् त्वां ददाति तस्मै देवाय हविषा विधेम।।३।।
यत् ते देवी निर्ऋतिराबबन्ध दाम ग्रीवास्वविचृत्यम् ।
तत् ते वि ष्याम्यायुषे बलायानमीवं पितुमद्धि प्रसूतः।।४।।
नमस्तु ते निर्ऋते विश्ववारे अयस्मयान् विचृता बन्धमेतम् ।
यमेन त्वं पितृभिः संविदानोत्तमे नाके अधि रोहयेमम् ।।५।।
अन्तर्दावाय जुहुता स्वेतद् यातुधानक्षयणं धृतेन ।
आराद्रक्षांसि प्रति दह अग्ने मास्माकं तन्वमुप तीतपन्तु।।६।।
शर्वो वो ग्रीवा अशरीत् पिशाचाः पृष्टीर्वो ऽपि शृणात्वग्निः।
विरुद् वो विश्वधा वीर्या मृत्युना समजीगमत् ।।७।।
अपिशाचं नो अधरादपिशाचं न उत्तरात् ।
इन्द्रापिशाचं नः पश्चादपिशाचं पुरस्कृधि ।।८।।
इन्द्रश्चकारप्रथमो नैर्हस्तमसुरेभ्यः ।
वृश्चामि शत्रूणां बाहून् अनेन हविषावयम् ।।९।।
निर्हस्तः शत्रुरभिदासन्नो ऽस्तु ये सेनाभिर्युधमायन्त्यस्मान् ।
समर्पयेन्द्र महता वधेन द्रात्वेषामघहारो विविद्धः ।।१०।।
अव मन्युरवायता अव बाहू मनोयुजा ।
पराशर त्वं तेषां पराञ्चं शुष्ममर्दयार्वाञ्चं रयिमा कृधि।।११।।
आतन्वाना आयच्छन्तोस्यन्तो ये व धावथ ।
निर्हस्ताः शत्रवः स्थनेन्द्रो वो ऽद्य पराशरीत् ।।१२।।
निर्हस्ताः सन्तु शत्रवो ऽङ्गैषां म्लापयामसि ।
यथैषामिन्द्र वेदांसि यूथेसु वि भजामहै ।।१३।।

निर्हस्तेभ्यो नैर्हस्तं यं देवा: शरुमस्यथ ।
जयन्तु सत्वानो मम स्थिरेणेन्द्रेण मेदिना ।। १४ ।।

१९-१२

शमीमश्वत्थ आरुढस्तत्र पुंसवनं कृतम् ।
तदेव तस्य भेषजं यत् स्त्रीष्वाहरन्ति तम् ।। १ ।।
पुंसि वै रेतो भवति तत् स्त्रियामनु षिच्यते ।
तद् वै पुत्रस्य वेदनं तत् प्रजापतिरब्रवीत् ।। २ ।।
प्रजापतिरन्वमंस्त सिनीवाल्यचीक्लृपत् ।
स्त्रैषूयमन्यत्र दधत् पुमांसमु दधादिह ।। ३ ।।
या ओषधय: सोमराज्ञीर्बह्वी: शतविचक्षणा: ।
बृहस्पतिप्रसूतास्ता नो मुञ्चत्वंहस: ।। ४ ।।
मुञ्चन्तु मा शपथ्यादथो वरुण्यादुत ।
अथो यमस्य पड्बीशाद् विश्वस्माद् देवदुष्कृतात् ।। ५ ।।
यच्चक्षुषा यन्मनसा यच्च वाचोपारिम यज्जाग्रतो यत् स्वपन्त: ।
सोमो मा तस्मादेनस: स्वधया पुनातु विद्वान् ।। ६ ।।
अभिभूर्यज्ञो अभिभूरग्निरस्त्वभिभू: सोमो अभिभूरिन्द्रो अस्तु ।
अभ्यहं विश्वा: पृतना यथासीदेवा विधेमाग्निहोत्रा इदं हवि: ।।७।।
स्वधास्तु मित्रावरुणा प्रजावत् क्षत्रं मधुनेह पिन्वतम् ।
बाधेथां द्वेषो निर्ऋतिं पराचैरस्मै क्षत्रं वर्च आ धत्तमोज: ।।८।।
इमं वीरमनु हर्षध्वमुग्रमिन्द्रं सत्वानो अनु सं रभध्वम् ।
ग्रामजितं गोजितं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा ।।९।।
अग्नेरिवप्रसितिरस्य शुष्मिण उतेव मत्तो विलपन्नपायति ।
तस्मै तेरुणाय बभ्रवे तपुर्मघाय नमो ऽस्तु तक्मने।।१०।।

नमो यमाय नमो अस्तु मृत्यवे नमो राज्ञे वरुणाय त्विषीमते ।
नमः क्षेत्रस्य पतये नमो दिवे नमः पृथिव्यै नम ओषधीभ्यः ।।११।।
अयं यो जनान् हरितान् कृणोत्युच्छोचयन्नग्निरिवाभिदुन्वन् ।
अधा हि तक्मन्नरसो हि भूया अधा न्यङ्ङ् अधराङ्वा परेहि ।।१२।।
इन्द्रो जयाति न परा जयाता अधिराजो राजसु राजयातै ।
चर्कृत्य ईड्यः शंसस्वोपसद्यो नमस्यो भवेह ।। १३ ।।
त्वमिन्द्राधिराजः श्रवस्युस्त्वं भूरभिभूतिर्जनानाम् ।
त्वं दैवीर्विश इमा वि राजायुष्मत् क्षत्रमजरं ते अस्तु ।।१४।।
प्राच्यां दिशि त्वमिन्द्राधिराजोदीच्यां दिशि वृत्रहन् शत्रुहोसि ।
यत्र यन्ति स्रोत्यास्तज्जितं ते दक्षिणतो वृषभोसि हव्यः ।।१५।।

*(इति त्र्यृचनामउनविंशतिकाण्डे तृतीयो ऽनुवाकः )*

१९-१३

अभि त्वेन्द्र वरिमतः पुरा त्वांहुरणेभ्यः ।
ह्वयाम्युग्रं चेत्तारं पुरुणामानमेकजम् ।। १ ।।
योऽद्य सेन्यो वधो जिघांसन् न उदीरते ।
इन्द्रस्य तत्र बाहू समन्तं परि दध्महे ।। २ ।।
परि दध्म इन्द्रस्य बाहू समन्तं त्रातुस्त्रायतां नः ।
देव सवितः सोम राजन् सुमनसं मा कृणु तं स्वस्तये ।।३।।
देवा अदुः सूर्यो अदाद् द्यौरदात् पृथिव्यदात् ।
सर्वाः सरस्वतीरदुः सचित्ता विषदूषणम् ।। ४ ।।
यद् वो देवा उपजीका आसिञ्चन् धन्वन्युदकम् ।
तेन देवप्रसूतेनेदं दूषयता विषम् ।। ५ ।।
असुराणामसि दुहिता देवानामसि स्वसा ।
दिवस्पृथिव्या यज्ञिषे सा चकर्थारसं विषम् ।। ६ ।।

अस्थिस्रंसं परुस्रंसमास्थितं हृदयामयम् ।
बलासं सर्वं निष्कृध्यङ्गेष्ठा यश्च पर्वसु ।। ७ ।।
निर्बलासं बलासिन: क्षिणोमि पुष्करं यथा ।
छिनद्म्यस्य वन्धनं मूलमुवार्वा यथा ।। ८ ।।
निर्वलासेत: प्र पत: सुपर्णो वसतेरिव ।
अथो इट इव हायनोप द्राह्यवीरहा ।। ९ ।।
आ वृषायस्व श्वसिहि वर्धस्व प्रथयस्व च ।
यथाङ्गं वर्धतां ते शेपस्तेन योषितमिज्जहि ।। १० ।।
येना कृशमेधयन्ति येन हिन्वन्त्यातुरम् ।
तेनास्य ब्रह्मणस्पते धनुरिवा तानया पस: ।। ११ ।।
आहं तनोमि ते पसो अधि ज्वामिव धन्वनि ।
क्रमस्वर्श इव रोहितमनवग्लायता त्वम् ।। १२ ।।
देवा: कपोत इषितो यदिच्छन् दूतो निर्ऋत्या इदमाजगाम ।
तस्मा अर्चाम कृणवाम निष्कृतिं
शं नो अस्तु द्विपदे शं चतुष्पदे ।। १३ ।।
शिव: कपोत इषितो नो अस्त्वनागा देवा: शकुनो गृहे न: ।
अग्निर्हि विप्रो जुषतां हविर्न: परि हेति:
पक्षिणी नो वृणक्तु ।। १४ ।।
हेति: पक्षिणी न दभात्यस्मानाष्ट्री पदं कृणुते अग्निधाने ।
शं नो गोभ्य उत पुरुषेभ्यो मा नो देवा
इह हिंसीत् कपोत: ।। १५ ।।
इषं मदन्त: परि गां नयाम: संयोपयन्तो दुरिता पदानि ।
ऋचा कपोतं नुदत प्रणोदं हित्वा न ऊर्जं
प्र पतात् पथिष्ठ: ।। १६ ।।

नुदे त्वा प्र णुदे त्वा कपोत रक्षसा सह ।
क्षणेन पुनरायासि तत्र त्वा गमयामसि ।। १७ ।।

१९–१४

यथायं वाहो अश्विना समैति सं च वर्तते ।
एवा मामभि ते मन: समैतु सं च वर्तताम् ।। १ ।।
आहं खिदामि ते मनो राजाश्व: पृष्ट्यामिव ।
रेष्मच्छिन्नं यथा तृणं मयि ते वेष्टतां मन: ।। २ ।।
आञ्जनस्य मधुघस्य कुष्ठस्य नलदस्य च ।
तुरो भगस्य हस्याभ्यामनुरोधनमाभरे ।। ३ ।।
अयमा यात्यर्यमा पुरस्ताद् विषितस्तुप: ।
स इच्छेदग्रुवै पतिमथो जायामजानये ।। ४ ।।
अश्रमदियमर्यमन्नन्यासां समनं यती ।
अङ्गो न्वस्या अर्यमन्नन्या: समनमायति ।। ५ ।।
धाता दाधार पृथिवीं धाता द्यामुत सूर्यम् ।
धातास्या अग्रुवै पतिं दधातु प्रतिकाम्यम् ।। ६ ।।
मह्यमापो मधुमतेरयन्त मह्यं सूर्यो अभरज्ज्योतिषां कम् ।
मह्यं देवा उत विश्वे तपोजा मह्यं देव: सविता व्यचो धात् ।।७।।
अहं दाधार पृथिवीमुत द्यामहं सिन्धूनजनयं सप्त साकम् ।
अहं सत्यमनृतं यद् वदाम्यहं वाचं परि सर्वाभि षिञ्चे।।८।।
अहं विव्यञ्जि पृथिवीमुत द्यामहमृतूनसृजे सप्त साकम् ।
अहं वाचं परि सर्वामभूवन् यो ऽग्नीषोमावजुषे सखायै।।९।।
अनडुद्भ्यो न: प्रथमं धेनुभ्यस्त्वमरुन्धति ।
अधेनवे वयसे शर्म यच्छ चतुष्पदे ।। १० ।।

शर्म यच्छत्वोषधि: सह देवीररुन्धती ।
करत् पयस्वन्तं गोष्ठमयक्ष्मां उत पूरुषान् ।। ११ ।।
विश्वरूपां सुभगामच्छावदामि जीवलाम् ।
सा नो रुद्रस्यास्तां हेतिं दूरं नयतु गोभ्य: ।। १२ ।।
यमो मृत्युरघमारो निर्ऋथो भब: शर्वोऽस्ता नीलशिखण्ड: ।
देवजना: सेनामुत्तस्थिवांसस्ते ऽस्माकं परि वृञ्जन्तु वीरान्।।१३।।
मनसा होमैर्हरसा घृतेन शर्वायास्त्र उत राज्ञे भवाय ।
नमस्येभ्यो नम एभ्य: कृणोम्यन्यत्रास्मदघविषा नयन्तु ।।१४।।
त्रायध्वं नो अघविषाभ्यो वधादग्नीषोमा मरुत: पूतदक्षा: ।
विश्वे देवा मरुतो विश्ववेदसो वातापर्जन्ययो: सुमतौ स्याम।।१५।।

१९-१५

सं जानतां मनसा सं चिकित्वा मा
यच्छत मन्युना दैव्येन ।
मा घोषा उत्थाद् बहुले विनिर्हते
मेषु: पप्तदिन्द्रस्याहन्यागते ।।१ ।।
सं वो मनांसि सं व्रता समाकूतीर्नयामसि ।
इमे ये विव्रता स्थन तान् व: सं ज्ञपयामसि ।। २ ।।
संज्ञपनं वो मनसो अथो संज्ञपनं हृद: ।
अथो भगस्य यच्छ्रान्तं तेन संज्ञपयाति व: ।। ३ ।।
सं व: पृच्यन्तां तन्व: सं मनांसि समु त्वच: ।
सं वोयं ब्रह्मणस्पति: सोम: संज्ञपयाति व: ।। ४ ।।
संज्ञानं न: स्वेभ्य: संज्ञानमरणेभ्य: ।
संज्ञानमश्विना युवमिहास्मासु नि यच्छतम् ।। ५ ।।
यथादित्या वसुभि: संबभूवुर्मरुद्भिरुग्रा अहृणीयमाना: ।
एवा त्रिणामन्नहृणीयमान इमान् जनान्त्संमनसं कृणुत्वम्।।६।।

निरमुं नुद ओकसः सपत्नो यः पृतन्यति ।
निर्बाध्येन हविषेन्द्र एनं पराशरीत् ।। ७ ।।
इहि तिस्रः परावत इहि पञ्च जनाङ् अनु ।
इहि सप्ताति रोचना यावत् सूर्यो असद् दिवि ।। ८ ।।
परमां त्वा परावतमिन्द्रो देवो अजीगमत् ।
यथा न पुनरायसि शश्वतीभ्यः समाभ्यः ।। ९ ।।
प्रतीचीनो फलो हि त्वमपामार्ग बभूविथ ।
सर्वान् मच्छ पथाङ् अधि वरीयो यावया त्वम् ।। १० ।।
अघद्विष्टा देवजूता वीरुच्छपथयोपनी ।
उद्गा मलमिवावानैः सर्वान्मच्छपथाङ् अधि ।। ११ ।।
यदेनं परिषीदन्ति समादधति चक्षसे ।
संप्रेद्धो अग्निर्जिह्वाभिरुदेति हृदयादधि ।। १२ ।।
अग्नेः सांतपनस्याहमायुषे पदमा रभे ।
अद्धातिर्यस्य पश्यति धूममुद्यन्तमास्यतः ।। १३ ।।
यो ऽस्य समिधं वेद क्षत्रियेण समाहिताम् ।
नाभिह्वारे पदं नि दधाति स मृत्यवे ।। १४ ।।
नैनं घ्नन्ति पर्यायिणो न सन्नाङ् अव गच्छति ।
अग्नेर्यः क्षत्रियो विद्वान्नाम गृह्णात्यायुषे ।। १५ ।।

१९-१६

अस्थाद् द्यौरस्थात् पृथिव्यस्थाद् विश्वमिदं जगत् ।
तिष्ठन्ति पर्वता इमे स्थामन्नश्वा अरंसत ।। १ ।।
य उदानड्व्यायने य उदानट् परायणे ।
आवर्तनं निवर्तनं यो गोपा अपि तं हुवे ।। २ ।।

आवृतोन्यावृतो ऽभ्यावर्तनमायनम् ।
अग्निश्चतस्त्र आवृतस्ताभिष्ट्वा तर्पयामसि ।। ३ ।।
जातवेदो नि वर्तय शतं ते शन्त्वावृत: ।
सहस्त्रं त उपावृत: ताभिरेनं नि वर्तय ।। ४ ।।
अदारसृग् भवतु देव सोमास्मिन् यज्ञे मरुतो मृडता न: ।
मा नो विददभिभा मो अशस्तिर्मा
न: प्रापद् दुच्छुना द्वेष्या या ।। ५ ।।
यो ऽद्य दैव्यो वध जिघांसन् न उपायति ।
युवं तं मित्रावरुणावस्मद्यावयतं परि ।। ६ ।।
इतश्चामुतश्चाघं वरुण यावय ।
वि महच्छर्म यच्छ वरियो यावया वधम् ।। ७ ।।
अपेन्द्रो प्राचो मघवन्नमित्रानपापाचो अभिभूते नुदस्व ।
अपोदीचो अप शूराधराच उरौ यथा तव शर्मन् मदेम ।।८।।
तेन भूतस्य हविषा पुनरा प्यायतामयम् ।
जायां यामस्मा आविदन् सा रसेनाभि वर्धताम् ।। ९ ।।
अभि वर्धतां प्रजया अभि राष्ट्रेण वर्धताम् ।
इषा सहस्त्रवीर्याविमौ स्तामनुपक्षितौ ।। १० ।।
त्वष्टा जायामजनयत् त्वष्टासै त्वां पतिं दधौ ।
त्वष्टा सहस्त्रमायूंषि दीर्घमायुष्कृणोतु वाम् ।। ११ ।।
अन्तरिक्षेण पतति विश्वा भूतावचाकशत् ।
शुनो दिव्योस्यैतन्महस्तस्मा एतेन हविषा जुहोमि ।।१२।।
अप्सु ते जन्म दिवि ते सधस्थं
समुद्रं आत्मा महिमा ते पृथिव्याम् ।
शुनो दिव्योस्यैतन्महस्तस्मा एतेन हविषा जुहोमि ।।१३।।

ये त्रय: कालकाञ्जा दिवि देवा इव श्रिता: ।
तान् सर्वानह्व उतये ऽस्मा अरिष्टतातये ।। १४ ।।
य: पुरुषं हविरिच्छयसि श्वा दिव्यै अवीरहा ।
तं त्वाहं ब्रह्मणा नुदे पुरुषं मा परा बधी: ।। १५ ।।
य: पिशङ्गो अयोदंष्ट्रा: श्वा दिव्य: परिप्लव: ।
तस्याहं नामजग्रभास्मा अरिष्टतातये
अयं नो जीवतादिति ।। १६ ।।
अयं नो नभसस्पति: संस्फानो ऽभिरक्षतु ।
असमार्तिं गृहेषु न: ।। १७ ।।
त्वं नो नभसस्पतिरूर्जं गृहेषु धारय ।
आ पुष्टमेत्वा वसु ।। १८ ।।
देव संस्फान सहस्रापोषस्येशिषे ।
तस्य नो धेहि तस्य ते भक्षीमहि
तस्य ते भक्तिवांसो भूयास्म स्वाहा ।। १९ ।।

*(इति त्र्यृचनामउनविंशतिकाण्डे चतुर्थो ऽनुवाक: )*

१९-१७

यन्तासि यच्छसे हस्तावप रक्षांसि सेधसि ।
प्रजां धनं च गृह्णान: परिहस्तो अभूदयम् ।। १ ।।
परिहस्त वि धारय योनिं गर्भाय कर्तवे ।
मर्यादे पुत्रमा धेहि तं त्वमा गमयागमे ।। २ ।।
यं परिहस्तमबिभरदिति: पुत्रकाम्या ।
त्वष्टा तमस्या आ बध्नाद् यथा पुत्रं सुवादिति ।। ३ ।।
आगच्छत आगतस्य नाम गृह्णाम्यायत: ।
इन्द्रस्य वृत्रघ्नो राज्ञो वासवस्य शतक्रतो: ।। ४ ।।

येन सूर्यां सावित्रीमश्विनोहतुः पथा ।
तेन मामब्रवीद् भगो जायामा वहतादिति ।। ५ ।।
यस्ते अङ्कुशो वसुदानो बृहन्निन्द्र हिरण्ययः ।
तेना जनीयते जायां त्वं धेहि शतक्रतोः ।। ६ ।।
त्वं नो मेधे प्रथमा गोभिरश्वेभिरा गहि ।
त्वं सूर्यस्य रश्मिषु त्वं नो वसुदा यज्ञिया ।। ७ ।।
मेधामहं प्रथमा व्रह्मण्वतीमृषिष्टुतां ।
प्रपीतां व्रह्मचारिभिः देवानामवसा वृणे ।। ८ ।।
मेधां सायं मेधां प्रातर्मेधां मध्यन्दिनं परि ।
मेधां सूर्येणोद्यतोदीराणा उत्तुष्टुमः ।। ९ ।।
पार्थिवस्य रसे देवा भगस्य तन्वो बले ।
आयुरस्मै सोमो वर्च आ धाद् बृहस्पतिः ।। १० ।।
आयुरस्मै धेहि जातवेदः प्रजां त्वष्टरधिनिधेह्योनः ।
रायस्पोषं सवितरा सुवास्मै शतं जीवाति
शरदस्तवायम् ।।११।।
आशीर्ण ऊर्जमुत सुप्रजास्त्वं दक्षं दधातु द्रविणं सुवर्चसम् ।
सं जयन् क्षेत्राणि सहसायमिन्द्र कृण्वानो
अन्यानधरान्त्सपत्नान् ।।१२।।
आयमगन् सविता क्षुरेणोष्णेन वाय उदकेनेहि ।
आदित्या रुद्रा वसवः सचेतसः सोमस्य
राज्ञो वपत प्रचेतसः ।।१३।।
येनावपत् सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान्।
तेन ब्रह्माणो वपतेदमस्यायुस्मान् दीर्घायुरयमस्तु वीरः।।१४।।

अदिति: श्मश्रु वपत्वाप उन्दन्तु वर्चसा ।
धारयतु प्रजापति: पुन: पुन: सुवप्तवे ।। १५ ।।

१९-१८

यास्ते हिरा धमनयो ऽङ्गान्यनु विष्ठिता: ।
तासां ते सर्वासां साकं निर्विषाणि ह्वयामसि ।। १ ।।
यां ते रुद्र इषुमास्यदङ्गेभ्यो हृदयाय च ।
इमां तामद्य ते वयं विषूचीं वि वृहामसि ।। २ ।।
नमस्ते रुद्रास्यते नम: प्रतिहिताभ्य: ।
नमो विसृज्यमानाभ्यो नमस्त्रायताभ्य: ।। ३ ।।
अवाची: परिमूर्धन्या यास्ते धमनय: शतम् ।
तास्ते प्रभद्यन्तां पृथगनु त्वं लोहितावटम् ।। ४ ।।
स्यन्दतां रोदनावतीरनु त्वं लोहितावटम् ।
यथास्यामन्त्रं नरस्यन् नानुकूलमिवोदकम् ।। ५ ।।
प्रतीचीन: सूर्य एतु प्रतीची: स्त्रवत: कृता: ।
अवाचीस्ते अस्न: कुल्या इयं तृणत्वोषधी: ।। ६ ।।
इमं यवमष्टायोगै: षड्योगेभिरचर्कृषु: ।
स घा ते तन्वो रप: प्रतीचीनमप व्ययत् ।। ७ ।।
न्यग् वातो वाति न्यक्तपति सूर्य: ।
नीचीनमघ्न्या दुहे नग् भवतु ते रप: ।। ८ ।।
आप इद् वा उ भेषजीरापो अमीवचातनी: ।
आप: समुद्रार्था यती: परा वहन्तु ते रप: ।। ९ ।।
अमी ये युधमायन्ति केतून् कृत्वानीकश: ।
इन्द्रस्तान् पर्यहार्दाम्ना तानग्ने सं द्या त्वम् ।। १० ।।
यावती: सिञ्च आयन्त्विनीका नियतिष्ठन् ।
इन्द्रस्तान् पर्यहार्दाम्ना तानग्ने सं द्या त्वम् ।। ११ ।।

सं परमान् समवमानथो सं द्यामि मध्यमाम् ।
इन्द्रस्तान् पर्यहार्दाम्ना तानग्ने सं द्या त्वम् ।। १२ ।।
संदानं वो बृहस्पति: संदानं सविता करत् ।
संदानमिन्द्रश्चाग्निश्च संदानं भगो अश्विना ।। १३ ।।
यास्ते रुचो देव सूर्ये या अतो दिव्याततता: ।
ताभिर्मामद्यसर्वाभिर्मनुष्येभ्यो रुचे कृणु ।। १४ ।।
रुचे मा धेहि ब्रह्मसु रुचे राजसु धेहि माम् ।
रुचे विश्येषु शूद्रेषु मयि धेहि रुचेरुचम् ।। १५ ।।
या रुचो हिरण्यये याग्नौ याश्च सूर्ये ।
इन्द्राग्नी म एता रुचो रुचो धेहि बृहस्पते ।। १६ ।।

१९-१९

अव मा पाप्मन् सृज वशी सन्मृडयासि न: ।
आ मा भद्रेषु धामसु त्वं धेह्यविह्रुतम् ।। १ ।।
यो मा पाप्मन् न जहासि तमु त्वा जहिमो वयम् ।
अन्यत्रास्मन्न्युच्यतु सहस्राक्षो ऽमर्त्य ।। २ ।।
पथोर्वयं व्यावर्तने निष्पाप्मन् सुवामसि ।
यो नो द्वेष्टि तं गच्छ यं द्विष्मस्तं जहि ।। ३ ।।
स वा इवासि संनद्धो न भोगमविदं त्वयि ।
शिरो भिनद्मि ते पाप्मन् यथा न पुनरायसि ।। ४ ।।
इन्द्रो अस्मान्दिवा पातु मृत्यो: पाशात् स्वस्तये ।
द्यौर्न मध्यत: पातु भूमिराज्ञी स्वस्तये ।। ५ ।।
सूर्य अस्मान्दिवा पातु मृत्यो: पाशात् स्वस्तये ।
वातो नो मध्यत: पान्त्वहोरात्री स्वस्तये ।। ६ ।।
सोमो अस्मान्दिवा पातु मृत्यो: पाशाद् स्तस्तये ।
आपो नो मध्यत: पान्तु मानो निर्ऋति रिशत् ।। ७ ।।

सं वा चक्षुः सं हृदयं सं मनसावीवनम् ।
अस्याः सरूपवत्साया घृते होमेन सर्पिषा ।। ८ ।।
यत् कक्षिवां संवननं पुत्रो अङ्गिरसामवेत् ।
तेन मामद्य देवाः संप्रियो समवीवनन् ।। ९ ।।
संवननं वाङ् मनसो अथो संवननं हृदः ।
अथो भगस्य यच्छ्रान्तं तेन संवनयामि वः ।। १० ।।
अहं ते मनसा मनश्चक्षुर्गृह्णामि चक्षुसा ।
एवा परि षजस्व मा यथासन् मयि ते मनः ।। ११ ।।
आ रथस्येव चक्रे अभि आवर्ततामसौ ।
रेष्मच्छिन्नं यथा तृणं वेष्टासौ मनसा मयि ।। १२ ।।
परि त्वा पान्तुरसरं परि मातुः परि स्वसुः ।
परि त्वानाभ्यस्तरीभ्यो न यौध्यासरम् ।। १३ ।।
य इन्द्रस्य सभाधानो यस्मिन् समितिमासते ।
हिरण्या यस्य पर्णानि तस्मा अश्वत्थ ते नमः ।। १४ ।।
यः शाखाभिरन्तरिक्षमापूरएति निष्ट्यः ।
छन्दांसि यस्य पर्णानि तस्मै अश्वत्थ ते नमः ।। १५ ।।
यं मृगो न समाप्नोति पक्षाभ्यां शकुनिष्पथम् ।
दिवं यः सर्वास्तम्नाति तस्मा अश्वत्थ ते नमः ।। १६ ।।

१९-२०

ज्येष्ठघ्न्यां जातो विचृतोर्यमस्य मायंहिंसीः पितरौ वर्धमानः ।
स्योनौ व्याघ्रावुत तौ शिवौ स्तामतित्वा नेषं दुरितानि विश्वा ।।१ ।।
व्याघ्रे अह्न्यजनिष्टवीरो नक्षत्रजाः सर्ववीरः सुवीरः ।
स मा हिंसीः पितरौ वर्धमानस्तस्य ते देवाः प्रतिगृह्णन्तु होमम् ।।२ ।।

या रोहिणीर्देवपत्या प्र धेनुरिवपिन्वते ।
तत्र तिस्रो व्यष्टका: सर्वाङ् अधि ब्रुवन्तु प्रजायै जगते च वाम्।।३।।
यदार्द्राभ्यामणिभ्यां देवा: शक्रा अमन्तं पुरुषेण पुरुषम् ।
अत्रा पुष्यतं मिथुना सयोनि जीवां प्रजां जरदष्टिं सुतेजसा।।४।।
हतं पतङ्गमुततर्दमाखुमश्विना भिन्तं शिरो मृणतं हनू दत:।
यथा न: शस्यं नघवासं व्यद्धुरा एवाभयं कृणुतं धान्याय न:।।५।।
तर्द है पतङ्ग है जभ्य हा उपक्वस ।
अनदन्त इदं धान्यमहिंसन्तो अपोदित ।। ६ ।।
तर्दापते वघापते तृष्टजम्भा शृणोत न: ।
होत्रेवा प्राशितं हविर्वृक्णजिह्वां उपाध्वम् ।। ७ ।।
तर्दा द्यामोपजिह्वया यद् इमं दिव्यं पीयुषं प्रथमस्ति तृप्सात् ।
तं प्रत्यञ्चमर्चिषा विध्वमर्मन् ।। ८ ।।
ये अभ्रजा ये वातजा ये दिवस्परि यज्ञिरे ।
मरिच्या: पुत्राणां वयमपिनह्याम्यास्यम् ।। ९ ।।
ये अर्जुना ये हरिता ये कृष्णा ये च रोहिता: ।
कबन्धस्य प्रशासने शलभ्यां जम्भयामसि ।। १० ।।
अन्तरिक्षेण पततमासस्यमभि मध्वम् ।
गिरिणां सानुषु सीदति तृणं कपालमुत्तम:
शलभास्तद् दिशामिव ।। ११ ।।
यथाश्वासो यथा धूरं युक्ता वहन्ति साधुया ।
एवा मूत्र प्र भिद्यस्व वि वस्तेरा सं सृज ।। १२ ।।
विषितं ते वस्तिबिलं समुद्रस्योदधेरिव ।
प्र ते भिनद्मि मेहनं वर्त्तं वेशन्त्या इव ।। १३ ।।

याः समुद्रादुच्चरन्ति जरतीरूपजिह्विकाः ।
प्रमेहणस्य ता विदुरुभयोर्मेहनस्य च ।। १४ ।।
शीर्ष्णोबलीरास्नोबलीरङ्गादङ्गान् मुखाद् बलीः ।
सर्वास्ता इन्द्राणी बलीरप माष्टृधि त्वचः ।। १५ ।।
यास्त्वचो बलयो जाता या जातास्तन्वस्परि ।
सर्वास्ता इन्द्राणी बलीः शमीशाखास्वा सजात् ।। १६ ।।
आशमी मामकी बलीरुरोहाति जहातिमाम् ।
एताविन्द्रस्य जाया बलि धानीमकृण्वत ।। १७ ।।

*(इति त्र्यृचनामऊनविंशतिकाण्डे पञ्चमो ऽनुवाकः)*

१९-२१

यथा सूर्यो नक्षत्राणां वर्चांसि युवते दिवः ।
एवा सपत्नानामहं वर्च इन्द्रियमा ददे ।। १ ।।
यच्च वर्चः सपत्नानां भ्रातृव्येषु च यद् वसु ।
तदिन्द्रो वृत्रहा धाता सविता दीधरन् मयि ।। २ ।।
याश्च गावः सपत्नानां भ्रातृव्येषु च यद् वसु ।
तं निर्येयमवजित्या सविता दीधरन् मयि ।। ३ ।।
सत्यमेव जयतु नानृतं सत्यस्य पन्था रूजुरस्तु साधुः ।
सत्यं वदन्तः समिधे विधेम सत्येन द्यावापृथिवी अप्रचेताम् ।।४।।
वाग्भागस्य च सत्येन रुद्रस्य सुमनस्य या ।
इन्द्रेणाधिब्रुवता वयं वसु प्राशं विधेमहि ।। ५ ।।
या ते रुद्रेषिरा यता वाचि वाते अरङ्कृता ।
येनेदं विविदामहे तस्य प्राशं त्वं जहि ।। ६ ।।
जहि त्वं तस्य प्राशमुतसत्योमुतानृताम् ।
यो ऽस्मानिन्द्र वृत्रहन् वाचा प्राशं जिगीषति ।। ७ ।।

उत् पमैतु प्राणो वह्वीर्यसी देवं पृण:।
उतो दिव स्म सिञ्चतां समुद्रस्येव मध्यत: ।। ८ ।।
समुद्रस्य शतधार: सहस्रधारो आ क्षिति: ।
पुरस्तादिन्द्र आचरत् पूर्णो गोष्ठमिदं पृण: ।
इहोप पृण संपृण बृष प्रजनना: कृधि ।। ९ ।।
इह गाव: प्र जायध्वमिहाश्वा इह पुरुषा: ।
इहो सहस्र दक्षिणो अभिप्रासा वि षीदतु ।। १० ।।
ज्येष्ठघ्न्यै नक्षत्राणामह्ले रात्र्या इदं नम: ।
जुहोमि विश्वकर्मणे स शिवो मृडयाति न: ।। ११ ।।
मा ज्येष्ठं वधीदयमग्निरेषां मूलबर्हणं परिवृणक्त्वेनम् ।
ग्राह्या: पाशान् वि चृत प्रजानन् पितापुत्रौ मातरं मुञ्च सर्वान्।।१२।।
उन्मुञ्च पाशांस्त्वमग्न एषां त्रयस्त्रिभिरुत्थिता येभिरासन् ।
मायं हिंसी: पितरं वर्धमानो मा मातरं प्रमिनीर्या जनित्री ।।१३।।
ग्राह्या: पाशान् वि चृत ये सिनन्ति यां ब्रह्मणा परिवृञ्जन्ति वेधस:।
उन्मुच पाशांस्त्वमग्न एषां तज्जातस्या नहरहस्तु भद्रम् ।। १४ ।।
नि वर्तध्वं मानु गातास्मान् सिषक्त रेवती: ।
अग्नीषोमा पुनर्वसू अस्य वर्धयतं रयिम् ।। १५ ।।
पुनरेना नि वर्तय पुनरेना उपा कुरु ।
इन्द्र एना नि यछत्वग्निरेना उपाजतु ।। १६ ।।
परि वो विश्वतो दध ऊर्जा घृतेन पयसा ।
ये देवा: के च यज्ञियास्ते रय्या सं सृजन्तु माम् ।। १७ ।।

१९-२२

नमो ऽस्तु सर्पेभ्यो ये के च पृथिवीमनु ।
ये अन्तरिक्षे ये दिवि तेभ्य: सर्पेभ्यो नम: ।। १ ।।

ये चामी रोचने दिवो ये च सूर्यस्य रश्मिषु ।
येषामप्सु सदस्कृतं तेभ्य: सर्पेभ्यो नम: ।। २ ।।
या इषवो यातुधानानां ये वा वनस्पतीनाम् ।
ये वावटेषु शेरते तेभ्य: सर्पेभ्यो नम: ।। ३ ।।
यवोछिष्ट हविषा वर्धयेमं यथा द्युम्नै: कृणुवद् वीर्याणि ।
सजूर्देवेभिरभि भू: सपत्नान् आयुष्मत् क्षत्रमजरं ते अस्तु ।।४।।
पुंसा यवेन हविषा पयस्वतोच्छिष्टस्यायं रक्षन्तु देवा: ।
देवाह्यस्मिन् निदधुर्नृम्णं बृहदस्मादिन्द्रो वयो दधातु ।।५।।
समुच्छिष्टस्य हविषा समुक्थै समायुषा वर्चसा पयो दधातु ।
देवाह्यस्मिन् निदधुर्नृम्णं बृहदस्मादिन्द्रो वयो दधातु।। ६ ।।
वायुरेना: समाकरत् त्वष्टा पोषाय ध्रियताम् ।
इन्द्र आभ्यो अधि ब्रुवद् रुद्रो भूम्ने चिकित्सतु ।। ७ ।।
यथा चक्रुर्देवा असुरा यथा मनुष्या उत ।
एवा सहस्रपोषाय कृणुतं लक्ष्माश्विना ।। ८ ।।
लोहितेन स्वधितिना मिथुनं कर्णयो: कृधि ।
अकर्तामश्विनालक्ष्म तदस्तु प्रजया बहु ।। ९ ।।
कृष्णं नियानं हरय: सुपर्णा अपो वसाना दिवमुत् पतन्ति ।
आ च वर्तन्ते सदनादृतस्यादिद् घृतेन पृथिवीं व्युद्यते ।।१०।।
पयस्वती: कृणुथाप ओषधीरिमा यदेजथा मरुतो रुक्मवक्षस: ।
ऊर्जे च तत्र सूमतिं च पिन्वत यत्रा नरो मरुत: सिञ्चता मधु।।११।।
उदप्लुतो मरुतस्तां इयर्त वृष्टिर्यद् विश्वा निवतस्पृणाथ ।
एजाति गल्हा कन्येव तुन्नैरुं तुन्दाना पत्येव जाया ।। १२ ।।
त्वष्टेव पूषे सूर्यो दमुनामहि स्वस्तिर्वृषणा न आगन् ।
विश्वा आशा सुयवसा संरराणोऽस्या रय्या: पुरएता न एहि।।१३।।

एह यन्तु मधुमद्युहाना अनमीवा उषतीर्विश्वरूपा: ।
बह्वीर्भवन्तीरूपजायमानो इहेन्द्रो वो रमयतु गाव: ।। १४ ।।
प्रजापतिर्जनयतु प्रजा इमास्त्वष्टा दधातु सुमनस्यमान: ।
संवत्सर ऋतुभि: संविदानो मयि पुष्टिं पुष्टिपतिर्दधातु ।। १५ ।।

१९-२३

सहसी नाम वा असि सहसस्परि यज्ञिषे ।
सहस्वानिन्द्रो देवेषु सहसे त्वा खनामसि ।। १ ।।
सहस्येन भेषजेन दिव्येन शतपर्वणा ।
तेन सहस्र काण्डेन कृणोमि पुनराभृतम् ।। २ ।।
सहसो ऽहं भेषजस्य दिव्यस्य नाम जग्रभ ।
व्याशिष इव तस्थिरे यक्ष्मास: पुरुषादधि ।। ३ ।।
अपेत एतु निर्ऋतिर्नेहास्यापि किं चन ।
अपास्यां सत्वन: पाशान् मृत्युनेकशतं नुदे ।। ४ ।।
ये ते पाशा एकशतं मृत्यो मर्त्याय हन्तवे ।
तांस्ते यज्ञस्य मायया सर्वा ङ् अप यजामसि ।। ५ ।।
निरितो यन्तु नैर्ऋत्या मृत्योव एकशतं पर: ।
सेधान्मैषां यत्तम: प्राणान् ज्योतिश्च दध्महे ।। ६ ।।
त्रिषप्ता वारणा इमास्ताभिर्मामिन्द्रो अब्रवीत् ।
विषं वारयतादिति विषं दूषयतादिति ।। ७ ।।
अप ब्रूतेदं मरुतो महीन्द्रस्यापवाचनी ।
एषां सहस्रमर्हत्येषां वारयते विषम् ।। ८ ।।
अस्थाद् द्यौरस्थात् पृथिव्यस्थाद् विश्वमिदं जगत् ।
अस्थुर्विषस्याभीतय: प्रतिकूल इवाबला: ।। ९ ।।
यथा वाण: सुसंशित: परापतत्याशुमत् ।
एवा कासे परापतत् साकं वातस्य ध्राज्या ।। १० ।।

यथा चक्षुश्चक्षुष्मत: परापतति केतुमत् ।
एवा कासे परापतत् साकं सूर्यस्य रश्मिभि: ।। ११ ।।
यथा मदो मन्युमतां परा पतति योजनम् ।
एवा कासे परापतत् समुद्रस्यानु विक्षरम् ।। १२ ।।
इत एवाव गच्छतोग्रा भवतु माबला: ।
ह्वयन्तु सर्वे वो देवा: सर्वा वो वृण्वतां विश: ।। १३ ।।
यदवगमेन हविषाव वो गमयामसि ।
अत्रा त इन्द्र: केबलिर्विशो बलिहृतस्करत् ।। १४ ।।
इन्द्र: कश्यप आदग्निरिडा तुरिया व: सखा ।
यद् भूतं भव्यमसुन्वत् तेनाव गमयामिव ।। १५ ।।

१९-२४

न तं यक्ष्मा अरुन्धते नैनं शपथो अश्नुते ।
यं भेषजस्य गुग्गुलो: सुरभिर्गन्धो ऽश्नुते ।। १ ।।
यं गुग्गुलोर्भेषजस्य सुरभिर्गन्धो ऽश्नुते ।
विश्वञ्चस्तस्माद्यक्ष्मा मृगा अश्वा इवे रते ।। २ ।।
यद् गुग्गुलु सैन्धवं यद् वाघासि समुद्रियम् ।
उभयोरग्रभं नामास्मा अरिष्टतातये ।। ३ ।।
देवा एतं मधुना संयुतं यवं सरस्वत्यामधि मणावचर्कृषु: ।
इन्द्र आसीत् सीरपति: शतक्रतु:
कीनाशा आसन् मरुत: सुदानव:।।४।।
बृहत् पलाशे सुभग उर्ध्वस्वप्न ऋतावरि ।
मातेव पुत्रेभ्यो मृड केशेभ्यो न: शमि ।। ५ ।।
यस्ते मदोवकेशो यो विकेशो येनाभिहस्यं पुरुषं कृणोषि ।
भृणघ्नो विरुवारा चर त्वं तस्य ते प्रजया:
प्र सुवामि केशान् ।। ६ ।।

आकूतिं देवीं सुभगां पुरो दधे
चित्तस्य माता सुहवा नो अस्तु ।
यामाशामेमि केवली सा मे अस्तु
विदेयमेनां मनसि प्रविष्टाम् ।। ७ ।।
आकूत्या नो बृहस्पत आकूत्या न उपा गहि ।
अथो भगस्य नो धेह्यथो न: सुभगो भव ।। ८ ।।
बृहस्पतिर्म आकूतिमाङ्गिरस: प्रति जानातु वाचमेताम् ।
यस्य देवा देवता: संबभूवु: स
सुप्रणीता: कामो अन्वेत्वस्मान् ।। ९ ।।
मनो न्वा हुवामहे नाराशंसेन स्तोमेन ।
पितृणां च मन्मभि: ।। १० ।।
आ न एतु मन: पुन: क्रत्वे दक्षाय जीवसे ।
ज्योक् च सूर्यं दृशे ।। ११ ।।
पनर्न: पितरो मनो ददातु दैव्यो जन: ।
जीवं व्रातं सचेमहि ।। १२ ।।
वयं सोम व्रते तव मनस्तनूषु बिभ्रत: ।
प्रजावन्त: सचेमहि ।। १३ ।।
वर्चो मे मित्रावरुणा वर्चो देवी सरस्वती ।
वर्चो मे अश्विनोभा धत्तां पुष्कर स्रजा ।। १४ ।।
यच्च वर्चो यजमाने यच्च यज्ञेध्याहितम् ।
सुरायां बभ्रु यद् वर्चस्तस्य भक्षीय वर्चस: ।। १५ ।।
या उत्सेभ्य: प्रस्रवन्ति दिवोधारा नदीभ्य: ।
तासां त्वा सर्वासामपामभि सिञ्चामि वर्चसा ।। १६ ।।
यद्राजानं शकधूमं नक्षत्राण्यकृण्वत ।
भद्राहमस्मै प्रायच्छन् ततो राष्ट्रमजायत ।। १७ ।।

भद्राहमस्तु नः सायं भद्राहं प्रातरस्तु नः ।
भद्राहमस्मभ्यं त्वं शकधूम सदा कृणु ।। १८ ।।
यो नो भद्राहमकरत् सायं प्रातरथो दिवा ।
तस्मै ते नक्षत्रराज शकधूम सदा नमः ।। १९ ।।
यदाहुः शकधूमं महा नक्षत्राणां प्रथमजं ज्योतिरग्रे ।
तन्नः सतीं मधुमतीं कृणोतु रयिं च न
सर्ववीरं नि यच्छात् ।। २० ।।

*(इति त्र्यृचनामऊनविंशतिकाण्डे षष्ठो ऽनुवाकः )*

१९-२५

युपेरन्ते विद्वेषणं देवानां वर्चसा कृतम् ।
अग्निर्वामस्त्वन्तरा यथा वां न सहासति ।। १ ।।
यथाहिं द्वेष्टि पूरुषो ऽहिर्वा द्वेष्टि पूरुषम् ।
अग्निर्वामस्त्वन्तरा यथा वां न सहासति ।। २ ।।
नानानं वामाकूतानि नाना चित्तानि सन्तु वाम् ।
विश्वञ्चौ पर्यावर्तयेथां यथा वां न सहासति ।। ३ ।।
अडदेकमडदद्व्रे तुण्डे न मशीतकं भङ्गलापतेद् वः ।
एतद् यत् ते यद् वा न चासन् नो च ते भूवत् ।। ४ ।।
स्वप्ने वित्तं यथा धनं नश्याद्यदेति रेचितम् ।
आगिलो गिला पापाजितो गिल नश्यात् ब्रध्नकमभिकम् ।। ५ ।।
दीर्घायुत्वाय सहसे मह्या अरिष्टतातये ।
सुपर्णो मह्यमब्रवीदेतदाश्लिष्ट भेषजम् ।। ६ ।।
सक्तुर्नवति तुत उना पुनन्तो विद्वांसो वाचमग्रत ।
अङ्गेभ्यो विश्वाङ्गेभ्यः प्र ते छिनद्भ्यांश्लिष्टम् ।। ७ ।।

अवछिन्द्याशिलष्टं ऊर्वा ह्यसि भेषजी ।
दिव्य: सुपर्णो अब्रवीदेतदाश्लिष्ट भेषजम् ।। ८ ।।
अभिभूरहमागमं विश्वकर्मास्यायुज: ।
अहं मित्रस्य कल्पयन् आश्वाश्वासुदुष्टर: ।। ९ ।।
अहं समित्ययनो अहं विशां पुरोहित: ।
अहं मित्राणि कल्पयन्मयि वागस्तु धरुण्यसि ।। १० ।।
आवश्चक्षुरावो वाचमा व: समितिं ददे ।
योगक्षेमं व आदायाहं भूम्यासमुत्तम: ।। ११ ।।
ब्रह्मणाग्नि: संविदानो रक्षोहा नुदतामित: ।
अरायो यस्ते तन्वां दुर्णामा योनिमाशये ।। १२ ।।
यस्तेराया तन्वां दुर्णामा योनिमाशये ।
अग्निष्टं ब्रह्मणा युजा रक्षोहा नुदतामित: ।। १३ ।।
यान्यृत्व्यानि रक्षांसि येराया यातुधाना: ।
अग्निष्टान् शग्मया तन्वा रक्षहा पातु तेभ्य: ।।१४ ।।

१९-२६

अग्निश्च देव सवितरिषमूर्जं दधानौ ।
पातं मा दुश्चरितादा मा सुचरिते भजतं युवयरवसासुम्नमशीय।।१।।
इदं तदुप युव इदं तदुप ह्वये यच्छुश्रुमा त्वत् परि ।
वाचस्पतिर्नियच्छतु मय्येवास्तु ममाश्रुतम् ।। २ ।।
माप ज्यायस्ते अकरन् मा श्रुतेन वि राधिषि ।
अमोघमस्माकं श्रान्तमग्ने द्रविणवत्कृधि ।। ३ ।।
मध्यमेष्ठा वर्चस्वत्यायुषे वर्चसे कृतम् ।
वनुष्व विश्वदेवेषु वनुष्व त्वं बृहस्पतौ ।। ४ ।।
घृतेन प्रजां वनुते घृतेन रयिमश्नुते ।
घृतेनायुष्यं वर्चस्यं देवेभ्यो वनुते परि ।। ५ ।।

पर्जन्य पिप्पलास्तुभ्यं नद्यो गर्भ स्वस्तये ।
मर्यादा ब्रह्मदेवयीरायुष्यं वर्चसा सिचम् ।। ६ ।।
यथा हस्ती हस्तिन्या: पदेन पदमन्वगात् ।
एवा त्वमग्ने वर्चस्य पदेन पदमन्विहि ।। ७ ।।
यथा रथस्य चक्रेण विपथ: पांसुमस्याथ: ।
एवा ह मनो व्यस्यामि हृदं संवननाय कम् ।। ८ ।।
इन्द्रस्य प्रथमं वचो देवानामपर वच: ।
तृतीयमश्विनोर्वचस्तेन गां वानयामसि ।। ९ ।।
उदित: श्यावौ विथुरौ दिवं गृध्राविवेयथु: ।
शोचनावभिशोचनावस्योच्छोचनौ हृद: ।। १० ।।
शोचयाभिशोचया दीपयोप दीपय: ।
अहेरग्ने विषं त्वं तृणमिव कल्वलं दह ।। ११ ।।
सीदतं निसक्तारावतं मोङ्क्तम् ।
कृष्णा वां गौ: सारस्वती ।। १२ ।।
यथारात्री कृष्णतमा गौ: कृष्णा कृष्णवर्त्मनी ।
शाची: पूर्वो यथा रूपमेवेदं मामकं शिर: ।। १३ ।।
यथाङ्गरोभिषिक्तो दर्विदाको यथासित: ।
अनुस्यन्दस्य कल्मषमेवेदं मामकं शिर: ।। १४ ।।
यथा दावाद् दह्यमानात्कृष्णो ज्वालोपध्वंसते ।
नैषांन्यस्य यथा मुखमेवेदं मामकं शिर: ।। १५ ।।

१९-२७

यत् किं चासौ मनसा यच्च वाचा यज्ञैर्जुहोति हविषा यजुर्भि: ।
तन्मृत्युना निर्ऋति: संविदाना पुरा दृष्टादाज्यं हन्त्वस्य ।। १ ।।

यातुधाना निर्ऋतिरादु रक्षस्ते ऽस्यघ्नन्त्वनृतेन सत्यम् ।
इन्द्रेषिता आज्यमस्य मथ्नन्तु मा तत् सं पादि यदसौ जुहोति।।२।।
परित्वाग्ने पुरं वयं विप्रं सहस्य धीमहि ।
भिषग्वर्णं दिवेदिवे हन्तारं भङ्गुरावतम् ।। ३ ।।
स्वर्जिदधिराजौ श्वेनौ संपातिनाविव ।
आज्यं पृतन्यतो हतां यो ऽस्मान् पृतनायति ।। ४ ।।
पृथिव्यै वनस्पतिभ्य ओषधीभ्यो ऽग्नये ऽधिपतये स्वाहा ।। ५ ।।
अन्तरिक्षाय प्राणाय वातेभ्यो वायवे ऽधिपतये स्वाहा ।। ६ ।।
दिवे चक्षुसे नक्षत्रेभ्य: सुर्याया ऽधिपतये स्वाहा ।। ७ ।।
पिप्पल्य: समवदन्तायतीर्जननादधि ।
यं जीवमश्नवामहै न स रिष्याति पूरुष: ।। ८ ।।
पिप्पली क्षिप्तभेषज्युतातिविद्धभेषजी ।
तां देवा: समकल्पयनलं जीवितवा इति ।। ९ ।।
असुरास्त्वा न्यखनन् देवास्त्वोदवपन् पुन: ।
वातीकृतस्य भेषजी पिप्पलीक्षिप्त भेषजी ।। १० ।।
यदुलूको वदति मोघमेतद्यत् कपोत: पदमग्नौ कृणोति ।
यस्य दूतौ प्रहिताविदमेजथुस्तस्मै यमाय नमो ऽस्तु मृत्यवे ।।११।।
यस्ते दूतो निर्ऋत आजगामाप्रहित: प्रहितो वा गृहं न: ।
कपोतोलूकावपदन्तदस्त्ववैरहत्यामिदमाजगन्थ
सुवीरताया इदमा ससद्यात् तस्मै यमाय नमो ऽस्तु मृत्यवे ।।१२।।
य: प्रथम: प्रवतमाससाद्य बहुभ्य: पन्थामनुपस्पशान: ।
य ईशे ऽस्य द्विपदो यश्चतुष्पदस्तस्मै यमाय नमो ऽस्तु मृत्यवे ।।१३।।
यथासित: प्रथयते वशां अनु वपूंषि कृण्वन्नसुरस्य मायया ।
एवा मे शेप: सहसायमर्कों एनाङ्गेन संसमकं कृणोतु ।। १४ ।।

यावदङ्गीनं पारस्वतं हास्तिनं गार्दभं च यत् ।
यावदश्वस्य वाजिनस्तावन् मे वर्धतां पस: ।। १५ ।।
यथा पसस्तायादरं वातेन स्थूलभं कृतम् ।
यावत् परस्वत: पसस्तावन् मे वर्धतां पस: ।। १६ ।।

१९-२८

यस्येदमा रजो युजस्तुजे जनं वनं स्व: ।
इन्द्रस्य नाधृषे शव: ।। १ ।।
धृषाणो धृषित: शव: पुरा यथा यतिष्ठन् ।
इन्द्रस्य रन्त्यरियं महत् ।। २ ।।
स नो ददातु नो रयिमुरुं पिशङ्ग संदृशम् ।
इन्द्र: पतिस्तुविष्टमो जनेष्वा ।। ३ ।।
आयुरग्नि इहा वहाज्जातवेदास्तनू वशिन् ।
यथाहं योग्जीव ऽसानि प्रजानामधिपावशी ।। ४ ।।
आयुरिन्द्रो दधातु मे आयुर्देवो बृहस्पति: ।
आयुर्मे विश्वे देवा अहोरात्रे च चक्रतु: ।। ५ ।।
आयुरायुस्या पततां प्राणं प्राणो दधातु मे ।
देवायच्चक्रुर्देवेभ्य: स्वर्यन्तो यथायथम् ।। ६ ।।
उत् पतन्तुर्नभस्वती समुद्रादधि घोषिणी ।
उच्चा समुद्रिया आपस्ताभिष्ट्वा तर्पयामसि ।। ७ ।।
या आपो दिव्या या वातात् परियज्ञिरे ।
इन्द्रो मरुत्वांस्तप्तात्मातांभिष्ट्वा तर्पयामसि ।। ८ ।।
या: शुष्का या हरिणीर्याभूमि मनुवा दधु ।
सर्वा: समग्रा ओषधीस्ताभिष्ट्वा तर्पयामसि ।। ९ ।।

आ नो मेधा सुमतिर्विश्वरूपा गिरो बृंहतीरावेशयन्ती ।
रुचो मे वह्नीर्नि युनक्तु गावो यथासाम भूवनेषु कर्ण न:।।१०।।
दीक्षा तपो मनसो मातरिश्वा बृहस्पतिर्वाचो अस्या स योनि: ।
वेदांसि विद्यामयुजन्त वह्नीरग्नीषोमौ यशो अस्मासु धत्तम्।।११।।
यदग्ने तपसा तप उपप्रेक्षामहे वयम् ।
प्रिया: श्रुतस्य भूयास्मायुष्मन्त: सुमेधस: ।। १२ ।।
यस्त्वामातुरुत वा पितु: परिजायमानमभिसंबभूव ।
तं त्वद्यक्ष्मोमधिनाशयाम: सो ऽन्यस्मिंच्छ्रयातै: प्रविष्ट:।।१३।।
यस्ते यक्ष्मो हृदयेष्ठो नाभिष्ट्वा उदरंगम: ।
अथो य: शिश्रिये परे तं त्वद्यक्ष्मोमधिनाशयाम:
सो ऽन्यस्मिच्छ्रयातै: प्रविष्ट: ।। १४ ।।
शीर्षरोगमङ्गरोगं संस्रावणं विबर्हणमभिशाचं विसल्पकम् ।
यस्ते यक्ष्मो मज्जसु परुंषु यो गुदासु तं
त्वद्यक्ष्मोमधिनाशयाम: सो ऽन्यस्मिच्छ्रयातै: प्रविष्ट: ।।१५।।

*(इति त्र्यृचनामऊनविंशतिकाण्डे सप्तमो ऽनुवाक: )*

१९-२९

अग्निरक्षोहा तिग्मस्तिग्मशृङ्गो हन्तु रक्षो नुदतामरातिम् ।
अपाघशंसमस्यतु ।। १ ।।
आ न एतु परावतो बलमोजो दिवस्परि ।
आ गिरिभ्य: पर्वतेभ्य आयुष्टे विश्वतो दधत् ।। २ ।।
पुनस्ते ऽसुं पृथिवी ददातु पुनर्द्यौर्देवी पुनरन्तरिक्षम् ।
पुनस्ते सोमस्तन्वं ददातु पुन: पूषा पथ्यां या: स्वस्ति:।।३।।
कष्कषा: कर्षिपिषा: पिष्टा येवाषायेवाषा:।
इष्टर्गवेषयन्त: सैकता: पांशवा: ।। ४ ।।

अदृष्टान्नदृष्टान् ।
दृष्टा ङ् अदृष्टान्धनपते जहीन्द्रस्य वधेन ।। ५ ।।
एताश्च विश्वरूपाश्च गृध्रा: कोकाश्च ते हता: ।
कामे कामयस्व मा प्रतीची: प्रती मा भव ।। ६ ।।
मामनु प्रते मनो वत्सा पाकेव धावतु ।
अभिले अभिमादन्यसौमामभिमाद्यतु ।। ७ ।।
विद्म पतत्त्रिण्यवर्यमिषुके नामकं तव ।
अहं ते मन आ ददे मनो मनोमुषिर्यथा ।। ८ ।।
मयि ते मन आहितं रथ इव रथवाहने ।
उदसौ सूर्यो अगान्मह्यमवतुना सह ।। ९ ।।
अहं विशां पुरोहितो मधुहस्तो मधुजिह्वो: ।
मयि वागस्तु धरुण्यसी ।। १० ।।
अहं विश्येन केतुना समक्ष्ये मानुषेष्वा ।
अस्माकमस्तु केवलं वृहद्यशो अधि विश्वेषु राजसु ।
स्वादोश्चिन् मा स्वादीयांसं मधोश्चिन् मधुमत्तरम् ।। ११ ।।
प्रियाच्चित्सख्युरन्तरमादित्यास: कृणोतु मा ।
अग्ने ब्रह्म त्वं ब्रह्मासि विद्धि त्वं प्रास्मभ्यं ब्रूहि ।। १२ ।।
यदीदं तथा भविष्यसि यदि वा नामथैतस्य हविषोविहि स्वाहा।।१३।।
वि पृच्छे द्यावापृथिवी वीन्द्रं वि बृहस्पतिम् ।
वि देवान् यज्ञियान् पृच्छे व्यसं जीवनाय कम् ।। १४ ।।
विज्ञानायोद्यत: प्रस्तुत: सुगं यम राजन् हविरिदं जुषस्व ।
अगतासोरिहविषो मादयस्व निर्ऋतिं गच्छतु यं गतासो: ।।१५।।

१९-३०

य त्वां मांसे अपववौ यन् मन्थे यदोदने ।
अग्निष्ट्वा विश्वभेषजस्तस्मात् पात्वंहस: ।। १ ।।

यस्त्वावातो आ वात्वधरादुत्तरादुत ।
आपो या विश्वशंभुवस्तास्त्वा पात्वंहस: ।। २ ।।
अपत्त्वं मृत्युं निर्ऋतिमपयक्ष्मं नि दध्मसि ।
यथात्वमरपो अस उदोजा उत्तरो भव ।। ३ ।।
वैश्वानरो रश्मिभिर्न: पुनातु वात: प्राणेनेषिरो नमोभि: ।
द्यावापृथिवी पयसा पयस्वती ऋतवारी यज्ञिये मा पुनीताम् ।।४।।
प्रजापतिर्ऋतुभि: पञ्चभि: संवत्सरो धामभि: पातु विश्वै: ।
इहैव प्राण: सख्ये नो अस्तु तमात्मनि पुनरावेशयामि।।५।।
वैश्वदेवीं सुनृतामा रभध्वं शुद्धा भवन्त: शुचय: पावका: ।
तया गृणन्त: सधमादेषु वयं स्यामो पतयो रयीणाम् ।।६।।
वैश्वानरीं वर्चस आ रभध्वं यस्या आशास्तन्वो वीतपृष्ठा:।
इडयेह सधमादं मदन्तो ज्योक्पश्येम सूर्यमुच्चरन्तम् ।। ७ ।।
अवत्कं ममभेषजमवत्कं परिवाचनम् ।
नराव्यसिमातु दोवन्वानारोगभेषजम् ।
शम्भुलेहमिहाहरत् तमुदक्षीरा उदस्यति ।। ८ ।।
तदास्रावस्य भेषजं तदुरोगमनीनशत् ।
नदीषु नड्वलासु कुम्भेषु कलशेषु च ।। ९ ।।
प्रतीशेचन भेषजं तत्ते कृणोमि भेषजम् ।
मध्यमं सं पिवोदकं पट्पटिङ्गं विपश्चलं विपश्य ।। १० ।।
अविदामयदैच्छामि पिशाच क्षयणं हवि: ।
तेन क्रव्यादो हन्मि: सर्वाश्च यातुधान्य: ।। ११ ।।
इच्छन्ति त्वा पदातय इच्छन्ति रथिनस्त्वा ।
प्रीणन्ति गोभिरश्वैरमृतस्येव वा असि ।। १२ ।।

अमुं सुनाम भेषजं पृथिव्या अध्युद्भृतम् ।
वक्ता तन्मह्यमब्रवीदिदं हि पारयादिति ।। १३ ।।
चक्षुरसि पुरुषस्य चक्षुर्गोश्चक्षुरर्वत: ।
चक्षुर्भूतस्य भव्यस्य चक्षुरप्सरसामसि ।। १४ ।।
चक्षुरसि सुपर्णस्य चक्षुरहेरथो शुन: ।
यक्षु: सर्वस्य पश्यतो अथोयद् विश्वमेजति ।। १५ ।।
आदधानं सहस्राक्षं प्रतिस्पाशनमब्रूवन् ।
दर्शय मा यातुधानान् दर्शय यातुधान्य: ।। १६ ।।

१९-३१

अतिमामक्षं पृथिवीमतिद्यामति सूर्यम् ।
अति विश्वमिदं भूतमत्यक्षं यातुधान्य: ।। १ ।।
दर्शय मा यातुधानान् दर्शय यातुधान्य: ।
अघायून् सर्वान्दर्शयेत्योषध आरभे ।। २ ।।
एवा सहस्र चक्षो त्वं प्रतिपश्यास्यायत: ।
सहो ऽसि यातुधानजम्भनम् ।। ३ ।।
इमा: पारे पृदाक्वस्त्रिषप्ता निर्जरायव: ।
तासां जरायुणा वयमक्ष्यावपि व्ययामस्यघायो: परिपन्थिन: ।।४।।
विषूच्येतु कृन्तती पिनाकमिव बिभ्रती ।
विष्वक् पुनर्भुवा मनो असमृद्धा अघायव: ।। ५ ।।
अपेत: परिपन्थिनो यो अघायुरर्षतु ।
न बहव: संशक्नुवन्नार्भका अभि धृष्णुवन् ।। ६ ।।
प्रेतं पादौ प्र स्फुरतं वहतं पृणतो गृहम् ।
इन्द्राण्येतु प्रथमाजीतामुषिता पथा ।। ७ ।।

आयमगन् फल्गुमणिर्बलेन बलदा: सह ।
येनेन्द्रो दस्युनावीराड्‌ असुराणामवातिरत् ।। ८ ।।
वर्चसां मां पयसोक्षन्तु देवा वर्चसा द्यावापृथिवी उभे ।
वर्चो मे देव: सविता दधातु वर्चो विप्र: कश्यपो मे दधातु।।९।।
वर्चो म आपो दधतु वर्चो मे वीरुधो दधन् ।
भूतानि सर्वा: सङ्गत्य वर्च आधुर्मुखे मम ।। १० ।।
या: पुरस्ताद् वितिष्ठन्ते गाव: प्रव्राजीनीरिव ।
वातीकृतस्य भेषजी: पिप्पलै: पारयिष्णव: ।। ११ ।।
रुद्रस्य मूत्रमस्यमृतस्य नाभि: ।
पृथिव्यां मूलं निष्ठितमसि विषाणा
नाम वातीकृतस्य भेषजी ।। १२ ।।
शं ते अस्तु मतस्नाभ्यां शं य क्लेशं तलीभ्यौ ।
शं ते पृष्टिभ्यो मज्जभ्य: शमस्तु तन्वे तव ।। १३ ।।
नहि ते अग्ने तन्व: क्रूरमानंश मर्त्यम् ।
कपिर्बभस्ति ते जनं स्वं जरायु गौरिव ।। १४ ।।
त्वेष इव सं च वि चोर्वच्यसे यदुत्तरद्रावुपरस्य खादति ।
शीर्ष्णा शिरो अप्ससाप्सो अर्दयन्नंशून् बभस्ति हरितेभिरासभि:।।१५।।
सुपर्णा वाचमक्रतोप द्यव्याखरे कृष्णा इषिरा अनर्तिषु: ।
नि यन्नियन्त्युपरस्य निष्कृतिं पुरू रेतो दधिरे सूर्यश्रित: ।।१६।।

१९-३२

भगेन मा शांशपेन साकमिन्द्रेण मेदिना ।
कृणोमि भगिनं माप द्रान्त्वरातय: ।। १ ।।
यो अन्धो य: पुर:सरो भगो वृक्षेष्वार्पित: ।
भगो मे अस्तु शांशपो ऽप: द्रान्त्वरातय: ।। २ ।।

यथा वृक्षाङ् अभ्यभव: साकमिन्द्रेण मेदिना ।
एवा मा भगिनं कृण्वप द्रान्त्वरातय: ।। ३ ।।
अपेतो नीललोहितं जातं हिमवतस्परि ।
कीशमीलमुर्वराभ्यो दिवो जातमनीनशम् ।। ४ ।।
अभ्राज्जातं वर्षाज्जातं मथो जातं दिवस्परि ।
अथो समुद्राज्जातं कीशमीलं नाशयामसि ।। ५ ।।
यो नीहाराद् य: पृष्ठाया यो ऽभ्यस्परिजायसे ।
गर्भो यो विद्युतामसि स न: कीशमील मृडय ।। ६ ।।
नादेयी: सिकता इमा: सिन्धुतस्पर्याभृता: ।
ताभिर्यमस्य कीशमीलं सभृताभिरनीनशम् ।। ७ ।।
त्वया पूर्वं विभीतकं संजिता असुराहता: ।
त्वं सपत्नचातनो भ्रातृव्याङ् अव धूनुष्व ।। ८ ।।
वि भिनत्तु विभीतकस्तीक्ष्णशृङ्ग इव ऋषभ: ।
अथो सपत्नानादत्तामथो हन्तु दुरस्यत: ।। ९ ।।
व्यवग्धित्सहमान: सपत्नान् द्विषतो मे अधराङ् अक: ।
अभ्यभूद् भूत्योभया: ।। १० ।।
य आस्कन्द: परास्कन्द आखु: कुकुम्भात् कृमि: ।
उपचीकान् उपक्वसान् तान् सर्वान् जम्भयामसि ।।११।।
अपि नह्यस्याखोर्मुञ्जेन मुखमास्यम् ।
अपनुदन् यथा चारादपेत उर्वराभ्य: ।। १२ ।।
अपिनद्धमुख आखु: परोक्त: प्राध्वराजत: ।
शृणाम्यस्य दन्तान् वि रक्षो पातयामसि ।। १३ ।।
अश्विना सारघेणमा मधुनाङ्क्तं शुभस्पती ।
यथा गर्भस्वतीं वाचमावदानि जनाङ् अनु ।। १४ ।।

यशा अहं निमिशते प्रत्यक् सत्रे यशा अहम् ।
अत्रैमितद् यशा अहमुत तत्र यशा अहम् ।। १५ ।।
अस्मै च सर्वस्मै भूताय सर्वस्मै च विपश्यते ।
सर्वस्मै इदहं यशा ।। १६ ।।
अपोत्तर पोर्णहि यदीदमस्ति वा न वा ।
व्यन्द्यं विल्गणं चक्षुरक्षिभ्यां कृधि ।। १७ ।।
अङ्क हिरण्मयं कृत्वा लङ्गलाष मर्मज्ञ ।
तद्देवा अपलुम्पतु चक्षुष्मन् मे मनो अस्तु ।। १८ ।।
चक्षुष्मद् हृदयं मन: चक्षुष्मच्चितमस्तु मे ।
चक्षुश्चक्षुष्मदस्तु मे चक्षुराधेहि मे अक्ष्यो: ।। १९ ।।

*(इति त्र्यृचनामऊनविंशतिकाण्डे अष्टमो ऽनुवाक: )*

१९-३३

सोमो राजा सविता च राजा भगो राजा भुवनं च राजा।
शर्वो राजा शर्म च राजा त उ न: शर्म यच्छन्तु देवा:।।१।।
आदित्यैर्नो बृहस्पतिर्भग: सोमेन न: सह ।
विश्वे देवा उर्वन्तरिक्षं त उ न: शर्म यच्छन्तु देवा:।।२।।
उतारुद्धां निष्खिदताथो ऽस्त्रध्नि यथायथम् ।
मा नो विश्वे देवा मरुतो हेतिमस्यन्ताम् ।। ३ ।।
अपामिदं न्ययनं समुद्रस्य निवेशनम् ।
मध्ये ह्रदस्य नो गृहा: पराचीना मुखा कृधि ।। ४ ।।
आयने ते. परायणे दूर्वा रोहतु पुष्पिणी: ।
उत्सो वा तत्र जायतां ह्रदो वा पुण्डरीकवान् ।। ५ ।।
हिमस्य त्वा जरायुणा शाले परि व्ययामसि ।
शीतह्रदा हि नो भुवो ऽग्निर्ददातु भेषजम् ।। ६ ।।

अयं दर्भ विमन्युक: स्वाय चारणाय च ।
मन्योर्विमन्युको मन्युशमनो ऽस्तु ते ।। ७ ।।
अयं यो भूरिमूल: समुद्रमवगच्छति ।
दर्भ: पृथिव्या निष्ठित: स ते अस्तु विमन्युक: ।। ८ ।।
वि ते हनव्यां शरणिं वि ते मुख्यां नयामसि ।
यथावशो न वादिषो मम चित्तमुपायसि ।। ९ ।।
येभि: पाशै: परिवित्तो विबद्ध: परौपरावार्पितो अङ्गेअङ्गे ।
वि ते चृत्यन्तां विचृतो हि सन्ति भ्रूणघ्नि पूषन् दूरितानि मृष्टा: ।।१०।।
त्रिते देवा अमृजतैन एतत् त्रित एनन्मनुष्वेष्वमृष्ट: ।
ततो जहि त्वा मध्येन आहरत्तदहं त्वद् ब्रह्मणाप करोमि।।११।।
मरीचीर्धूमं प्र विशानु वातमुदारान् गच्छोत वा नीहारान् ।
नदीनां फेनमनुतद्विनश्यतु भ्रूणघ्नि पूषन् दुरितानि मृष्टा: ।।१२।।
अग्ने रक्ष: प्रतिदह यत् कुम्भ्याभिराभृतम् ।
अनाधृष्यस्य यास्यत्यभूज्जीवातवेयम् ।। १३ ।।
यन्नखवद्यच्छपवत् प्रसुमत् किं च पुष्पवत् ।
उर्वामत्स्यो मधूलकं तस्य प्रास्यत्ययमनास्त्रावमरोगणाम् ।।१४।।
या समुद्रात् प्रस्त्रवन्ति देवीर्हिमवतस्परि ।
आपो या विश्वसंभूवस्ता इहा यान्तु भेषजी: ।। १५ ।।

१९-३४

त्वचापिधाने सुभगे यत् परिस्तरणे कवे ।
एकामिव व्रजेगां परि त्वा वर्चसा सिचम् ।। १ ।।
अग्रेणीरिव हंसानां प्रपश्यन्ती पुरस्पथम् ।
जिह्वे मा विव्यथो मा यथा पूर्वं त्वं वद: ।। २ ।।

वर्चस्वदहमुद्यासं ब्रह्मराजन्याभ्यां शूद्राय चार्याय च ।
यस्मै च कामयामहे सर्वस्मै च विपश्यते ।। ३ ।।
अर्वाञ्चौ पादौ प्र हरम्य ऽर्वाचीनं मनस्तव ।
अर्वाचीनं नश्यतेतः पराङ् मन्युर्नि वर्तताम् ।। ४ ।।
यश्च छागलादे भगवो ऽर्वाग् ज्योतिः परस्तमः ।
आ त्वा खले ऽग्निकात्तस्मात् पुनरा वर्त्तयामसि ।। ५ ।।
यथा ब्रीहिन् ब्रीहिखले समाकुर्वन्ति तूलिभिः ।
एवा ते निष्ठितं मनः समा करोमि मामुभे ।। ६ ।।
त्वमुत्तमं सुराघसां माध्यमं हुवतोरसि ।
त्वया विदुर्वि जङ्गहे तं त्वा वर्चस आ ददे ।। ७ ।।
मूर्ध्न्यस्ते मूर्ध्न्योभ्यो ऽग्रुवः प्रतिविद्याः ।
यक्ष्मं शीर्षत आ ददे ।। ८ ।।
यश्च स्फामा ते अङ्गेषु यः प्रेमा हृदये च ते ।
तं त्वदा वेशयामहे मयि भ्राजातिदीद्यत ।। ९ ।।
वातरंहा वाजिन् भव युज्यमान इन्द्रस्य याहि प्रसवे मनोजवाः।
युञ्जन्तु त्वा मरुतो दैव्यास आ ते त्वष्टा पत्सु जवं दधातु ।।१०।।
जवस्ते अर्वन् निहितो गुहा यः श्येने चरति यश्चवाते ।
तेन त्वं वाजिन् बलवान् बलेनाजिं जय समने पारयिष्णुः ।।११।।
आसीयानो ऽधि मनसा आसीयानो ऽधि चक्षुषा ।
आसीयानः सवाचाभूत्वाजिं जय समने पारयिष्णुः ।। १२ ।।
तनूस्ते वाजिन् तन्वं वहन्ती वाममस्मभ्यं धातु शर्म तुभ्यम् ।
अविह्रुतो महो धरुणाय देवा दिव्यमिव ज्योतिः स्वरा मिमीयात्।।१३।।
इन्द्रो माव वक्षति वृत्रहा यो वृत्रञ्जयः ।
स मे रथ्यं सुसारथिं सो ऽश्वान् मधु मे नयात् ।। १४ ।।

इन्द्रो मा तेन नयतु पन्था य उभय: सुग: ।
दक्षिणा पारयाति वा मा रिषन् समरे युध: ।। १५ ।।
हृत्सु के परिणोनमा पारिषं तन्वं कृधि ।
यूयं तु पर्णिनं शिरमुतापर्णं रिषादिति ।। १६ ।।

१९-३५

विश्वे देवा इदं हविरादित्यास: सपर्यत ।
अस्मिन् यज्ञे माव्यथिष्वमृताय हविष्कृतम् ।। १ ।।
अव्यसश्च व्यचसश्च विलं वि ष्यामि मायया ।
ताभ्यामुद्धृत्य वेदमथ कर्माणि कृण्महे ।। २ ।।
यस्मात् कोशादुद्धराम वेदं तस्मिन्नन्तरव दध्म एनम् ।
कृतमिष्टं ब्रह्मणो वीर्येण तेनमा देवास्तपसावतेह ।। ३ ।।
वैश्वानरो अजीजनदग्निर्नव्यां सुमति: ।
क्षमया वृधान ओजसा ।। ४ ।।
स न: पावकदीदिह्यग्ने वैश्वानरद्युमत् ।
जमदग्निभिराहुत: ।। ५ ।।
दिवि पृष्टो ऽरोचताग्निर्वैश्वानरो बृहन् ।
ज्योतिषा बाधते तम: ।। ६ ।।
हरिणस्य पतत्रिण: शीर्ष्णो भेषजमाभृतम् ।
तल्लोकवद् यल्लोकवत् तदस्तु क्षेत्रियनाशनम् ।। ७ ।।
अन्नपो ऽस्त्वन्नपतिरन्नं मंस्थ वृषा यो वा: ।
कीनाशां अन्व मंसतं अनुगावोर्ण मंसत ।। ८ ।।
नमो ऽस्त्वायाविभ्यो निविभ्यो हृदयाय च ।
नम: क्षेत्रस्य पतये नम: क्षेत्रस्य पत्न्यै ।। ९ ।।

तत् ते हृदयं शोचयामि हस्तेनाभिमरीमृशत् ।
केशिन् वृषण्यया तव मुष्कौ मूर्धा न शुष्यताम् ।।१०।।
अग्निष्ट्वा तपतु सूर्यस्त्वा तपतु
वातस्वा युङ्क्तां मरुतश्च युञ्जताम् ।
मृगान्मरीचीरप्येतु ते मनः ।। ११ ।।
उत्वा हन्मि निपतनादुत्वा हन्मि गृहेभ्यः ।
मा स्पृक्षथा निशदनाय साधव उत्तिष्ठ प्रेहि सभाम्।।१२।।
उत्तद् अस्मिदावत्यथो उल्वा वर्तीं कुरु ।
पत्ये स्वसुराय च ।।१३।।
विबर्हो हराशयो रसं ज्ञानमति भृज्जः।
साकमृष्टा वि नाशय ।। १४ ।।
साकं वातस्य ध्राज्या साकं सूर्यस्य रश्मिभिः ।
साकं सूर्येणोद्यता सपत्नीं नाशयामसि ।। १५ ।।

१९-३६

दीर्घजिह्वा बृहद् वाचो याभिरिन्द्राणि वामासि ।
गावो घृतस्य मातरो दिवि भेषजमक्रत ।। १ ।।
अर्जुनीनामपचितां कृष्णा मातेति शुश्रोव ।
मुनेर्देवस्य मूलेन सर्वाः छिनद्मि ता अहम् ।। २ ।।
छिनद्म्यासां प्रथमां छिनद्म्युत मध्यमाम् ।
उतो जघन्यामासामा छिनद्मि स्तुकामिव ।। ३ ।।
अपेहि मनसस्पते किमशस्तानि शंससि ।
परेहि न त्वा कामये वृक्षान्वनानि सं चरः ।। ४ ।।
अवशसा निःशसा यत् पराशसोपारिम: यज्जाग्रतो यत् स्वपन्तः।
अग्निर्विश्वान्यप दुष्कृतान्यजुष्टान्यारे अस्मद् दधातु ।। ५ ।।

यदिन्द्र ब्रह्मणस्पते उत मृषा चरामसि ।
प्रचेता न आङ्गिरसो द्विषतस्पातु तेभ्य: ।। ६ ।।
एहमामुत्तरं कृधि सहस्व पृतनायत: ।
व्यस्मत् कृत्या व्यस्मच्छपथाङ् अज ।। ७ ।।
यो नो ऽधिरुषान्मनसा यश्च पापेन नो भ्यमात् ।
आकूतिं तस्य देवा हृदश्चित्तानि वृश्चन्ताम् ।। ८ ।।
अश्व इव धृतियोग: प्रति हायामहे धस ।
कृत्वानं ब्रह्मणस्पते दंष्ट्राभ्यामभिसं जहि ।। ९ ।।
यो ऽन्या अधिप्रजायथा मूर्ध्नो ऽध्युदवर्धथा: ।
त्वं सपत्नचातनो भ्रातृव्याङ् अव धूनुष्व ।। १० ।।
बहुरयं सङ्कुरुष्टो न्यक्तो भूम्यामधि ।
तेनाहमास्यं कृत्स्यामि यथा त्वा मा गमिष्यति ।। ११ ।।
स्थामागं बृहदक्षत्रं स्थामन्ताक्षिणो व्यस्यति ।
अनुष्ठानस्य यो राजा स उत्थाम गमिष्यति ।। १२ ।।
अगमद्राजा सदनमगमत् सूर्यो दिवम् ।
उदयन् वृत्रहन् प्लीहा अङ्गराजो अवीरहा ।। १३ ।।
यथा पन्थां कवापथो अप्येति महापथम् ।
एवा त्वं प्लिहीन्नप्लीहि यतोनस्यभ्यागत: ।। १४ ।।
इन्द्रेण दत्तं बलमासुराभ्यां शितङ्गैः तच्छाल्वतायै च तुभ्यम् ।
तौ नुदेथा कण्वा अशिवा अजुष्टा अधा गृहाणां गृहपास्तमेषाम्।।१५।।
त्वमग्ने गृहपतिर्गृहाणां त्वं प्रजानां जनिता सुजात: ।
त्वं नुदस्व कण्वा अशिवा अजुष्टा: सदान्वा निदधस्येता: पापी:।।१६।।
चर्माभ्य: क्रूरमानह्यहरिणस्य भयं कृधि ।
मृगाङ् अनु प्र पातय मरीचीरनु नाशय ।। १७ ।।

यद्यस्यप्सरावी यदि त्वा रक्षो अग्रभीत् ।
तस्मा अपप्लवं हविर्मनसा जुहोमि ते ।। १८ ।।

*(इति त्र्यृचनामऊनविंशतिकाण्डे नवमो ऽनुवाक: )*

१९-३७

अभि त्वा शतपाशया अथो सहस्रपाशया ।
दासोमत्स्यमिवतीदेन मयि वध्नामि ते मन: ।। १ ।।
आ हि ते दक्षिणं पदं हृदय्यं ददे ।
उपस्थे पदमोपि नि त्वामकृच्छ्रे ऽवसे ।। २ ।।
परि त्वा गामिवासरं मम पत्तो निपातवे ।
तं मारुतं ह वैरुधमाव तं करणं कृतम् ।। ३ ।।
आ नयामि ते मनो अश्वमिवाश्वाभिधान्या ।
उप ते मुञ्चे मन: पदोरुपानहौ यथा ।। ४ ।।
यथा सुरा यथा मधु यथाक्षा अधि देवने ।
यथाह गव्यतो मन एवा मामभि ते मन: ।। ५ ।।
एवा कृणुष्व मा प्रियामन्त: कृणुष्व मां हृदि ।
यथा नान्यापचेतया नान्यासां कीर्त्तयाश्चन ।। ६ ।।
यस्येदं वैष्टपं हविर्भगस्य हस्तयोर्हितम् ।
तेना त्वाभि मृणामसि सौभाग्याय स्वस्तये ।। ७ ।।
भगमेमां त्सं वष्ट्यारो मा पश्चान्मा पुरो दध: ।
अधा भगस्य यो भगस्तेनमां संसृजा भग ।। ८ ।।
भगेन त्वा सं सृजामि मा ररेण सुरामिव ।
अथाससि प्रिय: पतिर्देवृग्भ्य: सुभगाससि ।। ९ ।।
उदितो दैव्यं वच इषुमिव त्रीण्य: इष्यते ।
तेनासपत्नान् मामकान् सासहानि जहानि च ।। १० ।।

अग्निर्मा पातु वसुभि: पुरस्तात् सवितादित्यैरभि पातु दक्षिणात्।
इन्द्रो मरुद्भिरभि पातु पश्चाद्विश्वे देवा अभिरक्षन्तु नोत्तरात् ।।११।।
देवराक्षसान् मा पाहि मनुष्यराक्षसान् मा पाहि ।
विश्वस्मान् मा रक्षस: पाहि ।। १२ ।।
असौ यस्त्रिककुद्गिरि: शृङ्गाभ्यामभितिष्ठति ।
स संपतन्नमुद्यगं बलासमिव तिष्ठतु ।। १३ ।।
दिव्य: सुपर्णो आ पतदयोदंष्ट्रो अयोमुख: ।
स संपतन्नमुद्यगमितो यक्ष्मं पराभवत् ।। १४ ।।
साकं बलास प्र पत चाषेण किकिदीविना ।
साकं वातस्य ध्राज्या सह नश्य निहाकया ।। १५ ।।

१९-३८

माभिगाय: शबलेयं श्रोणीयं साधुवाहनम् ।
नमस्ते भद्रया कृण्मो ऽविह्वृतां चक्षुषा
त्वं शमका शमयाति त्वा।।१।।
तृङ्क्ष्व विक्षिणीहि पयस: कुर्वाणि गा त्वम् ।
जारेण पत्याजक्षती गृहान् गोपायमानिका
शमका शमयाति त्वा।। २ ।।
आंक्ष्वाभ्यङ्क्ष्याभ्यंक्ता शपनं गम: ।
अथो पितृभ्यो गा गछ ।
विज्ञानेन भगेन च शमका शमयाति त्वा ।। ३ ।।
अपेहि मनसस्पापाप क्राम परश्चर ।
परो निर्ऋत्या आ चक्षुर्बहुत्रा जीवतो मन: ।। ४ ।।
भद्रं वै वरं वृणते भद्रं युञ्जन्ति दक्षिणाम् ।
भद्रं वैवश्वते चक्षुर्बहुत्रा जीवतो मन: ।। ५ ।।

यन्मे छिद्रं मनसो यच्च वाच: सरस्वतीं मन्युचित्तं जगाम।
विश्वैस्तद् देवै: सह संविदान: सं दधातु बृहस्पति: ।।६।।
स्फिरा स्फिरतरं स्फिरा आत्तार: ।
शतहस्त समाहर सहस्रहस्त सं किर ।
इहैवा किर सं किरेहैवस्फातिमास्फिरम् ।। ७ ।।
स्फिरेयमस्त्वोषधि: समुद्रस्येव संस्रव: ।
उत्तरा आगमं नुपोत्तरा न आगमम् ।। ८ ।।
इमा या: पञ्च प्रदिशो मानवी: पञ्च कृष्टय: ।
वृष्टे शापं नदीरिवेह स्फातिं ससावहान् ।। ९ ।।
वि मयुखा आ यच्छन्तु गर्दभा इव तूर्यजा: ।
मुह्यन्तु सर्वे तन्तवो व्रतानाडी वि तन्तिके ।। १० ।।
प्रवामीष्वे प्रपतां प्रययन्तु प्र निवेष्टनम् ।
मुह्यन्तु सर्वे तन्तवो ऽन्धे वितत वायौ: ।। ११ ।।
आयवनी निवेष्टनं व्रतात सरमीष्वे ।
मुह्यन्तु सर्वे तन्तवोऽन्धे वितत वायौ: ।। १२ ।।
मयारकारी प्रथमोर्णवाभिरथोशका ।
देवानां पत्नी: कृत्तिका इमं तन्तुममोमुहन् ।। १३ ।।
अग्निर्न एतु प्रथम: पुरएता बृहस्पति: ।
अधा भग प्र णो यच्छ त्वं हि धनदा असि ।। १४ ।।
प्र ण: शूद्र उतार्य: प्र णो राजोत वृत्रहा ।
अथो यत् सर्वमात्वन्वत् प्र णो यच्छतु दक्षिणाम् ।।१५।।
कविर्यज्ञस्य वि तनोषि पन्थामृतस्य पृष्ठे अधिदीध्यान: ।
येन हव्यं वहसि देवदूत इत: प्रचेताममुतोवनीयान्।।१६।।

मधुहस्तो मधुजिह्वो मधुपर्णो मदुव्रत: ।
अथो मधु प्रशामनो भगो मा वर्चसावतु ।। १७।।

१९-३९

या त्रिसप्ता: पुनरेति नाना रूपाणि बिभ्रती: ।
वाचस्पतिर्बला तस्या आरेहेतिर्दधातु मत् ।। १ ।।
वाचा नुत्ता कृत्यादीन्द्रवती जाग्रता स्वपथे कृता ।
नुत्ता पाकस्य शंसेन प्रत्यक्कर्त्तारमृच्छतु ।। २ ।।
यदेतद् भूरि स्पर्धसे कृत्या स्माति मन्यसे ।
प्रतीचीना परेत्य विषादिव विषमन्धत: ।। ३ ।।
परेणैत्वघशंसो मैनेन समरामहै ।
द्यौश्चास्मान् पृथिवी चोभेपातामंहस: ।। ४ ।।
यवयास्मद् द्वेषांसि यवमयेन हविषा ।
दुर्हार्दे चकृषे कृत्यां ग्रीवासु प्रति मुञ्चता ।। ५ ।।
अन्या वो अन्यामव त्वन्यान्यस्या उपावत ।
अश्वयव: प्रवल्पान्ती: कृत्यां हतौषधयो ऽरातिं हतौषधय:।।६।।
मेहोप गा मपरस्या पथानि दुर्गाण्यवेहि ।
सपत्नीं नश्यतादितो दूरं गच्छाध्योकस: ।। ७ ।।
यस्यास्ते नाम गृह्णामि यस्मिन् धारमसेचने ।
आपरस्या: परावत: सपत्नीं नाशयामसि ।। ८ ।।
त्रिंशतं त्रिंश्च पर्वतान् चतुरश्चगिरीनति ।
सपत्नीं ब्रह्मणस्पते परो भ्रूणान्यर्पय ।। ९ ।।
उन् मादयत: मरुत: समुद्र्या उद् द्यावापृथिवी उभे ।
उत्वा समुद्ररर्षतृद् उत्वामग्निरयं दुहात् ।। १० ।।

यत् सपत्नी सपत्न्या अमुष्या वर्च आददे ।
अधस्तादुपवादिन्य सौम्यादहमुत्तरात् ।। ११ ।।
आते बध्नाम्योषधिं सपत्नेभ्य: प्रचातनीम् ।
यथा ते ऽसदुदंपति: पुत्राणां ते भवत् पिता ।। १२ ।।
यान्नृणान्यनुवर्त्तादस्मि यमस्य येन बलिना चरामि ।
इदं तदग्ने अनृणो भवामीदं तदग्ने अवदानमस्तु ।। १३ ।।
यास्ते सप्त प्रवतो या उ तिस्रो यास्ते सन्तु निवतो या अभिवत:।
अर्वागतो अष्टधा त्रीणि रोचनास्तास्ते अग्ने संमनसो भवन्तु ।
जानं यमाय निवहा कुसीदम् ।। १४ ।।
यास्त उर्ध्वास्तन्वो जातवेदो यास्तीरश्चिरुत या अनुची: ।
अभिष्टमग्ने सयुजा: स्तृणानो जानं यमाय निवहा कुसीदम्।।१५।।

१९-४०

नाशय पलितं शीर्ष्णो य: कृष्णास्तन्व आभर: ।
तमोषधे त्वं वर्धय केशं कृष्णतरं कृधि ।। १ ।।
यथाञ्जनं यथासित यथा त्रैककुदं तथा ।
तत्संभवा तत् संभरते व्युच्छन्तीरनुषस: ।। २ ।।
यत्रास्ति यत्र तिष्ठति यतो नश्यत्वासिनम् ।
दिव्य: सुपर्णो ऽब्रवीदेतत् पलित भेषजम् ।। ३ ।।
दिवो नु मां बृहतो अन्तरिक्षादपां स्तोको अभ्यपप्तद्रसाय ।
समिन्द्रियेण पयसाहमग्नि रुषीणां यज्ञै: सुकृतां कृतेन।।४।।
यदि वृक्षादभ्यपप्तत् फलं तदभ्यन्तरिक्षात् तदु वायुरेव ।
यत्रास्पृक्षत् तन्वो यत्र वाससो
न तत् प्राप्नोति निर्ऋतिं परस्तात्।।५।।

अभ्यञ्जनं सुरभ्यादुवासश्च तं हिरण्यमधि पूत्रिमं यत् ।
सर्वा पवित्रा वितताध्यस्मच्छतं जीवाति शरदस्तवायम्।।६।।
यः कीकसाः प्रशृणाति तलीद्यमुपतिष्ठति ।
परास्थं सर्वं जायान्यं यः कश्च ककुदि श्रितः ।। ७ ।।
पक्षी जायान्यः पतति य आ विशति पूरुषम् ।
तस्याहं वेद ते नाम यतो जायान्य जायसे ।। ८ ।।
वेद वै ते नाम यतो जायान्य जायसे ।
कथं ह तत्र त्वं हन्या यत् कुर्यान् महद्धविः ।। ९ ।।
यः आस्यं प्रविशति करोत्युदरं महत् ।
यक्ष्मो यो अत्र जायते तं जायान्यमनीनशम् ।। १० ।।
आरोहान् मे मुखं जातमारोहाज्जघनं मम ।
आरोहात् सर्वा जातास्मि ऋषभस्य पयो धनात् ।
स्वादीयसी सुराया लवणाच्चारुमुत्तरात् ।
गोभ्यो वनीयसी दहम् ।। ११ ।।
यां त्वा वातोवरयदाद्रनाभामहर्षयः ।
तस्यास्ते देवि पृथिव्याहं संवननं दद
आ ते सौः ष्कास्यन्ददे ।। १२ ।।
युक्तौ मनसा सं च रेतसा देवेभ्यो हव्यं कृणवाम साधु ।
येषां भागस्तु इदं जुषन्तामविक्षुद्राद्दयार्य भद्रया ।।१३।।
येन देवा ज्योतिषा द्यामुपायन् येनादित्या वसवो येन रुद्राः।
येनाङ्गिरसः स्वरारुरुहुस्तेनोदयद् यजमानः स्वस्ति।।१४।।
यं पपाचादितिः पुत्रकामा येन प्रजाः कश्यपः पर्यगृह्णात् ।
य ओदनः पच्यते वैश्वदेवः स नो य मे अक्षतो भागो अस्तु।।१५।।

*(इति त्र्यृचनामऊनविंशतिकाण्डे दशमो ऽनुवाकः )*

१९-४१

सोमस्य प्राण: पवते पुरस्ताद् दक्षिणत ऐन्द्र आ वातु वात: ।
यस्या दिशो मारुतो या:प्रतीची: स नो देवा: शिवो ऽस्त्विह वात:।।१।।
मित्रस्य प्राण: पवते य उत्तराद् बृहस्पतेरूर्ज उद्वातु वात: ।
यो ऽन्तरिक्षमनुवाति विद्वान् स नो देवा: शिवो ऽस्त्विह वात:।।२।।
य उत्तरात् पवते य: पुरस्ताद् यो दक्षिणात् पवते यश्च पश्चात् ।
उर्ध्वाङ् उद्देशाङ् अनु य: प्रवाति स नो देवा: शिवो ऽस्त्विह वात:।।३।।
त्रीण्यन्तरिक्षाण्यनुवहसि वात तिस्रोवहसि परावत: ।
सहस्राक्षौ वृत्रहा पाह्यर्वाङ् नुदन् क्षेत्रियं रप: ।। ४ ।।
न तत्र दार: कृपणं ससार न प्रतिघ्नाना रुदती न बिभ्रती ।
इन्द्रो नो य क्रोरुकृर्विचक्षण: स नोज्जातं महति नि यच्छात्।।५।।
इन्द्र: सेनां मोहयतु मरुतो घ्नन्त्वोजसा ।
अग्नेर्वातस्य ध्राज्या तान् विषूचो वि नाशय: ।। ६ ।।
न द्यौरेषां न पृथिवी नादीति निधनं जयात् ।
चक्षूंष्यग्निरादत्तां पुनर्यन्तु पराजिता: ।। ७ ।।
अमित्राणां दाग्य ग्राममिन्द्र यो न: शत्रुरभ्येति जिघांसन् ।
यथैषामिन्द्रनुत्तानामग्निना वेषो अनुवर्त्तयानिमे ।। ८ ।।
जिह्मं युगं कृण्वतामिन्द्रनुत्ता: पराचीनै: पथिभिर्यन्तु रिष्यन्त: ।
अमित्रान् जयन्तो अन्वासदेमाग्निना वेषो अनुवर्त्तयन्त:।।९।।
अमित्राणां ग्राममुपयुक्तमिन्द्रेण नुक्तं विरदात्यग्नि: ।
सत्वान: सन्त्वनुमाद्या इमे येभ्यश्चरामि हविषा घृतेन ।। १० ।।
अर्यमाणं हि देवं भद्रं कन्या अयक्षत ।
स एनां वृत्रहा देवो इतो मुञ्चन्तु मामुत: ।। ११ ।।

इयं ते राजन् वरुण जामिका कृणुते हवि: ।
तस्यै पतिं न्या वह सुभद्रं प्रतिकाम्यम् ।। १२ ।।
आ क्रन्दय धनपते वरमामनसं कृणु ।
सर्वं प्रदक्षिणं कृधि पतिमस्यै प्रतिकाम्यम् ।। १३ ।।
आपश्चादापुरस्तादोत्तरा दधरादुत ।
पूर्णा भगस्य वर्तनिस्तेनेमामभिवर्तयामसि
वर्चसा च भगेन च ।। १४ ।।
नासृगस्ति पतङ्गस्य तर्दस्य मसकाद् वा: ।
न संपतत्रमुद्यगो न ग्लौरत्रभविष्यति ।। १५ ।।
अपदस्कदपादशन् तुण्डिवध्ना अपादशत् ।
अपापो चिदीतोदशदपेतो ग्लौर्नशिष्यत्यपिवध्नादशिष्यति ।। १६ ।।
यथा सूर्यश्चन्द्रमसमुद्यन्नेवावगूहति ।
एवात्वमुग्र ओषध इमां ग्लावमवगूहतादिति ।। १७ ।।

१९-४२

अपदस्कदपादशन् तुण्डिवध्ना अपादशत् ।
अपापो चिदीतोदशदपेतो ग्लौर्नशिष्यत्यपिवध्नादशिष्यति ।। १ ।।
मा शिले मा शिलावति मा ते शेष: शिलोञ्छने ।
यावच्छिलस्य ते शिलं तावच्छेष: शिलं तव ।। २ ।।
यथा यूपाग्रादुदकं विनिष्टं भूमिमश्नुते ।
एवात्वमरसे शिले विनिष्टा भूमिमश्नुहि ।। ३ ।।
वज्रो ऽसि सपत्नहा त्वया ह वृत्रं साक्षीय ।
त्वामद्य वनस्पते वृक्षाणामुदयुष्महि ।। ४ ।।
स न इन्द्र पुरोहितो विश्वतस्पाहि रक्षस: ।
अभि गावो अनूषताभि द्युम्नं बृहस्पते ।। ५ ।।

प्राण प्राणं त्रायस्वासो असवे मृड़ ।
निर्ऋते निर्ऋत्या नः पाशेभ्यमुञ्च ।। ६ ।।
हृच्छोकमस्मिन्ना दध्मो यथा शुष्याति त्वामनु ।
यथास्य हृदयं शुष्यादपिच्छिन्नेव शंगुणी ।। ७ ।।
प्रजापतिष्ट्वा प्रजया सं पुत्रेणं सृजतु सं भगेन ।
जुष्टं देष्ट्री हि कामो ब्राह्मणस्य पुमांसं दधत् सवितुः सवेन।।८।।
प्रत्वासः प्रत्याङ्गतः कुमारः पुरुषादधिः ।
रुतोर्यमृत्वियावती यं ते धाता अचीक्लृपत् ।। ९ ।।
यं ते धाता यं ते त्वष्टा यं ते ब्रह्माचीक्लृपत् ।
तं त्वं पुत्रं विन्दस्व तस्मै त्वं जीव जीवसे ।। १० ।।
ध्वस्रास्तिष्ठन्ति रजसा समक्ता यज्ञस्य होत्राः प्रशितास उष्णाः।
तासां सोमस्य यदिहा वपन्ति तदमूत्रे यजमानस्य रूपम्।।११।।
ये ब्राह्मणं वर्चोहित्वाय मल्वारेण वर्णेन परि धाप यन्ति ।
तासां सोमस्य यदिहा वपन्ति तदमूत्रे यजमानस्य रूपम्।।१२।।
आ सारथिः सम रथो यथा रथो ह त्वा संविष्टां रक्षसो याति अमून्।
एवा यज्ञो यजमानं जहाति यत्र सोमं सोमपीथान् नयन्ति ।।१३।।
छन्दांसि तद् यजमान सृजन्ति तत्र सोमं सोमपीथान् नयन्ति ।
अब्राह्मणो यत् पिबति सोममस्य तद् वै
ऽच्छिन्द्रं दक्षिणयपिधेयम्।।१४।।
ब्रध्नो ऽसि वाचीः परिपाणीः प्रथमा देवेभ्यस्पर्याभृताः।
मा ते रिषन् खनिता यस्मै च त्वा खनामसि ।। १५ ।।
मा देवाः पापमारान्म मा कर्तु पापयामुया ।
महान् मरिष्यजो हस्तमारिप्सुर्धनकाम्याम् ।। १६ ।।

मा मा देवा: पराजातामा मा कर्त्तव्याध्वम् ।
माहन् मरिष्यज: शिर आरिप्सु मो अहन् मृषी ।। १७ ।।

१९-४३

प्रतीकं मे विचक्षणमक्ष्यौ मे मधुकाशिनि ।
कर्णाभ्यां भूरि शुश्रुवे ।। १ ।।
जिह्वा मे मधु संस्रावा जिह्वा मे मधुवादिनी ।
तयाहमद्य जिह्वयोभिरुध्यासन् मधुमद् वच: ।। २ ।।
यथा मधु मधु कृत: संभरन्ति मधावधि ।
एवाहोमद्य छन्दोभिरुध्यासन् मधुमद् वच: ।। ३ ।।
वायो: पूत: पवित्रेण प्रत्यङ् सोमो ऽधिश्रित: ।
इन्द्रस्य युज्य: सखा ।। ४ ।।
यत् किं चेदं वरुण दैव्ये जने अभिद्रोहं मनुष्याश्चरन्ति ।
अचित्त्या यत् तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिष:।। ५।।
आपो अस्मान् मातर: सूदयन्तु घृतेन नो घृतप्व: पुनन्तु ।
विश्वं हि रिप्रं प्रवहन्तु देवीरुदिदाभ्य: शुचिरा पूत एमि ।। ६ ।।
मित्रश्च सम्राड् वरुणस्य राजा तौ ते भक्षं कृणुतां प्रातरग्ने ।
तयोरहमनुभक्षं कृणोमि सूर्यवर्चा भगभक्तो न आविश:।।७।।
सूर्यवर्चा न आविश विश्वविन् मनसस्पति: ।
अनेहा सोमो जागृविरिन्द्र: प्रातो ऽस्तु तेनृभि: ।। ८ ।।
इन्द्र: प्रातस्तु ते वयं शक्रस्य रोचनावत: ।
भक्षीमहि प्रजामिषं सहस्रस्य यशस्विन: ।। ९ ।।
अग्नि प्रात: सवने पात्वस्मान्वैश्वानर: पथिकृद् विश्वकृष्टि: ।
स न: पावको द्रविणे दधात्यायुष्मन्त: सहभक्षा: स्याम ।। १० ।।

विश्वे देवा मरुत इन्द्रो अस्मानस्मिन् द्वितीये सवने न जह्युः ।
आयुष्मन्तः प्रियमेषां वदन्तो वयं देवानां सह भक्ष्या स्याम।।११।।
इदं तृतीयं सवनं कवीनामृतेन यच्चमसं समैरयन् ।।
सौधन्वना अमृतमानशानाः स्विष्टिं नो अभि वस्यो नयाथ।।१२।।
सं सं स्रवन्तु नद्यः सं वाताः सं पतत्रिणः ।
यज्ञमिमं वर्धयता गिरः संस्राव्येण हविषा जुहोमि ।। १३ ।।
इमं होमाय यज्ञमवतेमं संस्रावणा उत ।
यज्ञमिमं वर्धयता गिरः संस्राव्येण हविषा जुहोमि ।। १४ ।।
रूपंरूपं वयोवयः संरभ्यैनं परि ष्वजे ।
यज्ञमिमं चतस्रः प्रदिशो वर्धयन्तु नद्यः संस्राव्येण हविषा जुहोमि।।१५।।

१९-४४

स्यूता देवेभिरमृतैर्न आगन्मुखा स्वसारमधि मेदिमस्थात् ।
सत्यं पूर्वं रुषयश्चाकृपाना यज्ञपतेः सुप्रतिरंत्वायुः ।। १ ।।
उख्यं स्रवन्तीमगदामगन्म त्वष्टा वायुः पृथिव्यन्तरिक्षम् ।
यतश्चुतद् धुतमग्नौ तदस्तु न तत् प्राप्नोति निर्ऋतिः परस्तात् ।।२।।
अन्तरग्नावश्चुतत् स्तोक एष नैनं सुवाते निर्ऋतिः परस्तात् ।
विश्वावसोर्हविषो वावृधानो इमं यज्ञः सुकृतामेति लोकम् ।।३।।
श्येनोसि गायत्रछन्दा अनु त्वा रभे ।
स्वस्ति मा सं पारय ।। ४ ।।
सम्राडसि त्रिष्टुप्छन्दा अनु त्वा रभे ।
स्वस्ति मा सं पारय ।। ५ ।।
स्वरोसि गयोसि जगच्छन्दा अनु त्वा रभे ।
स्वस्ति मा सं पारय ।। ६ ।।

त्रायमाणे सर्वविदे मा परि देहि ।
सर्वविद् द्विपाच्च सर्वं रक्ष चतुस्पाद् यच्च नः स्वम्।।७।
सर्वविद् विश्वविदे मा परि देहि ।
विश्वविद् द्विपाच्च सर्वं रक्ष चतुस्पाद् यच्च नः स्वम्।।८।
विश्ववित् कल्याण्यै मा परि देहि ।
कल्याणि द्विपाच्च सर्वं रक्ष चतुस्पाद् यच्च नः स्वम्।।९।
कल्याणि त्रायमाणायै मा परि देहि ।
त्रायमाणे द्विपाच्च सर्वं रक्ष चतुस्पाद् यच्च नः स्वम् ।।१०।
वि खन वि रुज वि जह्यत्रैवा नाकृतश्चन ।
समहमायुषा सं मयायुः ।। ११ ।।
वि खन वि रुज वि जह्यत्रैवा नाकृतश्चन ।।
समहं वर्चसा सं मया वर्चः ।। १२ ।।
वि खन वि रुज वि जह्यत्रैवा नाकृतश्चन ।।
समहं तेजसा सं मया तेजः ।। १३ ।।
वि खन वि रुज वि जह्यत्रैवा नाकृतश्चन ।।
समहं प्रजया सं मया प्रजा ।। १४ ।।
वि खन वि रुज वि जह्यत्रैवा नाकृतश्चन ।।
समहं पशुभिः सं मया पशवः ।। १५ ।।
दिवो रेतोसि पृथिव्या नभ्यम् ।
नभ्यमसि नभ्यं मा कृणु ।। १६ ।।
दिवो रेतोसि पृथिव्यां शक्तिः ।
शक्तिरसि शक्तये ते विधेयम् ।। १७ ।।
दिवो रेतोसि पृथिव्याः वित्तिः ।
वित्तिरसि वित्तये ते विधेयम् ।। १८ ।।

दिवो रेतोसि पृथिव्या: पुष्टि: ।
पुष्टिरसि पुष्टये ते विधेयम् ।। १९ ।।
दिवो रेतोसि पृथिव्या: भूति: ।
भूतिरसि भूतये ते विधेयम् ।
भूतिरसि भूत्या सं भूयासम् ।। २० ।।
शुक्रो ऽसि भ्राजो ऽसि ।
स यथा त्वं भ्राजतो भ्राजोस्येवाहं भ्राजतो भ्राज्यसम्।।२१।।
सायंसायं गृहपतिर्नो अग्नि: प्रात:प्रात: सौमनसस्य दाता ।
वसोर्वसोर्वसुदान एधि वयं त्वेन्धानास्तन्वं पुषेम ।। २२ ।।
प्रात:प्रातर्गृहपतिर्नो अग्नि: सायंसायं सौमनसस्य दाता ।
वसोर्वसोर्वसुदान एधीन्धानास्त्वा शतंहिमा ऋधेम ।। २३ ।।
यो न आ वि: शपतिर्यश्च स्ता यदचित्या मन्युना यत् सपत्न: ।
अग्निष्ट्वान् पाशान् प्रमुमोक्त देवो यावयतु
शपथां वरुणो धृतव्रत: ।। २४ ।।

*(इति त्र्यृचनामऊनविंशतिकाण्डे एकादशो ऽनुवाक: )*

१९-४५

प्राग्नये वाचमीरय वृषभाय क्षितीनाम् ।
स न: पर्षदति द्विष: ।। १ ।।
य: परस्या: परावतस्तिरो विश्वाभि रोचते ।
स न: पर्षदति द्विष: ।। २ ।।
यो रक्षांसि निजूर्वत्यग्नि: शुक्रेण शोचिषा ।
स न: पर्षदति द्विष: ।। ३ ।।
यो विश्वाभि विपश्यति भुवना सं च पश्यति ।
स न: पर्षदति द्विष: ।। ४ ।।

मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः ।
माध्वीर्गावो भवन्तु नः ।। ५ ।।
मधु नक्तं उतोषसो मधुमत् पार्थिवं रजः ।
माध्वीर्नः सन्त्वोषधीः ।। ६ ।।
मधुमान् नो वनस्पतिर्मधुमाँङ् अस्तु सूर्यः ।
मधु द्यौरस्तु नः पिताः ।। ७ ।।
आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन ।
महे रणाय चक्षसे ।। ८ ।।
यो वः शिवतमो रसः स्तस्य भाजयतेह नः ।
उशतीरिव मातरः ।। ९ ।।
तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ ।
आपो जनयथा च नः ।। १० ।।
आयं गौः पृश्निरक्रमीदसदन् मातरं पुरः ।
पितरं च प्रयन्त्स्वः ।। ११ ।।
अस्य प्राणादपानत्यन्तश्चरति रोचना ।
व्यख्यन्महिषो दिवम् ।। १२ ।।
त्रिंशद् धाम वि राजति वाक्पतङ्गाय शिश्रियत् ।
प्रति वस्तोरहर्द्युभिः ।। १३ ।।
यच्छक्रा वाचमारुहन्नन्तरिक्षं सिषासन्तः ।
सं देवा अमदन् वृषा ।। १४ ।।
शक्रो वाचमधृष्टायोरुवाचो अधृष्णुहि ।
मंहिष्ठ आ मदर्दिवि ।। १५ ।।
शक्रो वाचमधृष्णुहि धामधर्मन् वि राजति ।
विमदन् बर्हिरासरन् ।। १६ ।।

१९-४६

ध्रुवोसि धरुणोस्तृतो विश्वकर्मणा सुधृत: ।
मा त्वा समुद्र उद् वधीन्मा सुपर्णोव्यथमान इमं दृंह।।१।।
आषाढोसि सहमान: सहस्वारातिं सहस्व पृतनायत: ।
सहस्रवीर्योसि स इमं जिन्व ।। २ ।।
अद्भ्य: संभूतोसि पृथिव्या रसाच्च
विश्वकर्मण: समवर्त्तता अधि ।
तस्य त्वष्टा विदधदेतिरूपं विद्वान् तत् ते देवमाजानमग्रे।।३।।
षष्टिश्चाध्वर्यो नवतिश्च पाशा होतारमग्निमन्तरा विचृत्ता: ।
छिन्दन्ति पाशमति धीर एत्वृतस्य पन्थामनु नेषि विद्वान्।।४।।
यो अध्वर्यु: सप्तहोत्राणि विद्वान् पूर्वो होतुर्यजत आ जिघर्ति।
ऊर्ध्वं स यज्ञमध्वरं कृणोति य इं चकेत हविषो विभागे।।५।।
अत्रो विभक्तिर्हविषो विभागे मा निर्भाक्षीद् भागिनं मोपहत्या।
समो अभागो विदत यो मुमोह ।। ६ ।।
वात आ वातु भेषजं शम्भु मयोभू नो हृदे ।
प्र ण आयूंषि तारिषन् ।। ७ ।।
उत वात पितासि न उत भ्रातोत न: सखा ।
स नो जीवातवे कृधि ।। ८ ।।
यददो वात ते गृहे नि हितं भेषजं गुहा ।
तस्य नो देहि जीवसे ।। ९ ।।
यो न जीवोसि न मृतो देवानाममृतगर्भोसि स्वप्न ।
वरुणानी ते माता यम: पिता ।। १० ।।
यथा कलां यथा सफं यथर्णं संनयन्ति ।
एवा दु:ष्वप्न्यं सर्वमप्रिये सं नयामसि ।। ११ ।।

अररुर्नामसि तं त्वा स्वप्न तथा विद्म ।
स नः स्वप्नः सुष्वप्न्यान् तां देहि ।। १२ ।।
नैतस्याग्रे हविरदन्तु देवा निर्भक्त एष सुकृतस्य लोकात् ।
पापीं धियं जुजुष आत्मनैष स हि दुष्कृन्मनुष्वेष्वन्तः।।१३।।
यो मातृहा पितृहा स्वसृहा ये च दुष्कृताः ।
दिधिषौते अमृतक्षमलं मनुष्या इव ।। १४ ।।
एतद् देवयुतं निर्ऋतिरुषदेवा भ्रूणघ्नाल्लोकमप्येत्वेषः ।
न चेतृत्वे हविषा नाथितश्च राष्ट्रमेते शक्रा
वि चृतन्ति पाशम् ।। १५।।

१९-४७

य आखो यो व्युखो विणावाङ् इव सर्पति ।
तं परि परिभेषजं वृश्चिक जम्भनमसि ।। १ ।।
मयूरो अत्ति वृश्चिकं मयूरं वयं विद्मसि ।
तं परि परिभेषजं वृश्चिक जम्भनमसि ।। २ ।।
आप इद् वा उ भेषजीरापो अमीव चातनीः ।
आपो विश्वस्य भेषजीरापो वृश्चिक जम्भनीः ।। ३ ।।
त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा ।
त्वं यज्ञेष्वीड्यः ।। ४ ।।
यद् वो वयं प्रमिनाम व्रतानि विदुषां देवा अविदुष्टरासः।
अग्निष्टद् विश्वादा पृणातु विद्वान् सोमस्य यो
ब्राह्मणाङ् आविवेश ।। ५ ।।
आ देवानामपि पन्थामगन्म यच्छक्नवाम तदनुप्रवोढुम् ।
अग्निर्विद्वान् स यजात् स इद्धोता सो अध्वरान्
स ऋतून् कल्पयाति ।। ६ ।।

उत्तदा ईशमिद्रुतीं विदुर्योणा इव इविदुं पदायि ।
उतस्या: पातया मन: सश्वतीभ्य: समाभ्य: ।। ७ ।।
पक्वं मांसमिवाश्विना शकुनि: प्रपतनां कृधि ।
मृगाङ्ङ् अनु प्र पातय मरीचीरनु नाशय ।। ८ ।।
विश्वञ्चौ गावा वा कुरु विश्वञ्चौ युग्या उत ।
उतासौ सूर्य उद्यन् विश्वञ्चौ गां व्याकरत् ।। ९ ।।
विषमुग्रं विषं स्थिरं विषस्य महिमा महान् ।
विषं परश्वत: शिर: शतधा व्यापातयत् ।। १० ।।
सं दह व्रजं यथा वसुभावसु वर्त्तयत् ।
यं विषं प्र सर्पसि समग्निरिव तं दह ।। ११ ।।
गृहाण मांसानि यव लोमानि पातय ।
पांशुन् कुकाट आवपात् सिन्ध्यूत्तान् पादमदीय ।। १२ ।।
मधोरहं मधुतरो मधुघान् मधुमत्तर: ।
आसने किल मे मधु मुखेन मन्दनं कृतम् ।। १३ ।।
मामित्त्वमभ्यचाकशो मृगस्तृष्यन्निवोदकम् ।
अधस्पदान्म उद् वदामि मण्डूको गोशफादिव ।। १४ ।।
उद् वदाम्यधस्पदान् मण्डूको गोशफादिव ।।
अथोपचक्रा आसासैश्वावन्ध इवाहत: ।। १५।।

१९-४८

आवद बहुलं गोष्ठं सुवीरं बहुपूरुषम् ।
यथेतो न: प्र मीयता एवा मे गोष्ठमा वद: ।। १ ।।
आवद दुहितुस्पित्रे भ्रातुर्जामातराविव ।
पश्चात् उत्तुढ स्फिज: किष्किन्धानामवीर्जहि ।। २ ।।

यदुलूको वदति मोघमेतद् यत् कपोत: पदमग्नौ कृणोति।
शितिकर्णाय कवये स्तोम्याय तस्मै यमाय नमो अस्त्वद्य।।३।।
ये ऐन्द्रा: पाशा ये च वारुणा आरे
अस्मत् तान् देवी निर्ऋतिर्दधातु ।। ४ ।।
ये वैश्वानरा: पाशा ये च मारुता आरे
अस्मत् तान् देवी निर्ऋतिर्दधातु ।। ५ ।।
ये वैश्वानरा: पाशा ये च वैश्वकर्मणा आरे
अस्मत् तान् देवी निर्ऋतिर्दधातु ।। ६ ।।
नारदे कितवे वरुणे सोमे ऐच्छन् महिमानं महान्तम् ।
अविन्दत् त्वं विश्वकर्मण: समुद्रे अक्षाणां
क्लदमैनमस्मिन् दधामि ।। ७ ।।
यद्धस्तयोर्यच्चक्षुषोर्मनो यत् प्रविवेश ते ।
स्कन्दानस्य प्रस्कन्देन क्लदेन क्लदयामि तत् ।। ८ ।।
त्रिस्रो देवीरप्सरस आकैका साकैका
प्रेत प्रयामेत्येकस्या नाम ।
जुषाणा अप्सरस आज्यस्य सहसोव्यन्तु स्वाहा ।। ९ ।।
अत्याक्षं त्वा मनसा अत्याक्षं हृदयेन त्वा ।
अत्याक्षं सर्वैरङ्गैस्त्वा तथा हि त्यजनं कृतम् ।। १० ।।
इमा या: प्रति नन्दथ स्त्रिय: पुमांसमन्वतम् ।
सर्वा: संगत्य ब्रूत त्यजने त्यजनं कृतम् ।। ११ ।।
त्यजनं मे द्यावापृथिवी आधातां त्यजनं देव: सविता बृहस्पति:।
अग्निश्च तुभ्यं सूर्यश्च त्यजने त्यजनं कृतम् ।। १२ ।।
सं दिव: सं पृथिव्या: सं वातात् सं नदीभ्य: ।
संस्कन्दमिन्द्र आरभत् सह गात् संहरादिदम् ।। १३ ।।

संस्कन्दमोज ओजसा देवेभिर्नाम ते हितम् ।
ईरण्यनाम नाम ते संस्कन्दास्योषधे ।। १४ ।।
सं समुद्रो नदीभि: सं द्यावापृथिवी उभे ।
सं जायापत्या योन्यां संस्कन्दास्योषधे ।। १५ ।।
सं ते शीर्ष्ण: कपालानि सं योनिं सं गवीन्यो ।
सं ते सर्वाण्यङ्गानि संस्कन्देनाभिदध्मसि ।। १६ ।।
श्रीयं धातुर्मयि धेहि श्रीयामाधिपतिं कृणु ।
वीशामीशानो मघवानिन्द्रो मा यशसा जयत् ।। १७ ।।
मयि त्वदिन्द्रियं बृहन् मयि दक्ष उत क्रतु: ।
धर्मस्तिश्चित् वि भातु मा गायत्री छन्दसां
विराड् ज्योतिषां तस्य दोहमशीय ।। १८ ।।
अर्कासधस्थौ कविर्मातरिश्वानौजमाङ्गिरस: ।
यशस्विनं मा देवा यशस: कृणुत स्वाहा ।। १९ ।।

*(इति त्र्यृचनामऊनविंशतिकाण्डे त्रयोदशो ऽनुवाक: )*

## १९-४९

इन्द्रं वयं वणिजं हवामहे स नस्त्राता पुर एतु प्रजानन् ।
घ्नन्नरातिं परिपन्थिनं मृगं स ईशानो धनदा अस्तु मह्यम्।।१।।
पणो नो अस्तु प्रपणो विक्रयश्च प्रतिपणो नो धनिन: कृणोतु ।
संरराणा आहुतिं जुषन्तां शुनं नो अस्तु चरितमुत्थितं च।।२।।
यत् पणेन प्रतिपणं चरामि स्वेन देवा धनमिच्छमान: ।
इन्द्रो मे तस्मिन् रुचिमा दधातु बृहस्पति: सविता सोम अग्नि:।।३।।
इहैव: पन्था वहवो देवयाना अनु द्यावापृथिवी संचरन्ति ।
तेषामहं मा वर्चस्या दधामि यथा क्रीत्वा धनमावहानि ।।४।।

विध्य वाससे निर्ऋतिर्ये च पाशा अपश्रिता: ।
तेभ्य: प्र मुच्यते वल्मी विष्कन्धमपसादयन् ।। ५ ।।
न वै तद् वासो भवति अस्मिन् विध्यन्ति पूरुषम् ।
अस्मासमज्जते रूपं तस्मात् तदपि लोप्यम् ।। ६ ।।
उत्तिष्ठन् नु प्रियाजेता विद्वान् बहु भाज्यम् ।
न पन्थां भद्रमश्नुते य एनेन चरामहे ।। ७ ।।
ब्रह्मणैतत् प्रतिगृह्णन् तेन तत् कृणुते शिवम् ।
अर्कात् प्रमुच्यते पाशांस्तेन दाता वि पश्यति ।। ८ ।।
यौ व्याघ्रावरुढाववाञ्छौ जिघत्सत: पितरं मातरं च ।
तौ दन्तौ ब्रह्मणा ब्रह्मणस्पते शिवौ कृणु त्वमिह जातवेद: ।।९।।
व्रीहिमत्तं यवमत्तं माषमत्तमथो तिलम् ।
एष वां भागो निहितो रत्नधेयं मा हिंसिष्टं
पितरं मातरं च ।। १० ।।
अघोरौ सयुजा संविदानौ स्योनौ दन्तौ सुमङ्गलौ ।
मा हिंसिष्टं पितरं मातरं चान्यत्र वां तन्वो घोरमस्तु ।।११।।
ऐनान् द्यतामिन्द्राग्नि राज्ञा सोमेन मेदिना ।
इन्द्रो मरुत्वानादानममित्रेभ्य: कृणोतु मे ।। १२ ।।
इदमादानमकरं तपसेन्द्रेण संशितम् ।
अमित्रा येत्र सन्ति मे ताना द्या द्विषतो मम ।। १३ ।।
आदानेन संदानेनामित्रान् सं द्यामसि ।
अपाना ये चैषां प्राणा असुनासून् समछिदन् ।। १४ ।।
प्रतूर्त्ताय मरुत्वते स्वाहा ।१५ ।।
जयद्वीरायाभिषक्तने स्वाहा ।। १६ ।।
बृहस्पतये विश्वदेवते स्वाहा ।। १७ ।।

१९-५०

प्र द्यौः प्र पृथिवी प्रान्तरिक्षं स्वर्महत्।
प्रैताः समुद्रिया आपः शल्यमुच्चिच्युवुः ।। १ ।।
प्र त्वा वातश्च्यावयतु प्र भूमिः सह सासह ।
प्रैताः समुद्रिया आपः शल्यमुच्चिच्युवुः ।। २ ।।
प्र त्वा सूर्यश्च्यावयतु नक्षत्रैः सह मेदिभिः ।
प्रै ताः समुद्रिया आपः शल्यमुच्चिच्युवुः ।। ३ ।।
यो वा पौतुद्रुवो मणिर्विश्वभेषज आगमत्।
सो ऽस्मत् सर्वं दुष्वप्न्यमप हन्तु तमश्च यत्।। ४ ।।
अपास्मत् सर्वं दुष्वप्न्यमप पापा या च लक्ष्मीः ।
अधाहिरण्य वर्चसं सर्वधावा मणे कृधि ।। ५ ।।
सर्वधावाहं भगवानिन्द्रियावान् विषासहिः ।
यं मा पौतुद्रुवो मणिर्द्रविणेन स आरुहद्।
मा इन्द्रियेण स आरुहत्।। ६ ।।
पुमानश्वो धनं वित्तिः पुमान्निष्को हिरण्ययः ।
पुमांसं पुत्रमोषधेस्यै आ धेहि नार्य्यै ।। ७ ।।
यथा नन्दाः पुंसा जाता न व्रवस्तीति कश्चन ।
एवा त्वं पुत्रमोषधेस्यै आ धेहि नार्य्यै ।। ८ ।।
अश्वेन रिष्येन गवाः क्रीतास्योषधे ।
अश्वश्श्वेतो धनं तव हिरण्यं हरितं तव ।
दत्ता सोमेन राज्ञे ह पुंसवनं भव ।। ९ ।।
यन्मेनृम्णं द्रविणं ब्राह्मणं च यच्च श्रुतं यच्च रत्नं बिभर्मि।
एतन् नो अत्र निधिपा नु पातु यावद् ऐमि
त्रीणिमज्मा व्रज्याः ।। १० ।।

यन् मे नृम्णं द्रविणं ब्राह्मणं च ये अग्नयो धृष्णियासो मयीमे।
हरिश्चन्द्रो रक्षतु तन् नो अत्र यावद् ऐमि
पुरो ग्रामं चरित्वा ।। ११ ।।
एषैष: ऐमि पुरो ग्रामं चरित्वा सोनृम्णं द्रविणं ब्राह्मणं च ।
यदत्रापि त्वे शुचीदं तदहमा ददे ।। १२ ।।
आसूर्यो हि प्रथमं दस्युहत्याय शक्र हार्ये जाने मघवन् सहस्वन्।
दासं पर्णं रन्धयनार्याय युञ्जानो बाहू पुरुहूतं वज्रम् ।। १३ ।।
आहू रूढ ते दस्युहत्याय भूर्णि दृढान पर्वन् श्रृण्विन्द्र ।
तीव्र: श्रद्धो बहुलान्येषा मयज्मनो अर्पय सं वधेन ।। १४ ।।
दर्शय न: चित्तपावनमिन्द्रं बहु साकं शराङ् इव पश्यमान: ।
यो न धृष्णिं मघवानं पृतन्यादभिरुतेषु कवयो ववृत्या:।।१५।।

## १९-५१

इदावत्सराय परिवत्सराय संवत्सराय प्रति वेदयाम एतत् ।
यद् व्रतेषु दुरितं निजग्मिम दुर्हार्दे तेन शमलेन आयु: ।। १ ।।
यन् मे व्रतं व्रतपते लुलोभाहोरात्रे समधातां म एतत् ।
उद्यन् पुरस्ताद् भिषगस्तु चन्द्रमा: सूर्यो रश्मिभिरभि
गृणात्वेतत् ।।२।।
यद् व्रतमधिपेदे चित्त्या मनसा हृदा ।
आदित्या रुद्रास्तन् मयि वसवश्च समिन्धताम् ।। ३ ।।
व्रतानां व्रतपतय उपाकरोम्यग्नये ।
स मे द्युम्नं बृहद्यशो दीर्घमायुष्कृणोतु मे ।। ४ ।।
मयोभूर्वातो अभिवातूस्ना ऊर्जस्वतीरोषधीरा रिशन्ताम् ।
मेदस्वतीर्जीवधन्या मयोभूव: पद्वते ऽवसाय रुद्रमृड ।। ५ ।।

या एकरूपा विश्वरूपा: सरूपा यासामग्निरूधो वो जन्म वेद ।
या अङ्गिरसस्तपसेह चक्रुस्ताभ्य: पर्जन्य महि शर्म यच्छ ।।६।।
या देवेषु तन्व ऐरयन्त यासां सोमो रूपधेयानि वेद ।
ता अस्मभ्यं बहुला: पिन्वमाना: प्रजावतीरिन्द्रो गोष्ठे ददृश्याम् ।।७।।
प्रजापतिर्मह्यमेता रराणो वह्नीस्मतीरुपमे गोष्ठ आक: ।
तासां वयं प्रजया संसदेम ज्योग्जीवन्त: शरद: पुरुची: ।। ८ ।।
अभिष्ठिता चक्रुदीति पिशङ्गी बहुकर्दिनी ।
कर्दोह यज्ञे हलीक्ष्णाद् व्रीहेर्माषादथो यवात् ।। ९ ।।
यथा भषद् हलीक्ष्णास्य न संभवति कर्दने ।
एवाहलग्न कर्दय निर्ग्रामान् निर्विशो जहि ।। १० ।।
यथापरस्त्वां शर्धते गर्दभ: क्रतुं संदृशि ।
एवा ते शर्धतां भसद्धलीक्ष्णपर्ण शर्धय वृत्रहा साचि शर्धय:।।११।।
पवीरवल्लाङ्गलं सुशेवं सोमसत्सरु ।
तदुत् कृषति गामविं प्रफर्व्यं च पीबरीं
प्रस्थावद् रथवाहनम् ।। १२ ।।
शुनं वरत्रामा यच्छ शुनमष्ट्रामुदिङ्गय ।
शुनं वाहस्य युक्तस्याष्ट्रया जहि दक्षिणम् ।। १३ ।।
मधुमत् तन् निगृहाण फालं क्षेत्रेषु सर्वदा ।
तत् पर्जन्यो ऽभिवर्षतु भूम्ना धान्याय कर्तवे ।। १४ ।।
आयतादित्या रुक्षतायत वेद्यामधि ।
प्राहाग्निर्हव्यं देवेभ्यो मन्त्रो होता हविष्पति: ।। १५ ।।
एमा अगुर्मयोभूवो मधोरूधांसि बिभ्रती: ।
ता उप प्रशिक्षतं दुहानामक्षितं पय: ।। १६ ।।

ईडास्थ मधुपृचो विश्वरूपास्तामा विपश्यत् ।
सह प्राणेन तेजसा सह हरसा बलेन ।। १७ ।।

१९-५२

दिवो नभः शुक्रं पयो दुहानर्तस्य नाभिरमृतं वि चष्टे ।। १ ।।
घृतं दुहाना विश्वतः प्रपीणामूर्जं दुहानामनपस्फुरन्तीम् ।
उपासतां सुकृतः स्वधाभिः ।। २ ।।
घृतमुत्सं पिन्वमानामिमां योनिमुपाध्वम् ।
स्वधायाश्चकृषे जीवन् तास्ते सन्तु मधुश्चुतः ।। ३ ।।
सं रसा ओषधीनां समाकूतिर्नयन्तु मे ।।
ऊर्जस्वन्तं पयस्वन्तं पृथिव्या हस्तमन्वागात् ।। ४ ।।
परिणीतिरसि हस्तस्य पथः परिणीतिरसि ।
एवा ह दुष्वप्न्यं सर्वं स्तम्भे परिणयामसि ।। ५ ।।
पयस्वन् मे क्षेत्रमस्तु पयस्वदुत धान्यम् ।
कृषिः पयस्वतीवाहं पयस्वान् भूयासम् ।। ६ ।।
वृष्णे बृहते स्वर्विदे अग्नये शुक्लं हरामः त्विषीमते ।
स नः स्थिरान् बलवतः कृणोतु योक् च नो
जीवातवे दधातु ।। ७ ।।
वेद वै ते ऽग्ने नामाभिर्नामासि त्रिवरूथम् ।
त्रयः पोषास्त्रिवरूद् अस्मान् यज्ञः सचन्ताम् ।। ८ ।।
प्रजापतेः पयसा वावृधानावायुष्मन्तो वर्चस्विनः ।
ज्योग्जीवन्तीमुप स त्वा सदेम ।। ९ ।।
उरूणसावसुतृपावुदुम्बलौ यमस्य दूतौ चरतो जनाङ् अनु ।
वेदाहं वेद सूर्यः किमेतौ किं करिष्यथः ।। १० ।।

समाधिदम्भादधीयां न पाको अस्मि जनुषा न सुषाट् ।
अभिषाडस्मि विश्वाषाट् पृतनाषाट् स्वर्विद्य
दिवं विश्वं भुवनं सो अस्मि ।। ११ ।।
अस्थादुदस्थादजनिष्ट विप्रो वि मिमीते वरिमाणं पृथिव्या:।
आसीदत् सम्राड् भुवनानि विश्वषाडिष्टाद् वेद
वरुणस्य व्रतानि ।। १२ ।।
प्रजापति: प्रजावान् स मां प्रजावान् प्रजावन्तं कृणोतु ।।१३।।
सूर्यो वर्चस्वान् स मां वर्चस्वान् वर्चस्वन्तं कृणोतु ।।१४।।
सोम: पयस्वान् स मां पयस्वान् पयस्वन्तं कृणोतु ।।१५।।
त्रिंशन् मुष्का: कववस्य दश मुष्कावुलूक्या: ।
चत्वारस्तव कर्दमा: ।। १६ ।।
तांस्त्वमुदग्र काशिनि मूलेन अपिकृन्ततात् ।
आसुरो ऽसि जन्मनस्तं त्वेतो नाशयामसि ।। १७ ।।
इन्द्रजा असि सोमजास्तं त्वेतो निष्प्रहिण्मसि ।
उर्वामत्सोमधूलकं तस्य पात्सत्य यमनास्त्रावमरोगणम्।।१८।।

*(इति त्र्यृचनामऊनविंशतिकाण्डे त्रयोदशो ऽनुवाक:)*

१९-५३

इषिराचास्यजिराचासि ।
प्रजापते: समिदसि संसितिर्नाम लोमशा ।
प्रजापतिष्ट्वाय प्रतिष्ठाकामो ऋ ऋतस्य प्रत्यतिष्ठत् ।
स यथा त्वया प्रजापति: प्रतिष्ठाकाम: प्रत्यतिष्ठदेवाहं
त्वया प्रतिष्ठाकाम: प्रतितिष्ठेषम् ।
आ मा वरो गमेदा मा ब्रह्मचारिणो गमेयु: स्वाहा ।।१।।
भूतिश्चासि प्रतिष्ठा चासि ।
प्रजापते: समिदसि संसितिर्नाम लोमशा ।

प्रजापतिष्ट्वाय प्रतिष्ठाकामो ऋ ऋतस्य प्रत्यतिष्ठत् ।
स यथा त्वया प्रजापतिः प्रतिष्ठाकामः प्रत्यतिष्ठदेवाहं
त्वया प्रतिष्ठा कामः प्रतितिष्ठेषम् ।
आ मा वरो गमेदा मा ब्रह्मचारिणो गमेयुः स्वाहा ।। २ ।।
अस्वप्नाचास्यनिद्रयाचासि ।
प्रजापतेः समिदसि संसितिर्नाम लोमशा ।
प्रजापतिष्ट्वाय प्रतिष्ठाकामो ऋ ऋतस्य प्रत्यतिष्ठत् ।
स यथा त्वया प्रजापतिः प्रतिष्ठाकामः प्रत्यतिष्ठदेवाहं
त्वया प्रतिष्ठाकामः प्रतितिष्ठेषम् ।
आ मा वरो गमेदा मा ब्रह्मचारिणो गमेयुः स्वाहा ।। ३ ।।
रुचिश्चासि यक्षं चासि ।
प्रजापतेः समिदसि संसितिर्नाम लोमशा ।
प्रजापतिष्ट्वाय प्रतिष्ठाकामो ऋ ऋतस्य प्रत्यतिष्ठत् ।
स यथा त्वया प्रजापतिः प्रतिष्ठाकामः प्रत्यतिष्ठदेवाहं
त्वया प्रतिष्ठाकामः प्रतितिष्ठेषम् ।
आ मा वरो गमेदा मा ब्रह्मचारिणो गमेयुः स्वाहा ।। ४ ।।
कीर्त्तिश्चासि यशश्चासि ।
प्रजापतेः समिदसि संसितिर्नाम लोमशा ।
प्रजापतिष्ट्वाय प्रतिष्ठाकामो ऋ ऋतस्य प्रत्यतिष्ठत् ।
स यथा त्वया प्रजापतिः प्रतिष्ठाकामः प्रत्यतिष्ठदेवाहं
त्वया प्रतिष्ठाकामः प्रतितिष्ठेषम् ।
आ मा वरो गमेदा मा ब्रह्मचारिणो गमेयुः स्वाहा ।। ५ ।।
अम्भश्चासि महश्चासि ।
प्रजापतेः समिदसि संसितिर्नाम लोमशा ।

प्रजापतिष्ट्वाय प्रतिष्ठाकामो ऋ ऋतस्य प्रत्यतिष्ठत् ।
स यथा त्वया प्रजापति: प्रतिष्ठाकाम: प्रत्यतिष्ठदेवाहं
त्वया प्रतिष्ठाकाम: प्रतितिष्ठेषम् ।
आ मा वरो गमेदा मा ब्रह्मचारिणो गमेयु: स्वाहा ।। ६ ।।
अन्नं चास्यन्नाद्यं चसि ।
प्रजापते: समिदसि संसितिर्नाम लोमशा ।
प्रजापतिष्ट्वाय प्रतिष्ठाकामो ऋ ऋतस्य प्रत्यतिष्ठत् ।
स यथा त्वया प्रजापति: प्रतिष्ठाकाम: प्रत्यतिष्ठदेवाहं
त्वया प्रतिष्ठाकाम: प्रतितिष्ठेषम् ।
आ मा वरो गमेदा मा ब्रह्मचारिणो गमेयु: स्वाहा ।। ७ ।।
प्रयच्छन्ती चासि प्रवदन्ती चासि ।
प्रजापते: समिदस्यूपोलपा नाम लोमशा ।
प्रजापतिष्ट्वाय प्रतिष्ठाकामो ऋ ऋतस्य प्रत्यतिष्ठत् ।
स यथा त्वया प्रजापति: प्रतिष्ठाकाम: प्रत्यतिष्ठदेवाहं
त्वया प्रतिष्ठाकाम: प्रतितिष्ठेषम् ।
आ मा वरो गमेदा मा ब्रह्मचारिणो गमेयु: स्वाहा ।। ८ ।।
अनुकामा चासि कामदुघा चासि ।
प्रजापते: समिदस्यूपोलपा नाम लोमशा ।
प्रजापतिष्ट्वाय प्रतिष्ठाकामो ऋ ऋतस्य प्रत्यतिष्ठत् ।
स यथा त्वया प्रजापति: प्रतिष्ठाकाम: प्रत्यतिष्ठदेवाहं
त्वया प्रतिष्ठाकाम: प्रतितिष्ठेषम् ।
आ मा वरो गमेदा मा ब्रह्मचारिणो गमेयु: स्वाहा ।। ९ ।।
आहरन्ती चासि समाहरन्ती चासि ।
प्रजापते: समिदस्यूपोलपा नाम लोमशा ।

प्रजापतिष्ट्वाय प्रतिष्ठाकामो ऋ ऋतस्य प्रत्यतिष्ठत् ।
स यथा त्वया प्रजापतिः प्रतिष्ठाकामः प्रत्यतिष्ठदेवाहं
त्वया प्रतिष्ठा कामः प्रतितिष्ठेषम् ।
आ मा वरो गमेदा मा ब्रह्मचारिणो गमेयुः स्वाहा ।। १० ।।
दिशन्ती चासि प्र दिशन्ती चासि ।
प्रजापतेः समिदस्यूपोलपा नाम लोमशा ।
प्रजापतिष्ट्वाय प्रतिष्ठाकामो ऋ ऋतस्य प्रत्यतिष्ठत् ।
स यथा त्वया प्रजापतिः प्रतिष्ठाकामः प्रत्यतिष्ठदेवाहं
त्वया प्रतिष्ठा कामः प्रतितिष्ठेषम् ।
आ मा वरो गमेदा मा ब्रह्मचारिणो गमेयुः स्वाहा ।।११।।
अनुमतिश्चास्यनुमन्यमाना चासि ।
प्रजापतेः समिदस्यूपोलपा नाम लोमशा ।
प्रजापतिष्ट्वाय प्रतिष्ठाकामो ऋ ऋतस्य प्रत्यतिष्ठत् ।
स यथा त्वया प्रजापतिः प्रतिष्ठाकामः प्रत्यतिष्ठदेवाहं
त्वया प्रतिष्ठाकामः प्रतितिष्ठेषम् ।
आ मा वरो गमेदा मा ब्रह्मचारिणो गमेयुः स्वाहा ।।१२।।
जितिश्चासि विजितिश्चासि ।
प्रजापतेः समिदस्यूपोलपा नाम लोमशा ।
प्रजापतिष्ट्वाय प्रतिष्ठाकामो ऋ ऋतस्य प्रत्यतिष्ठत् ।
स यथा त्वया प्रजापतिः प्रतिष्ठाकामः प्रत्यतिष्ठदेवाहं
त्वया प्रतिष्ठाकामः प्रतितिष्ठेषम् ।
आ मा वरो गमेदा मा ब्रह्मचारिणो गमेयुः स्वाहा ।।१३।।
संजितिश्चासि सन्दनाजितं चासि ।
प्रजापतेः समिदस्यूपोलपा नाम लोमशा ।

प्रजापतिष्ट्वाय प्रतिष्ठाकामो ऋ ऋतस्य प्रत्यतिष्ठत् ।
स यथा त्वया प्रजापतिः प्रतिष्ठाकामः प्रत्यतिष्ठदेवाहं
त्वया प्रतिष्ठाकामः प्रतितिष्ठेषम् ।
आ मा वरो गमेदा मा ब्रह्मचारिणो गमेयुः स्वाहा ।।१४।।
अग्निः पृथिव्याधिपतिः सोमस्त्वावतु विद्म त्वा विद्धि मा ।
अधिपतिरस्यधिपतिं मा कृणु गवामश्वानां
पुरुषाणां ब्रह्मचारीणां भूत्या ऽन्नाद्यस्य ।। १५।।
वायुरन्तरिक्षस्याधिपतिः सोमस्त्वावतु विद्म त्वा विद्धि मा ।
अधिपतिरस्यधिपतिं मा कृणु गवामश्वानां पुरुषाणां
ब्रह्मचारिणां भूत्या ऽन्नाद्यस्य ।। १६ ।।
सूर्यो दिवोधिपतिः सोमस्त्वावतु विद्म त्वा विद्धि मा
अधिपतिरस्यधिपतिं मा कृणु गवामश्वानां पुरुषाणां
ब्रह्मचारिणां भूत्या ऽन्नाद्यस्य ।। १७ ।।
विन्दन्तु वसवो विन्दन्तु मे गृहान् प्रजां पशून्
वित्तिं भूतिं प्रतिष्ठाम् ।। १८ ।।
आ यन्तु वसवो आ यन्तु मे गृहाः प्रजाः पशवो
वित्तिर्भूतिः प्रतिष्ठाम् ।। १९।।
संयन्तु वसवो संयन्तु मे गृहाः प्रजाः पशवो
वित्तिर्भूति प्रतिष्ठाम् ।। २०।।
जीतिरसि जीयासं पार्थिवैः पृतना जीयासम् ।
विजितिरसि वि जीयासं मानुषैः पृतना जीयासम् ।।२१।।
संजितिरसि सं जीयासं सर्वैः पृतना जीयासम् ।। २२।।

१९-५४

वोधयैनं प्र वोधय स्वप्तवे नानु मन्यताम् ।
उर्ध्वस्तिष्ठान् ममाध्यानान्यासां कीर्त्तयश्च नः ।। १ ।।

आ वर्त्तय नि वर्त्तयाभ्यावर्त्तया कुरु ।
इदमस्य सर्वा चित्तानि स्मरेण प्रचयामसि ।। २ ।।
स्मरं तपति मरुत: समिद्धे जातवेदसि ।
उदस्य पततां मनस्तदस्य रमतां मयि ।। ३ ।।
गणपते गणपतिं मा कृणु तस्मान् मा यवम् ।
अपिगणा अपिगणं मा कृणु तस्मान् मा छित्सि ।। ४ ।।
सगण सगणं मा कृणु तस्मान् मा न सम् ।
गणवर्धन गणं मे वर्धय गवामश्वानां
पुरुषाणां ब्रह्मचारीणां भूत्या ऽन्नाद्यस्य ।। ५ ।।
गणाभिवर्धन गणं मे ऽभिवर्धय गवामश्वानां
पुरुषाणां ब्रह्मचारीणां भूत्या ऽन्नाद्यस्य ।। ६ ।।
गण प्रवर्धन गणं मे प्रवर्धय गवामश्वानां
पुरुषाणां ब्रह्मचारीणां भूत्या ऽन्नाद्यस्य ।। ७ ।।
यच्च खातं यच्चाखातं सर्वं तदरसं विषम् ।
यच्च पिष्टं यच्चापिष्टं सर्वं तदरसं विषम् ।। ८ ।।
यच्च दिग्धं यच्चादिग्धं सर्वं तदरसं विषम् ।
यथा वृका जग्धपुत्रा व्याग्रावालला भवेत् ।। ९ ।।
एवात्वमरललाभ वा धीभि: प्रेषितो मम ।
यथा दीप्तं सरतूलमग्निना ललाभवेत् ।। १० ।।
एवात्वमरललाभ वा धीभि: प्रेषितो मम ।
आक्रन्दस्य ललाभ वाहस्य कामेन शुष्व च ।
एवात्वमरललाभ आधीभि: प्रेषितो मम ।। ११ ।।

१९-५५

ययो: सर्वमिदमार्पितं वशेभूतं च भव्यं निमिशच्च चेष्टत ।
तौ मे गृह्णीतामुपद्रष्टारमत्र मास्योछेष्वयथावत् प्रजापते।।१।।

यो मा वदन्तं हृदयेन वाचा वाचा श्रोत्रेण मनसाजिह्वक्षात् ।
तमिन्द्रो देवो वरुणो बृहस्पतिरीशानो देवो अभि यातु
मृत्युर्यथा न जीवादुषसं तृतीयान् ।। २ ।।
यो माजिह्वक्षाद् वह्वीयान् मन्यमानं इत्थं विद्वांसं प्रमतिर्मतीनाम्।
तमिन्द्रो देवो वरुणो बृहस्पतिरीशानो देवो अभियातु
मृत्युर्यथा न जीवादुषसं तृतीयान् ।। ३ ।।
प्रत्यग्वधेनास्या ऽपि दधामि प्राणं मोदानं विदथ माजिह्वक्षात् ।
सो अस्यायुराछिनन्तु कुलिशे नेव वृक्ष
यथा न जीवादुषसं तृतीयान् ।। ४ ।।
यस्या अक्षरमेकमेवपर: सहस्रा अयुतं च शाखा: ।
तस्या वाचो विदथ मा वदन्तं यो माजिह्वक्षात् सन्वेत्वार्त्तिम् ।।५।।
उषावादित्य मयीन्धस उषसौ वा उद्यत्सं उद्यन् प्रजाभ्यां
अपत सोपत मोहत सोन्नाद्यव मारुन्ध ।। ६ ।।
अपतो मोहतो न्नादो भवति य एवं वेद ।
वातो वा ऽग्नि मयीन्धस वातेनेन्धोज्वलत्सो दीप्यत स:।।७।।
मनोमयी ब्राह्मण मयीन्धस ब्रह्मचर्यमवसत्सवेदमन्व
वपत सोपत मोहतसन्नाद्यव मारुन्ध ।
अपतो मोहतो न्नादो भवति य एवं वेद ।। ८ ।।
होमेन प्रतरं प्रजापते दंपती परि ददामि पुष्ट्या ।
रायस्पोषं सवितर्नि यच्छ जरामृत्यु कृणुहि सर्ववीरौ ।। ९ ।।
अयं होमो वर्धयन्नेतु दंपती प्रजावन्तौ पशुवन्तौ सुवीरौ ।
रायस्पोषं सवितर्नि यच्छ जरामृत्यु कृणुहि सर्ववीरौ ।।१०।।
गोमन्तं पशुवन्तमश्वन्तं होमं दंपतीभ्यां जुहोमि ।
रायस्पोषं सवितर्नि यच्छ जरामृत्यु कृणुहि सर्ववीरौ।।११।।

जीवा स्थ जीव्यासं सर्वमायुर्जीव्यासम् ।। १२ ।।
उपजीवा स्थोप जीव्यासं सर्वमायुर्जीव्यासम् ।। १३ ।।
संजीवा स्थ सं जीव्यासं सर्वमायुर्जीव्यासम् ।। १४ ।।
जीवला स्थ जीव्यासं सर्वमायुर्जीव्यासम् ।। १५ ।।
प्रजापतेराकूतिरसि साहस्त्री पुष्टिः ।
प्रजापतेराकूत्याहं साहस्त्र्यां पुष्ट्यां साहस्त्रं पशुन् पुषेयम्।।१६।।
बृहस्पतेराकूतिरसि साहस्त्री पुष्टिः ।
बृहस्पतेराकूत्याहं साहस्त्र्यां पुष्ट्यां साहस्त्रं पशुन् पुषेयम्।।१७।।
ब्रह्मण आकूतिरसि साहस्त्री पुष्टिः ।
ब्रह्मण आकूत्याहं साहस्त्र्यां पुष्ट्यां साहस्त्रं पशुन् पुषेयम्।।१८।।

१९-५६

विराडसि विराजं मा कृणु तस्यास्ते यशो भक्षीय ।। १ ।।
स्वराडसि स्वराजं मा कृणु तस्यास्ते मधु भक्षीय ।। २ ।।
सम्राडसि सम्राजं मा कृणु तस्यास्ते अन्नं भक्षीय ।। ३ ।।
वीर्यावता ते हविषा जुहोमि जीवातवे न मर्त्तवे ।
दक्षं ते भद्रमाहार्षं परा सुवाम्यामयत् ।। ४ ।।
अभिवीरेण ते हविषा जुहोमि जीवातवे न मर्त्तवे ।
दक्षं ते भद्रमाहार्षं परा सुवाम्यामयत् ।। ५ ।।
सुवीरेण ते हविषा जुहोमि जीवातवे न मर्त्तवे ।
दक्षं ते भद्रमाहार्षं परा सुवाम्यामयत् ।। ६ ।।
सर्ववीरेण ते हविषा जुहोमि जीवातवे न मर्त्तवे ।
दक्षं ते भद्रमाहार्षं परा सुवाम्यामयत् ।। ७ ।।
प्रजावता ते हविषा जुहोमि गर्भमा धत्स्व योन्याम् ।
सुकाले जायतां पुनर्दशमेमासि सूतवे ।। ८ ।।

सुप्रजसा ते हविषा जुहोमि गर्भमा धत्स्व योन्याम् ।
सुकाले जायतां पुनर्दशमेमासि सूतवे ।। ९ ।।
सुपुत्रेण ते हविषा जुहोमि गर्भमा धत्स्व योन्याम् ।
सुकाले जायतां पुनर्दशमेमासि सूतवे ।। १० ।।
भूतये ते हविषा जुहोमीमं देवासो ऽभि हिंकराथ ।
अस्मिन्नेव पशवः सं विशन्तु चतुष्पदामुत वा ये द्विपादः।।११।।
वित्तये ते हविषा जुहोमीमं देवासो ऽभि हिङ्कराथ ।
अस्मिन्नेव पशवः सं विशन्तु चतुष्पदामुत वा ये द्विपादः।।१२।।
सुवृद्धेन ते हविषा जुहोमीमं देवासो ऽभि हिङ्कराथ ।
अस्मिन्नेव पशवः सं विशन्तु चतुष्पदामुत वा ये द्विपादः।।१३।।
संवृद्धेन ते हविषा जुहोमीमं देवासो ऽभि हिङ्कराथ ।
अस्मिन्नेव पशवः सं विशन्तु चतुष्पदामुत वा ये द्विपादः।।१४।।
क्षेम्येण ते हविषा जुहोमि क्षेम्यो भवासि पशुभिश्च वीरैः ।
इन्द्राग्नि त्वा सयुजा सखायौ विश्वेभिर्देवैरनु सं दधेताम्।।१५।।
प्रतिष्ठितेन ते हविषा जुहोमि प्रति तिष्ठासि पशुभिश्च वीरैः ।
इन्द्राग्नि त्वा सयुजा सखायौ विश्वेभिर्देवैरनु सं दधेताम्।।१६।।
संभूतेन ते हविषा जुहोमि सं भवासि पशुभिश्च वीरैः ।
इन्द्राग्नि त्वा सयुजा सखायौ विश्वेभिर्देवैरनु सं दधेताम्।।१७।।
प्रभूतेन ते हविषा जुहोमि प्र प्रभासि पशुभिश्च वीरैः ।
इन्द्राग्नि त्वा सयुजा सखायौ विश्वेभिर्देवैरनु सं दधेताम्।।१८।।

*(इति त्र्यृचनामऊनविंशतिकाण्डे चतुर्दशो ऽनुवाकः )*

*इत्यथर्ववेदे पैप्पलादसंहितायां त्र्यृचनामऊनविंशति काण्डः*

# अथ एकर्चोनामविंशतिकाण्ड:

## २०—१

धीती वा ये अनयन् वाचो अग्रं मनसा वा येवदन्नृतानि ।
तृतीयेन ब्रह्मणा वावृधानास्तुरीयेणामन्वत नाम धेनो: ।।१।।
स वेद पुत्र: पितरं स मातरं स सूनुर्भुवत् स भुवत् पुनर्मघ:।
स द्यामौर्णोदन्तरिक्षं स स्वर्विश्वा भुवो अभवत् स आभवत् ।।२।।
अथर्वाणं पितरं विश्वदेवं मातुर्गर्भं पितरसुं युवानम् ।
य इं चिकेता अमृतस्य धामन् नित्यस्य राय: परिधींरपश्यत् ।।३।।
शिवास्त एका अशिवास्त एका: सर्वा बिभर्ष्यहृणीयमान: ।
गुहा वाच निहितास्तिस्त्र एता एकेदिदं वि बभुवानु सर्वं ।।४।।
अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्र: ।
विश्वे देवा अदिति: पञ्च जना अदितिर्जातमदितिर्जनित्वम् ।।५।।
दिते: पुत्राणामदितेरकार्षं महाशर्मणां महतामनर्मणाम् ।
तेषां हि धाम गभिषक् समुद्रियं नैषां ये अपस:
परो अस्ति किं चन ।।६।।
वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे ।
यस्यामिदं विश्वं भुवनमाविवेश सा नो देवी सुहवा शर्म यच्छतु।।७।।
महीमू षु मातरं सुव्रतानामृतस्य पत्नीमवसे हुवेम ।
तुविक्षत्रामजरन्तीमुरूचीं सुशर्माणमदितिं सुप्रणीतिम् ।।८।।
सूत्रामाणं पृथिवी द्यामनेहसं सुशर्माणमदितिं सुप्रणीतिम् ।
दैवीं नावं स्वरित्रामनागसो अस्त्रवन्तीमा रुहेमा स्वस्तये ।।९।।
एकया च दशभिश्चा सुहुते द्वाभ्यामिष्टये विंशत्या च ।
तिसृभिश्च वहसे त्रिंशता च वियुग्भिर्वायविह ता वि मुञ्च।।१०।।

२०—२

अया विष्ठा जनयन् कर्वराणि स हि घृणिरुरुर्वराय गातुः ।
स प्रत्युदैद्धरुणे मध्वो अग्रं स्वा यत् तनू तन्वामैरयन्त ।।१।।
यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ।।२।।
यज्ञो बभूव स आ बभूव स पृथिव्या अधिपतिर्बभूव ।
स प्रत्य यज्ञे स उ वावृधे पुनः सो अस्मासु द्रविणमा दधातु।।३।।
देवा यद् देवान् हविषायजन्तामर्त्यान् मनसामर्त्त्येन ।
ब्रवाम तत्र परमे व्योमन् पश्येम तदुदितौ सूर्यस्य ।।४।।
मुग्धा देवा उत शुनायजन्तोत गोरङ्गैर्बहुधायजन्त ।
य इमं यज्ञं मनसान्वविन्दत् प्र णो वोचस्तमिहेह ब्रवाम ।।५।।
यत् पुरुषेण हविषा देवा यज्ञमतन्वत ।
क्वस्वीत्तदद्य नो श्रेयान् यद् वि हव्येनेजिरे ।।६।।
इन्द्रः सुत्रामा स्ववाङ् अवोभिः सुमृडीको भवतु विश्व वेदाः ।
बाधतां द्वेषो अभयं नः कृणोतु सुवीर्यस्य पतयः स्याम ।।७।।
स सुत्रामा स्ववाङ् इन्द्रो अस्मदाराच्चिद् द्वेषः सनुतर्युयोतु ।
तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ।।८।।
यस्ते पृथु स्तनइत्नुर्य ऋष्वो यो दैवः केतुर्विश्वमाभूषतीदम् ।
मृडया नो विद्युता देव सस्यं मोत वधी रश्मिभिः सूर्यस्य।।९।।
यस्ते स्तनः शशयुर्यो मयोभूर्यः सुम्नयुः सुहवो यः सुदक्षः ।
येन विश्वा वर्नसि वार्याणि सरस्वति तमिह धातवे कः।।१०।।

२०—३

इदं ते हव्यं घृतवत् सरस्वतीदं पितृणां हविरास्यं यत् ।
इमानि त उदिता शंतमानि तेभिर्वयं मघवानः स्याम ।।१।।

प्रपथे पथामजनिष्ट पूषा प्रपथे दिव: प्रपथे पृथिव्या: ।
उभे अभि प्रियतमे सधस्थे आ च परा च चरति प्रजानन् ।।२।।
पूषेमा आशा अनु वेद सर्वा: सो अस्माङ् अभयतमेन नेषत् ।
स्वस्तिदा आघृणि: सर्ववीरोप्रयुच्छन् पुर एतु प्रजानन् ।।३।।
पूषागा अन्ये तु न: पूषा रक्षत्वर्वत: ।
पूषावाजां स नो तु न: ।।४।।
पूषन् तव व्रते वयं न रिष्येम कदा चन ।
स्तोतारस्त इह स्मसि ।।५।।
शुक्रं ते अन्यद्यजतं ते अन्यद् विषुरूपे अहनी द्यौरिवासि ।
विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु ।।६।।
धाता दधातु दाशुषे प्राञ्चं जीवातुमक्षिताम् ।
वयं देवस्य धीमहि सुमतिं सत्यधर्मण: ।।७।।
धाता विश्वानि दाशुषे दधातु प्रजाकामाय दाशुषे दुरोणे ।
तस्य प्रजा अमृता: सं व्ययन्तु विश्वे देवासो अदिति: सजोषा:।।८।।
धातारातिः सवितेदं जुषन्तां प्रजापतिर्निधिपतिर्नो अग्नि: ।
त्वष्टा पूषा प्रजया सं रराणा यजमानाय द्रविणं दधातु ।।९।।
धाता प्रजानामुतराय ईशे धातेदं विश्वं भुवनं जजान ।
सं दाशुषे वहतु भूरिपुष्टा तस्मै देवाय हविषा विधेम ।।१०।।

२०—४

सावीर्हि देव प्रथमाय पित्रे वर्ष्माणमस्मै वरिमाणमस्मै ।
अथास्मभ्यं सवितर्वार्याणि दिवे दिवे आ सुवा भूरि पश्व: ।।१।।
भद्रादधि श्रेय: प्रेहि बृहस्पति: पुरएता ते अस्तु ।
अथेममस्या वर आ पृथिव्या आरेशत्रुं कृणुहि सर्ववीरम् ।।२।।
दमूना देव: सविता वरेण्यो दधद् रत्नं दक्षं पितृभ्य आयूंषि ।
पिबात् सोमं ममददेनमिष्टे परिज्मा चित् रमते अस्य धर्मणि ।।३।।

तां सवितु: सत्यसवस्य चित्रां वयं देवस्य प्रसवे मनामहे ।
यामस्य कण्वो अदुहत् प्रपीनां सहस्रधारां महिषो भगाय ।।४।।
को नो अस्या द्रुहोवद्यवत्या उन्नेष्यति क्षत्रियो वस्य इच्छन् ।
क पूर्तिकाम: क उ यज्ञकाम: को देवेषु वनुते दीर्घमायु: ।।५।।
क: पृश्निं धेनुं वरुणेन दत्तामथर्वणे सुदुघां नित्यवत्साम् ।
तां बृहस्पतिना सख्यं दुहानो यथावशं तन्वं कल्पयाति ।।६।।
न घ्रंस्तताप न हिमो जघान प्र सरस्तते पृथिवी जीरदानु:।
आपश्चिदस्मै सदमित् क्षरन्ति यत्र सोम: सदमित् तत्र भद्रम्।।७।।
यस्या इदं प्रदिशि यद् विरोचते अनुमतिं प्रति भूषंत्यायव: ।
यस्या उपस्थ उर्वन्तरिक्षं सा न: शर्म बहुलं नि यच्छात् ।।८।।
अन्वद्य नो अनुमतिर्यज्ञं देवेषु यच्छताम् ।
अग्निश्च हव्यवाहनो भवतां दाशुषे मय: ।।९।।
अन्विदनुमते त्वं मंससे शं च नस्कृधि ।
इषं तोकाय नो दधत् प्र ण आयुंषि तारिषन् ।।१०।

२०–५

अनु मन्यतामनुमन्यमान: प्रजावती समक्षीयमाणम् ।
तस्या वयं हेडसि मापि भूम सा नो देवी सुहवा शर्मयच्छतु ।।१।।
अनुमते अनुमन्यस्वतानो या ते वयं चकृमा या तनुभि: ।
या ते केषु तनूषु या प्रजायां या गोष्वोषधीष्वप्स्वन्त: ।।२।।
आ नो देव्यनुमतिर्जगम्यात् सुक्षेत्रता वीरताया सुजाता ।
भद्रा ह्यस्या: प्रमतिर्बभूव सेमं यज्ञमवतु देवजुष्टा ।।३।।
अनुमतिर्विश्वमिदं जजान यदेजति चरति यच्च तिष्ठति ।
तस्यास्ते देवि सुमतौ स्याम अनुमते अनु हि मंससे न: ।।४।।

यत् ते नाम सुहवं सुप्रणीते अनुमते अनुमतं सुदानु ।
तेन त्वं सुमतिं देव्यस्मा इषं पिन्व विश्ववारं सुवीरम् ।।५।
प्रजाभ्यस्त्वा प्रजास्त्वानुप्राणन्तु प्रजा: त्वं अनु प्राणिहि ।
शुक्रं ते शुक्रेण चन्द्रं चन्द्रेणामृतममृतेन प्रीणामि ।।६।।
तपसस्तनुरसि प्रजापतेर्वर्ण: ।
परमेण पशुना क्रीयसे ।।७।।
अभि त्यं देवं सवितारमोण्यो: कविक्रतुम् ।
अर्चामि सत्यसवं रत्नधामभि: प्रियं मतिम् ।।८।।
ऊर्ध्वा यस्यामतिर्भा अदिद्युतत् सवीमनि ।
हिरण्यपाणिरमिमीत सुक्रतु: कृपात् स्व: ।।९।।
अयं सहस्रमा नो दृशे कवीनां मतिर्ज्योतिर्विधर्मणि ।
ब्रध्न: समीचीरुषस: समीरयात् ।।१०।।

२०–६

अरेपस: सचेतस: स्वसरे मन्युमत्तमा: ।।१।।
समेत विश्व ओजसा पतिं दिवो य एको विभूरतिथिर्जनानाम्।
स पूर्व्यो नूतनमाविवासत् तं वर्तनिरनु
वावृत एकमित् पुरु: ।।२।।
कुहूं देवीममृतां विद्मनापसमस्मिन् यज्ञे सुहवा जोहवीमि ।
यो नो ददाति श्रवणं पितृणां तस्यै ते देवि हविषा विधेम।।३।।
कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविष: शृणोतु ।
सं दाशुषे किरतु भूरिपुष्टा रायस्पोषं चिकितुषे दधातु।।४।।
सं जानिध्वं सं पृच्यध्वं सं वो मनांसि जानताम् ।।५।।
मित्रो व: सर्वा: सं सृजान् मयि संज्ञानमस्तु व: ।।६।।

*(इत्येकर्चोनाम विंशतिकाण्डे प्रथमो ऽनुवाक:)*

२०-७

यन्नो अग्निरखनद्यन्न इन्द्रो विश्वे यद् देवा मरुत: स्वर्का ।
तदस्मभ्यं सविता सत्यधर्मा सरस्वत्यनुमतिर्नियच्छात् ।।१।।
यूयं नो देवा उभयाय वेधसे शर्म नो यच्छत् द्विपदे चतुष्पदे ।
अदत् पिबदूर्जयमानमाशितं तदस्मभ्यं शं योररपो दधात ।।२।।
बृहस्पते सवितर्बोधयैनं संशितं चित् सन्तरं सं शिशाधि ।
वर्धयैनं महते सौभगाय विश्व एनमनु मदन्ति देवा: ।।३।।
अमूत्रभूयादधि यद् यमस्य बृहस्पतिरभिशस्त्या अमुञ्चत् ।
प्रति मृत्युमौहतामश्विना ते देवानामग्ने भिषजा शचीभि: ।।४।।
इन्द्रावरुणा सुतपाविमं सुतं मद्यं सोमं पिवतं धृतव्रतौ ।
युवो रथो अध्वरं देववीतये प्रति स्वसरमुप याति पीतये ।।५।।
इन्द्रावरुणा मधुमत्तमस्य वृष्ण: सोमस्य वृषणा वृषेथाम् ।
इदं वामस्मे परिषिक्तमन्ध आसद्यास्मिन् वर्हिषि मादयेथाम् ।।६।।
उरु विष्णो वि क्रमस्वोरु क्षयाय नष्कृधि ।
घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर ।। ७ ।।
दिवो विष्ण उत वा पृथिव्या उरोर्वा विष्णो महो ऽन्तरिक्षात् ।
उभा हि हस्तौ मधुना पृणस्वाप्रयच्छ दक्षिणादोत सव्यात् ।।८।।
विष्णोर्नु कं प्र वोचं वीर्याणि य: पार्थिवानि विममे रजांसि ।
यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगाय: ।।९।।
प्र तद् विष्णु: स्तवते वीर्याणि मृगो न भीम: कुचरो गिरिष्ठा: ।
यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ।।१०।।

२०-८

अग्नाविष्णू महि धाम प्रियं वां पाथो घृतस्य गुह्यानि नाम ।
दमेदमे सप्त रत्ना दधानौ उप वां जिह्वा घृतमा चरण्यात् ।।१।।

अग्नाविष्णू महि तद् वां महित्वं वीथो घृतस्य गुह्या जुषाणा ।
दमेदमे सुष्टुत्या वावृधाना प्रति वां जिह्वा घृतमुच्चरण्यात् ।।२।।
उन्नम्भय पृथिवीं भिन्द्धीदं दिव्यं नभ: ।
उद्नो दिव्यस्य नो धातरीशानो वि ष्या विलम् ।। ३ ।।
अपक्रामन् पौरुषेयाद् गृणानो दैव्यं सह: ।
प्रणीतीरभ्या वर्तस्व देवो देवानां सख्या जुषाण: ।।४।।
पितोरहं पितुपतिं तदीडे धाता विधर्त्ता भुवनेष्वेषु ।
नेमेन मह्यं मधुमाङ् इहैधि नेमेनामुष्मै विषुवाङ् वैधि ।। ५ ।।
अयं पितो: पितुवाङ् आभृतस्वरिदं शृणोतु यदहं ब्रवीमि ।
नेमेन मह्यं मधुमाङ् इहैधि नेमेनामुष्मै विषुवाङ् वैधि ।। ६ ।।
आत्रैवैनं निर्ऋत आरभस्वात्रैवैनं निर्ऋते प्रक्षिणीह्यात्रैवैनं सर्व वि वृश्च ।
नेमेन मह्यं मधुमाङ् इहैधि नेमेनामुष्मै विषुवाङ् वैधि ।। ७ ।।
यत्वा पितरुप ब्रुवे तन्नो आशृण्वस्मिन्निहवे हव्यो यथास: ।
अमुं देवै निर्ऋति: संविदानामुं सिञ्चन्तु वरुणस्य पाशात् ।।८।।
यदस्मृति चकृमा किं चिदग्ने उपारिम चरणैर्जातवेद: ।
तस्मात् पाहि त्वं न: प्रचेत: शुभे सखिभ्यो अमृतत्वमस्मात् ।।९।।
अग्ने ऽध्यक्षो न एद्धि पाहि नो दुरितात् पाहि दुष्वप्न्यात् ।
आशन्या अजन्याद्यक्ष्मान्न: पाहि ।।१०।।

२०-९

त्विषिरसि त्विषिवन्तो भूयास्म ।
चक्षुष्मन्तो गोमन्त: प्रजावन्तो वर्चस्विन: ।। १ ।।
नद्भ्यासिञ्चत: क्षीरं भरतो दधि ।
इदं तद् विश्वरूपा व: पयोहरामि वीरुधा ।। २ ।।
यद्भ्य ओषधीभ्योऽद्भ्य: संभरथा मधु ।
इदं तद् विश्वरूपा व: क्षीरं हराम्योषधी ।। ३ ।।

यो अभ्यु बभ्रुणायसि स्वपन्तमिच्छ पुरुषं शयानमकस्यलम् ।
अयस्मयेन वर्मणाऽश्ममयेन वर्मणा पर्यस्मान् वरुणो दधत् ।। ४ ।।
ये नो गृहे ब्रह्मणा मन्यमाना घोरां वाचं मिथुया नो ब्रुवन्ति ।
ये नो रुचो बलिरुचो भवन्तु दुर्योणमस्मत् परिते हरन्तु ।। ५ ।।
अयमग्नि: सत्पतिर्वृद्धवृष्णो रथीव पत्तीनजयत् पुरोहित: ।
नाभा पृथिव्यां निहितो दविद्युतदधस्पदं कृणुतां ये पृतन्यव: ।। ६ ।।
अग्ने शर्ध महते सौभगाय तव द्युम्नान्युत्तमानि सन्तु ।
स जास्पत्यं सुयममा कृणुष्व शत्रूयतामभि तिष्ठा महांसि ।। ७ ।।
जुष्टोदमुना अतिथिर्दुरोण इमं नो यज्ञमुप याहि विद्वान् ।
विश्वा ह्यग्ने अभियुजो विहत्य शत्रूयतामा भरा भोजनानि ।। ८ ।।
अग्ने सपत्नान् प्र णुदस्व जातान् प्रत्यजातान् जातवेदो नुदस्व ।
अधि नो ब्रूहि सुमनस्यमान: शर्म नो यच्छ त्रिवरुथमुद्भित् ।। ९ ।।
प्रान्यान् सपत्नान् सहसा सहस्व प्रत्यजातान् जातवेदो श्रृणीहि ।
इदं राष्ट्रं पिपृहि सौभगायानु त्वा देवा वसवो ददन्ताम् ।। १० ।।

२०-१०

यो नो मित्रावरुणा अभिदासात् सपत्नो वोत् पिपानो बृहस्पते ।
सर्वं तमग्ने अधरं पारयास्मद् यथेन्द्राहमुत्तमश्चेतयानि ।। १ ।।
अहमेषामुत्तमश्चेतयानि मम वशमुपतिष्ठन्तु सर्वे ।
आजुह्वानो घृतपृष्ठ: सुवर्चा वसोर्मध्ये दीदिहि जातवेद: ।। २ ।।
अमुमग्ने अधरं पारयास्मज्जामय उत् पिपानं सपत्नम् ।
ये नो धूर्वानधरे ते भवन्तु विश्वाद्वेषांस्यभितो नु वृङ्धि ।। ३ ।।
मूर्धानं दिवो अरतिं पृथिव्या विशस्त्वा सर्वा बलिहृता उपासताम् ।
तासामुग्रो मध्यमेष्ठेयमस्या स्वे क्षेत्रे सवितेव वि राज: ।। ४ ।।

आ प्रत्यञ्चं दाशुषे दाश्वंसं सरस्वन्तं पुष्टिपतिं रयीणाम् ।
रायस्पोषं श्रवस्युं वसानमिह हुवेम सदनं रयीणाम् ।। ५ ।।
यस्य व्रते पशवो यन्ति सर्वे यस्य व्रत उपतिष्ठन्त आप: ।
यस्य व्रते पुष्टिपतिर्निविष्टस्तं सरस्वन्तमवसे हुवेम ।। ६ ।।
ये ते सरस्वन्न् ऊर्मयो मधुमन्तो घृतश्चुत: ।
तेभिर्नो ऽविता भव: ।। ७ ।।
दिव्यं समुद्रं पयसं वृहन्तमपां गर्भं वृषभमोषधीनाम् ।
अभीपतो रय्या तर्पयन्तं सरस्वतं रयीष्ठां सादयेह ।। ८ ।।
इन्द्रस्य कुक्षिरसि सोमधान आत्मा देवानामुत विश्वरूप: ।
इह प्रजा जनय यास्त आसु या अन्यत्रेह तास्ते स्वधिता गृणन्तु ।।९।।
श्येन: सुपर्णो दिव्यो नृचक्षा: सहस्रपाच्छतयोनिर्वयोधा: ।
स नो नि यच्छाद् वसुयत् पराभृतमस्माकमस्तु पितृषु स्वधावत् ।।१०।।

२०-११

अति धन्वान्यत्यपस्ततर्द श्येनो नृचक्षा अवसानदर्श: ।
तरन् विश्वा अवरा रजांसीन्द्रेण सख्या शिव आ जगाम ।। १ ।।
आगन् देव: सविता सर्वादाया ऊरु ज्योतिरविदामा नवोभि: ।
महीं नाव मदितेरारुहेमं यत्र सोमं सदमित् तत्र भद्रम् ।। २ ।।
उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ।। ३ ।।
पतिर्दिव: पतिरग्नि: पृथिव्या: पतिर्विश्वस्य भुवनस्य राजति ।
पतिर्विश्वा ओषधीराविवेश पत्नीवानग्निरिह याहि सोमम्।। ४ ।।
सं क्रामतं मा जिहीतं शरीरं प्राणापानौ सयुजेह स्ताम् ।
सप्तऋषिभ्य: परि दद्म एतं त एनं स्वस्ति जरसे नयन्तु ।। ५ ।।
यत् त आयुरतिहितं पराचैरपान: प्राणो य उ वाते परेत: ।
अग्निष्टदाहार्निऋतेरुपस्थात् तदात्मनि पुनरा वेशयामि ।। ६ ।।

मा त्वा प्राणो हासीद् यस्तया प्रविष्टो मा त्वापानोवहाय परा गात् ।
संरभ्य जीवः शरदः सुवर्चा अग्निष्टे गोपा अधिपा वशिष्ठः ।। ७ ।।
राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना ।
सीव्यत्वपः सूच्याच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यम् ।।८ ।।
यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि ।
ताभिर्नो अद्य सुमना उपागहि सहस्रपोषं सुभगे रराणा ।। ९ ।।
या राका या सिनीवाली या गुङ्गूर्या सरस्वती ।
इन्द्राणीमह्व ऊतये वरुणानीं स्वस्तये ।। १० ।।
या सुबाहुः स्वङ्गुरिः सुषूमा बहुसूवरी ।
तस्यै विश्पत्न्यै हविः सिनीवाल्यै जुहोतनः ।। ११ ।।
सिनीवालि पृथुष्टुके या देवानामसि स्वसा ।
जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः ।। १२ ।।
या विश्वत इन्द्रमसि प्रतीची सहस्रस्तुतामभियन्तु देवी ।.
विष्णोस्पत्नि तुभ्यं राका हवींषि पतिं देवी राधसा चोदयस्व ।।१३।।

*(इत्येकर्चोनामविंशतिकाण्डे द्वितीयो ऽनुवाकः )*

## २०-१२

उपह्वये सुदुघां धेनुमेतां सुहस्तो गोधुगुत दोहदेनाम् ।
श्रेष्ठं सवं सविता साविषन्नो ऽभिद्धो धर्मस्तदु षु प्र वोचम् ।। १ ।।
हिङ्कृण्वती वसुपत्नी वसूनां वत्समिच्छन्ती मनसाभ्यागात् ।
दुहामश्विभ्यां पयो अघ्न्येयं सा वर्धतां महते सौभगाय ।। २ ।।
गौरमीमेदभि वत्सं मिषन्तं मूर्धानं हिङ्ङ् अकृणोन् मातवा उ ।
सृक्वाणं धर्ममभि वावशाना मिमाति मायुं पयते पयोभिः ।।३।।
सूयवसाद् भगवती हि भूया अथो वयं भगवन्तः स्याम ।
अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती ।। ४ ।।

संजानाना उप सीदन्नभिज्ञु पत्नीवन्तो नमस्यन् नमस्यम् ।
रिरिक्वांसस्तन्वा सुम्नमायु: सखेत्सख्युर्निमिषि रक्षमाणा: ।। ५ ।।
समिद्धो अग्निरश्विना तप्तो वां घर्म आगतम् ।
दुह्यन्ते नूनं वृषणेह धेनवो दस्रा वदन्ति कारव: ।। ६ ।।
समिद्धो अग्निरश्विना रथी दिवस्तप्तो घर्मो दुह्यते वामिषे मधु ।
वयं हि वां पुरुदमासो अश्विना हवामहे सधमादेषु कारव:।।७।।
यदुस्रियास्वाहुतं घृतं पयोऽयं सो अश्विना वां भाग आ गतम् ।
माध्वी धर्तारा विदथस्य सत्पती तप्तं घर्मं पिबतं रोचने दिव:।।८।।
तप्तो वां घर्मो नक्षन्तु स्वहोता प्र वामध्वर्युश्चरति पयस्वान् ।
मधोर्दुग्धस्याश्विना तनाया वीतं पातं पयस उस्रियाया:।।९।।
उप द्रव पयसा गोधुगोषमा घर्मे सिञ्च पय उस्रियाया: ।
वि नाकमख्यत् सविता वरेण्योऽनु द्यावापृथिवी सुप्रणीति:।।१०।।

२०-१३

स्वाहाकृत: शुचिर्देवेषु घर्मो यो अश्विनोश्चमसो देवपान: ।
तम् उ विश्वे अमृतासो जुषाणा गन्धर्वस्य प्रत्यास्ना रिहन्ति ।।१।।
सुगा वो देवा: सदना कृणोमि य आचष्टेदं सवनं जुषाणा: ।
वहमाना भरमाणा अभ्रा अस्तं घर्मं तमुदातिष्ठतानु ।। २ ।।
शिवा न: शंतमा भव सुमृडीका सरस्वति ।
मा ते युयोम संदृश: ।। ३ ।।
उपैनं देवो अग्रभीच्चमसेन बृहस्पति: ।
यजमानाय सुन्वते इन्द्र गीर्भिर्न आ भर ।। ४ ।।
सं मा सिञ्चन्तु मरुत: सं पूषा सं बृहस्पति: ।
सं मायमग्नि: सिञ्चतु प्रजया च धनेन च दीर्घमायुष्कृणोतु मे।।५।।
इडा इवास्माङ् अनु वस्तां व्रतेन यस्या: पदे पुनते देवयन्त: ।
घृतपदी शक्वरी: सोमपृष्ठोप यज्ञमस्थित वैश्वदेवी ।। ६ ।।

द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्व: ।
समानं योनिमनु संचरन्तं द्रप्सं जुहोम्यनु सप्त होत्रा: ।। ७ ।।
यस्ते द्रप्स: स्कन्दति यस्ते अंशुर्बाहुच्युतो धिषणाया उपस्थात् ।
अध्वर्योर्वा परि वा य: पवित्रात् तं ते जुहोमि मनसा वषट्कृतम् ।।८।।
यस्ते द्रप्स: पतितो ऽवश्च य: पर: स्रुचा ।
अयं देवो बृहस्पति: सं तं सिञ्चतु राधसे ।। ९ ।।
यस्ते द्रप्स: पतित: पृथिव्यां धानासोम: परीवाप: करम्भ: ।
अयं देवो बृहस्पति: सं तं सिञ्चतु वर्चसे ।। १० ।।

२०-१४

पयस्वतीरोषधय: पयस्वन् मामकं वच: ।
अथो पयस्वतां पय आ हरामि सहस्रश: ।। १ ।।
अयमग्निर्वरेण्य आयुष्टे विश्वतो दधत् ।
पुनस्त्वा प्राणायंति परा यक्ष्मं सुवामि ते ।। २ ।।
जनाद् विश्वजनीनां विशामुरुक्षितीनाम् ।
दूरात्त्वामन्ये आभृतमीर्ष्याया नाम भेषजम् ।। ३ ।।
दूरादेतत् संभवन्ति इर्ष्याया नाम भेषजम् ।
तत् संवेगस्य भेषजं तदस्ना सं गृभायिकम् ।। ४ ।।
अग्नेरिव दहतो दावस्य दहतो यथा ।
एतामेतस्येर्षां हृद उद्वाग्निमिव वारये ।। ५ ।।
अपमार्ज्यपनयन् मन्यन्ते हृदयादधि ।
अमुष्मिन्नीर्ष्यामादध्म स्ततो एनां नि दध्मसि ।। ६ ।।
तिरश्चिराजेरसितात् पृदाकोरधि संभृतम् ।
तत् कङ्कपर्वणो विषमियं वीरुददूदुर्षत् ।। ७ ।।
इयं वीरुन् मधुजाता मधुश्चुन्मधुला मधू: ।
सा वीह्रुतस्य भेषज्यथो मशकजम्भनी ।। ८ ।।

यतो दष्टं यत: पीतं ततस्त्वा निर्नयामसि ।
अर्भस्य तृप्रदंशिनो मशकस्यारसं विषम् ।। ९ ।।
अयं यो विख्यो विकटो विपरुर्व्यङ्गमुखान्वेषां वृजिना कृणोषि।
तानि त्वं देव सवितरिषीकामिव सं नम: ।। १० ।।

२०-१५

यदन्नमद्मि बहुधा विरूपं हिरण्यमश्वमुत गामजामविम् ।
यदेव किं च प्रतिजग्रहाहमग्निष्टद्धिश्वादगदं कृणोतु ।। १ ।।
यदाशसा मे चरतो जनाङ् अनु याचमानस्य वदतो विचुक्षुभे ।
यन् मे तन्वो मनसो विरिष्टं सरस्वती तदा पृणातु घृतेन ।।२।।
यदारिम प्रतिगृह्णन्त्व एन: शिसासन्तो बलिमग्ने चरन्त: ।
त्वन्नस्तस्मादेनसो मुमुग्धि वैश्वानर: प्रति हव्या गृभाय ।। ३ ।।
चक्षुष: पाशान् मनसश्च पाशादीक्षाया: पाशादुत शक्वरीणाम् ।
तस्मान् मुमुग्धि विश्वावसो त्वं नो दातृणां दानं भुन्जामहे वयम्।।४।।
अदुर्मे विश्वे देवा ऽदात्सवितेदम् ।
अदान् मे ब्रह्मणस्पति: प्रियो मित्रो अदादिदम् ।। ५ ।।
इन्द्रेण मेदिना युजा ऽपवाधे पृतन्यत: ।
अधरे सन्तु शत्रव: ।। ६ ।।
अग्निरिन्द्रश्च यद्युवं हतो वृत्राण्यप्रति ।
उग्रा हि वृत्र हन्तुमा ।। ७ ।।
अग्निमिन्द्रं च यद् वयं पुरोधायै हवामहे ।
तौ नो मृडातीदृशे ।। ८ ।।
याभ्यां स्वरजयन्नग्रे यावातस्थतुर्भुवना जुषाण: ।
प्रचर्षणी वृषणा वज्रबाहू अग्निमिन्द्रं वृत्रहणा हुवेहम् ।। ९ ।।
ययोरोजसा स्तभिता रजांसि यौ वीर्यैर्वीरतमा शचीभि: ।
यौ पत्येते अप्रतीतौ सहोभिर्विष्णुमगन् वरुणं पूर्वहूति:।।१०।।

## २०-१६

यद्योरप्सु न महिमा नदीषु प्रिरिरिचे प्रति विरोचनायाम् ।
यद्योरस्त्यनुमतिर्भुयिष्टं विष्णुमगन् वरुणं पूर्वहूतिः ।। १ ।।
यद्योरिदं प्रदिशि यद् विरोचते प्र चानति वि च चष्टे सचीभिः ।
सह ऋतस्य धर्मणा युवाना विष्णुमगन् वरुणं पूर्वहूतिः ।। २ ।।
उभा जिग्यथुर्न परा जयेते न परा जिग्ये कतरश्चनैव वाम् ।
इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदीरयेथाम् ।। ३ ।।
यदशुद्धं यदनृतं यच्चरामि पापया ।
आपो मा तस्मादेनसो दुरितात् पान्तु विश्वत: ।। ४ ।।
दुष्वप्न्यं दुर्जीवितं रक्षो अभ्वमराय्यः ।
दुर्वाच: सर्वं दुर्भुतं तदितो नाशयामसि ।। ५ ।।
यदवामृक्षत् कृष्णाशकुनिर्मुखेन निर्ऋते तव ।
अग्निष्टत्सर्वं शुन्धतु हव्यवाट् घृतसूदनः ।। ६ ।।
यदस्मान् कृष्णाशकुनिर्निष्पतित आनशे ।
आपो मा तस्मादेनसो दुरितात् पान्तु विश्वत: ।। ७ ।।
अग्निर्मा पातु प्रथमो दुर्णाम्नो निर्ऋत्यां विश्वा दुरितानि मृज्महे ।
विश्वे मा देवा मरुत: पुनन्तु वरुणो राजा सविता पवित्रैः ।।८।।
अन्तरिक्षे पतति यातुधान निबोधित: ।
स्तोकं यमभ्यचुच्युत तम् उ स्योनं कृणोमि ते ।। ९ ।।
यद् वा कृष्णो अभ्यरुक्षद् देवेभ्यस्परि निर्हतः ।
शिवं ते तन्वे तत् कृण्मो वि ते पाशांश्चृतामसि ।। १० ।।

## २०-१७

तृष्टिके तृष्टवन्दन उदमूं छिन्धि तृष्टिके ।
यथा कृतद्विष्टेदशत्सर्वस्मै शेप्यात्रते ।। १ ।।

तृष्टासि तृष्टिकासि विषा विषातक्यसि ।
परिवृक्ता यथासस्यृषभेण वशेव ।। २ ।।
आ ते ददे वक्षणाभ्य आ ददे हृदयादधि ।
आ ते मुखस्य यद् वर्च आ पुंसो यत्र तृप्ससि ।। ३ ।।
मयि वर्चो मयि श्रवो मयि द्युम्नं मयि त्विषि: ।
अहं ते वर्च आ ददे ऽहं भूयासमुत्तम: ।। ४ ।।

*(इत्येकर्चोनामविंशतिकाण्डे तृतीयो ऽनुवाक:)*

२०-१८

अभि प्रागात् सहस्राक्षो युक्त्वा शपथो रथम् ।
शप्तारमन्विच्छन् यातु वृक इवाविमतो गृहम् ।। १ ।।
परि णो वृङ्धि शपथ हृदमग्निरिवा दहन् ।
शप्तारमत्र त्वं जहि दिव्या वृक्षमिवाशनि: ।। २ ।।
यो न: शपादशपत: शपतो यश्च न: शपात् ।
वृक्ष इव विद्युता हत आ मूलादनु शुष्यतु ।। ३ ।।
शप्तारं यन्तु शपथा य: सुहार्त्तेन न: सह ।
जिह्वा श्लोक्ष्णरस्य दुर्हार्द: पृष्टीरपि शृणीमसि ।। ४ ।।
यं द्विष्मो यश्च नो द्वेष्टयघायुर्यश्च न: शपात् ।
शुने प्रेष्ट्रमिवा वक्षाम तं प्रत्यस्यामि मृत्यवे ।। ५ ।।
प्रेतो यन्तु व्याध्य: प्राणुध्या: प्रो अशस्तय: ।
अग्नी रक्षस्विनीर्हन्तु सोमो हन्तु दुरस्यती: ।। ६ ।।
प्र पतेत: पापि लक्ष्मि नश्येत: प्रामुत: पत: ।
अयस्मयेनाङ्केन यं द्विष्मस्तस्मिन् त्वा सृजाम: ।। ७ ।।
या त्वा लक्ष्मी: पतयालुरजुष्टा अभि चस्कन्द वन्दनेव वृक्षम् ।
अन्यत्रास्मत् सवितस्तामितो धा हिरण्यहस्तो वसु नो रराण: ।।८ ।।

निररणिं सविता साविषत् पदोर्निर्हस्तयोर्वरुणो मित्रो अर्यमा ।
निरादित्या अनुमती रराणा प्र ण: सुवात् सविता सौभगाय।।९।।
एकशतं लक्ष्म्य: साकं मर्त्यस्य जनुषेह जाता: ।
तासां पापिष्ठा निरित: प्र हिण्म:
शिवा अस्मभ्यं जातवेदो नि यच्छ ।। १० ।।

२०-१९

यत् त आत्मन् तन्वां घोरमस्ति यद् वा केशेषु प्रतिचक्षणे वा।
तत् ते विद्वान् अपवाधे अहं प्र त्वा सुवात् सविता सौभगाय।।१।।
निर्लक्ष्म्यं ललाम्यं निररातिं सुवामसि ।
यथा नोऽस्य सीदतो रायस्पोषमिहा सुव ।। २ ।।
अग्निमच्छा देवयतां मनांसि चक्षुंषीव सूर्ये सं चरन्ति ।
यदीं सुवाते उषसा विरुपे श्वेतो वाजी जायते अग्रे अह्नाम् ।।३।।
इन्द्रो राजा जगतश्चर्षणीनामधि क्षमि विषुरूपं यदस्ति ।
ततो ददाति दाशुषे वसूनि चोदद्राध उपस्तुतश्चिदर्वाक्।।४।।
शकुनिर्भुत्वा प्रभवस्ति पिप्पलं पत्या निविष्टा यदि वाघ पत्न्या ।
भीमाघोरा लक्ष्म्यो: सह भव्यास्ता इतो हविषा निर्यजाम।।५।।
या ते गृहेषू तया धनेषु प्रजा लक्ष्मीर्यदि वा ते बभस्ति ।
तां बृहस्पतिर्हविषा वाधमानो निर्ह्वय प्रदध्मादधिदूरमस्मत् ।।६।।
रिश्यपदिं वृषदतीं गोषेधां विधमामुत ।
विलीढ्यं व्याधिं ब्रह्मणा तां अनीनशम् ।। ७ ।।
प्रत्योषन्तीमुत्सङ्गिनीमुतचित्रानुतारिणीम् ।
सिंहीं ज्येष्ठलक्ष्मीं व्याघ्रीं नाशयामसि ।। ८ ।।
अनुध्यायिनीं परिचरां विबद्धामुत हिंसतीम् ।
रोदस्य पत्नीं रोदनां प्रपदसामलक्ष्म्य: ।। ९ ।।

वामस्पृहां पितृषदं एषन्तीं तपनीमुत ।
असिद्धन्ती प्रध्वंसिनी मष्ट्रावधां च लक्ष्म्यं
ब्रह्मणा तामनीनशम् ।। १० ।।

२०-२०

असन्मन्त्र्यां वचस्यां संपिबन्तीं शक्वरीम् ।
उत् तदा जनङ्गमां प्रताधमामि लक्ष्म्य: ।। १ ।।
या ते घोरा तन्वामाविवेश याते लक्ष्मी: सर्वा: समक्ता: ।
अग्निष्टे तास्वदत्त सौभगायाप: शुन्धन्तु बृहतेरणाय ।। २ ।।
अदेवरघ्नीं वरुणापतिघ्नीं बृहस्पते ।
इन्द्रापुत्रघ्नीं लक्ष्मीमस्यै ता: सवित: सुव ।। ३ ।।
या ते लक्ष्मीश्चाक्षुषी यो तदस्तु या हस्तयो: स्तनयोर्योपपक्षयो: ।
श्रोण्योर्भससि या पदोष्ठे सर्वास्ता अति क्रामन् घोरा: ।।४।।
उरुभ्यां ते अष्ठीवद्भ्यां प्राष्णीभ्यां प्रपदाभ्याम् ।
लक्ष्मी: श्रोणीभ्यामङ्गेभ्यो या: पापीस्ता अनीनशम् ।। ५ ।।
अपाश्लीलं पृथिवी हन्तु यत् पदोरूप यो
हस्तायोर्वरुणोमित्रो अर्यमा ।
अपादित्या अनुमती रराणा प्र ण: सुवात् सविता सौभगाय।।६।।
एता एना व्याकर खिले गा अदितीरिव ।
रमन्तां भद्रा लक्ष्म्यो या: पापीस्ता अनीनशम् ।। ७ ।।
सायुषी नाम वा असि सहमाना सहस्वती ।
गृहकपोतिमनुबर्तिनीं कुलायिनीं ता इहा वेशयामासि ।। ८ ।।
संचारिण्युभैर्या बभूवान्या अन्यां जिन्वति भद्रपापी: ।
तां लक्ष्मीं निहवान यो मे भद्रां सुभद्रामपि सौभगाय ।। ९ ।।
एकशतं लक्ष्म्यास्तासां राज्ञी बभूविथ ।
भद्राभिर्भद्रे संभूय भद्रेणाभि सजस्व न: ।। १० ।।

२०-२१

दिवस्पृथिव्या: पयर्न्तरिक्षाद् वातात् पशुभ्यो अध्योषधीभ्य:।
यतो लक्ष्मी वृजिना: संबभूव सा ब्रह्मणा प्रच्युता दूरमेतु ॥१॥
वालदुच्छस्य च गन्धेन हिरण्यवर्चसेन च ।
आ तु पुष्करिण्या यो गन्धो भगो मा तेन जिन्वतु ॥ २ ॥
यदिन्द्रो अग्रे असुरान् जघान यतो लक्ष्मीर्न्यदधुर्मर्त्येषु ।
तासां पापिष्ठा निरित: सुवाम: शिवा अस्यै जातवेदो नि यच्छ॥ ३॥
या त्वा लक्ष्मीर्देवरघ्नी या पतिघ्नी गृहेभ्यस्त्वा नुदते या व्याडा: ।
अतस्त्वमेन सो मुच्यमानोत्तरेभा: स्रोत्या: सप्तसाकम् ॥ ४ ॥
निपिशन्तीं नितुदन्तीं संपिबन्तीं न्यक्वरी ।
प्रभङ्गा भ्रूणघ्नीं लक्ष्मीं ब्रह्मणा ता अनीनशम् ॥ ५ ॥
उदोजिष्ठां सहस्रां जयन्तीमपराजिताम् ।
लक्ष्मीर्या: पुण्या: कल्याणीस्ता अस्यै सवित: सुव ॥ ६ ॥
अलक्ष्मी: समलिप्सत समलिप्सत लक्ष्म्य: ।
अजैषुर्भद्रा लक्ष्मी: परापापीरजेषत ॥ ७ ॥
लक्ष्मीणां लक्ष्मीतमे लक्ष्मीणामधिपा असि ।
तं त्वाहं शुद्धो गोप्स्यामि देवजा हि बभूविथ ॥ ८ ॥
सभा च मा समितिश्चावतां प्रजापतेर्दुहितरौ सचेतसौ ।
येन संगच्छादुप मा स तिष्ठादन्तर्वदामि हृदये जनानाम् ॥ ९ ॥
सभा सेना समितिश्चावतां प्रजापतेर्दुहितर: सचेतस: ।
येन वदाम्युप मा स शिक्षादन्तर्वदामि हृदये जनानाम् ॥ १० ॥

२०-२२

मां वदन्तु मानु सर्वे वदन्तु मां प्राणन्तु मानु प्राणन्तु सर्वे
मां विशन्तु मानु सर्वे विशन्तु मयि देवा एकव्रता भवन्तु ॥१॥

सूर्यो मा चक्षुष: पातु बृहस्पतिर्वाच: सोमो राजा सभाया: ।
इन्द्रो वो दृशे भवामि ।। २ ।।
वेद वै ते सभे नाम सुभद्रासि सरस्वति ।
अथो ये ते सभासदस्ते मे सन्तु सुवाचस: ।। ३ ।।
इमा या ब्रह्मणस्पते विषूचीर्वात इरते ।
सध्रीचीरिन्द्र ता: कृत्वा मह्यं शिवतमा: कृधि ।। ४ ।।
अहमेषां हस्तिरसमहं विज्ञान मा ददे ।
सर्वस्या: अस्या: संमदो ऽहं भूयासमुत्तम:
इन्द्रो योगायथामिव ।। ५ ।।
उत्तममवोत्तमेकृध्युत्तमा हि बभूविथ ।
यां त्वा भुरण्युरुन्वैच्छन् गन्धर्व शरद: शतम् ।। ६ ।।
अभिभूरहमागममहं भूयासमुत्तम: ।
इदं प्रतिप्रवादिनं द्विषन्तमवधून्वे ।। ७ ।।
उरुष्टे वस्तिर्भवतु समुद्रस्य बिलं यथा ।
पुरोदकमिव सिच्य तं मूत्रन्ते तन्वस्परि ।। ८ ।।
यथा वातो यथोदकं यथा समुद्र एजति ।
एवा ते गर्भ एजतु निरैतु दशमास्यो बहिर्जरायुणा सह।।९।।
इदमुच्छ्रेयो ऽवसानमागां शिवे मे द्यावापृथिवी अभूताम् ।
असपत्ना: प्रदिशो मे भवन्तु न वै त्वा
द्विष्मो अभयं नो अस्तु।।१०।।

२०-२३

वास्तोष्पत इह न: शर्म यच्छ भद्राच्छ्रेयो अभि नो नेषस्व ।
अरिष्टा वीरा इह मे भवन्तु द्विपाच्चतुष्पात् [illegible] [illegible] ।।१।।
अनमीवो वास्तष्पते विश्वारूपाण्याविशन् ।
सखा सुशेव एधि न: ।। २ ।।

ऋतेन स्थूणा अधि रोह वंशोग्रो विराजोन्नप वृड्क्ष्व शत्रून् ।
मा ते रिषन्नुपसत्तारो अत्र विराजां जीवात् शरद: शतानि।।३।।
आरोहतं पक्षावमृतं वसानौ दंपत्यो: कृणुतं दीर्घमायु: ।
तत्र नारी पुत्रिणी जीवपत्नीदं कुलायमुप संविशाति ।। ४ ।।
अग्निर्मा विश्वाद् दुरितात् पुनातु मातरिश्वा पवमान: पुरस्तात् ।
सोमो मा पातु मरुतो बृहस्पतिर्वायुश्च मा पवमान: पुनीतां।।५।।
त्वया सत्यं वि जयन्ते तव सत्यं वि वाचनम् ।
अग्रे वृक्षस्य जायस इमं जनय पौरुषम् ।। ६ ।।
वृक्षस्य शतशाखस्य मा धुन्तस्य निकृन्त न: ।
विभीतकस्य यत् फलं तेन त्वोन्मादयामसि ।। ७ ।।
पूर्वे वातात् प्र पततं पूर्वे पततमश्विभ्याम् ।
ईमेन्ववर्णी अहमुह्वे वाग्निमवीवरे ।। ८ ।।
मा यक्ष्ममिह हाशिष्ट मारिष्वन्तोविगातु न: ।
सुभूतमस्मभ्यं धत्त युष्मानन्वेतु किल्विषम् ।। ९ ।।
इह वर्च इह पय इह चक्षुरुप ह्वये ।
इहेन्द्रियं दधातन ।। १० ।।

२०-२४

आ हि हरि अवप्ततामिमं वत्सवनादियम् ।
अपकामं ह्यघ्न्ये वत्सो देवीममारते ।। १ ।।
ये त्वोप विदुर्विदुन् निजवत् शेप दोहस्व ।
अहं ते वेद: सं मन: संवननस्य वेदते ।। २ ।।
एष ते अघ्न्ये वत्सस्तं वाञ्छ: ।
तं सत्योक्तिं ब्रूम: ।। ३ ।।

या सरस्वती गोबननी सा वामेनां कसान्येत्य ।
इमां गां वानयतु स्वाहा ।। ४ ।।

(इत्येकर्चनाम विंशतिकाण्डे चतुर्थो ऽनुवाक: )

२०-२५

दूराद् भेषजमाभृतम् बह्वन्यतियोजना: ।
अपश्यमस्यन्तं रुद्रं अदृष्टं दुष्कृतं करत् ।। १ ।।
भिनद्मि ते परावतो वत्सस्य शेप्यामिव ।
वृषेदसो यथा मयि कृष्णो विषाणवाङ् इव ।। २ ।।
सर्वा गाव: संमनस: सत्सभय: सनाभय: ।
समानं बिभ्रतीर्नावं वत्सान् उज्जिहतामिथ: । ३ ।।
इन्द्रस्त्वाग्रे अवानयत् सविता त्वोतो ऽपर: ।
तृतीयमश्विना त्वाघ्न्ये वांञ्छ: ।। ४ ।।
आ ते नयतु सविता सविता नयतु बृहस्पति: ।
पतिर्य: पतिकाम्यस्तमस्मै धेह्योषधे ।। ५ ।।
इन्द्रं वयमनुराधं हवामहे अनु राध्यास्म द्विपदा चतुष्पदा ।
मा न: सेना अररुषीरुप गुर्विषूचीरिन्द्र द्रुहो वि नाशय ।। ६ ।।
भग प्रेहि प्रथमोनु त्वा वयमेमसि ।
इन्द्राग्नी ब्रह्मणास्मान् स्वस्ति नयतां पथा ।। ७ ।।
अदिति: प्रैतु प्रथमा बृहस्पति: पुरयेता ते अस्तु ।
इन्द्रोभयान् व्यस्यतु शूद्रांश्च न आर्यांश्च ।। ८ ।।
इमे ये अनसि युक्ता उष्टारा उत पील्वा: ।
तेषां समग्रभं पद: समीर्मान् समुसक्थ्य: ।। ९ ।।
विमध्यमा अप्रोषत गर्दभा क्षिपिता इव ।
अथासुरस्य मायया न इदं स्थापयामसि ।। १० ।।

## २०-२६

सं मा भगेन द्विगुणेन वर्चसा सं मा पृथिव्या सं मौषधीभि: ।
सं मा पयो मयोभुवो भगेन वर्चसा सिचन् ।। १ ।।
वर्चो मे मित्रावरुणा वर्चो देवी सरस्वती ।
वर्चो मे अश्विनोभा धत्तां पुष्कर स्रजा ।। २ ।।
ऋचं साम यजामहे याभ्यां कर्माणि कृण्वते ।
वि ते सदसि राजतो यज्ञं देवेषु यच्छताम् ।। ३ ।।
अङ्गमङ्गं सं तनोमि चक्षु: प्राणमथोबलम् ।
प्रिया: श्रुतस्य भूयास्मायुष्मन्त: सुमेधस: ।। ४ ।।
एतन् नो देव सवितर्जगर्दात्री च रक्षितम् ।
पूषैनत् पुनराजत्त्वविलिष्ट मविहृतम् ।। ५ ।।
यावन्त्येव पलितानि साकं यज्ञिरे अग्रश: ।
तेभ्य: परि ब्रवीमि त्वा कृष्णा: केशा भवन्तु मे ।। ६ ।।
कृष्णान् केशान् सिनीवाली कृष्णान् केशान् सरस्वती ।
कृष्णान् मे अश्विना केशान् कृणुतं पुष्करस्रजा ।। ७ ।।
अदो यदग्ने देवानां पुरस्तादवतिष्ठति ।
तन् मे अब्रवीत् त्वष्टा विलिष्टभेषजम् ।। ८ ।।
विश्वधाया असि विश्वभेषज्याकृता ।
यदामयति निष्कृधि निष्कृतिर्नामवा असि ।। ९ ।।
सं ते चृतामि तगरीं सं योनिं सं गवीन्यौ ।
सं मातरं च पुत्रं च सं गर्भं च जरायुजम् ।। १० ।।

## २०-२७

तिर्यङ् ते गर्भो भवतु हृदयेष्टं जरायु ते ।
आ दोषमग्निमारोहाद् गच्छेयमसादनम् ।। १ ।।

वि ते चृतामि तगरीं वि योनिं वि गवीन्यौ ।
वि मातरं च पुत्रं च वि गर्भं च जरायुजम् ।। २ ।।
अन्नं ते गर्भो भवत्वनुसोत जरायुजे ।
यथा त्वं पुत्रं विन्दस्व यथा जीवासि भद्रया ।। ३ ।।
प्रवृष्ठे गर्भ मन्दो यो वियोनि आस्यं सृज ।
निरैतु दशमास्यो गर्भो गविन्योरधि ।। ४ ।।
विष्कम्भेण वि ष्कम्भाय तौ विश्वञ्चौ व्या कुरु ।
एषवामग्निरन्तरा स विश्वञ्चौ व्यस्यतु ।। ५ ।।
विस्कम्भो विष्कभायतु मनश्च हृदयं च वाम् ।
वि वर्तय नि वर्तय शश्वतीभ्य: समाभ्य: ।। ६ ।।
समुद्रं त्वा प्र हिणोमि स्वां योनिमपीहि ।
अछिद्रस्तन्वा भूयासं मा परा सेचि मे पय: ।। ७ ।।
यदत्रापि रसस्य मे परा पपातास्मृतम् ।
तदिहोप ह्वयामहे तन् म आ प्यायतां पुन: ।। ८ ।।
कविरग्ने प्र विलेषु धर्ता केशाङ् अधारयत् ।
इहैव विश्वतोदधत् धाता त्वष्टा त्वचि केशान् अचोक्लृपत् ।।९।।
सरस्वति व्रतेषु ते दिव्येषु देवि धामसु ।
मन्त्रे हिरण्यवर्तने प्र ण आयुंषि तारिषन् ।। १० ।।

२०-२८

यदप्सुते सरस्वति गोष्वश्वेषु यन् मधु ।
तेन नो वाजिनीवति मुखमङ्धि सरस्वति वर्चसा।। १ ।।
यो अद्य देव सूर्य त्वां च मां चान्तरायति ।
तस्मिन् दुष्वप्न्यं सर्वं दुरितानि च मृज्महे ।। २ ।।
यो नोभिच्छायमत्येष्यग्निं तिष्ठत्यन्तरा ।
तस्य वृश्चामि ते मूलं न छायां करवोपरम् ।। ३ ।।

घ्नन्त्वेनं देवेषवो ब्रह्मणो घ्नन्तु मेन्या: ।
यो ऽस्माकं प्रजापते अग्निं तिष्ठत्यन्तरा ।। ४ ।।
प्रजापते यो ऽस्माङ् आ वृश्चाग्निं तिष्ठत्यन्तरा ।
तं मृत्यवे प्रयच्छामि स रुद्रस्यास्त्वा गण: ।। ५ ।।
प्र सुवैनान् देव वज्रेभ्यो मृत्युविक्रमतामधि ।
सिनात्वेनान् निर्ऋतिर्मृत्यो: पाशैर्बन्धैरविमोक्यै: ।। ६ ।।
सुमङ्गलेन वचसा केशिन् ग्रामान् न आ वद ।
ब्रह्मणा ब्रह्मणात्वोलूकाच्छा वदामसि ।। ७ ।।
पराङ् एव परावतं पराचीमनु संवतम् ।
यथा यमस्य त्वा गृहेरसं प्रतिचाकशान्
निरस्तं प्रतिचाकशान् ।। ८ ।।
शूनमुलूक नो वद यं द्विष्मस्तमितो नय ।
राज्ञो यमस्य ते गृहे सिकता उर्वि देव्यमाखुस्ते मूषिकेभाग:।।९।।
आ वद बहुलं गोष्ठं धीतवत्समनुष्टुगम् ।
ध्वाङ्क्षाय द्विपदां वद शुने चतुष्पदां वद ।। १० ।।

२०-२९

पुनर्मे राजा वरुण: पुनरिन्द्र: पुनर्भग: ।
पुनर्मे विश्वे देवा आयुर्जीवातव आदु: ।। १ ।।
उत्तिष्ठात: प्र द्रवार्वाङ् मात्र तिष्ठो ऽभिचाकशत् ।
सपत्न्या वर्च आदायाथास्माभि: सहामसि ।। २ ।।
उत्तिष्ठत निर्द्रवत न व इहास्तु न्यञ्चनम् ।
अमुष्य वित्तमभि व: सुवामि तदनुवपध्वं सुदतीरहिनस्तत् ।।३।।
यो ऽस्माकं सबन्धवो विष्ठिता: पृथिवीमनु ।
तेषामिन्द्र इव देवानामहं भूयासमुत्तम: ।। ४ ।।

ये अग्नय: पार्थिवा आहिता: पृथिवी मनु ।
तेषामसि त्वं सङ्गथे स नो जीवातवे कृधि ।। ५ ।।
चित: स्थ परिचित: स्थाग्नय: स्थ निहवा नाम ।
तेनो मा निहवान् वध्यान् तेभ्यो वो नमो नवोहं वमेमि ।
यो ऽस्मां द्वेष्टि यं वयं द्विष्म: सो ऽव वो हवमेतु ।।६।।
इन्द्राग्नि पुनराकूतिं नयत्त स्थिरवीरावपरावीत गू ।
अस्माकं सर्वा निहवे सन्त्वेषां वयं विद्याम गुह्यं नाम गवाम्।।७।।
प्रजापतेरनु नि क्रन्दय विश्वे देवा: पदवाया: संत्वासाम् ।
आदित्या अनु संगत्य शूरा इन्द्रज्येष्ठा: पुनरावर्तयन्तु ।। ८ ।।
इन्द्र प्रणेतर्वर्धय मामश्ववान् वहतु मां स्वश्व: ।
ऐन्द्राग्नं वर्म प्रतिमुञ्चमानो यथोभयेभ्यश्चारु समिति मा वदानि।।९।।
चारुवाक् चारुवदनश्चारु संकाशी नो नृभि: ।
य द्वेष्य: प्रतीकाशो जिगीवाङ् अपराजित: ।। १० ।।

२०-३०

अपि वृश्च पुराणवद् व्रततेरिव गुष्पितम् ।
ओजो दासस्य दम्भय ।। १ ।।
यथेतदस्य संभृतं मधु तदिन्द्रस्य वि भजावहै ।
म्लापयामि भ्रज: शिभ्रं वरुणस्य व्रतेन ते ।। २ ।।
यथा शेपो अपायस स्त्रीषु चासदनावया: ।
अवस्थस्य क्नदीवतो भंगुरस्य नितोदिन: ।
यदुत्ततमवतत्तनु यदाततं नि तत्तनु ।। ३ ।।
अमी म्लापयन्ते तन्वं क्लीबं त्वा वीरुधाकरम् ।
अन्त: कोश इव कोशेषु स्त्रीष्वप्याकृतश्चन: ।। ४ ।।
आ नो मेदं गृहपतिर्दधात्विन्द्रेण मेदिना ।
आ नो मेदं सरस्वत्या नो वहन्ति सिन्धव: ।। ५ ।।

मेदं धाता मेदं पूषा मेदमिन्द्रो दधातु मे ।
मेदं मे अश्विनोभा धत्तां पुष्करस्रजा ।। ६ ।।
ऊरू मेदं य मे बाहू अष्ठीवन्ता उरश्च मे ।
अपां पर्यस्य उदरे मेदमिन्द्रो दधातु मे ।। ७ ।।
चर्मणीवोपनीतस्य सर्वान् केशान् वृहासि ते ।
अयस्पात्रमिव ते शिरो यथासत्समरं सः ।। ८ ।।

*(इत्येकर्चनामविंशतिकाण्डे पञ्चमो ऽनुवाक:)*

## २०-३१

दिवस्तार उदसिश्रसन् सप्त सूर्यस्य रश्मय: ।
धारा: समुद्रिया आप: स्तास्ते शल्यमुच्चिच्युवु: ।। १ ।।
ईडे अग्निं स्वावसुं नमोभिरिह प्रसक्तो वि चयत् कृतं न: ।
रथैरिव प्र भरे वाजयद्भि: प्रदक्षिणं मरुतां स्तोममृध्याम् ।।२।।
सप्त स्रवन्ति शिशवे मरुत्वते पिता पुत्रेभ्यो अप्यवीवृतन्नृतानि।
उभे पिपृत उभे अस्य राजत उभे यतेते उभे अस्य पुष्यत:।।३।।
वेद स्वस्तिर्द्रुघण: स्वस्ति परशुर्वेदि: परशुर्न: स्वस्ति: ।
हविष्कृतो यज्ञिया यज्ञकामास्ते देवासो हविरिदं जुषध्वम्।।४।।
उप प्रियं पनिप्नतं युवानमाहुतीवृधम् ।
अगन्म बिभ्रतो नम: ।। ५ ।।
इमा यास्ते शतं हिरा: सहस्रं धमनीरुत ।
तासां ते सर्वासां साकमश्मना बिलमप्यधाम् ।। ६ ।।
इदं खनामि भेषजं मां पश्यमभिरोरुदम् ।
येना निचक्र आसुरीन्द्राणी केवलं पतिम् ।। ७ ।।
अक्षौ मे मधुसंकाशे अनीकर्णौ समञ्जनम् ।
अन्त: कृणुष्व मां हृदि मन इन्नौ सहासती ।। ८ ।।

त्वाष्ट्रेणाहं वचसेर्ष्यां व्यमीमदम् ।
अथो यो मन्युस्ते पते तमु ते शमयामसि ।। ९ ।।
व्रतेन त्वं व्रतपते समक्तो हा विश्वा सुमना दीदिहीह ।
तं त्वा वयं जातवेद: समिद्धं प्रजावन्त उप सदेम सर्वे ।।१०।।

२०-३२

प्रजावती: सुयवसे रिशन्तीर्मा वो विद्युतरन् मोतसेना ।
सुगेतीर्थे सुप्रपाणे पिवन्ती: परिवृह्य वधं गोहनं चरन्तीम् ।। १ ।।
पदज्ञा स्थ रमतय: संहिता विश्वरूपा । उप नो देवीर्देवेभिरेत ।
इमं गोष्ठमिदं सदो घृतेना न: समुक्षत ।। २ ।।
या ग्रैव्या अपचितो अथो या उपपक्ष्या: ।
विजान्मि या अपचित: स्वयं स्त्रसस्ता इतो नाशयामसि ।।३।।
सान्तपना इदं हविर्मरुतस्तज्जुजुष्टन ।
युष्माकोती रिशादस: ।। ४ ।।
यो नो मर्तो मरुतो दुर्हृणायुस्तिरश्चित्तानि वसवो जिघांसति ।
तस्मिन्तान् पाशान् प्रति मुञ्चतां यूयं तपिष्ठेन तपसा हन्तना तम् ।। ५ ।।
संवत्सरीणा मरुत: स्वर्का उरुक्षया: सगणा मानुषेभ्य: ।
ते अस्मत् पाशान् प्रतिमुञ्चन्तु सर्वान् सांतपना मत्सरा मादयिष्णव:।।६।।
धृषत् पिब कलशे सोममिन्द्र वृत्रहा शूर समरे वसूनाम् ।
माध्यन्दिने सवन आ वृषस्व रयिष्ठानो रयिमस्मासु धेहि ।।७।।
युनज्मि त्वा ब्रह्मणा दैव्येना ऽस्मै क्षत्राणि धारयन्तमग्ने ।
दिदिढ्यस्मभ्यं द्रविणेह भद्रं प्रेमं वोचो हविर्दां देवतासु ।।८।।
वित्ते मृञ्चामि रशनां वि योक्त्रं वि नियोजनम् ।
इहैव त्वमजस्र एध्यग्ने ।। ९ ।।

प्रजापते नहि त्वदन्यो विश्वा रूपाणि महिना यजान ।
यत्कामास्ते जुहुमोस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ।।१०।।

२०-३३

यत् ते देवा अकृण्वन् भागधेयममावास्ये संवसन्तो महित्वा ।
सेमं यज्ञं पिपृहि विश्ववारे रयिं नो धेहि सुभगे सुवीरम् ।।१।।
घृतं ते अग्ने दिव्ये सधस्थे घृतेन त्वा मनुरद्या समिन्धे ।
घृतं ते देवा आप्त्या वहन्तु घृतं तुभ्यं दुह्रते गावो अग्ने ।। २ ।।
मय्यग्रे अग्निं गृह्णामि सह क्षत्रेण वर्चसा बलेन ।
मयि प्रजां मय्यायुर्दधामि स्वाहा मय्यग्निम् ।। ३ ।।
अप्सु ते राजन् वरुणो गृहो मिथो हिरण्ययः ।
ततो धृतव्रतो राजा सर्वा धामानि नो मुञ्च ।। ४ ।।
धाम्नोधाम्नो राजन्नितो वरुण नो मुञ्च ।
यदापो अघ्न्या इति वरुणेति यदूचिम ।
ततो वरुण नो मुञ्च ।। ५ ।।
यो रुद्रो अग्नौ यो ऽप्स्वन्तर्य ओषधीर्वीरुध आविवेश ।
य इमा विश्वा भुवनानि चाक्लृपे तस्मै रुद्राय नमो अस्त्वद्य ।।६।।
अपेह्यरिरस्यरिर्वा असि ।
विषे विषमपृक्था अहिमेवाभ्यपेहि तं जहि ।। ७ ।।
पृतनाजितं सहमानमग्निमुग्रं हुवेम परमात् सधस्थात् ।
स नः पर्षदति दुर्गाणि विश्वा क्षामद् देवो ऽतिदुरितान्यग्निः ।।८।।
यद्यन्तरिक्षे यदि वात आस यदि वृक्षेषु यदि वोलपेषु ।
यदश्रवन् पशवं उद्यमानं तद् ब्राह्मणं पुनरस्मानुपैति ।। ९ ।।

## २०-३४

शं मा वातो अभिवातु शं मे तपतु सूर्य: ।
अहानि शं भवन्तु मे शं रात्री प्रति धीयतां
शमुषा मे व्युच्छतु ।। १ ।।
उत्तिष्ठत पितरो ये पुरा स्थ यमं राजानमवशानमर्चत: ।
अयं नृणानृते य: श्रेष्ठ आगन्तस्मै लोकं कृणुता यावत्सबन्धु।।२।।
यस्येदं शस्यं प्रतिमाकृतं देवैर्दत्तमसूर्य च संभृतम् ।
त्रि: सप्त कृत्व ऋषय: परेता मृत्युं प्रत्यौहन् पदयोपनेन।।३।।
अगमन् गाव: सदनमपप्तद् वसतिं वय: ।
आस्थाने पर्वता अस्थु: स्थाम्नि वृक्कावरीरमम् ।। ४ ।।
आगावो गोष्ठमगमन्नाग्निधानान्यग्नय: ।
आ वृक्कौ समभित्सातामुत्सक्तभेषजमसि ।। ५ ।।
यथा द्यां च पृथिवीं चान्तस्तिष्ठति तेजनम् ।
एवा रोगं चास्रावं च मुञ्जस्तिष्ठत्यन्तरा ।। ६ ।।
अस्थादिदं विश्वं भुवनमस्थाद् वातो वनच्यव: ।
अस्थुर्वृक्षा उर्ध्वस्वप्नास्तिष्ठाद् रोगो अयं तव ।। ७ ।।
शतं यद् भेषजानि ते सहस्रं संभृतानि च ।
तेषामसि त्वमुत्तमं अनाश्रावमरोगणम् ।
श्रेष्ठमास्राव भेषज वसिष्ठं रोग नाशनम् ।। ८ ।।
यदद्य त्वा प्रयति यज्ञे अस्मिन् होतश्चिकित्वन्नवृणी महीह ।
ध्रुवमयो ध्रुवमुता शमिष्ठ प्रजानन् विद्वान् उप याहि सोमम्।।९।।
समिन्द्र नो मनसा नेष गोभि: सं सूरिभिर्हरिवन् सं स्वस्त्या ।
सं ब्रह्मणा देवकृतं यदस्ति सं देवानां सुमत्या यज्ञियानाम् ।।१०।।

## २०-३५

सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सं शिवेन ।
त्वष्टा सुदत्रो वरिव: कृणोत्वनु नो मार्ष्टु तन्वो विरिष्टम् ।।१।।
संस्रावभागास्तविषा बृहन्त: प्रस्तरेष्ठा बर्हिषादश्च देवा: ।
इमं यज्ञमभिविश्वे गृणन्तु स्वाहा देवा अमृता मादयन्ताम् ।।२।।
यानावह उशतो देव देवांस्तान् प्रेरय पुनरग्ने स्वे सधस्थे ।
जक्षिवांस: पपिवांसो मधून्यस्मै धत्त वसवो वसूनि ।। ३ ।।
अयन्नो यज्ञो अप्येतु देवानुतरां वेदिमप्येतु वेदि: ।
विमुञ्चाम्यृत्त्विजो दक्षिणाभिर्देवा यज्ञैश्च पुनरुत्तरावत् ।। ४ ।।
यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ । स्वां योनिं गच्छ स्वाहा ।।५।।
एष ते यज्ञ यजमान: सहसूक्तो नमोवाक: । सुवीर: स्वाहा ।। ६ ।।
मनसस्पत इमं देव यज्ञम् ।
स्वाहा वाचि: स्वाहा वाते धा स्वाहा ।। ७ ।।
स्वाहाहुतेभ्यो वषट् हुतेभ्य: ।
देवा गातुविदो गातुं वित्त्वा गातुमित: स्वाहा ।। ८ ।।
सं बर्हिरक्तं हविषा घृतेन समिन्द्रेण वसुभि: सं मरुद्भि: ।
सं देवेभिर्विश्ववेदेभिरक्तमिन्द्रं गच्छतु यत् स्वाहा ।। ९ ।।
आशासाना सौमनसं प्रजां चक्षुरथो बलम् ।
इन्द्राण्या अनुव्रता सं नह्ये अमृताय कम् ।। १० ।।

## २०-३६

इन्द्राणी नारी सुभगा सुपत्न्युदंशेन पतिविद्ये बिभेद ।
त्रिंशद्यस्या जघनं योजनान्युपस्थ इन्द्रं स्थवीरं पिपर्तु ।। १ ।।
सेनासि पृथिवी धनंजया अदितिर्विश्वरूपा सूर्यत्वक् ।
इन्द्राणी प्राषाट् संजयन्ती तस्यै त एना हविषा विधेम ।।२।।

अजिरोत्तिष्ठत्युत्थिताग्रे त्वरी प्राषाट् तूर्त्तमुप चरन्तीम् ।
प्राषाट् कस्त्वियिषोग्रे त्वरिकत्स्वयिष मे स त्वा भद्रे ।। ३ ।।
पर्यावर्ते दुष्वप्न्यात् पापात् स्वप्नादभूत्या: ।
ब्रह्माहमन्तरं कृण्वे परा स्वप्नमुखा: शुच: ।। ४ ।।
यत् स्वप्ने अन्नमश्नामि न प्रातरधिगम्यते ।
सर्वं तदस्तु न: शिवं नहि तद् दृश्यते दिवा ।। ५ ।।

*(इत्येकर्चनामविंशतिकाण्डे षष्ठो ऽनुवाक:)*

२०-३७

विश्वं विव्यञ्जि पृथिवीव पुष्टमायदायत् प्रतिगृह्णाम्यन्नम् ।
वैश्वानरस्य महतो महिम्ना स्योनमस्मभ्यं मधुमत् कृणोतु ।।१।।
त्रिशृङ्गमसि दुरभिधर्षमिन्द्राय ध्रियसे ।
पूषा ते प्राषिता ।। २ ।।
पाहि नो अग्ने तन्वं पाहि गा: पाहि यत् तनू कृतम् ।
अहुतादावमर्त्यौ तावस्मिन् पातु अंहस: ।। ३ ।।
यौ देवानामहुतादावमर्त्यौ स्वर्भानुश्च स्वर्ज्योतिश्च ।
तयोस्त्वास्येन प्राश्नाम्यग्नेष्ट्वा वैश्वानरस्य त्वास्येन प्राश्नामि।।४।।
दक्षश्च त्वा मानस: प्राश्नीतां स्वर्भानुश्च मारुत: ।
सा पृणन् पूर्त्वा वि राधिमो वयं प्रजया धनेन ।। ५ ।।
अनाधृष्यस्य ते पितोरनाधृष्य: शवस: ।
सर्ववीरा: सर्वात्मानो भक्षं क्रियास्म ।। ६ ।।
कामो मे राज्ञ: प्र विवेश त्वां तमहं निरुह्यये पुन: ।
गृहेषु गोषु मे मनो अक्षोरस्तु मे भगो जिह्वायामस्तु
मे रसो वाह्वोरस्तु मे बलमूर्वोरस्तु मे जव: ।। ७ ।।

दिवो ऽसि निर्मथितं पृथिव्या अध्युद्भृतम् ।
समुद्रादुच्यसे जातमक्ष्यामय भेषजमस्याथर्वणम् ।। ८ ।।
पूषा पुरस्तादावर्तय चतस्रो भूम्यादिशः ।
सगलिग पूषलिग पुनर्न नष्टमायति जीवेन भुनजामहै ।।९।।
यदाभरच्छ्रजदग्निः तेजने नष्टवेदनम् ।
खर्गलेव पुनर्दहं पुनरस्माश्विना नष्टमाजतम् ।। १० ।।

२०-३८

यद्यस्यप्रियजा यदि वान्यत आभृतः ।
विसल्पकस्य भेषजीर्देवीराप इमामवन् ।। १ ।।
वयस्य पूतिकस्य दृशाम्वस्योत शर्मुतः ।
तेषां समग्रभं शुष्ममाशूनान् धावतामिव ।। २ ।।
यस्तनुः पृथुर्वीणा वधू इव प्र सर्पति ।
मयूरः किल ते विषं कृक वा कृश्न जक्षतु ।। ३ ।।
उदीचीनः प्र तनोति नितत्नीर्भुम्यामधिम् ।
ओज्मानं पश्य वीरुधो मिथुना समवीवनत् ।। ४ ।।
नि त्वा तनन्नितत्निना परि त्वा गां सहीयसा ।
सेनादभिद्रवीयसी सुपर्णान्नि गरीयसी ।। ५ ।।
यदत्रापि मधोरहं निरिष्टं विषमश्नुतम् ।
अग्निश्च तत् सविता च पुनर्मे जठरे धत्ताम् ।। ६ ।।
अग्ने रुद्रस्य जायासि दुहितासि प्रजापतेः ।
उच्चैः श्लोको दानपत्नी हवीश्रव उप त्वा ह्वयस्व
उप त्वा मा हयस्व ।। ७ ।।
नरिष्टा नाम वा असि ।
या सौ हरिणो वृकः उलादधि प्र स्कन्दति ।
एवा नि स्कन्दति पित्र्यात् भगं जयन्ती धनं जयन्ती ।। ८ ।।

रिज्यश्चा मह्यमब्रवीत् गन्धर्वस्यानुशासनम् ।
एतत्ते पतिवेदनम् ।। ९ ।।
पाटा भिनत्ति कुम्भीं पाटा कुम्भी गो दहनीम् ।
पाटा सर्वस्य पात्रस्य वधूं कृणोतु विश्वत: ।। १० ।।

२०-३९

अपेहि तक्मन्चर परो अन्यमस्मदिच्छ पुरुषं किं च दैवम् ।
वेद ते तक्मन् पितरं वेद मातरम् ।। १ ।।
शमीवान् यशसामेति शमीवानभिशोक: ।
अभिशोकोहार्षणी हर्षणो जंजभि: ।। २ ।।
य: पशूनां मार्जनीयो यं त्वमंशेन भेजिषे ।
अभि हि तक्मन् न गर्दभं न मामभ्येतुमर्हति ।। ३ ।।
विस्निस नाम ते माता किकसा नाम ते पिता ।
शमिदा नाम ते स्वसा ।
गिरिं गच्छ गिरिजा असि गिरौ ते माहिषो गृह: ।। ४ ।।
दासी चक्रमा स्थापनास्ना ते निष्क्रन्दयिष्यति ।
आ वातो वात्वनघ: सर्वस्य दूतो अभिशस्ति या: ।। ५ ।।
जलासमित् प्र सिञ्चतु तद्विषस्यापसिञ्चतु ।
यामस्यति पृश्निबाहुरिष्टं हरिद्रुपर्ण्यम् ।। ६ ।।
तामस्य निष्खिदामसि यथा जीवासि भद्रया ।
अश्रान्तस्य त्वा मनसा युनज्मि प्रथमस्य च ।। ७ ।।
उत् कुलमुद्वहो भुवोदुह्यत् प्रतिधावतात् ।
एतंदन्तं निर्ऋत्या घोरमाहुर्यस्त आसन्नवरुढ एष: ।। ८ ।।
तं दुर्हार्दे प्रहिणोमि घोरं मा नो हींसीज्ज्यायसो मा कनीयस: ।
शिव: शग्म भवतु दन्त एष मा नो हींसीज्ज्यायसो मा कनीयस:।।९।।
अघमारमघशंसं निर्ऋथं तं ते दन्तं सचतां घोर एष: ।। १० ।।

२०-४०

अघमारमघशंसं निर्ऋथं दुहार्दे दन्तं प्रहिणोमि घोरम् ।
सो अस्यातु द्विपदश्चतुष्पद: शिवो अस्मभ्यं सुमना अत्स्वेष:।।१।।
शिवं ते दन्तं हविषा कृणोमि शिवो मह्यं कुर्वते दन्तो अस्तु ।
शिवानि ते त्रिणि त्रिकदुकाणि सन्तु शिवो मह्यं
नभसीरोदसीस्ताम् ।। २ ।।
पुरुरूपा पृथुपेषा अरंकृद्गृहतोरसि ।
प्रतिष्ठासि चतुष्पदां यस्त एष पञ्चम: पादस्तं तेन प्रतिगृह्णामि ।।३।।
स सर्परी रमतिं वाधमाना वृहन् मीमाय यमदग्नि दत्ता ।
आ सूर्य दुहिता ततान श्रवोदेष्वमृतमदुर्यम् ।। ४ ।।
स सर्परीरभरत् भूयमेभ्यो ऽधिश्रव: पाञ्चजन्यासु कृष्टिषु ।
सा पक्षीया न भूमायुर्दधाना यां मे पुलस्ति यमदग्नयो ददु:।।५।।
अघ्न्ये ये दूरमुत्क्रन्दन्निपदश्चतुरो जहि ।
अथा गो दुह: शीर्षणि शपां उरसि वा दय ।। ६ ।।
शृङ्गाभ्यामुपस्त्रष्टारं पदावर्तय गो दुहम् ।
अथो ये अन्ये तिष्ठन्ति तान् विशूचो विनाशय ।। ७ ।।
यथानर्त्ता सक्षिकाजिं कुल्यं मभिनृत्यति ।
एवा त्वमघ्न्ये पद: सर्वान् साकमुदर्दय ।। ८ ।।
उदुक्षीरमुत्तभितं स्यन्दन्तामस्य धेनव: ।
असृक्तस्य गावो दुहां यो अस्मान्नापचायति ।। ९ ।।
ऋक्षीकाया यथा मनो व्याघ्रस्य यथा मन: ।
एवा तस्य गवां मनो अस्मान्नापचायति ।। १० ।।

२०-४१

उत्तमो अस्योषधीनां वीरुधां बलवत्तम: ।
स स्यन्दन त्वमोषधे सर्वा स्यन्दन गा इमा: ।। १ ।।

अरन्तुरथन्तुम् ।
वनेषु शुष्मो अस्तु ते पृथिव्यामस्तु यद् वर: ।। २ ।।
अकृदश्वो अकृत् खरो अकृदश्वतरो हरि: ।
एवासि बाल्हिके तव भसन्नदत्याशिता ।। ३ ।।
यथा नदति गर्दभो एवानदति ते भसत् ।
व्रीहेर्यवस्य माषस्येतत् पश्याभि दर्शनम् ।। ४ ।।
उद्धरे द्यावापृथिवी उदाप उदग्निमुदिन्द्रमुत्सूर्यमुद्रात्रीमुदह: ।।५।।
नमस्कृत्य द्यावापृथिवीभ्यामन्तरिक्षाय मृत्यवे ।
मेक्ष्वाम्यूर्ध्वस्तिष्ठन् मा मा हींसित्सुरीश्वरा: ।। ६ ।।
यन् मेस्त्वा यदप्सरस: पयो देवीरहृषत् ।
तदिहोपह्वयामहे चक्षुषे च बलाय च
देवानां देवहूत्या मयि त्वा देवता: पुन: ।। ७ ।।
यास्य दोषा रसस्य मे त्वं देवी तत् अर्पिथ ।
नाराशंसेन स्तोमेनाहं त्वत् पुनराददे युष्मदप्सरसस्परि ।।८।।
यन् मे तन्वो रसं वयमुदप्सरसस्परि ।
नाराशंसेन स्तोमेन प्रजामाप्यायामहे ।। ९ ।।
यन् मे पयो विषिषिचे जाग्रत: स्वपतश्चयत् ।
पुनस्तदद्यमे देवा आसिञ्चतु तनू अधि ।। १० ।।

२०-४२

यदद्य दुग्धं पृथवी मसक्तं यदोषधीरप्यसरद्यदाप: ।
वत्से पयो गवि पयो यदस्मा अस्मत् सृजतां पय: ।।१।।
परापतन्त्वाशवोऽश्वा अधो धुरं यथा ।
एवा मूत्र प्रभिद्यस्व वि वस्तेरा सं सृज ।। २ ।।
विषितं ते वस्थिबिलं समुद्रस्योदधेरिव ।
प्रते भिनद्मि मेहनं वर्त्त वेशन्त्या इव ।। ३ ।।

अस्य पारे समुद्रस्य शुक्रं ज्योतिरमर्त्यम् ।
तं न: पात्वं हसस्तन्न: पातु विश्वत: ।
आ नो मेधा सुमतिर्विश्वरूपा हिरण्यवर्णा जगती जगम्यात्।।४।।
सा नो अग्ने मेधा जुषतामिह प्रचेता: ।
निष्क्रामत्वृषिर्यो अत्र प्रविष्टो वयांश्च सयुजा या विहस्त: ।। ५ ।।
सप्तऋषीणांस्यूमरश्म पथैतु अश्वान् मृगान् पुनरप्येतु कृष्ण: ।
सप्तऋषीन् गच्छस्यूमरश्म ये मृगान् कृष्ण: सृजतां वाजो अश्वम्।।६।।
ईडे अस्मान् सुप्रजस: सुवीरान् सह यज्ञेन पयसा सजाते ।
नमोऽस्त्वृषये स्युमरश्मये नम: कृष्णायोत यो वाजो अस्य ।। ७ ।।
नमो देवायार्वतेषु जिष्णवे यं नो वाजी प्रतिरात्यायु: ।
अतियन्त्यहान्यति रात्रि रत्युषस: ।। ८ ।।
आपो अन्तर्ध्वावरीस्ताभिरन्तर्दधेत्वा ।
यथा नैवाघ्न्येमासि वह्नी: शुष्यन्त्वोषधी: ।। ९ ।।
एवा प्रशुष्यमामनु यच्च पश्यामि यच्च न ।
पाटा विभर्त्यङ्कुशं हिरण्यवन्तमङ्किनम् ।
तेनाहं मन्वेषां स्त्रीयं आ लुम्पामि ममेदसून् ।। १० ।।

*(इत्येकर्चनाम विंशतिका[illegible] [illegible]मो ऽनुवाक: )*

२[illegible] ३

इन्द्र जीव सूर्य जीव देवा जीवा जीव्यासमहं ।
सर्वमायुर्जीव्यासम् ।। १ ।।
अनाभूरस्मि नहि भवे तन्त्यां बद्धो दिवा विश्रित: ।
आहात्वा निर्ऋतये ।। २ ।।
रन्तिरसि रमतिरसि ।
सं श्रुतेन राधिषिय मा श्रुतेन वि राधिषि ।। ३ ।।

दर्शो ऽसि दर्शतो ऽसि विश्वत: संदृष्ट: ।
सोमो ऽसि रुद्रो ऽसि ।। ४ ।।
तं त्वा यं देवा अंशुमाप्यायन्ति तं त्वा
यमादित्या अंशुमाप्यायन्ति ।
तं त्वा यमक्षितमक्षित ये पिबन्ति
स न: सोम: प्रतिरद् दीर्घमायु: ।। ५ ।।
अन्येषां प्राणेना प्यायस्व मास्माकं प्राणेन ।
यो ऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तस्य प्राणेना प्यायस्व ।।६।।
चिदसि समुद्र योनि: श्वेन ऋतावान् ।
सोमपीथोपनएह्यर्वाङ् रायस्पोषेण प्रजया धनेन ।। ७ ।।
स्वरवस्थ नमो वो महतामुर्जायै । पर्णामावगाम् ।। ८ ।।
प्रजापति: परमेष्ठी नारदो नाम वा असि ।
बृहस्पति: प्रजापतिर्नारदो ब्रह्मचारिण: ।। ९ ।।
अपश्चाद् दग्धान्नस्य भूयासम् ।
अन्नादायान्नपतये ये रुद्राय नमो अग्नये ।। १० ।।
या ते वसोवात इषु: सा त एषा । तया नो मृड ।।११।।

२०-४४

अग्निस्तक्मानमपवाधतामितो वरुणो ग्रावा मरुत: पूतदक्षा: ।
वर्हिषद: समिध: शोशुचानास्तक्मन: शोमां अभिनिर्नुदन्तु ।।१।।
यो अद्य बभृणायसि स्वपन्तमिष्वारुषं शयानमकोविदम् ।
स न: सहस्रवीर्यानुष्ठीत: शिवो भव ।। २ ।।
देवोयातुरसि मृडो ऽसि ।
मृडास्माकं द्विपदे चतुष्पदे मा तस्य मामृडो द्विपदे चतुष्पदे
यो ऽस्मान् द्वेष्टि यं च वयं द्विष्म: ।। ३ ।।

अनुयातुरसि मृडो ऽसि ।
मृडास्माकं द्विपदे चतुष्पदे मा तस्य मामृडो द्विपदे चतुष्पदे
यो ऽस्मान् द्वेष्टि यं च वयं द्विष्म: ।। ४ ।।
ब्रह्मयातुरसि मृडो ऽसि ।
मृडास्माकं द्विपदे चतुष्पदे मा तस्य मामृडो द्विपदे चतुष्पद
यो ऽस्मान् द्वेष्टि यं च वयं द्विष्म: ।। ५ ।।
मनुष्ययातुरसि मृडो ऽसि ।
मृडास्माकं द्विपदे चतुष्पदे मा तस्य मामृडो द्विपदे चतुष्पदे
यो ऽस्मान् द्वेष्टि यं च वयं द्विष्म: ।। ६ ।।
परेतयातुरसि मृडो ऽसि ।
मृडास्माकं द्विपदे चतुष्पदे मा तस्य मामृडो द्विपदे चतुष्पदे
यो ऽस्मान् द्वेष्टि यं च वयं द्विष्म: ।। ७ ।।
अवभरणो नामसि देवत्राणो अक्षमाप: ।
योस्मां द्वेष्टि यं द्विष्मस्तत आसन्नपि दध्म: ।। ८ ।।
यद्दोस्नाना आसुरो दीक्षितो चरत् ।
तस्य यन् मलमवाश्रवत्स हि नासीतावदनुष्ट्या त्वा
विद्मा रसं वृश्चिक ते विषम् ।। ९ ।।
केतुलुङ्ग नामते माता कर्कट: पिता ।
तात् सत्वमरसमभन ते विषम् ।। १० ।।
द्वे विषस्य धारे स्त्रिया अन्या पुंसो अन्या ।
ते उभे अरसे ।। ११ ।।

२०-४५

विश्व वित्तं नष्टमनु पश्यसि ।
अदो मे नष्टं तन् मे पुनर्धेहि ।। १ ।।

विश्वकर्मन् तत् त्वमुपगच्छसि ।
विश्वव्यचस्तत्त्वय्यद्धाहितम् ।। २ ।।
अदो मे नष्टं तन् मे पुनर्धेहि ।
परि पूषा पुरस्ताद्धस्तं दधातु दक्षिणम् ।
पुनर्नो नष्टमाजति जीवेन भुनजामहै ।। ३ ।।
इन्द्रस्त्वाभ्यैत् सर्पतु त्वाग्रेष्ठाः दधात् ।
तदास्त्रावस्य भेषजं तदुरोगमनीनशत् ।। ४ ।।
विष्णोर्मनसा पूतो स्थ देवो वा सवितोत् पुनातु ।
विष्णोर्मनसा पूतमसि देवस्त्वा सवितोत् पुनातु ।
अछिद्रेण पवित्रेण सहस्रधारेण सुप्लवा ।। ५ ।।
हृदा पूतं मनसा जातवेदो विश्वानि देवो वयुनानि विद्वान् ।
सप्तास्यानि तव यान्यग्ने तेभ्यो जुहोमि जुषस्व हव्यम्।।६।।
अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एषः ।
तस्मै जुहोमि हविषा घृतेन मा देवानां योयुवद् भागधेयम्।।७।।
यस्ते केशाङ् अवाचीनान् क्रिमिर्बृहति मूर्धतः ।
प्राणं तस्योप दाशया वीरुधः खनति भेषजी ।। ८ ।।
वेद वै ते भगन्नाम भूरिर्नामासि रयिर्नाम ।
तं त्वा भग प्र विशामि स मा भग प्र विश ।। ९ ।।
तस्मिन् सहस्र काण्डे नि मृजे भग त्वयि ।। १० ।।

२०-४६

आ मा गच्छन्तु ब्रह्मचारीणो स्वाहा ।। १ ।।
चराणि स्वाहा ।। २ ।।
वि राजानि स्वाहा ।। ३ ।।
असानि भद्रेभ्यः श्रेयान् स्वाहा ।। ४ ।।
यशस्विजनुतामनुचराणि स्वाहा ।। ५ ।।

देवानां मा मनुष्याणां पशूनां ब्रह्मचारीणाम् ।
प्रियं प्रजापते कृणु स्वाहा ।। ६ ।।
हा अम्वपनेचरी ।। ७ ।।
अयं मे हस्तो अक्षितो रुदति तमु मे अगदं कृधि ।। ८ ।।
त्वं क्षितस्य भेषज्युभयो रक्षितस्य च । उदेलडी ।। ९ ।।
असुरसि स्वाहा । क्रतुरसि स्वाहा ।। १० ।।

२०-४७

पुरुषो ऽसि स्वाहा ।। १ ।।
विजातिरो ऽसि स्वाहा ।। २ ।।
प्रजापतिरसि स्वाहा ।। ३ ।।
स्वजातिर्नामासि स्वाहा ।। ४ ।।
स्वजातिरसि स्वाहा ।। ५ ।।
वेद वै ते नारदनाम वाग्नामासि
तस्य ते यशो भक्षीय ।। ६ ।।
वेद वै ते सनात् कुमारनाम चक्षुर्नामासि
तस्य ते मधु भक्षीय ।। ७ ।।

२०-४८

स्नुषासौ सेनास्या: सेनाया इहास्या: स्वसुरो यमस्या: स्वसुर: ।
सा यथा स्नुषा स्वसुरा दधस्पद्यते अधरा पद्यते नीचि पद्यते।।१।।
एवासौ सेनास्या: सेनाया अधस्पद्यतामधरपद्यतां नीचि पद्यताम् ।
सेहाग्निभ्यां हतवीरां हृतपूरुषां पराजितां प्रशुभै तु परमां परावतम्।।२।।
तमिन्द्राग्नि हतवीरां हतपूरुषां परजितां प्रणुत्तां यतीमनु वाक्शीताम् ।
पराजित एत्वसावमुष्यायणो अमुष्या: पुत्र: ।। ३ ।।

अस्नाव्यक्त एतु ।
अघं हिरण्येत्वसावामुष्यायणो अमुष्या: पुत्र: ।। ४ ।।
अघप्रतीको ऽघेनैनं विध्याम: ।
अभूया एनं पाशेसि त्वा दुष्वप्नेन संसृज्य
मृत्योर्व्यात्त आसन्नपि दधामि ।। ५ ।।

२०-४९

सृजाम्याप उशतीरुषेमा: सं रराणा: पयसा सं बभूवु: ।
दत्तो अस्मभ्यं द्रविणेह भद्रा अपां प्रति प्रतिगृह्णात्वेना: ।।१ ।।
उत्स्रयस्व वहुर्भवस्वेन महसा यव ।
पृणीहि सर्वा पात्राणि मा त्वा दिव्याशनिर्वधात् ।। २ ।।
आशृण्वन्तं यवं देवं यत्र त्वाच्छावदामसि ।
तदुत्स्रयस्व द्यौरिव समुद्रेवैध्यक्षित: ।। ३ ।।
अक्षितास्त उपसदो अक्षिता: सन्तुराशय: ।
प्रणतो अक्षिता: सं त्वत्तार: सं त्वक्षिता: ।। ४ ।।
सकृद्ध द्यौरजायत सकृद् भूमिरजायत ।
सकृद: पृश्न्या दुग्धं तदन्यो नानु जायते
मा त्वानुजनि कश्च न ।। ५ ।।
इष्वग्रमिषु या वनं मणिं कृण्वेषु मङ्गलम् ।
समा शरव्याभ्य: पातु दिवा नक्तं च जीवसे ।। ६ ।।
प्रतिष्ठितोसि ब्रह्मणा जम्भया मसि त्वा वयम् ।
अपामार्गेण विद्रुला इदं त्वाप मृज्महे
युवन्तं क्षिवन्तं त्वं जहि ।। ७ ।।
शीर्णं तं एतन् न क्षुतं तत् एतत् संयुतं दुक्षुतं तुभ्यमस्तु ।
रुद्रा शनिष्टे जघनेन ग्रीवा इन्द्र इव वृत्रं वज्रेण हन्तु ।। ८ ।।

अनुहवं परिहवं परिवादं परिक्षवम् ।
सव्ये मे रिक्तकुम्भान् परा तान् सवित: सुव ।। ९ ।।
अपपापं परिक्षवं पुण्य भक्षीमहि क्षवम् ।
शिवा ते पाप नासिकां पण्डकश्चाभि मेहताम् ।। १० ।।

२०-५०

अभि त्वा पञ्च शाखेन हस्तेनाधां सहीयसा ।
यथा न विद्विषावहै न विभवाव कदा चन ।। १ ।।
चक्रवाकं संवननमश्वस्य स्वं करम् ।
अमु स्वं कृणोतु मे यमहं कामये प्रियम् ।। २ ।।
यत् कक्षीवान् संवननं च्यवनश्चक्र आसुर: ।
तद् वां कृणोमि दंपती संप्रियौ भवतं युवं ।। ३ ।।
यथा संयुक्तौ पक्षिणौ संप्रियौ चरतौ मृगौ ।
एवा संयुक्तौ ब्रह्मणा संप्रियौ भवतं युवं ।। ४ ।।
प्रेहि प्र हर पादावा गृहेभ्य: स्वस्तये ।
कपिञ्जल प्रदक्षिणं शतपत्राभि नो वद ।। ५ ।।
भद्रं वद दक्षिणतो भद्रमुत्तरतो वद ।
भद्रं पुरस्तान् नो वद भद्रं पश्चात् कपिञ्जल ।। ६ ।।
शुनं वद दक्षिणत: शुनमुत्तरतो वद ।
शुनं पुरस्तान् नो वद शुनं पश्चात् कपिञ्जल ।। ७ ।।
यौवनानि महयसि जिग्युषामिव दुन्दुभि: ।
कपिञ्जल प्रदक्षिणं शतपत्राभि नो वद ।। ८ ।।

*(इत्येकर्चनाम विंशतिकाण्डे अष्टमो ऽनुवाक:)*

२०-५१

उत्तभ्नामि गवां क्षीरमुद्रथं रथवाहनम् ।
उत्तभ्नाम्यस्माकं वीरा मयि गावश्च गोपतौ ।। १ ।।

उत्तभ्नातु सविता देवो अग्निरुन्मित्रावरुणावश्विनोभा ।
सर्वान् सपत्नानवधीर्युगेन विशां पतिरुपसृप्तैध्यत्र ।। २ ।।
त्वं हि रुद्र वशिनी निर्नेषि त्वं देवेषूतमानुषेषु ।
यदीशानो नयसि यच्च हिंस्यस्माकमस्तु पितृषु स्वधावत् ।। ३ ।।
वायवा रुन्धि नो मृगानस्मभ्यं मृगयद्भ्य:*।
स नो नेदिष्ठमा कृधि वातो हि रशनाकृत: ।। ४ ।।
उदसूर्य उदयंत् कृत स्थामगच्छतु ते पुन: ।
यतो नि लयते यत् कृत तत् प्रस्तम्भमाजतु ।
मेमं पृथु प्रवर्तने जघनं स्त्वम्भनं कर ।। ५ ।।
या: पार्श्वे संतनोति हृदयं जिह्वया सह ।
तां त्वं देवी पृथिवी हिक्कामरसां कृधि ।। ६ ।।
अनुसृप्तां गहनेषु धूक्ष्णां पापीं शिमिद्वतीम् ।
तामेतां दस्यूनां दासीं प्र दहातश्रुकाकणि ।।७।।
प्र पपात: सुकटनाळि सुषे: कुषीतको यथा ।
स्रक्वे ते प्रियं धक्ष्यामि सा नशिष्यसि पृत्थगि ।।८।।
यदास्या: स्रक्वे दहेद्यदा मूर्धानमग्निना ।
अथैषा दस्यूनां दासी पुत्थगि नि लयिष्यते ।।९।।
अहरहर्बलिमित् ते हरन्तो ऽश्वायेव तिष्ठते घासमग्ने ।
रायस्पोषेण समिषा मदन्तोग्ने मा ते प्रतिवेशा रिषाम।।१०।।

२०-५२

रात्रीं रात्रीमप्रयातं भरन्तो ऽश्वायेव तिष्ठते घासमस्मै ।
रायस्पोषेण समिषा मदन्तो मा ते अग्ने प्रतिवेशा रिषाम।।१।।
अग्न आयूंषि पवस्वा सुवोर्जमिषं च न: ।
आरे बाधस्व दुच्छुनाम् ।। २ ।।

त्रीण्यायूंषि तव जातवेदस्तिस्रो व्युष्टीरुषसस्ते अग्ने ।
तिस्रोस्ते तन्वो देवशंसितास्ताभिर्न: पाहि सदमप्रमादम् ।।३।।
पाहि नो अग्न एकया पाहि न उत द्वितीयया ।
पाहि गीर्भिस्तिसृभिरुर्जो पते पाहि चतसृभिर्वसो ।। ४ ।।
समीची मघायनी पातामायुष्मत्या ऋचो मा छैत्सि ।
तनूपा: साम्नो वसुविदं लोकमनुचराणि ।। ५ ।।
य ऋते चिदभिश्रिष: पुरा जत्रुभ्य आतृद: ।
सन्धाता सन्धिं मघवा पुरूवसुर्निष्कर्ता विह्रुतं पुन: ।। ६ ।।
भगेह्यर्वाङ् उपमामिह त्वं मदो नामासि मयि मादयामुम् ।
सुरा त एकमभवज्जनित्रमग्नेरधिजातो ऽसि ब्रह्मणा: तेजसा च।।७।।
सहानयाप्रविशेह अन्तरामाम् प्रविशेह ।
विशन्त्येहि प्रविशन्त्येह्या मा विश प्र मा विशो
उपत्वाह्वय उप मा ह्वयस्व ।
नरिष्ठा नाम वा असि ।। ८ ।।
यथाप: प्रवता यन्ति यथा मासा अहर्ज्जरम् ।
एवा मा ब्रह्मचारिणो धातरायन्तु सर्वदा ।। ९ ।।
आ गन्ता मा रिषण्यत प्रस्तोतारो माप स्थात समन्यव: ।
दृढासो अमयिष्णवो मावपिष्यव: ।। १० ।।

२०-५३

धाता ते हस्तमग्रहीत् सविता ते हस्तमग्रहीत् ।
मित्रस्त्वमसि धर्णणाग्निराचार्यस्तव ।। १ ।।
अग्ने ब्रह्मचार्यसि मम ब्रह्मचार्यसि ।
प्रजापतिष्ट्वा गोपायतु देवाय त्वा सवित्रे
परि ददामि स्वस्ति चरतादिहासौ ।। २ ।।

विश्वमसि विश्वपते सर्वमसि सर्वपते ।
तं त्वासौ देवाय त्वा सवित्रे परि ददामि
स्वस्ति चरतान्मयि ।। ३ ।।
समाववर्ति विष्ठितो जिगीषुर्विश्वेषां कामश्चरतामिहास्तु ।
विश्वा द्वेषांसि दुरिता हित्वायं त्वनु व्रता सवितुर्दैव्यस्य।।४।।
आ नो हस्तौ अकृतागा: स्वर्ग: पुनरैतु तन्वा सम्विदान: ।
प्राणेन तेजसा हरसा बलेन मित्रो अस्मान्वरुण भयतस्पातु।।५।।
यत् काम कामयमाना इदं कृण्मसि ते हवि: ।
तन्न: सर्वं समृध्यतामथैतस्य हविषो वीहि स्वाहा ।। ६ ।।
यद्वर्चो द्यावापृथिव्योरथो यदाञ्जनं त्वयि ।
तेन सुचक्षार्वर्चस्यहं भूयासमाञ्जन ।। ७ ।।
यदसृक् श्लिष्टं यद् दिवा स्वप्न यानुश्लिष्टं ।
आश्लिष्टावच्छेदनमस्यभिदृष्ट वीर्यम् ।। ८।।
अववारिव वारिवा अव वर्षं गिरेरिव ।.
अवज्यामिव धन्वनो हृदि श्लिष्टं छिनद्मि ते ।।९।।
यत् ते हृदि श्लिष्टं यच्चाश्लिष्टं पुरीरति ।
मध्ये सृष्ठीनां यच्छ्लिष्ट तत् पार्ष्णावछिनद्मि ते ।। १०।।

२०-५४

यत् ते श्लिष्टं क्लोम कर्णेषु यच्चसिस्नेसु नाभ्यां ।
इन्द्रस्तदब्रवीद् भिषक् पार्ष्णिराश्लिष्टावत् छेदनीम् ।। १ ।।
एषां वै दुष्टं हनामि पार्ष्णिराश्लिष्टावत् छेदनीम् ।
इदमहममुस्मिन्नामुष्यायणे ऽमुष्या: पुत्रस्याश्लिष्टं प्र छिनद्मि।।२।।
विपश्चित् पुच्छमाभरत् तद्विष्णु: पुनराभरत् ।
तदग्निना मनसा संविदान पुमांसमस्यै पुत्रं देहि स्वाहा ।। ३ ।।

विपश्चित् पुच्छमाभरत् यर्ज्जरहस्ताचित्या ।
यथास्या: पुत्रो जायतां अभिभूर्णो विपश्चिता ।। ४ ।।
अपेहीतो विपश्चित् त्वं पुमानयं जनिष्यते ।
पुमान् पुंसो अधि संभूत: स पुमानेव जायताम् ।। ५ ।।
भद्राय कर्ण: क्रोशतु भद्रायाक्षि वि वेपताम् ।
परा दुष्वप्न्यं सुव यद् भद्रं तन्न आ सुव ।। ६ ।।
अक्षिवेपं दुष्वप्न्यमार्तिं पुरुषरेषिणीम् ।
तदस्मदश्विना युवमप्रिये प्रति मुञ्चतम् ।। ७ ।।
यत् पार्श्वादुरसो मे अङ्गादङ्गादुपवेपते ।
अश्विना पुष्करस्त्रजा तस्मान् न: पातमंहस: ।। ८ ।।
यदीदमृतकाम्याघंरिप्रमुपेयिम ।
अन्ध: श्रोता इव ह्रीयतां मा नोन्वागादघं यत: ।। ९ ।।
अरिप्रा आपो अपरिप्रमस्मत् ।
योस्मान् द्वेष्टि यं च वयं द्विष्मस्तस्मिन्
दुष्वप्न्य मा सृजामि ।। १० ।।

२०-५५

अदर्शि गातुवित्तमो यस्मिन् व्रतान्यादधु: ।
उपो षु जातमार्यस्य वर्धनं सोमं गच्छन्तु नो गिर: ।। १ ।।
प्र दैवोदासो अग्निर्देवाङ् अच्छा न मज्मना ।
अनु मातरं पृथिवीं वि वावृते तस्थौ नाकस्य सानवि ।। २ ।।
यस्माद्रेजन्तु कृष्टयश्चर्कृत्यानि कृण्वत: ।
सहस्त्रसां मेधसाताविव त्मनाग्निं धीभिर्दुवस्य च ।। ३ ।।
आ प्यायस्व समेतु ते विश्वत: सोम वृष्ण्यम् ।
भवा वाजस्य संगथे ।। ४ ।।

आ प्यायस्व मदिन्तम सोम विश्वेभिरंशुभिः ।
भवा नः सुम्नयुः सखा वृधे ।। ५ ।।
सं ते पयांसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः ।
आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व ।।६।।
विद्म त्वा वयं सोमं राजानं ये त्वा न विदुः ।
तेषां चक्षुषा श्रोत्रेण प्राणेन प्रजया पशुभिर्गृहैर्धनेना प्यायस्व ।।७।।
एषा त ओषधीस्तया त्वमा प्यायस्व ।
आपीलो अस्मान् आ प्यायच्चक्षुषा श्रोत्रेण प्राणेन
प्रजया पशुभिर्गृहैर्धनेना प्यायस्व ।। ८ ।।
यद् वेद राजा वरुणो वेद देवो बृहस्पतिः ।
इन्द्रो यद् वृत्रहा वेद तत् सत्यं चित्तमर्हणम् ।। ९ ।।
सर्वेण नीलशिखण्डेन भवेन मरुतां पित्रा ।
विरूपाक्षेण बभ्रूणा वाचं वदिष्यतो हतम् ।। १० ।।

२०-५६

एतद् वदन्यत्र जिघांसति यदन्यत्रविवीषत ।
तद् वश्चित्तममूमुहं तद् वश्चित्तमनीनशम् ।। १ ।।
अस्ति वै पथां निष्कुटं नदीनां च निरङ्कुशम् ।
तद् वश्चित्तममूमुहं तद् वश्चित्तमनीनशम् ।। २ ।।
यानि वः सप्तचेतांस्यष्टौ यानि मनांसि च ।
तद् वश्चित्तममूमुहं तद् वश्चित्तमनीनशम् ।। ३ ।।
इन्द्रेण मेदिना युजाग्निना जातवेदसा ।
तेन वः चित्तममूमुहं तेन वः चित्तमनीनशम् ।। ४ ।।
प्रतीचीनान् वो अभ्यधामश्वमिवाश्वाभिधान्या ।
कृण्वे वो मामके वशे पदोरुपानहौ यथा ।। ५ ।।

देवानां समिदसि देवानां यातुरसि ।
यया तन्वा ब्रह्म जिन्वसि तया मा जिन्व ।। ६ ।।
रोचे मा प्रकाशे मा कृण्वाविदन् मा गमय: ।
अनु मा बुध्यन्ताम् ।। ७ ।।
वय: सुपर्णा उप सेदुरिन्द्रं प्रियमेधा ऋषयो नाधमाना: ।
अपध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्यस्मान्निधयेव बद्धान् ।।८।।
अप्सुजातस्य महतस्पर्यश्मन: ।
स्वयं जातस्य शोचिषो ऽद्धि: पर्वतानां शये ।। ९ ।।
उतोदिनीं समिद्वतीं दुर्गा योनिर्व्यद्रुला ।
मृगाङ् अनु प्र पातय मरीचीरनु नाशय ।। १० ।।
अश्वस्याश्व: संपतिता पर्णे ते वसतिस्कृता ।
असृक् पतत्रिणामसि जहि वामून् प्र बाधस: ।। ११ ।।
असृक्तो अधि जातोसि पर्णे ते सदनं कृतम् ।
आण्डं पतत्रिणामसि जहि वामून् प्र बाधस: ।। १२ ।।
यथा गर्दभो विवर्धनाद्रुधूयुर्व्यपलायते ।
एवासौ पलायताममुष्मादध्या नयत् ।। १३ ।।

२०-५७

सनिरसि सनितासि सनेयम् ।। १ ।।
कृतिरसि कर्तासि क्रियासम् ।। २ ।।
वित्तिरसि वेत्तासि विदेयम् ।। ३ ।।
भूतिरसि भवितासि भूयासम् ।। ४ ।।
भूरसि सुभूरसि सुभूर्नामासि ।। ५ ।।
प्रजापतेर्मध्यम: श्रेष्ठो रश्मिरसि ।
भूतये त्वा वित्तये त्वा पशूनां त्वा वित्तय आ दधामि।।६।।

अग्निर्वह्निर्वह्निरग्नि: ।। ७ ।।
इन्द्रारोद्धा प्रजापति: प्रजाता ।
बृहस्पतेस्त्वा मुखेन याचामि ।। ८ ।।
प्रजापतेष्ट्वा मुखेन याचामि ।
सूर्यस्य त्वा चक्षुषा प्रतीक्षे अदव्धेन
त्वा चक्षुषावेक्षये ।।९।।
अयुतोहमयुतोमात्मा अयुतं मे चक्षुरयुतं मे श्रोत्रमयुतो
मे प्राणो अयुतो मे ऽपानो अयुतोहं सर्व: ।। १० ।।
देवस्य त्वा सवितु: प्रसवे ऽश्विनर्बाहुभ्यां
पूष्णो हस्ताभ्यां प्रसूत आरभे ।
अग्नेष्ट्वास्येन प्राश्नामि बृहस्पतेर्मुखेन ।। ११ ।।
इन्द्रस्य त्वा जठरे सादयामि वरुणोस्योदरे ।। १२ ।।
यो ऽग्निर्नृमणा नाम ब्राह्मणेषु प्रविष्ट: ।। १३ ।।
तस्मिन्नेष सुहूतमस्तु प्राशित्रं तन् मा मा
हिंसीत् परमे व्योमन् ।। १४ ।।

*(इत्येकर्चनाम विंशतिकाण्डे नवमो ऽनुवाक:)*

२०-५८

वेद वै ते तक्मन् नाम विश्वसो नाम वा असि ।
असमक्तो नाम ते पिताहर्षी नाम तक्मन् ते माता
समिद्धा नाम ते स्वसा ।। १ ।।
गिरिं गच्छेत: सप्तमुखे ।। २ ।।
असुरास्त्वोदवभरन् समुद्रादधिमायया ।
तदास्रावस्य भेषजं तदुरोगमनीनशत् ।। ३ ।।

रोगस्थानमसृक्स्थानमथो अस्रावभेषजम् ।
बभ्रोरश्वस्यवारेणापि नह्यामि ता अहम् ।। ४ ।।
यन् मे दण्डो वा पाति दीक्षया तपसा सह ।
तमहं पुनरा ददे पुनरिन्द्रः पुनर्भगः ।
पुनर्मे ब्रह्मणस्पति ब्रह्म जीवित वा अदात् ।। ५ ।।
उत्थादुलूकापतनुत्तान पादमर्भकः ।
स मे ध्रियमाणामा वहद् वि द्वेषः परा वहत् ।। ६ ।।
यथा वाणः सुसंशितः परापतत्याशुमत् ।
एवामूत्रस्य ते धारा परा पतति केतुमत् ।। ७ ।।
यथा मधु मधुकृतः संभरन्ति मधावधी ।
एवा मे मधुमद् वचो देवेषु पुरुषेषु च ।। ८ ।।
दीर्घायुत्वाय तपसे मह्या अरिष्टतातये ।
सुपर्णो मह्यमब्रवीदेतत् समक्त भेषजमेतत् पुलित भेषजम्।।९।।
अग्नी रक्षांसि सेधति शुक्रशोचिरमर्त्यः।
शुचिः पावक इड्यः।।१० ।।

२०-५९

पेशिर्माताः पेशिः पिता पैशयः पैश्याहतः ।
अद्धा कृतस्य ब्रह्मणा वृश्चिकस्यारसं विषम् ।। १ ।।
निर्ह्वयामि पर्णसादां निरुप्सच्छादुते विषम् ।
भूमिस्त उच्यते माता तस्मै ते नम उत्सृजत् ।। २ ।।
किमुदन्त आमयति किमभूदुपवेशनम् ।
आपो निरस्यता क्रिमिमगदे कृणुता हनू ।। ३ ।।
यत्र भूम्या अनामृतं दिवि चन्द्रमसिश्रितम् ।
विद्वाङ् अहं तत्रमन्ये माहं प्रौत्रमधं निगाम् ।। ४ ।।

यत् ते सुसीमे हृदयंमदो वैतत् प्रजापतौ ।
वेदाम तस्य ते वयं माहं पौत्रमघं निगाम् ।। ५ ।।
यत् सुपर्णाया हृदयं पृथिव्यामधिनिष्ठितम् ।
वेदाहं तस्यास्तेतन्वां मम माहं पौत्रमघं निगाम् ।। ६ ।।
तद् अग्नेर्हृदयमसि विद्युद्द्युत्या तथा वेद ।
वेदाम तस्य ते वयं माहं पौत्र मघं निगाम् ।। ७ ।।
प्रजायै मे प्रजापतिरिन्द्राग्नी शर्म यच्छतम् ।
यथाहं ज्योग् जीवो ऽसानि प्रजानामधिपा वशी ।। ८ ।।
यां प्रजामविदामज्यात्मनः परि निर्मिताम् ।
आयुष्मतीं तनुकृतां तामग्ने जरसे नय ।। ९ ।।
इन्द्र इव सासहानरग्निरिव ज्योतिषावहम् ।
सूर्य इव विश्वतः प्रत्यङ् समुद्र इव जुष्टरः ।। १० ।।

२०-६०

ऋचं साम यदप्राक्षं हविरोजो यजुर्बलम् ।
एतन् मा तस्मान् मा हिंसीद् वेदः पृष्टः शचीपते ।। १ ।।
उद्धर द्यावापृथिवी सहौषधीभिः ।
गृह्णामि प्रजां निरपः सृजामि ।। २ ।।
मा न आपो मेधां मा ब्रह्म प्र मथिष्टन ।
सुष्यदा यूयं स्यन्दध्वमुपहूतो ऽहं सुमेधा वर्चस्वी ।। ३ ।।
मा नो मेधां मा नो दीक्षां मा नो हिंसिष्ट यत् तपः ।
शिवा नः सर्वमायुषे आपो भवन्तु मातरः ।। ४ ।।
इह प्रजा विश्वरूपा रमन्तामस्मिन् गोष्ठे विश्वभृतो जनित्रीः ।
अग्निं कुलायमुप संविशन्तिर्जानन्तु नः पयसा घृतेन ।।५।।

रन्तय स्थ रमतय स्थ मयिश्रिता स्थ मयि श्रयध्वम् ।
मनोतानामा स्थ ग्राम्या अप्सरसो वेदवित्तमा: मा विशत् ।।६।।
सर्वनीलशिखण्ड वीर कर्मणिकर्मणि ।
इमामस्य प्राशं जहि येनेदं विभजामहे ।। ७ ।।
तृतीयकं वितृतीयं सदंदिं तक्मानमुत राजयक्ष्मम् ।
यथा शक्र उन् मुमोच तृतीयकमेवाहं तदुन्मुञ्चामि ।। ८ ।।
तृतीयकं त्वामस्यामोषध्यां बध्नामि ।
आध्वस्तपक्षिणे बृहते यथाहमकरं नम: ।। ९ ।।
तृतीयकं त्वामस्यामोषध्यां बध्नामि ।
इन्द्राय त्विषीमते यथाहमकरं नम: ।। १० ।।

२०-६१

व्याघ्रायोभयादते यथाहमकरं नम: ।
नमस्ते पथ्ये रेवति स्वस्तिमा परांणय
स्वस्ति पुनरानय ।। १ ।।
अथो स्वस्ति निष्कृधि जीवा ज्योतिरशीमहि ।
आ मनं यजामहे सत्यं प्राशं पुरोहितम् ।। २ ।।
तं देवं प्रथमं यजेद् व्योम्ना मनसं करत् ।। ३ ।।
आमनस्क देवकारो रुवत्कदेवक ।
अर्वाचावस्तरं कृधि यमहं कामये प्रियम् ।। ४ ।।
अयं नो अग्निरध्यक्षो ऽयं नो वसुवित्तम: ।
अस्योपसद्ये मा रिषामायं रक्षतु न: प्रजाम् ।। ५ ।।
अस्मिन् सहस्रं पुष्यास्मैधमाना: स्वे गृहे ।
इमं समिन्धिषीमह्यायुष्मन्त: सुवर्चस: ।। ६ ।।

शुद्धवाता कृष्णाफला कब्रू बलासभेषजी ।
शुक्ति वल्गस्य नाशनी देवीर्ददातु भेषजम् ।। ७ ।।
अश्वत्थो देव सदनस्तृतीयस्यामितोदिवि ।
तत्र लोहित वृक्षोजात: शिश्रु: क्षिप्त भेषज: ।। ८ ।।
न तत्र भवोहन्ति न शर्व ईषुमस्यति ।
यत्र त्वं देवतम्बुरो पर्वतेषु वि रोहति ।। ९ ।।
कृष्यामन्यो वि रोहति गिरेरन्यो ऽधिपक्षसि ।
त्रातारौ सश्वदामिमावा गन्तां शिश्रुतुम्बुरु ।। १० ।।

२०-६२

यावत् पर्णं यावत् फलं यावन्तो अध्यरुक्षरा: ।
तावन्त: शुष्मास्तुम्बुरोस्तदु ते विषदूषणी: ।। १ ।।
रुद्र जलासभेषजे ऽमुं रोगमशीशमो जिज्वलन्निति ।। २ ।।
आस्थाद्यौरस्थात् पृथिव्यस्थादिदमुर्वमन्तरिक्षम् ।
रुषभस्येव कनिक्रदतो हृदयं शमयामि ते ।। ३ ।।
सं मा सिञ्चन्तु मरुत: सं मा सौ रोहिणीदिव: ।
सं मायमग्नि: सिञ्चन्तु प्रजया च धनेन च
दीर्घमायुष्कृणोतु मे ।। ४ ।।
नक्तं हरि मृगयेते दिवा सुपर्णा रोहितौ ।
भवाय च शर्वाय चोभाभ्यामकरं नम: ।। ५ ।।
नमो भवाय नम: शर्वाय नम: कुमारसत्रवे ।
नमो नीलखिशण्डाय नम: सभाप्रपादिने ।। ६ ।।
यस्य हरी अश्वतरौ गर्दभावभित: सरौ ।
तस्मै नीलखिशण्डाय नम: सभाप्रपादिने ।। ७ ।।

असावेति शिशुमारो असावेति पुलिकया ।
कुमारसत्रोवराहोदकं परिवाचनम् ।। ८ ।।
यथेदमभ्रमर्भकं पर्जन्यादपसीयते ।
एवामे अश्विना मुखादभिल्यमपसीयताम् ।। ९ ।।
अभील नश्येत: परस्तृचं मे माभिर्मिम्लप: ।
अगस्त्यस्य ब्रह्मणाभीलीन् नाशयामसि ।। १० ।।

२०-६३

सेसिचामुपत्त्वचां नाशया पुरुरूपादभील्यं मुखात् ।
यन् मे ऽकृतादभिप्रियादारुरोहमलं मुखम् ।। १ ।।
अपां वात इव शीफालं सूर्यस्तदपलुंपतु ।
अप मे ऽभीलि पतत् त्वां वात ह्रदं यथा ।। २ ।।
आ मा सुपर्णं गच्छन्तु सुभागमस्तु मे मुखम् ।
यथा सूर्यस्यो पादये हिरण्यं प्रतिरोचते ।। ३ ।।
एवा मे मश्विना मुखं सुपर्णं प्रतिरोचताम् ।
प्रयद्गावो नभ्यूर्णयस्त्वेषावयांस्य क्रमन् ।। ४ ।।
घ्नन्तु कृष्णामुपत्त्वचं सुभागमस्तु मे मुखम् ।
इन्द्रेण प्रेषित उलूक सं पचामि ते ।। ५ ।।
घ्नन्तु कृष्णामुपत्वचं सुभागमस्तु मे मुखम् ।
सोमेन प्रेषित उलूक सं पचामि ते ।। ६ ।।
घ्नन्तु कृष्णामुपत्वचं सुभागमस्तु मे मुखम् ।
सूर्येण प्रेषित उलूक सं पचामि ते ।। ७ ।।
घ्नन्तु कृष्णामुपत्वचं सुभागमस्तु मे मुखम् ।
वृहस्पतिना प्रेषित उलूक सं पचामि ते ।। ८ ।।

घ्नन्तु कृष्णामुपत्वचं सुभागमस्तु मे मुखम् ।
प्रजापतिना प्रेषित उलूक सं पचामि ते ।। ९ ।।

२०-६४

घ्नन्तु कृष्णामुपत्वचं सुभागमस्तु मे मुखम् ।
ग्राह्या दूतो ऽस्युलूक सं पचामि ते ।। १ ।।
घ्नन्तु कृष्णामुपत्वचं सुभागमस्तु मे मुखम् ।
निर्ऋत्या दूतो ऽस्युलूक सं पचामि ते ।। २ ।।
घ्नन्तु कृष्णामुपत्वचं सुभागमस्तु मे मुखम् ।
वरुणस्य दूतो ऽस्युलूक सं पचामि ते ।। ३ ।।
घ्नन्तु कृष्णामुपत्वचं सुभागमस्तु मे मुखम् ।
मृत्योर्दूतो ऽस्युलूक सं पचामि ते ।। ४ ।।
घ्नन्तु कृष्णामुपत्वचं सुभागमस्तु मे मुखम् ।
यमस्य दूतो ऽस्युलूक सं पचामि ते ।। ५ ।।
राजा त्वा वरुणो अखनदत्तां सोमेन बभ्रुणा ।
तां त्वा विद्म प्रपातिकां प्रामुष्य हृदयं तव ।। ६ ।।
नि शोचयैनं प्रपतैनं समेनं तक्मना सृज ।
यथास्य दह्यमानस्याग्नि: पर्वाण्यन्वयत् हृदयं परि-
वर्जयाक्षौ कामेन शोचया मूर्त मामपश्यत ।। ७ ।।
अयमित्वाग्निरानयत् वातस्त्वा त उद्यमात् ।
यं त्वमेनं निर्वर्त्तया असौ हा इह ते मन: ।। ८ ।।
अग्निष्ट्वा तपतु सूर्यस्त्वा तपतु वातस्त्वा युङ्क्तां
मरुतश्च युञ्जताम् ।
अर्वाङ् एहि समश्नुव आ नो मरिचिभि: ।। ९ ।।

वृहामि ते लोमान्यङ्गेभ्य: पचामिमांसं ज्वलयाम्यस्थि।
इह ते रमतां मनो मयि ते रमतां मन: ।। १० ।।

२०-६५

अयं पिण्ड: कर्कर: पिण्ड: स्मर: पाञ्चाल: संतपन: करंकर:।
अमुष्य हृदयं तपो यमहं कामये प्रियम् ।। १ ।।
यथायमग्निस्तपति यथा तपति सूर्य: ।
एवाते तप्यतां मनो हृदयमङ्गमङ्गं परुस्परुर्मां
कामेन नरमासा अत्र ।। २ ।।
यथा तपन्ति परशुं यथा वासि नि खादिरम् ।
यथा सूर्य उद्यन् सर्वं संतपन्ति ।। ३ ।।
एवा ते तप्यतां मनो हृदयमङ्गमङ्गं परुस्परुर्मां
कामेन नरमासा अत्र ।। ४ ।।
स त्वा द्यौश्च पृथिवी च तपतां मां
कामेन नरमासा अत्र ।। ५ ।।
स्मरहे स्मरतादमुमङ्गज्वरेणो छोचनीनाम् ।
तक्मनैनं संसृज विश्वशारदेन मम कामेन ।। ६ ।।
अष्टाशीति सहस्राण्येत्यवादीद् वचो मम ।
इहारेहमवादिषुमत्रारे प्रायस्वस्तम् ।। ७ ।।
यं सुमित्र: सुमित्रायै चक्रेवासास्मरम् ।
यथा सा तस्य कामेन न सुष्वाप कदा चन ।। ८ ।।
एवासौ मम कामेन माव स्वप्सीत् कदा चन ।
पर्यग्निरापस्तपति परिद्यामेति सूर्य: ।। ९ ।।
परि वामिन्द्रो वृत्रहा मह्यं तपतु सर्वत: ।
यथा वातो न्यावाति यथा तपति सूर्य: ।। १० ।।

एवा त्वमिन्द्र वृत्रहनमुं मह्यमिहानय ।
शालाला त्वं संवननं वनाद् वननमा भृतम् ।। ११ ।।
येन पयो गन्धर्वो अप्सरसां समवानयत् ।
तेनाहममुंमयि वा नयाम्यामृत्योरापरावत: ।। १२ ।।

*(इत्येकर्चनाम विंशतिकाण्डे दशमो ऽनुवाक: )*

***इत्यथर्ववेदे पैप्पलादसंहितायां एकर्चोनामविंशतिकाण्ड: समाप्त:***

## पैप्पलादसंहिता

# मन्त्रार्थानुक्रमणिका

ई



उ

## द

## प

## फ



## ब

## र

## ष



## स

## ष



## स